भूमत्वः पंचमीस्थाने व्यत्ययेन जसः ओः सुपीति यण्· लक्ष्यत इति· भूषः सहचारात्· यो हि यां क्रियां पुनः पुनरनुभवति स तत्र प्रायेण कौशलं लभते वेन सकृद
पिपः सुष्ठु करोति तत्र वुन्· यस्तु बहुशोपि दुष्टं करोति तत्र नेति भावः॥ ॥ आशिषि च· अप्राप्तप्रार्थनमाशीः सा च प्रयोक्तृधर्मो न प्रत्ययार्थः कर्त्तरि
कृदिति कर्त्रर्थे विधानादित्याशयेनाह· आशीर्विषयार्थेत्यादिना जीवतादिति· जीवनं तव भूयादित्यर्थः जीवक इति· स्त्रियां तु टाप्याशिषि वुन् चेनेति निषेधा
त् प्रत्ययस्थादिति इत्वाभावः जीवका कर्मण्यण्· उपपदसमास इति· तत्रोपपदमिति कर्मादिवाच्य कुंभादिवाचकपदस्योपपदसंज्ञायामुपपदमतिङिति स

आशिषि च ।३।१।१५०॥ आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात्कर्त्तरि। जीवतात् जीवकः। नन्दतात् नन्दकः। आशीः प्रयोक्तृधर्मः। आशासितुः पित्रादे
रियमुक्तिः॥ कर्मण्यण् ।३।२।१॥ कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्। उपपदसमासः। कुम्भं करोतीति कुम्भकारः। आदित्यं पश्यतीत्यादावनभि
धानान्न। शीलिकामिभक्ष्याचरिभ्यो णः॥ अण्लोपवादार्थं वार्त्तिकं। मांसशीला। मांसकामा। मांसभक्षा। कल्याणाचारा। ईक्षिक्षमिभ्यां च॥ सुखप्रतीक्षा
बहुक्षमा। कथं तर्हि गङ्गाधरभूधरादयः कर्मणः शेषत्वविवक्षायां भविष्यन्ति॥ ह्वावामश्च ।३।२।२॥ अणः स्यात्कापवादः। स्वर्गह्वायः तन्तुवायः धान्य
मायः। आतोऽनुपसर्गे कः ।३।२।३॥ आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यान्नाऽणः। आतो लोपः। गोदः। पार्ष्णित्रम्। अनुपसर्गे किम्। गोसन्दायः।
कविधौ सर्वत्र प्रसारणिभ्यो डः। ॥ मास इत्यर्थः कुंभकार इति· अणि कृते कर्तृकर्मणोः कृतीति षष्ठ्यन्तस्य कुंभशब्दस्य कारशब्देन समासः शेषत्वविवक्षायामिति· परसं

स्कार्यस्तु धरतीति धरः गंगाया धर इति कर्मणि या षष्ठी तया तेन समास इति सुवचम्· स्यादेतत्· धातोर्विधीयमानस्याणादेः पदविधित्वाभावेन समर्थपरिभाषाया अ
नुपस्थानात्पश्यति कुंभं करोति कटमित्यादावसमर्थादपि धातोरणादयः स्युरिति चेत्· अत्राहुः कुंभाद्युपपदे विधीयमानस्याणादेरपि पदसंस्कारविधित्वात्समर्थ
परिभाषोपस्थानान्नोक्तदोषः उपोच्चारितं पदं ह्युपपदं पदं च सुप्तिङन्तमिति प्रागेवोक्तत्वादिति· ह्वावामश्च· कापवाद इति· आतोनुपसर्ग इति प्राप्तिर्बोध्या· स्वर्गा
ह्वाय इत्यादि ह्वेञ्वेञोरादेच इत्यात्वे आतो युगिति युक्· माङ् माने मेङ् प्रणिदाने अनयोरिह ग्रहणं· ननु मा माने इत्यस्य अकर्मकत्वात् कविधानस्य फलमाहुः
॥

आतो लोप इति· पार्ष्णित्रमिति· पार्ष्णिं त्रायत इति त्रैङ् पालने· गोसंदाय इति· अण्युक्· प्रसारणिभ्य इति· प्रसारणमिति संप्रसारणपर्यायः जिनातीति· ज्यावयोहानौ
क्र्यादिभ्य इति श्नां प्रत्यये ग्रहिज्येति संप्रसारणे पूर्वरूपे हल इति दीर्घे च कृते घादीनामिति ह्रस्वः॥ ❀ ॥ ब्रह्मज्य इति· ङि त्वसामर्थ्याद् भस्यापि टेर्लोपः पूर्वेणाके

ब्रह्म जिनाति ब्रह्मज्यः। सर्वत्र ग्रहणात्। आतश्चोपसर्गे। ३।१।१३६॥ आह्वः। प्रह्वः। सुपि स्थः। ३।२।४॥ सुपीति योगो विभज्यते। सुपि उपपदे आद
न्तात्कः स्यात्। द्वाभ्यां पिबतीति द्विपः। समस्थः। विषमस्थः। ततः स्थः। सुपीति वर्त्तते। कः स्यात् आरम्भसामर्थ्याद्भावे। आखूनामुत्थानमाखूत्थः। प्रष्ठोऽग्र
गामिनि। ८।३।९२॥ प्रतिष्ठत इति प्रष्ठो गौः। अग्रतो गच्छतीत्यर्थः। अग्र इति किं। प्रस्थः। अम्बाऽम्बगोभूमिसव्यापद्वित्रिकुशेकुशंकङ्गुमञ्जिपुञ्जिप
रमेबर्हिर्दिव्यग्निभ्यः स्थः। ८।३।९७॥ स्थ इति कप्रत्ययान्तस्यानुकरणं। षष्ठ्यर्थे प्रथमा। एभ्यः स्थस्य सस्य षः स्यात्। द्विष्ठः। त्रिष्ठः। इतउर्द्धुं म्नणि
सुपीति ह्यमप्यनुवर्त्तते। तत्राकर्म्मकेषु सुपीत्यस्य सम्बन्धः। तुन्दशोकयोः परिमृजापनुदोः। ३।२।५॥ तुन्दशोकयोः कर्म्मणोरुपपदयोराभ्यां कः
स्यात्। आलस्यसुखाहरणयोरिति वक्तव्यं॥ तुन्दम्परिमार्ष्टीति तुन्दपरिमृजोऽलसः। शोकापनुदः सुखस्याहर्त्ता। अलसादन्यत्र तुन्दपरिमार्ज्जः
स्वा यच्च संसारासारत्वोपदेशेन शोकमपनुद इति स शोकापनोदः। कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्॥ मूलानि विभुजति मूलविभुजो
रथः। आकृतिगणोयं। महीध्रः। कुध्रः। गिलतीति गिलः॥ प्रे दाज्ञः। ३।२।६॥ दाञो ज्ञाश्च प्रोपसृष्टात्कर्म्मण्युपपदे कः स्यात् अणोऽपवादः। सर्वप्र
दः। पथिप्रज्ञः। अनुपसर्गे इत्युक्तेः प्राद् अन्यस्मिन्सति न कः। गोसम्प्रदायः। समि ख्यः। ३।२।७॥ गोसंख्यः। गापोष्टक्। ३।२।८॥ अनुपसृष्टाभ्यामाभ्यां टक् स्या

यद् इति स्यात् आह्वः प्रह्वः इति केचित्। सति निर्वाचि सुपीत्यादिना ह्वेञः संप्रसारणे सत्याहुवः प्रहुव इति स्यादिति बोध्यम्· सुपि स्थः सुपीति प्रत्याहारो गृह्यते· न तु सप्तमीबहुवचनं क
त्रिमस्यैव ग्रहणात् आरंभसामर्थ्यादिति· कर्त्तरि पूर्वेणैव सिद्धत्वादिह कर्त्तरि कृदिति न संबध्यते· अनिर्दिष्टार्थश्च स्वार्थे धातोः स्वार्थे भाव एव न त्वेवं घञर्थे कविधा
नमित्यनेन गतार्थतेति चेत् न वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः किं च षष्ठीति सूत्रेण प्राप्तिक समासे प्रसक्ते उपपदमतिङिति नित्यसमासार्थमिदं· अत एव त्युड्ढेनाम्

कृ·
सि·कौ· पदविग्रहमाह· आखूनामुत्थानमिति· नन्वेवं षष्ठ्यर्थेकविधानस्यासंभवात्पाध्यधिहनियुध्यर्थमितिवार्त्तिकेस्थाग्रहणंव्यर्थमितिचेन्नअत्राहुः अकर्तरिकारकेविधाना
टी·त· र्थंतत्रस्थाग्रहणमिति· आखूत्थइति· स्थाइत्यस्यकेपरेआतोलोपइत्यालोपः उदः स्थास्तंभोरितिउदः परस्यसस्यथः उदोदस्यचर्त्वम्· अत्रप्राचा आखूत्थंवर्त्तत
१६ इतिनपुंसकेपठितंतदुपेक्ष्यमितिमनोरमायामुक्तम्· भाष्यादौसर्वत्रपुंल्लिंगस्यैवउदाहृतत्वात्· त्सुः कर्त्तरिमनिन्भावेकः किंघोप्रादितोऽन्यतइत्यमरकोशभावे
कस्यपुंस्त्वविधानात्· भावेनणकचिञ्झोन्यइतिनपुंसकविधानेकस्यपर्युदासाच्चेति· नणकचिज्ञइत्यत्रचकारइदमस्यचितुनञ्ञाणञ्चकञ्चविञ्चनणकचिक्से
भ्योन्यइतिविग्रहः अंबांवकप्रत्ययांतस्येति· तेनभूमिस्थितंगोस्थानमित्यादौनेतिभावः प्रावातुस्थस्यसस्येतिव्याख्यातव्ये स्थः सस्येतिव्याख्यातंतदाकरविरुद्धेन
अंबष्ठीत्येषः धातुरित्यव्याख्येयम्· द्विष्ठः त्रिष्ठः इति· द्वयोस्तिष्ठतीत्यादिविग्रहः एवमंबष्ठः आंबष्ठः गोष्ठः भूमिष्ठः सव्यष्ठः अपष्ठः कुष्ठः शेकुष्ठः शंकुष्ठः अंगुष्ठः मंजिष्ठः परमे
ष्ठः बर्हिष्ठः दिविष्ठः अग्निष्ठः आभ्यामिति· परिमृजापनुदोरित्यत्रपंचम्यर्थेषष्ठीतिभावः तुंदपरिमृजइति· अत्रमृजेरजादाविति वैकल्पिकी वृद्धिर्व्यवस्थितविभाषया
नेष्यते स्मादेवेत्यन्ये· मूलविभुजादिभ्यइति· तादर्थ्ये एषाचतुर्थीमूलविभुजादिसिध्यर्थमित्यर्थः प्रेदागामादाग्रहणेष्वविशेषमाह· दारूपादिति· पथिप्रज्ञ
इति पंथानंप्रकर्षेणजानातीत्यर्थः प्रादन्यस्मिन्निति· प्रशब्दमात्रोपपदेअस्यसूत्रस्यचरितार्थत्वादुपसर्गांतरे सतिआतोऽनुपसर्गइत्यनेनापिनप्रवृत्तीतिभा
कगामसंस्यइतिगाः संचष्टइतिविग्रहः चक्षिङः ख्याञ्व्याप्रकथनइत्यस्यतुसंपूर्वस्यप्रयोगोनास्तीतिन्यासकारः सार्वधातुकमात्रविषयोऽसौधातुरितिचमनोरमादौ
स्थितम्· गापोष्टक्· इहगामादाग्रहणेष्वविशेषेपिगायतेरेवग्रहणं· ननुगाङ्गतौगास्तुतौइत्यनयोः अनभिधानात्· सामगः सामगीति· एतेनटकः कित्वमालोप
र्थं ङित्वंतुङीवर्थमितिध्वनितम्· प्रत्ययाधिकारात्तकः प्रत्ययत्वेनप्रत्ययः परश्चेतिधातोः परएवस्यादित्याघेनोटकितावित्य स्यात्रआपं गेवेषमालीतिवोध्यम्· सा
मसंगायइति· कर्मण्यणिसति· आतोयुगितियुक्॥

पिबतेरिति· लुग्विकरणालुग्विकरणयोरितिपरिभाषालभ्यार्थकथनमुपपदपरिगणनंतुवाचनिकमेव· क्षीरपेति· क्षीरंपिबति· आतोनुपसर्गेकः· शक्तीति· ग्र
हणंनेवसिद्धषष्ठीग्रहणंलिंगविशिष्टपरिभाषायाअनित्यत्वज्ञापनार्थं· तेनमद्रराज्ञीत्यत्रटच्न· द्विषतीतापरस्तपद्विषत्परयोरितिखच्नेतिदिक्॥

पिबतेःसुराशीध्वोरितिवाच्यम्॥ सुरापी। शीधुपी। अन्यत्रक्षीरपाब्राह्मणी। सुराम्पातीतिसुरापा हरतेरनुद्यमनेऽच्॥३।२।९॥ अंश
हरः। अनुद्यमनेकिम्। भारहारः। शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षुग्रहेरुपसंख्यानम्॥ शक्तिग्रहः। लाङ्गलग्रहः। सूत्रेचधार्यर्थे
सूत्रग्रहः। यस्सूत्रंकेवलमुपादत्तेनतुधारयतितत्रालेवासूत्रग्राहः। वयसिच॥३।२।१०॥ उद्यमनार्थंसूत्रं। कवचहरः। कुमारः। आङिताच्छील्ये
।३।२।११॥ पुष्पाण्याहरतितच्छीलः। पुष्पाहरः। ताच्छील्येकिं। भाराहारः। अर्हः।३।२।१२॥ अर्हतेरच्स्यात्कर्मण्युपपदे। अलोपवादः। पूजार्हाब्रा
ह्मणी। स्तम्बकर्णयोरमिजपोः॥३।२।१३॥ हस्तिसूचकयोरितिवक्तव्यं॥ स्तम्बेरमतेस्तम्बेरमोहस्ती। तत्पुरुषेकृतीतिहलदन्तादितिवाऽलुक्। क
र्णेजपः सूचकः॥ शमिधातोःसंज्ञायाम्॥३।२।१४॥ शम्भवः। शम्वदः। पुनर्धातुग्रहणंबाधकविषयेपिप्रवृत्त्यर्थं। कृञोहेतुत्वादिषुटोमाभूत्। श
ङ्कराणामपरिज्ञाजिकातच्छीला। अधिकरणेशेतेः॥३।२।१५॥ खेशेतेखशयः। पार्श्वादिषूपसंख्यानम्॥ पार्श्वाभ्यांशेतेपार्श्वशयः। पृष्ठशयः। उ
दरेणशेतेउदरशयः। उत्तानादिषुकर्तृषु। उत्तानःशेतेउत्तानशयः। अवमूर्द्धशयः। अवनतोमूर्द्धायस्यसःअवमूर्द्धा। अधोमुखःशेतइत्यर्थः॥
गिरौडश्छन्दसि॥ गिरौशेतेगिरिशः। कथंतर्हिगिरिशमुपचचारप्रत्यहंसासुकेशीतिगिरिरस्यास्तीतिविग्रहेलोमादित्वाच्छः॥ चरेष्टः॥३।२।
१६॥ अधिकरणेउपपदे। कुरुचरः। कुरुचरी॥ ॥ ॥

कवचहरइति· कवचोद्यमनेक्रियमाणंसंभाव्यमानंवावयो·
गमयति· तेनासत्यपिकवचग्रहणेकवचहरइतिभवत्येव· हस्तिसूचकयोरिति· अन्यत्रतुस्तम्बेरताकर्णेजपिता· शमिधातोः· शमिउपपदेधातुमात्रात्संज्ञायाम
चस्यात्· पुनर्धातुग्रहणमिति· असतिधातुग्रहणेशमिसंज्ञायामित्यस्यावकाशः संभवः शंवदः कृञोहेतुताच्छील्येत्यस्यावकाशः श्राद्धकरः शकरइत्यत्रोभयप्र

स्त्र·
सि·कौ· टी·त·
९५

संगेपरत्वादृएवस्यात्‌ धातुग्रहणेकृतेतुतत्सामर्थ्यादजेवभवतितदाह· शंकरादिनामेत्यादि· अनधिकरणार्थमुपसंख्यानमितिदर्शयति· पार्श्वाभ्यामित्यादिना·कु
क्षचरइति· कुक्षिषुदेशेषुचरत्यटतीत्यर्थः ॥भिक्षासेनाअनधिकरणार्थआरंभः॥भिक्षांचरतीति· चरतिरत्रचरणपूर्वकेअर्जनेवर्तते· चरणेनभिक्षामर्जय
तीत्यर्थः सेनाचरइति· सेनांचरति· प्रविशतीत्यर्थः पचादिष्विति· टविधानंतुउपपदमतिङिति नित्यसमासार्थम्‌ सहचरःसहचरीत्यत्रतुसुप्सुपेतिवैकल्पि

भिक्षासेनादायेषुचा३।२।१७॥भिक्षांचरतीतिभिक्षाचरः।सेनाचरः।आदायेतिल्यबन्तम्‌। आदायचरः।कथन्तर्ह्यस्यस्थितांसहचरीमितिपचादिषुचरडितिपा
ठो·ग्रेषुसर्त्तेः।३।२।१८॥पुरस्सरः।अग्रतस्सरः।अग्रमग्रेणअग्रेवासरतीत्यग्रेसरः।सूत्रेऽग्रइतिएदन्तत्वमपिनिपात्यते।कथन्तर्हियूथन्तरस्य
सरगर्वितंकृष्णसारमिति। बाहुलकादितिहरदत्तः।पूर्वेकर्त्तरि।३।२।१९॥कर्तृवाचिनिपूर्वशब्देउपपदेसर्त्तेष्टःस्यात्‌।पूर्वःसरतीतिपूर्वसरः
कर्त्तरिकिम्‌।पूर्वन्देशंसरतीतिपूर्वसारः। कृञोहेतुताच्छील्यानुलोम्येषु।३।२।२०॥एषुद्योत्येषुकरोतेष्टःस्यात्‌।अतःकृकमीतिसः।यशस्क
रीविद्या।श्राद्धकरः।वचनकरः॥दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वह
र्यत्तद्धनुररुष्षु।३।२।२१॥एषुकृञष्टःस्यात्‌।अहेत्वाद्यर्थमिदम्‌।दिवाकरः।विभाकरः।निशाकरः।कस्कादित्वात्सः।भास्करः।बहुकरः।बहुशब्द
स्यवैपुल्यार्थसंख्यापेक्षयापृथग्ग्रहणम्‌।लिपिलिबिशब्दौपर्यायौ।संख्या।एककरः।द्विकरः।कस्कादित्वात्‌।अहस्करः।नित्यंसमासेऽनुत्त
रपदस्थस्येतिषत्वम्‌।धनुष्करः।अरुष्करः।किंयत्तद्बहुषुकृञोऽज्विधानमितिवार्त्तिकम्‌॥किंकरा।यत्करा।तत्करा।हेत्वादौटस्याधित्वात्पूर्व

कः समासः कृञोहेतुहेतुरिहलौकिकोनतुतत्प्रयोजकोहेतुश्चेतिकृत्रिमः केवलेकृञितदसंभवात्‌·चात्यैषिनि·न ११ त्वादचापुत्र्योगेतीषाकिङ्करीप्‌
तुकाचेश्रुकर्तृरिकादिस्यस्यबाधापत्तेरितिभावः हेत्वादिषुक्रमेणोदाहरति· यशस्करीत्यादि· एषुकिम्‌· कुंभकारः इहप्रसिद्धतरत्वात्‌· आनुबंधकोपिकार्य
तिरेवगृह्यतेनतुकृत्रहिंसायामितिहेतुः कारणम्‌· आनुलोम्यमाराध्यचित्तानुवर्त्तनम्‌· दिवाविभा· ननु अंतकरशब्देननञ्समासेस्वीकृते·पोष्टसिद्धे

सूत्रे त्वनंतशब्दात्पृथग्ग्रहणं व्यर्थमिति चेत्· अत्राहुः स्वरे तु विशेषोऽस्ति नञ्समासे हि अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः स्यात् अनंतशब्दस्योपपदत्वे तु गा
तिकारकोपपदात्· कृदिति कृदुत्तरपदप्रकृतिस्वरेणांतोदात्तत्वमिति· दिवाकर इति· दिवा दिवसं करोतीति विग्रहः· दिवाभूता रात्रिरित्यादाविव दिवाशब्दस्य सु
ति विषये शक्तिमत्परत्वात्· मूले तु उक्तान्यपि कानिचिदुदाहरणानि उत्थानिकरं एवं कारः प्रज्ञादित्वादण्· कारं करोतीति कारिकः रेकरः आदिकरः नांदीकरः किंकरः
बलिकरः भक्तिकरः कर्तृकरः चित्रकरः क्षेत्रकरः जंघाकरः बाहुकरः इति वार्तिकमिति· कैयटहरदत्तादिरीत्योक्तम्· माधवस्तु· इष्टिरियमित्याह· पुंयोगेऽप्यपि इति·
यत्तु न्यासकृतोक्तं हेत्वादिषु पूर्वसूत्रेण ट एव भवति· तेन किंकरणशीला किंकरीत्युपपन्नं भवतीति· तन्नादर्तव्यम्· परत्वाद्धाटचो बाधितत्वा
न्मूलविप्रतिषेधस्य निर्मूलत्वाच्चेति भावः· हरदत्तो तु पक्षांतरमप्युक्तमथवा पचादिषु पाठः करिष्यत इति
दिवाविभेत्यस्मिन्· सूत्रे किमादिग्रहणमपनीय पचादिष्वेव किंयत्तद्बहुषु कृञ इति पठितव्यं वार्तिकमपीत्थमेव नेयमिति तस्याशयः· अस्मिन्पक्षे कर्मण्यणं बाधि
त्वाचरितार्थमिदं वचनं हेत्वादिविवक्षायां परत्वात्· टेन बाध्यते· तेन पुंयोगं विनापि किंकरी स्यादेव पुंयोगविवक्षायां तु निर्विवादोऽयम्· किंयत्तद्बहुष्वन्यविप्र
क्रियायां विकल्पोक्तिः स्वाकरविरुद्धत्वात् कर्मण्यणोऽपि पक्षे प्रसंगाच्चायुक्तैव· न चाजभावे दिवाविभेति टः स्यादिति वाच्यम्· सूत्रे किमादिग्रहणापनयनं स्वहस्तदत्तादिभि
रुक्तत्वात्· अथवा सूत्रे किमाद्यपनयनं मास्त्विति· प्रौढिवादेन प्रक्रियाग्रंथः [illegible] इति स्वीक्रियते· तथा च हेत्वाद्यविवक्षायां किंयत्तदिति वार्तिकेनाप्यत्र हि विवक्षा
यां तु परत्वाट्टः इति विषयविशेषव्याख्याभेदात्· फलितं विकल्पमाश्रित्य प्रक्रियायां चेति प्राचोक्तमिति स्थितस्य गतिः समर्थनीया

कर्मणि भृतौ भृतिर्वेतनम्· कर्मानुवृत्तौ पुनः कर्मग्रहणात्स्वरूपपरमित्याह कर्मशब्दे इति· स्तंबकरिरित्यादि· इनो नित्वात्· कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तम्· कुक्षिंभरिरिति· एवं च गिरिस्तु कनकाचलः कति न संति चाश्मव्रजाः किं तेषु धरणीधुरः कति न संति भूदारकाः मरुत्तु मलयानिलः कति न संति मंदानिलाः प्रभुस्तु विबुधैः

कर्मणि भृतौ ।३।२।२२। कर्मशब्दे उपपदे करोतेष्टः स्यात् । कर्मकरो भृतकः । कर्मकारोऽन्यः । न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।३।२।२३। एषु कृञष्टो न हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकार इत्यादि । स्तम्बशकृतोरिन् ।३।२।२४। व्रीहिवत्सयोरिति वक्तव्यम् ॥ स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोः किं । स्तम्बकारः । शकृत्कारः । हरतेर्दृतिनाथयोः पशौ ।३।२।२५। दृतिनाथयोरुपपदयोर्हरतेरिन् स्यात् पशौ कर्तरि । दृतिं हरतीति दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः । पशौ किं । दृतिहारः । नाथहारः । फलेग्रहिरात्मम्भरिश्च ।३।२।२६। फलानि गृह्णातीति फलेग्रहिः । उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । आत्मानं बिभर्तीति आत्मम्भरिः । आत्मनो मुमागमः । भृञ इनाचात्कुक्षिम्भरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । ज्योत्स्नाकरम्भमुदरम्भरयश्चकोरा इति मुरारिः । एजेः खश् ।३।२।२८। ण्यन्तादेजेः खश् स्यात् । अरुर्द्विषदजन्तस्य मुम् ।६।३।६७। अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् । खिदन्ते उत्तरपदे न त्वव्ययस्य । शित्त्वाच्छबादिः । जनमेजयतीति जनमेजयः । वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम् ॥ वातमजा मृगाः । खित्यनव्ययस्य ।६।३।६६। खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात् । ततो मुम् । शुनिन्धयः । तिलन्तुदः । शर्धञ्जहा माषाः । शर्धोऽपानशब्दः तं जहतीति विग्रहः । जहातिरन्तर्भावितण्यर्थः ॥ नासिकास्तनयोर्ध्माधेटोः ।३।२।२९। अत्र वार्तिकम् । स्तने धेटो नासिकायां ध्मश्चेति वाच्यम् स्तनन्धयतीति स्तनन्धयः । धेटष्टित्वात्स्तनन्धयी । नासिकन्धमः । नासिकन्धयः ॥

(१ दिक एव एजेः खश् एजृ कंपने· एजेरिति ण्यन्तस्यानिर्देशो न तु शुद्धस्य कानिर्देशः खशः शित्त्वाद्रणोल्लिंगात् तद्धि सार्वधातुकत्वे सति शप् यथा स्यादिति· न च शुद्धस्यापि सत्यसति वा विशेषोऽस्ति· न चोत्तरार्थं

धाश्रयः कति न संति कुक्षिंभरा इति केषांचित्प्रयोगः प्रामा

क्लिन्नमिति वाच्यम् इहार्थत्वे संभवति केवलेन तार्थत्वस्यान्याय्यत्वात्तदेतदाह ल्यं नादिजेरिति अहर्द्विषत् वर्णग्रहणे तदन्तविधेः सिद्धावप्यंतग्रहणं श्रुनिध
पर इत्यादी ह्रस्वे कृते मुमप्रवृत्त्यर्थम् तथाहि अंतःशब्दः समीपपरः अन्वासावंतश्चेति विग्रहः निपातनाद्विशेषणस्य परनिपातः समीपः स्थितः नव्ययस्येति
सूत्रेण विहितो यो ऽच् तदंतस्य मुमिति व्याख्यायते एवं जनमेजय इत्यादौ सततो ह्रस्वे मुम् सिद्धे प्रथमाविभक्तिनिर्दिष्टः प्रकर्त्तनीय इत्यवधेयम् शर्द्धं
जहातीति शर्द्धं नशर्द्धः शृधुशब्दकुत्सायाम् घञन्तं जहातीति नतु माषाः शर्द्धं अपानशब्दं त्याजयंतीति नतु स्वतो जहतीत्याशंकायामाह अंतर्भावितण्य
र्थ इति यथासंख्यं वारयितुमाह यत्रेति घेटष्टित्वादिति अवयवे अचरितार्थत्वादिति भावः खश्प्रत्ययेनानादेव घेटो ऽभिविष्टो नान्यत इति वर्द्धमानश्लोक

नाडीमुष्ट्योश्च ॥३।२।३०॥ एतयोः कर्मणोरुपपदयोः ध्माधेटोः खश् स्यात् । यथासंख्यं नेष्यते । नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः ।
घटी खारी खरीषूपसंख्यानं । घटिन्धमः । घटिन्धयः । इत्यादि । खारी परिमाणविशेषः । खरी गर्दभी । उदि कूले रुजिवहोः ॥३।२।३१॥ उत्पूर्वाभ्यां रुजि
वहिभ्यां कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहः । वहाभ्रे लिहः ॥३।२।३२॥ वहः स्कन्धः तं लेढीति वहंलिहो
गौः । अभ्रंलिहो वायुः । परिमाणे पचः ॥३।२।३३॥ प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः ।
मितनखे च ॥३।२।३४॥ मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । पचिरत्र तापवाची ॥ विध्वरुषोस्तुदः ॥३।२।३५॥ विधुन्तुदः । मुमि कृते संयो

स्वामी हरदत्तादयः तेनपाघ्राध्माधेडितिशप्रत्यये आतो ऽनुपसर्गे क इति कः ... चटावेवधयाकन्यागांधयतीति गाथा अत्र च संप्रदाय एव शरणम् ना
सिकंधम इति बाधा धमादेशः ॥ ॥ नाडीमुष्ट्योश्च यथासंख्यनेति ... चहैव सूत्रे भाष्ये स्तो च स्थितम् यत्तु यथासंख्यमिति सूत्रे नाडीमु
ष्ट्योरित्युदाहृतं भाष्ये तत्राप्तिमात्राभिप्रायेण त्येके शब्दकौस्तुभे तु मतभेदेन तदृश्यमिति स्थितम् घटीखारीखरीष्विति जयादित्यस्तु वातशब्दम
प्युदाजहार वातंधमः वातंधय इति तत्तु भाष्यादौ न दृश्यत इति मूले ऽनुपात्तम् उदि कूले ननु कूलस्येव... ब्दस्यापि समस्यंतत्वादुपपद

सू·
कौ·
त·
९७

त्वं स्यात्तत्तश्च रुजिवहिभ्यां सह यथासंख्यं स्यादिति चेत्· अत्राहुः नाडीमुष्ट्योरिति वत्साघवाद्दुन्कूलयोरिति वक्तव्ये उदीति व्यस्तोच्चारणान्नोपपदं· एवं
चोदीति पंचम्याः स्थाने सप्तमी रुजिवहोरिति तु पंचम्याः स्थाने षष्ठीति· एतच्च यथासंख्यसूत्रे कैयटस्य स्पष्टम्· किंच रुजेः सकर्मकत्वात्कर्मणीत्युपतिष्ठते तेन
न कूलं विशेष्यते नोच्छुवः असत्ववाचित्वेन असंभवात् तदेतदाह· उत्पूर्वाभ्यामित्यादिना· विधुंतुद इति· अरुर्द्विषदजंतस्य मुमागमः अरुंतुद इति· [illegible]· सर्भा
सैंहिकेयो विधुंतुदश्च तमः॥ ॥ अरुंतुद इति· अरुंतुदं तु मर्मस्पृगित्यमरः [illegible] यामीर्ममस्पृगिति च असूर्यंपश्या इति· या घ्राध्मेति यश्या देशः गुप्तिपरं चे
दम्· एवं नाम राजदाराः गुप्ताः परपरिहार्यदर्शने सूर्यमपि न पश्यंति किंतु नः परपुरुषमिति तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते· यदा तु सूर्याभावदर्शनमा

अरुंतुदः॥ असूर्य्यललाटयोर्दृशितपोः। ३।२।३६। असूर्यमित्यसमर्थसमासः। दृशिना नञः संबन्धात्। सूर्यं न पश्यन्तीत्यसूर्यंपश्या राज
दाराः। ललाटंतपः सूर्यः॥ उग्रंपश्येरंमदपाणिन्धमाश्च। ३।२।३७॥ एते निपात्यन्ते। उग्रमिति क्रियाविशेषणं तस्मिन्नुपपदे दृशेः
खश्। उग्रंपश्यतीत्युग्रंपश्यः। इरा उदकं तेन माद्यति दीप्यते वियुद्धन्त्वादिति इरंमदो मेघज्योतिः। इह निपातनाच्छ्यन्नाभावः। पाणयो
ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा। अन्धकारावृत इत्यर्थः। तत्र हि सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते। प्रियवशे वदः खच्। ३।२।३८।
प्रियंवदः। वशंवदः। गमेः सुप्युपसंख्यानम्॥ असंज्ञार्थमिदं मितंगमो हस्ती। विहायसो विह इति वाच्यं। खच्च डिद्वा वाच्यः। विहंगमः। विहंगः

तुंमुर्वेत्तरवं दूरेदेर्शपंक्वा  विवक्षितं तदा खश् न भवत्यनभिधानादिति न्यासकारादयः। प्रियवशे वदः खच्· खकारो मुम  भुजंगमः। भुजंगः॥
[illegible] रणखचिह्नस्वरेति विशेषणार्थ इति स्तः· खेहस्व इत्युच्यमाने रुजेः खश्यपि न मेजः परे इत्यत्रापि स्यादिति तदा शप एकानुबंधग्रहणे द्व्यनुबंध
स्य न ग्रहणमिति खशि न भविष्यतीत्यादिना वृत्तिग्रंथस्यायुक्तत्वमाहुः खशिप्रकृते प्रत्ययांतकरणमुत्तरार्थम्· द्विषंतपः इत्यत्र ह्रस्वादिलोपो यथा स्या
तां शर्प [illegible] माभूदिति· नन्वेवमुत्तरत्रैव क्रियतामिति चेत्· सत्यम् इह करणमन्यतोऽपि क्वचित् भवतीति ज्ञापनार्थं· तेनंगमेः सुपीति नापूर्ववार्तिकं किंतु

कृ॰
सि॰ कौ॰ टी॰ ल॰ १९

इह वासरूपविधिना ल्युडपि· आशितभवनः भावे आशितभवनं घञ्त्विति तु बाध्यत एव सरूपत्वादित्याहुः नचात्र क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नेति ल्युटोऽनिषेधः शंक्यः यत्र हि घञादेर्बाधकत्वेन क्तल्युडादयः प्रसक्तास्तत्र नित्यं बाधो न तु विकल्पेनेति तस्यार्थः इह तु ल्युटोऽपवादः खच् अत्र वासरूपन्यायो निर्बाध एव· इतश्च आशितभवनमित्युदाहरतो जयादित्यस्यापि संमतमेवेति दिक्॥ ॥ संज्ञायां भृतृवृजि· विश्वंभरः कैटभजित् रसा विश्वंभरा स्थिरेत्यमरः व्युत्पत्तिमात्रमि

संज्ञायां भृतृवृजिधारिसहितपिदमः। ३।२।४६। विश्वं बिभर्तीति विश्वम्भरः। विश्वम्भरा। रथन्तरं साम। इह रथेन तरतीति व्युत्पत्तिमात्रं। न त्ववयवार्थानुगमः। पतिम्वरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः। शत्रुंसहः। शत्रुन्तपः। अरिन्दमः। दमिः शमनार्थोऽन्तेन सकर्म्मक इत्युक्तम्। मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः॥ गमश्च। ३।२।४७। सुतङ्गमः। अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः। ३।२।४८॥ संज्ञायामिति निवृत्तम्। एषु गमेर्डः स्यात्। डित्वसामर्थ्यादभस्यापि टेर्लोपः। अन्तं गच्छतीत्यन्तगः इत्यादि। सर्वत्रपन्नयोरुपसंख्यानं॥ सर्वत्रगः। पन्नम्पतितं गच्छतीति पन्नगः। पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणं। उरसो लोपश्च॥ उरसा गच्छतीत्युरगः। सुदुरोरधिकरणे॥ सुखेन गच्छन्त्यस्मिन् सुगः। दुर्गः॥ अन्यत्रापि दृश्यत इति वक्तव्यम्॥ ग्रामगः। डे च विहायसो विहादेशो वक्तव्यः॥ विहगः। आशिषि हनः। ३।२।४९। शत्रुं वध्याच्छत्रुहः। आशिषि किम्। शत्रुघातः। दारावाहनोऽणन्तस्य च टः संज्ञायाम्॥ दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः। दार्वाघाटः। चारौ वा॥ चार्वाघाटः। चार्वाघातः। कर्म्मणि समि च॥ कर्म्मण्युपपदे सम्पूर्वाद्धन्तेरण् टत्वं चेत्यर्थः। वर्णान् संहन्तीति वर्णसङ्घाटः· [illegible]सङ्घातः। पदसङ्घाटः। पदसङ्घातः। अपे क्लेशतमसोः। ३।२।५०॥ अपपूर्वाद्धन्तेर्डः स्यात्। अनाशीरर्थमिदं। क्लेशापहः पुत्रः। तमोपहः सूर्य्यः॥

ति· नतु सं तु स्वरावग्रहौ· रथंतरमाजभारवसिष्ठ इत्यत्र हि रथमित्यवगृह्णंति कृदुत्तरपदप्रकृतिस्वरेणांतोदात्तं चाधीयते· अखंडत्वे त्ववग्रहो न स्यान्न च विष १९
मस्यत्याद्युदात्तश्च स्यात्· इत्युक्तमिति· माधवाद्यनुरोधेनेत्यर्थः मतांतरे त्विति· हरदत्तादिमत इत्यर्थः चित्तव्यापारोपरमः शमः इंद्रियव्यापारोपरमस्तु दमः

इत्यादिवर्णनग्रंथाश्चेहानुकूलाः संज्ञायां किम् कुटुंबं बिभर्तीति कुटुंबभारः गमश्च पूर्वसूत्र एव गमिर्नोक्तः अत्र सूत्रे गमेरेवानुवृत्तिर्यथा स्यात् भृञ्प्रभृतीनां माभू दिति सुदुरोरधिकरणे कर्मणि तु ईषद्दुःसुषु इति खलेव सुखेन गम्यत इति सुगमः पंथाः दुर्गमः दारावितिशब्दापेक्षया पुल्लिंगता तदाह दारुशब्दे इति काष्ठ वाचिन्यनेन त्विध इत्यमरः टविधानार्थमिदम् अणं तु कर्मण्यणित्येव सिद्धः अलोऽन्त्यस्येत्येव सिद्धे तपरकरणं स्पष्टार्थम् अन्यथा हि टः प्रत्ययः संभाव्येत दारावाहती

कुमारशीर्षयोर्णिनिः। ३।२।५१॥ कुमारघाती। शिरसः शीर्षभावो निपात्यते। शीर्षघाती। लक्षणे जायापत्योष्टक्। ३।२।५२॥ हन्तेष्टक् स्याल्लक्षणवति कर्तरि। जायाघ्नो ना। पतिघ्नी स्त्री॥ अमनुष्यकर्तृके च। ३।२।५३॥ जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। अमनुष्येति किम्। आखुघातः शूद्रः। अथ कथं बलभद्रः प्रलम्बघ्नः। शत्रुघ्नः कृतघ्न इत्यादि। मूलविभुजादित्वात्सिद्धम्। चौरघातो नगरघातो हस्तीति तु बाहुलकात्। शक्तौ हस्तिकपाटयोः। ३।२।५४॥ हन्तेष्टक् स्यान्मनुष्यकर्तृके शक्तौ द्योत्यायाम्। मनुष्यकर्तृकार्थमिदम्। हस्तिघ्नो ना। कपाटघ्नश्चौरः। कवाटेति पाठान्तरम्। पाणिघताडघौ शिल्पिनि। ३।२।५५॥ हन्तेष्टक् टिलोपो घत्वं च निपात्यते पाणिताडयोरुपपदयोः। पाणिघः। ताडघः। शिल्पिनि किम्। पाणिघातः। ताडघातः। राजघ उपसंख्यानम्॥ राजानं हन्ति राजघः। आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्। ३।२।५६॥ एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात्। अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम्। अच्वौ किम्। आढ्यीकुर्वन्त्यनेनेत्यत्र प्रतिषेधसामर्थ्याल्ल्युडपि नेति काशिका। भाष्यमते तु ल्युट् स्यादेव। अच्वावित्तु नार्थम्॥

११ निदार्वाघाटः गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्

॥ कुमारशीर्षयोर्णिनिः एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात् सुप्यजातावित्यादिभिः सिद्धे ताच्छील्यावश्यकाद्यभावविरहेपि णिन्यर्थं शिरसः शीर्षभावार्थं वचनम् लक्षणवतीति सूत्रे लक्षणशब्दोऽर्शआद्यजन्त इति भावः जायाघ्न इति जायामरणसूचकं पाणिरेखाविशेषादिकं यस्यास्ति सः तां हन्तीति गौणो व्यवहारः एवं पतिघ्नीत्यत्रापि बोध्यं अमनुष्यकर्तृके च मनुष्यभिन्नकर्तृकेऽर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टक् स्यात् यद्यपि मनुष्यशब्दो रक्षःपिशाचादीनाहे

सि॰कौ॰ टी॰त॰ ९६

तिभागुक्तं तथापीहलस्यानुरोधेनव्याख्यातव्यमित्याशयेनाह तिलकालकइत्यादि नानुबंधकृतमसारूप्यमितिदृष्टान्तः सारूप्याद्यासरूपविध्यप्रवृत्तेराह बाहुलकादिति शक्तौ हस्ति शक्तौ किं विषेणहस्तिनं हंतीति हस्तिघातः यद्यपीह शक्तिरजिअशक्तस्य कर्तृत्वानुपपत्तेस्तथापि शक्तिग्रहणसामर्थ्यात्सकर्मकोविवक्ष्यते तेनस्वबलेनैव हंतुं याशक्तिः सागृह्यते कपाटघ्नइति कं शिरः पाटयति प्रविशतइतिकपाटम् पाठांतरेतु अटतेः पचाद्यच् कवंचाम्रेरत्यत्र योगविभागात्कः। कवाटेघ्नइतिहरदत्तः आढ्यसुभगाच्व्यर्थ इति अभूततद्भावविषये च्व्यर्थः आढ्यंकरणमिति लिंगविशिष्टपरिभाषया आढ्यशब्देप्युपपदेस्यदास्युन् तदापि स्त्रियांनव्ययस्येतिहृस्वेनटाप्तदेवरूपम् आढ्यी कुर्वंत्यनेनेति नन्विहल्युनोभावे पिकरणाधिकरणयोश्चेति ल्युटा भवितव्यमित्यतआह प्रतिषेधसामर्थ्यादिति तथाहि आढ्यीकरणमितिरूपंल्युट्ख्युनोस्तुल्यं नचख्युनिमुमहृस्वौस्यातामिति वाच्यम् अनव्ययस्येतिपर्युदासात् ऊर्यादिच्विडाचश्चेतिनिपातसंज्ञकत्वेन

कर्त्तरिभुवःखिष्णुच्खुकञौ। ३।२।५७। आढ्यादिषुच्व्यर्थेषु च्व्यन्तेषु भवतेरेतौस्तः। अनाढ्य आढ्योभवतीति। आढ्यम्भविष्णुः। आढ्यम्भावुकः। स्पृशोऽनुदके क्विन्। घृतस्पृक्। कर्म्मणीतिनिवृत्तम्। मन्त्रेणस्पृशतीतिमन्त्रस्पृक्। ऋत्विग्दधृक्। व्याख्यातं। त्यदादिषु दृशोऽनालोचने कञ्च समानान्ययोश्चेतिवाच्यम्। सदृक्। अन्यादृक्। अन्यादृशः। क्सोऽपिवाच्यः। तादृक्षः। सदृक्षः। अन्यादृक्षः॥

१९ च्व्यन्तस्य अव्ययत्वात् नचख्युनिसतिअपदमतिङ् इतिनित्यसमासोलभ्यते सुप्तिङन्तेनेतिवाच्यम् सुट्स्वपिगतिसमासस्यसंभवात् तस्यापिनित्यसमासत्वात् अषष्ठ्यौ प्रत्ययविशेषः स्युटिटिद्रुतिसूत्रे णख्युन्नित्रैवख्युनेउपसंख्यानेनचअपष्ठ्यस्त्वात् नापिस्वरेविशेषः ल्युटिलित्स्वरेणख्युनिनित्स्वरेणकृत्त्व उदात्तत्वाविशेषात् नचोत्तरार्थमत्रा खिष्णुकभिस्वाच्यं केवलोत्तरार्थत्वेहितत्रैवब्रूयात् तदेतदुक्तमिहल्युडपिनेतिभाष्यमतेखितिभाष्यवार्तिकस्वरसेनल्युडिष्टइतिकेवलोत्तरार्थत्वं लभ्यते अतस्तद्विरोधादितिकल्पमतमयुक्तमितिकैयटः कर्त्तरिभुवः॥ ॐ ॥ अच्व्यन्तेष्वितिअप्राप्तिविचानुवर्तते अन्यथाआढ्योभविष्णुः आढ्योभावुकइतिस्यादितिभावः कर्तृग्रहणंकरणानुवृत्तिभ्रमनिरासार्थमुत्तरार्थंच विधिपाचकवस्तुतस्तुव्यर्थमेवअस्वरितत्वादेवाननुवृत्तिसिद्धेः उत्तरत्राप्युपयोगोनेतिस्पष्टीकरिष्यमाणत्वाच्च।

वकारो मुमर्थः चकारश्चितस्वरार्थः नकारो वृध्यर्थः स्यादेतत् खिष्णुच इकारो मास्तु खष्णुरित्येवोच्यताम् एवं चकारोपि न कर्तव्यः प्रत्ययस्वरे णैवाभिमं
तसिद्धेः इकारादित्वसिद्धये इडागमे कृतेप्याभामा अनन्तत्वात् इति तस्यानुदात्तत्वात् न च कृत्यो के ष्णुच्चार्वादयश्चेति स्वरसूत्रे अस्य ग्रहणं न स्यात् चकारानुबंधा
भावादिकारस्य लाक्षणिकत्वात् षत्वणत्वयोरसिद्धत्वेन इष्णु इति रूपाभावाच्चेति वाच्यम् कृतेपि इकारे तदनुबंधग्रहणेनातदनुबंधस्येति परिभाषया अलंकृ
ञादिष्णुचस्य ग्रहणं स्यान्नत्वेतस्य इकारोच्चारणसामर्थ्यादस्यापि ग्रहणमिति नैष्टं तैवं खिष्णुच् यमस्नुच् तत्रैव हि कृते च कारानुबंधसामर्थ्यादस्यापि
ग्रहणमस्त्विति किमिकारेणेति चिंत्यमेतत् न चेहलादेवत्राभावादिकारोऽस्तु चकार एव मास्त्विति शंक्यम् एकमात्रो ह्रस्वः व्यंजनं त्वर्द्धमात्रकमिति सर्व
संमतत्वात् य...दत्ते नोक्तंषत्वणत्वयोः सामर्थ्यादस्य ग्रहणमिति तदापाततः स्नुजपेक्षया स्नुजुक्तौ प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सा

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्। ३।२।६१। एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे। द्युसत्। उपनिषत्। अ
ण्डसूः। प्रसूः। मित्रद्विट्। प्रद्विट्। मित्रध्रुक्। प्रध्रुक्। गोधुक्। प्रधुक्। अश्वयुक्। प्रयुक्। वेदवित्। निविदित्यादि। अग्रग्रामाभ्यां नयतेर्णो वाच्यः॥ अ
ग्रणीः। ग्रामणीः। भजो ण्विः। ३।२।६२। सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात्। अंशभाक्। प्रभाक्। ॥ (( मर्य्यायोगादिति दिक् निवृत्तमिति ननु स्पृशेः

सकर्मकत्वात् कर्मण्युपपद इत्येव प्राप्यत इति चेत् अत्राहुः पूर्वसूत्रोक्तनुपि इत्यनुवर्तते साचानुवृत्तिः कर्तरि कृदित्यनेनैव कर्तरि क्विनः सिद्धत्वाद्यर्थासती
कर्तृप्रचयार्था कर्मण्युपपदे एकः कर्ता करणादौ चापर इत्येवं कर्तृप्रचयस्तथा च सुबंते उपपदे इति फलितं भवतीति मंत्रे स्पृगित्याद्यपि सिद्धमिति वस्तुतस्तु कर्तृग्रहणं व्यर्थ
मिति पूर्वसूत्र एवोक्तम् न चेह कर्तृप्रचयार्थं तदावश्यकमिति शंक्यम् मंत्रे स्पृगित्यादेः क्विपा सिद्धेः न च क्विपि कुत्वं न स्यादिति वा ॥
च्यम् क्विन्प्रत्ययायस्मादिति बहुव्रीहिबलादेव कुत्वसंभवादिति दिक्। सदृगिति तमिवेममपश्यंति जनाः स इवायं पश्यति ज्ञानविषयो भवतीति व्युत्पत्त्या कर्मकर्त
रि प्रत्ययः रूढ्यर्थानुगुणत्वात्॥ ❀ ॥ सत्सूद्विष पञ्चविवरणादेः सूइति द्विषासाहचर्यात्सूतेरादादिकस्य ग्रहणं न तु सुवतिसूयत्योः युजिर्योगे युज समाधौ
द्वयोरपि ग्रहणम् विद ज्ञाने विद विचारणे विद सत्तायां त्रयाणामपि ग्रहणं विद्लृ लाभ इत्यस्य तु न ग्रहणम् विदेत्यकारस्य विवक्षितत्वात् द्युसदिति पूर्वपदात्सं

कौ· त· ९

षत्वं तु न भवति· छन्दसीत्यनुवृत्तेः· तथा च माघः मनस्सु येन द्युसदां न्यधीयते ति आदित्येत्यादिविषये इत्यत्र तु सुधामादित्वात्स्वत्वमिति माघवादयः· उपनिषदिति स
दिः प्रतेरितिषः अग्रग्रामाभ्यामिति सणत्वं ग्रामणीरिति निर्देशेन ज्ञापितमेतत्· नीरूपप्रत्ययविषयं चेदनेन कर्मण्यणि णत्वं न भवति ग्रामनायः ज्ञापकस्य सामान्यवि
षयत्वात् अग्रशब्दोपपदादपि णत्वं तेनाग्रणीरित्यपि सिद्धमित्याहुः ॥ ॐ ॥ अदोऽनन्ने· विट्स्यादिति· जनसनखनक्रमगमो विडिति पूर्वसूत्रानुवृत्तेः पूर्वसूत्रं त्विह नोप
लभ्यम्· तत्र हि छन्दसि सहेत्यतः छन्दसीत्यनुवर्त्तनात्· कामदुघेति· धेनुरिति शेषः कामं दोग्धीति विग्रहः अन्येभ्योपि दृश्यन्ते· इह विजुपे छन्दसीत्यतो विच्प्रत्ययः

अदोऽनन्ने ।३।२।६८॥ विट् स्यात् । आममत्ति आमात् । सस्यात् । अन्नान्नेति किम् । अन्नादः । क्रव्ये च ।३।२।६९॥ अदेर्विट् । पूर्वेण सिद्धे वचनमण्बाध
नार्थम् । क्रव्यात् आममांसभक्षकः । कथं तर्हि क्रव्यादोऽस्रप आशिर इति । पक्वमांसशब्द उपपदेऽण् । उपपदस्य क्रव्यादेशः पृषोदरादित्वात् ।
दुहः कप् घश्च ।३।२।७०॥ कामदुघा । अन्येभ्योऽपि दृश्यन्ते ।३।२।७५॥ छन्दसीति निवृत्तं मनिन्क्वनिप्वनिप्विचः एते प्रत्यया धातोः स्युः ॥
नेड्वशि कृति ।७।२।८॥ वशादेः कृत इण्न स्यात् । शॄ सुशर्म्मा । प्रातरित्वा ॥ विड्वनोरनुनासिकस्यात् ।६।४।४१॥ अनुनासिकस्य आत्स्यात् । वि
जावा । ओणृ । अवावा । विच् । रोट् । रेट् । सुगण् । क्विप् च ।३।२।७६॥ अयमपि दृश्यते । सत्सूद्विषेति तस्यैव प्रपञ्चः । उखास्रत् पर्णध्वत् ।
वाहभ्रट् । अन्तः ।८।४।२०॥ पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण् । शास इदितीत्वं । मित्राणि शास्तीति मित्रशीः ॥

आतो मनिनिति सूत्रान्मनिनादयश्चानुवर्तन्ते न सह· मनिन्क्वनिब्वनिपादिसु शर्म्मेति· सुष्टु शृणातीति विग्रहः प्रातः एतीति प्रातरित्वा इणः क्वनिपि ह्रस्वस्य पिती
ति तुक् अवा वेति अनुनासिकस्य आत्वे अवादेशः सो दीर्घनलोपौ रोट् रेडिति· रुष रिष हिंसायाम्· उपधागुणः जश्त्वचर्त्वे· वाहभ्रडिति वाहाद्भ्रश्यती
ति विग्रहः वनौ तु वहाभ्रडिति पाठः वहः स्कन्धः अन्येषामपि दृश्यत इति पूर्वपदान्तस्य दीर्घ इति हरदत्तः अंतः अनितेरिति वर्तते अन्तोऽत्र पदापेक्षो गृह्यते
नानितेरपेक्षया व्यभिचारादत आह· पदान्तस्येति· हे प्राणिति· अनप्राणने क्विप अनुनासिकस्येति दीर्घः नङिः संबुद्ध्योरिति नलोपनिषेधः अन्यत्र तु नलोप

क्रि· कौ· त· १९

तेन आशास्ते इति सिद्धमित्येके अन्ये तु विध्यर्थमेवेदं न नियमार्थं प्राप्त्यभावात् न च शास इदङ्हलोरिति इत्वस्य प्राप्तिरस्तीति वाच्यम् तत्राङ् साहचर्यात् शास्ते
परिन एव शासेर्ग्रहणात् यद्यपि सर्त्तिशास्तीति सूत्रे पृथक् योगकरणादर्त्तेर्लुङि आरत्समारतेति परह्नये प्यङि ति सिद्धं तस्तथाप्युत्तराघेन यापरस्मैपदग्रह
णानुवृत्तेरव्याकरे स्पष्टतया परस्मैपदे दृष्टो य शासिस्तस्मात्परस्याङि तिनिष्कर्षः तथा च शास इत्यत्र इत्वप्रसक्तिरेव नास्तीत्याहुः वस्तुतस्तु आशिषि लिङ्लोटौ
क्षियाशीः प्रैषेष्वित्यादिनिर्देशेनैव सिद्धमिति नेदमपूर्ववार्तिकम् ततश्च इत्वं वाच्यमित्यस्य इत्वं व्याख्येयमित्यर्थः आशिषीत्याद्युक्तनिर्देशादिति दिक् सुम्नाविति ।
आसु[illegible]ति यमस्य कवशास्त्यादिति[illegible]स्यात् इत्वं न स्थानिवद्भावस्यानल्विधाविति निषेधात् प्रत्ययलक्षणसूत्रं तु प्रत्ययस्यासाधारणं यत्राश्रीयते तत्रैवेति नि
यमार्थमिति निष्कर्षात् यत्तु कैयटेनोक्तं इत्वमवकारादाविति वचनाज्ज्ञापकारीयोदाहरणप्रामाण्याद्वा प्रत्ययलक्षणेन इत्वं नेति तन्न अनृतोऽङिन्यादिसिद्ध
ये प्रत्ययप्राधान्ये अल्विध्यर्थं प्रत्ययलक्षणसूत्रमिति पक्षमभिप्रेत्य तत्रापवकारादाविति वचनस्वीकारे सुधीवेति न सिध्येदित्यपरितोषेण पक्षांतरस्वीकारद्
ति वाच्यम् नन्वनियमार्थमिति निष्कर्षपक्षे तु मागृहमित्र शीरित्यत्र कथमित्वं भवेदिति चेत् अत्राहुः शास इदङ्हलोरिति तत अङि नियमार्थमिदं अजादौ चेदित्वं
स्यात्[illegible]नान्येति हल्ग्रहणं मास्त्विति ज्ञेयमिति नन्वेवमपि हलादौ पिति सार्वधातुके तृणह इमो विधानादतृणेड्वित्यादि तु नियमपक्षे न सिध्यतीत्यस्ति विध्यर्थमि
ति पक्षोपि स्वीकार्य इति वाच्यम् उतो वृद्धिरिति सूत्राद्धल्ग्रहणमनुवर्त्य तृणहानीत्यत्रानिष्टवारणाय नाभ्यस्तस्याचीति सूत्राद्विचीत्यनुवर्त्य व्याख्यानात् न च रु
आदिगणे एव व्याख्यास्यामस्तस्यादेतत् सुपिस्थः क्विप् चेति सूत्राभ्यां क्विपौ सिद्धौ नत्राहशब्दसामर्थ्यात् धातुग्रहणसामर्थ्याद्धि धातुमात्राद्भवन्नपि प्रत्ययो हेत्वादिषु कर्त्तृप्रत्ययबा
धते तेन चास्तिष्ठतेः क्विपावपि बाधेतेति स्थः क च इति संभवस्तीति भावः नन्वेवं शमिधातोः सिद्धस्थाने नरं स्थः क चेति सूत्रस्थं तां चकारेणाचि समुच्चिते सवर्णदीर्घेण शंस्थानि
भविष्यति एवं चोत्सर्गापवादयोः समानदेशत्वं यासंदर्भशुद्धिरपि लभ्यते इत्वाभावार्थं वचनं यत्नेनीयमिति महत्तायावमिति चेत् अत्राहुः अशंस्यादित्यत्र अचूकावश
ताविति सूत्रेणोत्तरपदमन्तोदात्तं स्यात् कृत्ग्रहणे गतिकारकपूर्वस्यापीति शंस्थाशब्दस्याजंतत्वात् क्विबंते न नञ्समासे [illegible] ति चेदीति ।

उष्णभोजीति· उष्णं भोक्तुं शीलमस्य· आमन्त्रयितेति· मन्त्रिगुप्तपरिभाषणे चुरादौ णिङ्पूर्वः इदित्वान्नुम्· ताच्छील्यस्य विवक्षितत्वात्तृन् अत एव न लोकेति निषे
धात् ब्राह्मणानित्यत्र कर्मणि षष्ठी न कृता· उपसर्गभिन्न एवेति· सत्सूद्विषेति सूत्रे उपसर्गेपीत्युक्तत्वादुपसर्गभिन्नस्यैव सुपो लाभायास्मिन्सूत्रे पुनः सुप्
ग्रहणं कृतमिति भावः· भाष्यविरोधादिति· उक्तं च भाष्ये· सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थमनुपसर्ग इत्येवं तदभूदिदं तु सुप्मात्रे यथा स्यादुद्दाभ
सारिण्यः प्रत्यासारिण्यः इति· अस्यायमाशयः सत्सूद्विषेति सूत्रे सुपि स्थ। इत्यतः सुपीत्यनुवर्तनेन तच्च उपसर्गेतरपरम्· उपसर्गेपीति पृथग्युक्तेः· तदिहानु
वर्तमानमप्युपाधिकारादुपसर्गेतरपरमेव स्यादिति· निष्कर्षे तु माभूदिह सुब्ग्रहणमुपसर्गेपीत्यंशस्याप्यनुवृत्त्या निर्वाहात्· सर्वथापि सुब्मात्रे उपपदे णिनिः
न त्वनुपसर्ग एवेति सिद्धान्तः· एतच्च शब्दकौस्तुभे स्पष्टम्· प्रसिद्धश्चेति· एवं च पाणिनीयानुसारिणामिति प्रक्रियाकारप्रयोगोपि निर्वाह्य एव· अमरश्च प्रायुं
क्त लिङ्ग शेषविधिर्व्यापी विशेषैर्यद्यबाधित इति दिक्· साधुकारिणीति· एतच्च ज्ञापकसिद्धम्· आक्वेरिति सूत्रे हि तच्छीलात्पृथक्साधुकारी गृह्य
ते· तच्च ताच्छील्यं विनापि णिनौ संगच्छते· ब्रह्मणि वद इति इदं तु वाचनिकमेव अताच्छील्यार्थमिति· एतच्च कैयटहरदत्तादिग्रन्थेषु स्पष्टम्· यत्तु
भट्टवार्तिके ब्रह्मवादिशब्दस्य ताच्छील्ये तद्धर्मे तत्साधुकारे त्रयं व्याख्यानं कृतं· आक्वेरित्यधिकारे तु ब्रह्मणि वद इति विधायकं वचनं नास्त्येवेति क
थमिदं संगच्छतेति चेत्· अत्राहुः भट्टपादानामयमाशयः सुप्यजातौ णिनिरिति सूत्रेण ताच्छील्ये णिनिः· उपसंख्यानेन ज्ञापकेन वा साधुकारिणि णिनिः· आ
वश्यकाधमर्ण्ययोर्णिनिरित्यावश्यके णिनिस्तु तद्धर्मे पर्यवस्यति· न त्विह आक्वेरिति सूत्रस्य व्यापारोस्तीति· ननु ब्रह्मवादिनो वदन्तीत्यत्र ब्रह्म वेद इति ब्रह्मशब्द
स्यापि जातिवाचकत्वात्कथमिह ताच्छील्ये णिनिरिति समर्थनमिति चेत्· अत्र नव्याः सुप्यजाता विन्यत्र प्रातिजातिरेव पर्युदस्यते ताच्छील्यसमभिव्याहारात्· ब्राह्म
णानामन्त्रयितेति· प्रत्युदाहरणे तु ताच्छील्याभावेन णिनिर्नाप्यनुपपत्तिरिति· मनः बहुलग्रहणानुवृत्तेरिह मन ज्ञान इति दैवादिकस्यैव ग्रहणं न तु मनु अवबोधन इति तानादिकस्य
तेन उत्तरसूत्रे खशि श्यनेव भवति न तु प्रत्ययस्तदाह· मन्यतेरिति·

ऽस्त्वेकाचः अम्ग्रहणमिहानुवर्त्तते तत्र केवलम् अम् विधीयते परेण प्रत्ययो विशेष्यते तेनाह स्वाद्यमदिति एवं च नविभक्तौ तुस्मा इति निषेधान्मकारस्यैनेत्संज्ञा अत
एवानुस्वारश्च भवति औतोऽम्शसोरित्यत्र शसा साहचर्यात् सुपैवाम् गृह्यत इत्युक्तत्वादौत आत्त्वं न भवतीत्याशयेनाह गामन्य इति मरं मन्य इति अतोऽम्नावि
त्यागुणः भाष्यकारेति अयं भावः यथाप्रष्टादयः शब्दाः पुंयोगात्स्त्रियां वर्त्तन्ते प्रष्टौहगलिके त्वितत्र अथेह श्रीशब्दः परिमितत्वलिंगः क्लीबः समकुलेवर्त्तते तत्र ह्रस्वो नपुंसक इति
ह्रस्वत्वं मत्वा अपवादेन अमा वाधात् स्वमोर्नपुंसकादिति समोर्लुक् न चैवं गां मन्य इत्यत्रापि सुपो धातुप्रातिपदिकयोरिति लुक् स्यादिति वाच्यम् अम्विधिसामर्थ्यादेव
तद्वाधादित्याहुः अम्प्रत्ययस्तु मध्येऽपवादा इति न्यायेन सुपो धातुप्रातिपदिकयोरिति लुकमेव वाधते न तु स्वमोर्नपुंसकादिति लुकमिति भाष्याद्येऽस्थितम् स्यादेतत् न
पुंसके ह्रस्वे कृते सुम् प्राप्तिरेव नास्ति कथमत्रापवादेन अमा वाधादित्युक्तिः संगच्छते अरुर्द्विषदिति सूत्रे हि अन्तग्रहणस्य समीपवाचित्वेन खित्यनव्ययस्येति ह्रस्वे
कृते नपुंसकान्मुमिति व्याख्यानात् सत्यं जनमेजय इत्यत्र स्वतः सिद्धेऽपि ह्रस्वे यथा खित्यनव्ययस्येति पुनर्ह्रस्वो मुमर्थः स्वीक्रियते तथाऽत्रापि भवेदित्यस्यैव मु
मः प्राप्तिरिति भूते धातोरित्यधिकाराद्धात्वर्थस्य विशेषणमिदम् भूतेऽर्थे विद्यमानाद्धातोरित्यर्थः करणे स्वरितत्वाल्लिनिरेवानुवर्त्तते न तु स्वशब्दः सा हलिनिः स्वादि
तिः सोमिः न लत्वं विशेषेण यागं कृतवानित्यर्थः अग्निष्टोमेति अग्निष्टोमस्तोत्रेण समाप्यमानो यो यागस्तस्य फलं स्वर्गः अग्निष्टोमस्तेनापूर्वं भावितवानित्यर्थः उक्तं च
काशिकायां अग्निष्टोमः फलभावनायां करणमिति कर्मणि हनः पितृव्यघातीति अत्र काशिकाकुत्सितग्रहणं कर्त्तव्यमिह माभूत् चौरं हतवानिति यद्यपीदं भा
ष्ये नास्ति तथापि शब्दशक्तिस्वाभाव्यादिदं लभ्यत इत्याहुः चतुर्विध इति अयमाशयः इह सूत्रेषु तत्वात्पूर्वं ब्रह्मादय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद्धंतिस्तत्रप
रिशेषान्नूतरिति क्विप्तु सर्वान्ते निर्देष्टव्यः विधेयत्वात् तदेवं वचनव्यक्तिः ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति एवं स्थिते यत्रैवकारस्ततोऽन्यत्र नियम इति न्याये
न नियमोऽत्र भवन्ननन्तरे भवति तत्र ब्रह्मादिष्वेवेत्यवधारणे हन्तेस्तदनन्तरनिर्दिष्टत्वादुपपदान्तरसंबंधनिवृत्तिफलो नियमो भवति ब्रह्मादिषु हन्तेरेव भूत इत्य
वधारणे त्वनन्तरत्वाविशेषेऽपि प्राधान्यादुपपदनियमो धात्वन्तरनिवृत्तिफलकः ब्रह्मादिषु हन्तेर्भूत एव क्विबित्यवधारणे तु क्विप हन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधा

ॐ

·कौ· स्यात्कालांतरसंबंधनिवृत्तिफलकः प्रत्ययनियमः ब्रह्मादिषु हंतेर्भूते क्विबेवेति वचनव्यक्तौ प्रत्ययांतरसंबंधनिवृत्तिफलकः कालनियमः सोऽयं प्रकृत्युपपदप्रत्य ॥
ी·त· यकालनियमानां विवेकः अगृह्यमाणविशेषात्तु चतुर्विधस्यापीह ग्रहणं न त्वब्रह्मादिष्वेव हंतेरिति प्रकृतिनियमे भूत इत्याश्रयणाद्वर्तमानकाले भविष्यत्काले चोपपदा ॥
२३ न्तरेऽपि भवत्येव पुरुषं हंति हनिष्यति वा पुरुषहा अरिहयोरिहयोगाद्विचक्षणः अरीन् हंती ॥ ॥

ति· अरिहा स चासौ योगश्च अरिहयोगस्तत्र विचक्षण इत्यर्थः प्रकृतिनियमफलं तु पुरुषं हतवान् पुरुषहा इति भूतार्थप्रयोगाभावः ब्रह्मादिषु हंतेरेवेत्युपपदनियमेऽपि भूत इत्याश्रयणाद्वर्तमाने भविष्यत्कालयोर्धात्वंतरादपि भवत्येव वृत्रं जयति जेष्यति वा वृत्रजिदिति· उपपदनियमफलं तु वृत्रं जितवान् वृत्रजिदिति प्रयोगाभावः· भूत एव क्विबिति प्रत्ययनियमेऽपि ब्रह्मादिष्विन्युक्तेरुपपदांतरे वर्तमानभविष्यत्कालयोर्हंतेः क्विब्भवत्येव पुरुषं हंति हनिष्यति वा पुरुषहा· अरिहेति प्राग्वत्· प्रत्ययनियमफलं तु ब्रह्माणं हंति ब्रह्महेत्यादिप्रयोगाभावः भूते क्विबेवेति· कालनियमेऽपि ब्रह्मादिष्विन्युक्तेरुपपदांतरे भूतेऽपि प्रत्ययांतरं भवति· यथा पितृव्यं हतवान् पितृव्यघाती· इह कर्मणि हन इति भूते णिनिः कालनियमफलं तु ब्रह्माणं हतवान् ब्रह्मघातीति प्रयोगाभावः सोऽयं पश्च प्रत्ययनियमेन व्यावर्त्यते· निष्ठा तु भवत्येव वृत्रं हतवानिति भाष्यकारः प्रकृतिकालनियमाववाशिश्रियत्· तस्यायमाशयः धातुकालौ हि नेह सूत्रे श्रुतौ किंतु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ· अतस्तयोरेवोपरोधो न्याय्यो न तूपपदप्रत्यययोः श्रुत्युपस्थापितत्वात्· एवं न्यायोपष्टंभेन भाष्येण सहविरोधाद्वृत्तिग्रंथमुपेक्ष्यमेवेति कैयटे स्थितम्· यत्तु इह न्यासेनोक्तं धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति· तत्र धातुकालविषयमिति वक्तव्ये उपपदस्य ग्रहणं प्रामादिकमित्यवधेयम्· सुकर्मः ॥ त्रिविध इति धातुनियमस्त्विह नेष्यत इति भावः क्विबेवेतीति· भूते क्विबेवेति प्रत्ययांतरसंबंधनिवृत्तिफलकः कालनियमादिरित्यर्थः कृञ एवेतीति सुकर्मादिषु कृञ एवेति धात्वंतरसंबंधनिवृत्तिफलकोपपदनियमादिरित्यर्थः ॥ ॥

न्यथा तात्तानिहत्यर्थसूत्रमित्येव कृत्तिकारादिभिर्व्याख्यातत्वात् कालान्तरनिहत्यर्थमिदमिति कैरप्यभियुक्तैरनुक्तत्वादिति दिक्॥ ॥ राजनियुधि कृञः सहे च
इदमपि सूत्रद्वयं दृशेः क्वनिविति वन्नियमार्थमिति न्याय्यम्। वस्तुतस्तु दृशिग्रहणेन निर्वाहस्यागतिकत्वादियं त्रिसूत्री विधात्रीत्यपि सुवचम्। यावांस्तु पाणिनिहउ
दासीभार इत्येव दित्ति शब्दकौस्तुभे स्थितम्। मंदुरायामिति। वाजिशाला तु मंदुरेत्यमरः। पुमनुजेति। इह जनिः सकर्मकः अनुरोधविशिष्टजननवृत्तित्वात्। अन्येष्वपि दृश्यते

राजनि युधि कृञः। ३।२।९५॥ क्वनिप् स्यात्। युधिरन्तर्भावितण्यर्थः। राजानं योधितवान् राजयुध्वा। राजकृत्वा। सहे च। ३।२।९६॥ कर्मणीति निवृ
त्तम्। सहयुध्वा। सहकृत्वा। सप्तम्यां जनेर्डः। ३।२।९७॥ सरसिजम्। मन्दुरायां जातो मन्दुरजः। ङ्याप्पोरिति ह्रस्वः। पञ्चम्यामजातौ। ३।२।९८॥ जाति
शब्दवर्जिते पञ्चम्यन्त उपपदे जनेर्डः स्यात्। संस्कारजः। अदृष्टजः। उपसर्गे च संज्ञायाम्। ३।२।९९॥ प्रजा स्यात् सन्ततौ जने। अनौ कर्मणि।
३।२।१००॥ अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात्। पुमांसम् अनुरुध्य जाता पुमनुजा। अन्येष्वपि दृश्यते। ३।२।१०१॥ अन्येष्वप्युपपदेषु जनेर्डः
स्यात्। अजः। द्विजः। ब्राह्मणजः। अपिशब्दः। सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि कालान्तरेऽपि क्वचित्। परितः खाता परिखा।
क्तक्तवतू निष्ठा। १।१।२६॥ एतौ निष्ठासंज्ञौ स्तः। निष्ठा। ३।२।१०२॥ भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र तयोरेवेति भावकर्मणोः क्तः। कर्तरि कृदिति
कर्तरि क्तवतुः। उकावितौ। स्नातं मया। स्तुतस्त्वया विष्णुः। विश्वं कृतवान्। निष्ठायामण्यदर्थे। ६।४।६०॥ ण्यदर्थो भावकर्मणी ततोऽन्यत्र निष्ठा
यां क्षियो दीर्घः स्यात्। क्षियो दीर्घात्। ८।२।४६॥ दीर्घात् क्षियो निष्ठातस्य नः स्यात्। क्षीणवान्। भावकर्मणोस्तु क्षितः कामो मया। शुकः किनि। श्रितः
श्रितवान्। भूतः भूतवान्। उकार इत्संज्ञो णुवद्भावो वाच्यः॥ तेन न एकाच इति नेट्। उर्णुतः। नुतः। द्वृतः॥ १० सप्तम्यां जनेरि सूक्तमसप्तम्यामपि दृश्य
त इत्यर्थं हि अजः द्विज इति। न जायत इत्यजः। द्विर्जातो द्विजः जन्मना जायते शूद्रः कर्मणा जायते द्विज इत्यभियुक्तोक्तेः पञ्चम्यामजाताविति सूक्तं जातावपि दृश्यते इत्या
ह। ब्राह्मणज इति। अपिशब्द इति। यत्तु अंतर्भावितण्यर्थ इति प्रकरणे अन्यत्रापि दृश्यत इत्युपसंख्यानं तत्। भूतकालं विना। येषा स्यादित्येवमर्थम्। वस्तुतस्तु पक्कत।

सूत्रस्यास्यापि ग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वान्न द्वार्त्तिकमनेनैव गतार्थम्· विभावितं चेदमिकोगुणवृद्धी इति सूत्रे अनेकं प्र[illegible]ग्यागमेष्वप्यंडो वक्तव्य इति वदता भा
ष्यकारेण· एवं च यद्यन्तस्य सूत्रस्य मन्येभ्योपि दृश्यत इति वार्त्तिकमपि गतार्थमिति बोध्यम्· क्तक्तवतू निष्ठा न तु क्तक्तवतोः सिद्धयोर्निष्ठेति संज्ञासिद्धिः सिद्धायां निष्ठासं
ज्ञायां क्तक्तवतोर्विधानमित्यन्योन्याश्रय इति चेत् अत्राहुः भाविनी संज्ञाऽत्र विज्ञायते सम्भूते भवति यस्योत्पन्नस्य निष्ठेति संज्ञा भवति· इत्याश्रयणे सामर्थ्यात्· क्त
क्तवतोर्विधानमेतदिति नान्योन्याश्रयदोष इति· एष इत्थंभावकर्मणी इति· यद्यपि पाज्याऋगित्यादौ करणादावपि बाहुलकात्स्युद्भवति· तथापि तयोरेवेति वृच
नाद्भावकर्मणोरेव साऽऽदिपात्तोर्थ इति सकर्मकेष्वविवक्षित इति भावः श्लिषस्थ्यु श्लिनिवासगत्योः द्वयोरपि ग्रहणं श्लिष्टः काम इति अंतर्भावितण्यर्थत्वेन सकर्मक

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।८।२।४२॥ रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात् । निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च । शॄ ऋत इत् । र
परः । णत्वम् । शीर्णः । बहिरङ्गत्वेन रपरत्वस्यासिद्धत्वान्नेह । कृतस्यापत्यं कार्त्तिः । भिन्नः । छिन्नः । [illegible]गादेरातो धातोर्यण्वतः । ८।२।४३॥ निष्ठातस्य
नः स्यात् । द्राणः । ग्लानः । ल्वादिभ्यः ।८।२।४४॥ एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्या । ग्रहिज्या । जीनः । दुग्वोर्दीर्घश्च । दुगतौ । दूनः ।
टुदु उपतापे इत्यस्य तु न गृह्यते सानुबन्धत्वात् । मृदुतया दुतयेति माघः । गूनः । पूञो विनाशे । पूना यवाः । विनष्टा इत्यर्थः ॥ पूतमन्यत् ॥ ॥

त्वात्कर्मणि क्तः· तच्च अश्लिनोतस्सनेदिममितिमंत्रव्याख्यायां माधवग्रंथे स्पष्टम्· भावे तु श्लिष्टं कामेनेत्युदाहरणीयम्· इण्निषेधसूत्रं स्मारयति· श्युकः कि
तीति· श्रुत इति टुक्षु शब्दे नुत इति· णु स्तुतौ· वृत इति· वृङ् संभक्तौ वृञ् वरणे॥ ॥ रदाभ्यामिह रदाभ्यामित्यनेन तकारो विशेष्यते न निष्ठा· तेन चरितमुदि
तमित्यत्र न· तकारस्येटा व्यवहितत्वात् तदाह· परस्य निष्ठातस्येति बहिरंगत्वेनेति· निष्ठातकाराद्बहिर्भूततद्धितनिमित्तप्रत्ययमाश्रित्याङ्गस्यादेरचो विधीय
मानत्वाद्वृद्धिर्बहिरंगेति भावः· द्राण इति द्राकुत्सायां गतौ· ग्लानः म्लान इति· ग्लै म्लै हर्षक्षये· एकविंशतेरिति· क्र्यादिषु प्वादयो द्वाविंशतिः पठ्यन्ते तत्र पू
ञं विहाय ल्वादयो ज्ञेयाः जीन इति· सिद्धत्वाच्च ग्रहिज्येति संप्रसारणे कृते संयोगादेरात इत्यस्याप्राप्तिः गून इति· गु पुरीषोत्सर्गे· विनष्टा इति धातूनामनेकार्थ

हिंसायाम्· दृ विदारणे गर्वश्च अहंकारः· शर्वो रुद्रः कनिन्यु· युमिश्रणे वृषु सेचने· तक्ष तनूकरणे· राजृ दीप्तौ धन्वि गत्यर्थः घुञ् अभिगमने दिवु क्रीडादौ· युवा स्यात्तरुणे श्रेष्ठे नि
सर्गबलशालिनीति मेदिनी· वृषा कर्णे महेन्द्रे ना इति च· तक्षा तु वर्द्धकिस्त्वष्टा रथकारश्च काष्ठतट् इत्यमरः राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोरिति च समानौ मरु
धन्वानौ वितिच· अथास्त्रियां धनुश्चापौ· धन्वशरासनकोदण्डकार्मुकमिति चामरः· धन्वा तु मरुदेशे ना क्लीबे चापे स्थलेपि चेति मेदिनी॥ ❁ ॥ सप्यशूभ्यां
म्· षपु समवाये· अशू व्याप्तौ· नञि ओहाक् त्यागे कनिनि आतो लोपः श्वन्नुक्षन् टुओश्वि गतिवृद्ध्योः उक्ष सेचने पूष वृद्धौ ष्णिह प्रीतौ मुह वैचित्त्ये· मु

सप्यशूभ्यां तुट् च सप्त अष्ट नञि जहातेः अहः श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्द्धन्मज्जन्नर्य्यमन् विश्वप्सन्परिज्मन्मातरिश्वन्म
घवन् इति एते त्रयोदश कनिन्नन्ता निपात्यन्ते श्वयतीति श्वा उक्षा पूषा प्लिह गतौ इकारस्य दीर्घत्वं प्लिहतीति प्लीहा कुक्षिवामपार्श्वः ॥
क्लिदू आर्द्रीभावे क्लिद्यति क्लेदा चन्द्रः स्निह्यतेर्गुणः स्निह्यतीति स्नेहा सुहृच्च चन्द्रश्च मुह्यन्त्यस्मिन्नाहते मूर्द्धा मुहेरुपधाया दीर्घः।
धो न्तादेशो रमागमश्च मज्जन्त्यस्थिषु मज्जा अस्थिसारः अर्य्यपूर्वो माङ् अर्य्यमा विश्वप्साति विश्वप्सा अग्निः परिजायते परि
ज्मा चन्द्रोऽग्निश्च जनेरुपधालोपो मश्चान्तादेशः मातर्यन्तरिक्षे श्वयतीति मातरिश्वा धातोरिकारलोपः मह पूजायाम् ह्रस्व
घो वुगागमश्च मघवा इन्द्रः ॥ ❁ ॥ इत्युणादिषु प्रथमः पादः ॥ ❁ ॥ ११ वीविन्धने· उकारस्य दीर्घत्वं वकारस्य धकार इत्युज्ज्वलदत्तः टुमस्जो

शुद्धौ मस्जोः सकारस्य शकारस्तस्य जश्त्वेन जः माङ् माने शब्दे च णभ सरणे जनी प्रादुर्भावे टुओश्वि गतिवृद्ध्योः कनिप्रत्ययान्ता इति· नायं नित् इति भावः· केचित्तु नि
त्वं स्वीकृत्य उक्षन्नादीनां स्वरेऽनोदात्तनिपातनमाहुः तच्च गौरवग्रस्तमिति तुर्ये स्पष्टम्· श्वेति इकारलोपो निपात्यते· पूषेति सौत्रेत्युपधादीर्घः इन्हन्निति नियमा
त्सूषुणौ पूषणा इत्यादौ न दीर्घः क्लेदौ षधिशशाङ्कयोरिति यादवः मूर्द्धेति मूर्द्धा ना मस्तकोऽस्त्रियामित्यमरः मज्जेति नकारान्तोयं यवनोऽप्यभ्युपगम्यते ऊष्म।
या सहमूष्मापि मज्जो त्रैः मज्जया सहेति द्विरूपकोशात्· अर्य्यमा तु पुमान् सूर्य्ये पितृदेवान्तरेपि चेति मेदिनी· परिज्मा यत इत्यादि· एतच्च दशपादीवृत्त्यनुरोधेनो

क्तम्· परिज्मानेसुखंरथमिति मंत्रस्यवेदभाष्येतु परिज्मापरि— गन्ता· अजेः परिपूर्वस्यश्वन्नुक्षन्नित्यादिनामन्प्रत्ययः· अकारलोपः· आद्युदात्तत्वं चनिपात्यतइत्युक्तमुज्ज्वलदत्तस्तु परिज्वेतिपठित्वाज्वइतिसौत्रो धातुः परिपूर्वः यणादेशः· परिज्वाचन्द्रइत्याहतदत्रस्यविरोधादुपेक्ष्यम्· मातरिश्वेति· सप्तम्याअलुक्इहभत्वविषयेसंप्रसारणंनभवति· श्वयुवेति· सूत्रेअभिव्यक्तपरत्वेनकुक्कुरवाचकस्यैवश्वशब्दस्यतदन्तस्यचग्रहणात्· तेनमातरिश्वनः· मातरिश्वनेत्येव· इहसूत्रेइतिशब्दआद्यर्थस्तेनान्येभ्योपियथादर्शनंकनिन्प्रयोक्तव्यः· दशपाद्यान्तुइतिशब्दोऽत्रेर्दपठ्यते॥ ॥ इत्युणादिषुप्रथमः पादः॥ ॥ कृहभ्याम· डुकृञ्करणे· हृञ्हरणे·करेणुस्त्रीनेभेइत्यमरः· करेणुर्गजयोषायांपुंसिमतङ्गजेइतिमेदिनी· गन्धद्रव्यमिति· कलापश्चेतिबोध्यम्· कलापस्तुसतीनकइत्यमरः· हरेणुखंडिकेचास्मिन्नित्यमरः· हरेणुर्नासतीनेस्त्रीरे

कृहभ्यामेणुः करेणुः हरेणुर्गन्धद्रव्यं हनिकुषिनीरमिकाशिभ्यःक्थन् हथोविषस्यः कुष्ठः नीथोनेता रथः काष्ठं अवे भृञः अवभृथः उषिकुषिगार्तिभ्यस्थन् ओष्ठः कोष्ठं गाथा अर्थः वाहुलकात् शोथः सर्तेर्णित् सार्थः समूहः जृवृञ्भ्यामूथन् जरूथंमांसं वरूथोरथगुप्तौना पातृतुदिवचिरिचिसिचिभ्यस्थक् पीथोरविर्घृतमपीथम् तीर्थंशास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु अवतारर्षिजुष्ठाम्भःस्त्रीरजःसुचविश्रुतमितिविश्वःतुत्थोग्निः उक्थंसामभेदः रिक्थम् वाहुलकाट्चेरपि रिक्थमृक्थन्धनम्वसु सिक्थं॥

णुकाकुलयोषितोरितिमेदिनी· विश्वप्रकाशोहनिकुषिहनहिंसागत्योः कुषनिष्कर्षेणीञ्प्रापणेरमुक्रीडायांकाशृदीप्तौ· कुष्ठंरोगेपुष्करेस्त्रीइतिमेदिनी· कुष्ठंरोगेगन्धेचेतिविश्वः नीथेनीथेमघवानंसुतासइतिमंत्रेनीथशब्दस्यान्तोदात्तत्वंवाहुलकात्· नीथेनीथेस्तोत्रेस्तोत्रेइतिवेदभाष्यम्· रथः पुमानवयवेस्यन्दनेवेतसेपिचेतिमेदिनी· रथः स्यात्स्यन्दनेकायेचरणेवेतसेपिचेतिविश्वः· काष्ठादारुहरिद्रायांकालमानप्रकर्षयोः स्थानमात्रेदिशिचस्त्रीदारुहरिद्रायांनपुंसकमितिमेदिनी·
अवेइभृञ्धारणपोषणयोः अवभृथोयज्ञावसानम्· उषिकुषि उषदाहेकुषनिष्कर्षेगैशब्देऋगतौएभ्यस्थन्· कोष्ठंकुक्षिकुशूलयोःग्याथाश्लोकेसंस्कृतान्यभाषायांशेषदन्तयोरितिमेदिनी· अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषुइत्यमरः शोथः श्वयथुः शुगतौ सर्तेः सृगतौ सार्थोवणिक्समूहेस्यादपिसंघातमात्रकेइतिमेदि

मी· विश्वप्रकाशौ: जृहृञ्· जृवयोर्हानौ क्र्यादिः जृषदिवादौ· हृञ्वरणे जहृथो सुरविशेष इति वेदभाष्यम्· वहूथः स्याज्जनुत्राणे गुप्तगोपनवेश्मनो रितिहेमचन्द्रः
पात् पापानेद्धस्ववनतरणयोः तुदव्यथनेवचपरिभाषणेरिचिर् विरेचनेविचिर्क्षरणे· अचक्षुतौ· तुस्थोऽग्नावंजनेतुस्यानौ ली मूस्यैमलयो रपौ विश्वः तुस्यमंजनभे
अर्तेर्निरि निर्ऋथः साम निशीथगोपीथावगथाः निशीथोऽर्धसत्रः रात्रिमात्रञ्च गोपीथं तीर्थम् अवगथः प्रातः स्नातः गथ्वादि उ
द्गीथः साम्नो भागविशेषः समीराः समिथो वह्निः संग्रामश्च तिथं पृष्ठ गूथ पूथ प्रोथाः तिजेर्जलोपः मिथो ऽनलः कामश्च पृष्ठं गूथ
म्विष्ठा पूथं समूहः प्रोथम स्त्री तुरङ्गास्यप्रोथः प्रस्थित उच्यते स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवंधुन्दि श्विति
वृसजिमीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् द्वात्रिंशज्जोरक् स्या
त् वलियलोपः स्फारम् न्यंक्वादित्वात्कुत्वम्· तुक्रं वक्रं शाक्रः क्षिप्रं क्षुद्रः सृप्रश्चन्द्रः तृप्रः पुरोडाशः दृप्रः वलवान् वन्द्रः पूजकः
उन्दी उद्रो जलचरः श्वित्रं कुष्ठं चत्रो रिपोध्वन्तेध्वांतेशैलेचक्रेचदानवे अजेर्वीवीरः नीरम् पद्रो ग्रामः मद्रो हर्षे देशभेदश्च मुद्राप्रत्य
यकारिणी खिद्रो रोगो दरिद्रश्च छिद्रं भिद्रं वज्रम् मन्द्रः चन्द्रः पचाद्यचि चन्दोपि हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्यु
तिः दह्रोऽग्निः दस्रः स्वर्वैद्यः दभ्रः समुद्रः स्वल्पश्च वसेः सम्प्रसारणे नरपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् रफपरस्य सका
रस्य सृप्यादीनां सवनादीनाञ्च मूर्द्धन्यो न स्यात् पूर्वपदादिति प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोभिप्राया तेन शासिवसीति प्राप्तमपि
न उस्रो रश्मिः उस्रा गौः वास्रो दिवसः वास्रं मन्दिरम् शीङः ऽजगरः हस्रो मूर्खः सिध्रः साधुः शुभ्रम् सुसेरक् सुसं वाहुलकात् अ
स्मान्नौ ली मूस्यैमलयोः स्त्रियां सिकथो भक्तपुलाके नामधूच्छिष्टे नपुंसकमिति मेदिनी· ॥ ॥ अर्तेः ऋगतौ द्रोघवाच स्ते निर्ऋथं सचंनामिति मनैर्निर्ऋथो हिंसेतिविश्व
व्यम्· निशीथ शीङ् स्वप्ने निपूर्वः पापानेगोपूर्वः घुमास्थेतीत्वम्· गाङ्गतौ अवपूर्वस्य धातोः ह्रस्वत्वम्· निशीथस्तुप्रमाने ऽर्द्धरात्रे स्याद्रात्रिमात्रके इति मेदिनी· प्रतिसंचा

छ·
सि·कौ· हमध्वरमितिमन्त्रे गोपीथः सोमपानमितिवेदभाष्यम्· तीर्थमितिवृत्तिकारः गम्थादि उपपदे गैशब्दे इत्यस्मात्थक् समि· इण् गतावस्मात्सम्युपपदे थक्·
टी·त· समिथशब्दः संग्रामपर्यायेषु वैदिकनिघण्टे पठितः श्रियेजात इति मंत्रे समिथाः युद्धानीति वेदभाष्ये· तच्च युक्तमेव· सम्यगेति जयार्थमत्रेति व्युत्पत्तेः· संपूर्वे।
५२ स्यैतांकिन्त्वाद्यन्तस्य लोकेपि युद्धार्थत्वदर्शनाच्च· उक्तं ह्यमरेण समित्याजिसमिद्युध इति· निथ पृष्ठः तिज निशाने· पृषु सेचने गुपूरीषोत्सर्गे सुमिथ्ये गोष्ठाः गतौ·
एतेभ्यः क्प्रत्ययान्ता निपात्यन्ते· पृष्ठं तु चरमं तनोरित्यमरः· पृष्ठं च स्त्रमात्रेपि देहस्यावयवान्तरे इति मेदिनी· स्तोत्रविशेषेपि पृष्ठं· पृष्ठे स्तुवत इत्यादौ तथा निर्णा।
मात्· गूथमिति· निपातनाद्दीर्घः एवं पूथेपि पूथं तिर्यक्त मूहेपि छन्द मात्रेपि भाषितमिति विश्वः
पूथं तद्ग्रसरगर्वितक्रमसारमितिरघुः प्रोथमिति· निपातनाद्गुणः प्रोथो ऽस्त्रीहयघो
णायां नाकट्यामध्वगेत्रिष्विति मेदिनी· स्फायितं वि· स्फायी वृद्धौ तञ्चु संकोचने· वञ्चु प्रलम्भने शल्क शक्तौ क्षिप प्रेरणे· क्षुदिर् संपेषणे सृप्लृ गतौ तृप प्री।
णने· दृप हर्षमोचनयोः वदि अभिवादनस्तुत्योः उन्दी क्लेदने श्विता वर्णे वृतु वर्तने· अज गतिक्षेपणयोः णीञ् प्रापणे· पद गतौ· मदी हर्षे मुद हर्षे खिद दैन्ये
छिदिर् द्वैधीकरणे भिदिर् विदारणे· मदि स्तुतौ· चदि आह्लादने· दह भस्मीकरणे दसु उपक्षये दम्भु दम्भने वस निवासे वाशृ शब्दे· शीङ् स्वप्ने· हसे हसने षि
धगत्याम्· शुभ दीप्तौ· द्वात्रिंशत् इति· दशपाद्यां तु त्रयस्त्रिंशत्· उक्ताः दम्भिवह्विवसीति पठित्वा वह प्रापणे ऊहः अनड्वानित्युदाहरणात्· माधवोप्येवम्।
स्फात्मिति· नेड्वशिकृतीति नेट् वलि यलोपः स्फारः स्यात् सुसिविकटे करकादेश्च बुद्बुदे इति मेदिनी· तक्राद्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलमित्यमरः· चक्रः स्या
ज्जटिले क्रूरे [illegible] देशनैश्वरे इति विश्वः· शक्रः पुमान् देवराजे कुटजार्जुनभूरुहो रिहिमेदिनी· क्षुद्रः स्याद्धमक्रूरकृपणाल्पेषु वाच्यवदिति मेदिनी· तृप्रः पुरो
डाश इति· न तृप्रो [illegible] वसमिति मन्त्रे वेदभाष्यकारैरित्थं व्याख्यातं प्रकृतसूत्रे उज्ज्वलदत्तादिभिश्च दशपादीकारौ तु तृप्रमाज्यं काष्ठं चेत्युक्तम्· तृप्रं दुःखमिति· सुखा
नुवृत्तौ माधवः· हिंमो [illegible] दिहिमद्युतिरित्यनंतशब्दार्णवः· दस्यति रोगान् क्षिपतीति दस्रः· दस्रः खरेऽश्विनीसुते इति मेदिनी दस्रौ स्वरे चाश्विनयोरिति विश्वः एम·
श्वासिवसीति· प्राप्तमपिनेति [illegible] च्च· अविन्द उस्रिया इति मंत्रे षत्वाभावः सिद्धः माधवस्तु वृत्तिग्रन्थानुरोधेन बाहुलकादिह षत्वं नेति व्याचष्ट· उस्रोक्षे ५२

चुक्रिरम्लेऽम्लवेतसे पवित्रयोरिति मेदिनी · माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणीत्यमरः · वास्रो ना दिवसे क्लीबं मन्दिरे च चतुःपथे इति मेदिनी · वास्रोऽस्त्रभयपक्षिणोरिति केचित् · माधवेन तु वाश्रेव विद्युन्मिमातीति मन्त्रे शब्दयुक्ताप्रस्तुतस्तना धेनुर्वाश्रेति · व्याख्यातम् · शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिष्विति मेदिनी · शुभ्रमिति · शुभ शुम्भ शोभने ॥ ❀ ॥ चकि तृप्तौ रमु क्रीडायाम् · चुक्रस्त्वम्लेऽम्लवेतसे · चुक्री चाङ्गेरिकायां स्याद्वृक्षाम्ले चुक्रमिष्यत इति विश्वः · वौ कसेः · कस गतौ विपूर्वोऽस्माद्रक् स्यादुत्वं चोपधायाः · अमि · अम गत्यादिषु · तमु काङ्क्षायाम् · आभ्यां रक् स्यादुपधाया दीर्घश्च · निन्देः · णिदि कुत्सायाम् · अर्देः · अर्द गतौ · आर्द्रा नक्षत्रभेदे स्यात्क्लिन्नेऽभिधेयवदिति मेदिनी · शुचेः · शुच शोके · अस्माद्रक् दश्चान्तादेशः धातोर्दीर्घश्च · शूद्रो वृषलः · अहहरे त्वामृड्ढेति श्रुतौ ह्रस्वो वा धायोगात्पुरस्कृतः तथा चोत्तरतन्त्रे भगवता व्यासेन सूत्रितं · शूद्रस्य तदनादरश्रवणादिति · दुरीणो · इण् गतावित्यस्मादुरुपपदे रक् स्याद्धातोर्लोपश्च · रोरीति रेफस्य लोपे दूः।

चकिरम्योरुच्चोपधायाः चुक्रम् अम्लद्रव्यम् रुम्रोऽरुणः वौ कसेः विकुस्रश्चन्द्रः अमितम्योर्दीर्घश्च आम्रम् ताम्रम् निन्देर्नलोपश्च निद्रा अर्देर्दीर्घश्च आर्द्रं शुचेर्दश्च शूद्रः दुरीणो लोपश्च दुःखेनेयते प्राप्यत इति दूरम् कृतेश्छ क्रू च कृच्छ्रं क्रूरः रोदेर्णिलुक् च ॥ रोदयतीति रुद्रः बहुलमन्यत्रापि संज्ञाच्छन्दसोः णिलुगित्येव वानिपर्णिशुषो वातास्ततः पर्णमुचोऽपरे ॥ (१) लोप इति दीर्घः कृतेः कृती छेदने · अस्माद्रक् स्याच्छ क्रू इत्येतावादेशौ च स्तः · छस्त्वन्त्यस्यादेशः · क्रूत्वनेकाल्त्वात्सर्वस्यादेशः · कृच्छ्रमास्यात्तमाभीले पापसंतापनादिनोरिति विश्वमेदिन्यौ · स्यात्कष्टं कृच्छ्रमाभीलमित्यमरः · क्रूरस्तु कुटिले घोरे नृशंसे चाभिधेयवदिति विश्वः · नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चक इत्यमरः · रोदेः · रुदिर् अश्रुविमोचने · ण्यन्तादस्माद्रक् णेश्च लुक् · णेरनिटीति लोपे तु पुगन्तेति गुणः स्यादिति णिलुग्व्युक्तम् · रोदयतीति रुद्र इति नन्वेवं सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वमिति श्रुत्या सह विरोधः स्यादिति चेत् · अत्राहुः कर्तरि क्तदिति · सूत्रानुरोधेन शम्भुरित्यत्र संभावयतीत्यन्तर्भावितण्यर्थता यथा स्वीक्रियते · तथात्रारोदीदित्यत्राप्यन्तर्भावितण्यर्थतायां स्वीकृतायां रोदनं कारितवानित्यर्थलाभान्नास्ति श्रुतिविरोधः न च देवैरग्नौ वामं वसु स्थापितं तच्च धनं · देवैर्याचितोऽदग्नि

त्तुकुंकुमे स्त्रियांश्रवणातुल्यायामितिमेदिनी· गध्रः स्वगानरे पुंसिवाच्यलिङ्गोऽथलुब्धकेइति॥ ॥ शुसिचि। शुगतौषिञ्बन्धनेचिञ्चयने· डुमिञ्प्रक्षेपे॥ भ
वोएभ्यः कन्एषांदीर्घत्वञ्चशूरः स्याद्यादवेभटेइतिमेदिनी· शूरश्चारुभटेसूर्येइतिविश्वहेमचन्द्रौसीरोर्कहलयोः पुंसिचीरीझिल्यांनपुंसकंगोस्तनेवल्कभे
देचरेखालेखनभेदयोरितिमेदिनी· चीरन्तु गोस्तनेवस्त्रेचूडायांसीसकेपिच· चीरीतु कच्छाटिकाझिल्योरितिविश्वः· आविस्थेः त्रिइत्यौदीशौ· विपूर्वाद् स्मात
क्त्· आनिदितामितिनलोपः वीध्रन्तुविमलात्मकमितिविश्वोप्यनिघ्नेऽमरः वृधि वृधुवृद्धौ डुवपूबीजसन्ताने वप्रः पितरि केदारे वप्रः प्राकाररोधसोरि
शुसिचिमीनान्दीर्घश्च शुः सौत्रः शूरः सीरं चीरम् मीरः समुद्रः वाविस्थेः वीध्रम् विमलम् वृधिवपिभ्यांरन् वर्धे चर्मे वप्रः प्राका
रः ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः रन्नन्ताऊनविंशतिः निपातनाद्गुणाभावः ऋ
ज्रोनायकः इदिइन्द्रः अङ्गेर्नलोपः अग्रं वज्रोऽस्त्रीहीरकेपवौ डुवप् उपधायाइत्वम् विप्रः कुम्बिचुम्ब्योर्नलोपः कुब्रमरण्यं चु
ब्रंमुखम् क्षुरविलेखने रेफलोपः अगुणः क्षुरः खुरछेदने रलोपोगुणाभावश्च खुरः भन्देर्नलोपः भद्रं उचसमवाये चस्यगः
उग्रः ञिभीभेरी पक्षेलः भेलोजलतरणद्रव्यम् शुचेश्चस्यकः शुक्रः पक्षेलः शुक्लः गुङ्वृद्धिः गौरोरुणोसितेपीते वनसम्भक्तौ।
पन्नोविभागौ इणोगुणाभावः इरामद्येचवारिणि मामाने माला॥ ९ तिधरसिरन्निदेवौवप्रः स्तातेपुमानस्त्रीवेणुक्षेत्रेचपेतटेइतिमेदिनी·
ऋजैं ऋज्र ऋजुगतिस्थानादिषु इदिपरमैश्वर्ये· अगिगतौ· वजगतौ· डुवपूबीजसन्ताने· कुबिआच्छादने· चुबिवक्त्रसंयोगे· भदिकल्याणे· शुचशोके· गुङ्
अव्यक्तेशब्दे· इण् गतौ· नायकइति· ऋज्राश्वः मतिभिरम्बरीष इतिमन्त्रेऋज्रागतिमतोऽश्वायस्यसऋज्राश्वइतिवेदभाष्यम्· इन्द्रः शचीपतौवन्तरा।
त्मन्यादित्ययोगयोरितिविश्वः· अग्रंपुरस्तादुपरिपरिमाणेपलस्यच· आलंबनेसमूहेचप्रान्तेस्यात्तुनपुंसकम्· अधिकेचप्रधानेचप्रथमेचाभिधेयवा।
दितिमेदिनी क्षुरोलोमछेदकः क्षुरः स्याच्छेदनद्रव्येकोकिलाक्षेचगोक्षुरेइतिविश्वमेदिन्यौ खुरः कोलदलेशफेइतिमेदिनी· भद्रः शिवेखञ्जरीटेवृषभेच।

करम्बके·कलिङ्गजातिविशेषे नाल्लीवं मंगलमुस्तयोरितिच उग्रः स्पृध्रासुतेस्तत्राद्रुद्रेपुंसि त्रिषूत्कटे· स्त्रीवञ्चासुद्रयोरिति मेदिनी· भेरीतिगौरादित्वान्ङीष् भेरिस्त्रीदुं
दुभिः पुमानित्यमरः भेलः प्लवे भीलके च निर्बुद्धिमुनिभेदयोरिति विश्वः भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यवदिति· शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पु
मान्· रेतोक्षिरुग्भिदोः क्लीवं शुक्लो योगान्तरे सितेन पुंसकन्तु रजतेइति च· गौरः पीतेरुणेश्वेते विशुद्धेप्यभिधेयवत्· नाश्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे·
गौरी त्वसञ्जातरजः कन्याशंकरभार्ययोः रोचनेरजनीपिङ्गाप्रियंगुवसुधासु च· आयगायाविशेषेपि यादसांपतियोषितीतिच मेदिनी नदीभेदे च गौरी स्यात्
वरुणस्य च योषितीति विश्वः· अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते· सा गौरी तत्सुतो यस्तु स गौरः परिकीर्त्तित इति ब्रह्माण्डपुराणे· एतेन गौरः शुभ्राचा
र इत्यादि भाष्यं व्याख्यातम्· इराभूवाक्सुरापीस्वादित्यमरः मालेति· प्रत्ययरेफस्य लत्वम्· मालं क्षेत्रे स्त्रियां पद्मास्रजोर्जात्यन्तरे पुमानिति मेदिनी· मा

**समिकसउकन्· कसगतौ सम्पक्वसनिपत्लायनेजना अस्मादिति सङ्कसुको दुर्ज्जनः अस्थिरश्च पचिनशोरुकन्कनुमौ च प**
**चेः कः पाकुकः सूपकारः नशेर्नुम् नंशुकः भियः क्रुकन् भीरुकः क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि रजकः दसुकुट्टकः चरकः चष**
**भक्षणे चषकः शुनकः भषकः रमेरश्च लो वा रमको विलासी लमकः·** मालं क्षेत्रे जिने माले मालाप्युष्पादिदामनीति विश्वः मालमुन्नतभूतलमिसु
त्यलः क्षेत्रमारुह्य मालमिति मेघदूतः मणिपूर्वीयमर्थान्तरे रूढः मणिमाला स्मृता हारे स्त्रीणां दन्तक्षतान्तरे इति विश्वः ॥ ॥ समिकस संकसुकोस्थिर इति
विशेष्यनिघ्नोऽमरः पचिनशोः इपे च षु पाके णश· अदर्शने आभ्यां कुकन् प्रत्ययः स्यात्· णकारो वृद्ध्यर्थः अनयोर्यथाक्रमं कादेशनुमागमौ च भवतः भिक्र·
त्रिभी भये· भीरुकः कातरः त्रस्तो भीरुकभीलुकावित्यमरः क्वुन् शिल्पिन्यभिधेये संज्ञायां गम्यमानायां च क्वुन् स्यादपूर्वस्य निरुपपदस्य च· अपिशब्दात्सोपप·
पदस्य षष्ठ्यर्थे षष्ठी यद्वा अर्थद्वारकसम्बन्धे षष्ठी· प्रकृतिप्रत्ययार्थयोः क्रियाकारकभावात्· एवञ्च निरुपपदप्रकृत्यर्थनिरूपितकर्त्तृकारके क्वुन्· क्रिया एम·
द्यर्थः फलितः शिल्पिनितावत्· रंज रागे· रजको धावके शुके इति विश्वः रजकौ धावकशुकाविति हेमचन्द्रः कुट्ट छेदने इत्यस्मात् कुट्टयति गोडिकः चरमतिभ

स्वर्णयोः संज्ञायामनुचत्वकोऽस्त्रीपानपात्रम् शुनगतौ भषभर्त्सने शुनकः भषकः स्थालमक इति ऋषिविशेषः ॥ ॐ ॥ जहातेः ओहाक् त्यागे ध्मो धमच ध्मा श
ब्दा
मिः संयोगयोः कुहको दाम्भिकः कृ नकमिति कृती छेदने कृषेः कृषविलेखने अस्मात् कुन् कार्षकः कृषीवलः कृषकः सए व कृषः कृपुंसि फालेस्यात्कर्षके त्वभि
धेयवदितिमेदिनी उदकं च उदीर्णेरदने अस्मात् कुन् ननु कनशिल्पीत्यादिनागतार्थमित्याशङ्कयामाह प्रपञ्चार्थमिति हृश्चि कृषोः ओव्रश्चु छेदने कृषवि
लेखने भाडि पणव्यवहारे कपशिषेति दण्डको हि सार्थकः मुषेर्मुषस्तेये अस्मात्किकन् धातोर्दीर्घश्च स्यमेस्यमुशब्देक्रिपः डु क्रीञ् द्रव्यविनिमये आडि

जहातेर्द्वे च ॥ जहकस्त्यागी कालश्च । ध्मो धम च ॥ धमकः कर्मकारः । हनो वध च । वधकः । बहुलमन्यत्रापि । कुहविस्मापने । कुहकः ।
नर्क । कृषेर्वृद्धिश्चोदीचाम् ॥ कार्षकः । कृषकः । उदकञ्च प्रपञ्चार्थम् ॥ वृश्चिकृष्योः किकन् ॥ वृश्चिकः । कृषिकः । भाडिपणिकः । प्राप
यइकन् । क्रयिकः क्रेता । आङि पणिपनिपतिखनिभ्यः ॥ आपणिकः । आपनिकः इन्द्रनीलः किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आ
खनिको मूषिको वराहश्च । श्यास्त्याहृञः विभ्य इनच् ॥ श्येनः । स्त्येनः । हरिणः । अविनो ध्वर्युः । वृजेः किच्च । वृजिनम् । अजेरज च वीभाव
वाधनार्थः । अजिनं । बहुलमन्यत्रापि । कठिनं । नलिनं । मलिनं । कुण्डिनं । द्युतेः यत्यहः । विदिनं । दिवसोपि दिनं ॥ ११

पणि पणव्यवहारे स्तुतौ चपन च पत्लृ गतौ खनुअवधारणे एभ्य आङि उपपदे इकन् स्यात् आपणिक इति ननु त्वत्रैव प्रपूर्वे आङि आपणिक इति सिद्धे आङि पणी
त्यत्र पणिग्रहणं प्रपञ्चार्थमित्युज्ज्वलदत्तः उपसर्गान्तरनिहृत्यर्थन्तु मनोरमायां आपणिक शब्दोयं णित् स्वरेण द्युदात्तः आपणेन व्यवहरतीत्यर्थे ठक् किन्तु किं मुख्य
नौ यन्तः श्या स्त्या श्येङ् गतौ स्त्यै ष्ट्यै शब्दसंघातयोः हृञ् हरणे अवरक्षणादौ श्येनः पत्त्रिणि पाण्डुरे इति मेदिनी स्त्येनश्चोरः स्तेन चौर्ये इति चौरादिकात्पचाद्यचि तु स्तेन इ
ति निर्यकारोपि केचित्तु स्तापूर्णापतये नम इत्यादिप्रयोगोपष्टम्भेन निर्यकारस्यापि विष्टे धातोर्माधवादिभिर्ण्यादिपुस्तीकृतत्वात् कृतसूत्रेपि विष्टे धातुमेव पठन्ति स्तेन शब्दो

कृ·
प्र·कौ·
टी·त·
५५

हरिणीं हरितायां च नारीभिदं तन्मे दयोः सुवर्णप्रतिमायां चेति मेदिनी· वृजेः वृजी वर्जने वृजिनं पापम्· वृजिनं कल्मषे क्लीवं केशे ना कुटिले ऽन्यवदिति मेदिनी· अजेः अज गतिक्षेपणयोरस्मादिनच्· अजेरजादेशविधानं व्यर्थमित्यत आह· वा भाववाधनार्थमिति· अजिनं चर्म कृत्तिः स्त्रीत्यमरः बहुलमन्यत्रापि· अन्यस्मादपीत्यर्थः कठ कृच्छ्रजीवने नलगहने· मलमल्ल धारणे· कुडिसहेदोः वसवण्डने कठिनमपि निष्ठुरे स्यात् स्तब्धे तु त्रिषु नपुंसकं स्थाल्याम्· कठिनी घटिकायामपि कठिना गुडशर्करायां चेति मेदिनी· मलिनं दूषिते कृष्णे क्रतुमत्यां तु योषितीति मेदिनी· कुण्डिनमिति· नगरं कुण्डिनमम्बुजो यया विति श्रीहर्षः कुण्डिनः ऋषिः यस्यापत्यं कौण्डिन्यः यस्य हविष्य वर्णीदिनं· खण्डितं तं हेवानामिति तैत्तिरीयश्रुत्यर्थः॥ ❀ ॥ द्रुदक्षिद्रुघतौ दक्षवृद्धौ द्रविणं नई यो वित्तेकाञ्चने च पराक्रमे इति मे

द्रुदक्षिभ्यामिनन्॥ द्रविणं। दक्षिणः। दक्षिणा। अर्त्तेः किदिच्च॥ इरिणं शून्यं। विपितुल्यो ह्रस्वश्च॥ विपिनं। तुहिनम्। नलिपुलिभ्यां च॥ नलिनं विरले स्तोके स्वच्छेऽपि नलिनं त्रिषु। पुलिनं। गर्वेरत उच्च। गौरादित्वात् ङीष्। गुर्विणी। गर्भिणी। रुहेश्च। रोहिणः। महेरिनण् च वा हिनन्। माहिनम्। महिमं राज्यम्। क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च॥ वाक्। प्राट्। श्रीः। स्रुः वत्यतो घृतादिकमिति स्रुः यज्ञोपकरणं। द्रूः हिरण्यं। कटप्रूः कामरूपी कीटश्च। जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियां॥ ॥ द्रिणी· दक्षिणो दक्षिणोद्भूतसरल

च्छन्दवृत्तिषु· अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियामिति च· दक्षिणः सरलो दारपरच्छन्दानुवृत्तिषु· वाच्यवद्दक्षिणा वाचि यज्ञदानप्रतिष्ठयोरिति विश्वः अर्त्तेः ऋगतौ· अस्मादिनन् कित्स्यात्· इकारश्चाधातोरपरत्वम्· इरिणं शून्यमूषरमित्यमरः इरिणमूषरे शून्येऽपीति मेदिनी· वेपिटुवेपृकम्पने· तुहिर्अर्दने· आभ्यामिनन् ह्रस्वश्च धात्वोः अटव्यरण्ये विपिनमित्यमरः तुहिनमिति· लघूपधगुणे कृते ह्रस्वः तलि तल प्रतिष्ठायाम् पुल महत्त्वे गर्वेः गर्व मोचने अस्मादिनन्· अकारस्य उत्· रुहेश्च रुह बीजजन्मनि प्रादुर्भावे· रोहिण इति· प्रज्ञादित्वादणि रौहिणश्चन्दनतरुः महेः मह पूजायाम् कुतस्त्वमिन्न् माहिनः सन्निति मन्त्रे माहिनो महनीयः पूजनीय इति वेदभाष्यम्· क्विब्वचि वच परिभाषणे· प्रच्छ ज्ञीप्सायाम्· श्रिञ् सेवायाम्· स्रु गतौ द्रु गतौ प्रुङ् गतौ जु गतौ सौत्रः वाग्गिति· वचिस्वपीति सम्प्रसारणाभावः प्रच्छ व्रीति प्राट् ग्रहिज्येति सम्प्रसारणाभावः च्छ्वोः शूडिति शः व्रश्चेति षत्वं जश्त्वचर्त्वे प्राशौ प्राशः श्रीरिति कृदिकार इति ङीषन भव

मिहलत्वयवोयरकार इति व्याख्यानात् इदन्तं यदिकारान्तमिति पक्षे तु यद्यपि ङीषः प्राप्तिरस्ति तथापिकारग्रहणसामर्थ्यान्न केवलस्येकारस्य ग्रहणं दिकारान्तपक्षो
दुर्बलत्वमाह दुर्घटस्तु ङीषि श्रीमित्यपि रक्षितं रच्छतीत्याह श्रीवेषरचनाशोभाभारतीसरलद्रुमे लक्ष्म्यां त्रिवर्गसंपत्तिविधोपकरणे ष्वचविभूतौ च मतौ च स्त्रीवे
ति मेदिनी नूपुरका घोरस्यात्रिमूलो दारुत्तमप्रि मेदिनी ॥ ❀ ॥ आप्नोतेः आप्लृ व्याप्तौ अस्मात्क्विप् धातोर्ह्रस्वश्च आपस्त्री भूम्नि वार्वारि इत्यमरः परौ व्रजगतौ द्रुवः द्रु
नारनयोरस्मात्क्विप् धातोश्च दीर्घः प्लुवद्वा वाहुर्वचनम् स्रुवः कः स्रुवोय तपात्रविशेषः अयं स्रुवोभिजिहर्ति स्रुवेणगोर्वलोनु हातीन्द्रादीपसिद्धः चिकस्रुव इत्य
वयोगविभाग उत्तरार्थः करदिति तेन स्रुक् स्रुचौ स्रुचः इत्यादौ गुणेन तनुविस्तारे वइति संघातग्रहणं तदाह प्राव्यादेश इति स्त्रियामनुत्वगस्मृषधेरत्यम्रः म्लानुदि

आप्नोतेर्ह्रस्वश्च। आपः। अपः। अद्भिः। अद्भ्यः॥ परौव्रजेषश्चपदान्ते॥ व्रजेः क्विप् दीर्घोस्तः पदान्ते तु षश्च परिव्राट्। परिव्राजौ॥ द्रुवः स्रुवश्च।
जुहूः॥ स्रुवः कः स्रुवः चिक्॥ इकार उच्चारणार्थः। करत् स्रुवः स्रुक्। स्रुवं स्रुचश्च संमृड्डि तनोतेरनश्चकः। तनोतेश्चिकप्रत्ययः। अनोवप्राव्दा
देशश्चात्वकं। म्लानुदिभ्यां डोः॥ म्लौः। नौः। द्विरव्ययं। डौरित्येव। म्लौं करोति। क्त्वमेजन्त इति सिद्धे नियमार्थमिदम्। उणादिप्रत्ययान्तः स्त्रु
न्तएवेति। रातेर्डैः॥ राः। रायौ। रायः। गमेर्डोः॥ गौन्नादित्येवलीवर्देकिरणकेतु भेदयोः। स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः
स्वर्गी वज्राम्बुरश्मिदृग्वाणलोमसु। वाहुलकात् द्युतेरपि डोः॥ द्यौः स्त्री स्वर्गान्तरिक्षयोः। भ्रमेश्च डूः॥ भ्रूः। चाद्रमेः। अग्रेगूः॥ ॥

लिहर्वक्षयेणुरश्मौ ग्लौर्मृगाङ्कः कलानिधिरित्यमरः स्त्रियां नो नरणिस्त्री रीरिति च ग्लौं करोतीति अग्लौः ग्लौः संपद्यते तथाकरोतीत्यर्थः अव्ययत्वात्सुपो लुक्॥
त्वन्तएवेति तेन ग्लौनौगौरित्यादीनां नाव्ययत्वमिति भावः रातेः रा दाने रा इति रायो हलीत्यात्वम् राः स्मृतः पावकेनी स्त्रो राः पुंसि स्वर्णवित्तयो रिति मेदिनी र
ली क्लेदने नेरा स्तु सुवर्णे जलदे धने इति हेमचन्द्रः गमेः गम्लृ गतौ गोत्रोण्णिन् गोः के प्रावोक्रमाह गौर्नादित्यपरत्यादि गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रे पुमान्भवे
त् अर्जने नेत्रदिग्वाणभूवाग्वारिषु गौर्मतेति हेमचन्द्रः द्युतेरपीति द्युत दीप्तौ द्योततेनेदेवा अस्यामिति द्यौः भ्रमेश्च भ्रमु अनवस्थाने गम्लृ गतौ अग्रेगूः सेवकः॥

कृ·
सि·कौ·
टी·न·
५६

दमेः दमु उपशमे डित्वादिलोपे दोः दोषन्तस्येति श्रीहर्षप्रयोगात्पुंस्त्वम्· ककुद्दोषणी इति भाष्यप्रयोगान्नपुंसकत्वम्· दोर्दोषा च भुजो वा हरिरिति धनंजयकोशात् स्त्रीलिङ्गत्वमपीत्यादि प्रागेव प्रपंचितम् पणेः पण व्यवहारे स्तुतौ च अमरकोशमाह नैगम इत्यादि वशः वश कान्तौ· अस्मादिजि किं स्यात्· ग्रहिज्येति संप्रसारणम्· भृञः भृञ् भरणे· अस्मादिजिः किं स्यात् धातोरकारान्तादेशश्च जसि जसु मोक्षणे बहमर्षणे जसुरपेल्यर्थं पिप्पुर्गामिति मन्त्रे जसुरपेक्षामपीति नीचापमाने जसुरिं न श्येनमित्यत्र जसुरिं क्षुधितं श्येनं न· श्येनपक्षिणमिवेति· उनस्य वाजीस हरिर्ऋतावेति मन्त्रे सहरिः सहनशील इति चवेद भाष्यम्· सुपुञ्· अभिषवे युमिश्रणे· रुशब्दे रुत्र वरणे सवनं त्वध्वरे स्नाने सोमनिर्दलनेपि चेति मेदिनी· यवनो म्लेच्छविशेषः रवणः शब्दने स्वरे इति च मेदिनी रवणः कोकिल इत्येके वरणो वृक्षभेदः रायित वरणा नदी वरणस्तिक्तशाके पि प्राकारे वरणं वृतावितिविश्वः वरुणो व· णस्तु तिक्तशाकः कुमारक इत्यमरः

दमेर्डोसिः॥ दोः। दोषौ। पणेरिज्यादेश्च वः। वणिक्। स्वार्थेऽण्। नैगमो वाणिजो वणिक्। वशः कित्। उशिक्। अग्निः घृतेपि च। भृञ ऊच्च॥ भूरिक्। भूमिः। जसिसहोरुरिन्॥ जसुरिर्वज्रं। सहुरिरादित्यः पृथिवी च। सुयुरुवृञो युच्॥ सवने श्चन्द्रमाः। यवनः। रवणः कोकिलः वरणः। अशेरश् च। अश्नोतेर्युच् स्यात् रशादेशश्च। रशना कांची। जिह्वा वाची तु दन्त्यसकारवान्॥ ९९ अशेः अशूं व्याप्तौ जिह्वावाची त्विति रस आस्वादने चौरादिकः ततो नन्द्यादित्वाल्ल्युः ण्यास श्रन्थेति युच्वा रसयत्यास्वादयतीति रसना· रसनं स्वदने· ध्वनौ जिह्वायां तु नपुंसि स्यात्स्त्रीस्त्रो यां रसना स्त्रियामिति मेदिनी· कांचीवाची तालव्यशकारवान् जिह्वावाची दन्त्यसकारवानित्येषा व्यवस्था भूरिप्रयोगाभिप्रायेणोक्ता वस्तुतस्तु तालव्यशकारवानपि शनाशब्दोपि कांच्यां जिह्वायां च तथा दन्त्यसकारवान् रसनाशब्दोप्युभयत्र बोध्यः तथा हि तालव्या अपि दन्त्याश्च शम्बशम्बलशूकराः रशनापि च जिह्वायामिति विश्वकोशाज्जिह्वायामुभयं साधु· रसनं निःस्वने स्वादे रसना कांचिजिह्वयोरित्यजयधरणिकोशाभ्यां कांच्यामप्युभयं साधु· एवञ्चाशेरशेचेति सूत्रे अशूं व्या तौ अश भोजने इति धातुद्वयमपि ग्राह्यम्· रस आस्वादने रसशब्दे इति धातुभ्यां तु बहुलमन्यत्रापीत्यनुपदमेव वक्ष्यमाणेन युचेन सर्वत्रावयवार्थानुगमोपि स्

५६

उन्देः उन्दी क्लेदने · अस्मात् युच् · ओदनं न स्त्रियां भक्ते ऽवलायामोदने स्त्रियामिति मेदिनी गमेः गम्लृ गतौ नभोऽन्तरिक्षं गगनमित्यमरः बहुलं स्यन्दू प्रस्रवणे · स्यन्दी
स्यन्दनं तु स्रुतौ नीरे ऽतिनिशे नाऽर्थे स्त्रियामिति मेदिनी · रोचना रक्तकह्लारे गोपित्तवरयोषितोः रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिष्विति चदि आह्लादे चन्द
नं मलयोद्भवे चन्दनः कपिभेदे स्यान्नदीभेदे तु चन्दनीति विश्वः चन्दनी तु नदीभेदे चन्दनो ऽस्त्री मलयजे भद्रकाल्यां नपुंसकमिति मेदिनी · भद्रकाली ओषधिविशेष
भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रियामिति मेदिनी · असु क्षेपणे · असनं क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे इति मेदिनी अत सातत्यगमने राजपूर्वः राजातनः ।
क्षीरिकायां प्रियाले किंशुकेऽपि चेति विश्वमेदिन्यौ · एवमन्येऽपि द्रष्टव्याः रञ्जेः रञ्ज रागे ल्युट् तु रञ्जनम् · रञ्जनो रागजनने रञ्जनं रक्तचन्दने इति मेदिनी · बाहुलकाल्लोपे रा

उन्देर्नलोपश्च ओदनः गमेर्गश्च गमेर्युच् स्याद्गश्चादेशः गगनं बहुलमन्यत्रापि युच् स्यात् स्यन्दनः रोचना रञ्जेः क्युन् रजनम् भूसू
धूभ्रस्जिभ्यश्छन्दसि भुवनं सुवनमादित्यः धुवनो वह्निः निधुवनं सुरतं भृज्जनमम्बरीषं कृपृवृजिमन्दिनिधाञः क्युः किरणः पु
रणः समुद्रः वृजनमन्तरिक्षं मन्दनं स्तोत्रम् निधनं धृषेर्धिष च संज्ञायां धिषणो गुरुः धिषणा धीः वर्त्तमाने पृषद्बृहन्महज्जगच्छ
तृवत् अतिप्रत्ययान्ताः पृषु सेचने गुणाभावः पृषन्ति बृहत् महान् गमेर्जगादेशः जगत् ॥ ११ पिक्युन् · कृपेरो ल इति प्राप्तलत्वाभावश्च

कृपणः भूसू भू सत्तायां षूङ् प्राणिप्रसवे धूञ् कम्पने भ्रस्ज पाके बहुलवचनाद्भाषायामपि क्वचित् · भुवनं विष्टपेऽपि स्यात्सलिले गगने जने इति मेदिनी · वि
ष्टपं भुवनं जगदित्यमरः भृज्जनमिति · ग्रहिज्येति सम्प्रसारणम् · सस्य जश्त्वेन दः · दस्य श्चुत्वेन जः क्लीबेऽम्बरीषं भ्राष्ट्रो नेत्यमरः कृ पृ कॄ विक्षेपे पॄ पालनपूरणयोः वृ
जी वर्जने · मदि स्तुत्यादौ डुधाञ् धारणपोषणयोः निधनं स्यात्कुले नाशे इति मेदिनी · निधनं कुलनाशयोरिति हेमचन्द्रः धृषेः ञिधृषा प्रागल्भ्ये · अस्मात् क्युः
धिषादेशश्च धातोः · धिषणा स्त्री दैत्याचार्ये धिषणा धिषियोषितीति मेदिनी · गीष्पतिर्धिषणो गुरुरित्यमरः वर्त्तमाने शतृवच्चेति · तथा च · उगिदचामिति नु
मि महान् · स्त्रियां नृगितश्चेति ङीपि महतीत्यादि सिध्यतीति भावः ननु पृषन्महदादयः लटः शतृशानचाविति शतृप्रत्ययान्ता एव भवन्तु ततश्च वर्त्तमान इति

शतृवच्चेतिचनकर्त्तव्यमितिमहदेवलाघवमितिचेदत्राहुः शतृप्रत्ययान्तत्वेतुकर्त्तरिशविति शप्प्रत्ययेमहतीस्यात्तदावाच्छीनद्योरितिनुम्· स्यान्महान्नित्यादौतुतास्यनुदात्ते न्डिदद्‌पदेशादितिलसार्वधातुकस्वरः स्यादिति·प्रत्ययान्तत्वेतुतस्यातिप्रत्ययस्यार्द्धधातुकत्वाभ्युपगमेनशवभावान्नोक्तदोषइत्याशयेनातिप्रत्ययान्तत्वेननिपातनं स्वीकृतमिति· वृहवृद्धौमहपूजायाम्· गम्लृगतौ· पृषनीति·विन्दुवाचीपृषच्छब्दोनपुंसकमितिध्वननायबहुवचनमुदाहृतम्· पृषन्मृगेपुमान् विन्दौस्त्रियाम् पृषतोपिना· अनयोश्वत्रिषुश्वेतविन्दुयुक्तेप्युभाविमावितिमेदिनी· वृहतीक्षुद्रवार्त्ताकयांकंटकार्यांचवाचिच·वारिधान्यांमहत्यांचछन्दोवसनभेदयोरिति विश्वः शतृवद्भावादुगित्वान्नुम्· वृहन्विपुलः महतीवल्लकीभेदेएन्येतुस्यान्नपुंसकम्· तत्त्वभेदेपुमान् श्रेष्ठेवाच्यवदितिमेदिनी· महतीनारदवीणा विश्वावसोस्तुवृहतीतुंवरोस्तुकलावती· महतीनारदस्यस्यात्सरस्वत्यास्तुकच्छपीतिवै. जयन्ती·तत्रवायुवाचिनः पुल्लिङ्गस्यशतृवद्भावादुगित्वेननुम्जगन्

**संश्चात्पदेहत् एतेनिपात्यन्ते पृषत्क्रारांशतृवद्भावनिष्टत्यर्थं सञ्चिनोतेःसुट् इकारलोपः सञ्चत् कुरुकः तृपच्छेत्रम् विपूर्वात् हन्तेष्टिलोपः इतएच वेहत्गर्भोपघातिनी छन्दस्यसानच्‌भृञ्जृभ्यांशवसानः पन्थाः जरसानः पुरुषः ऋंजिवृधिमन्दिसहिभ्यः कित् ऋञ्जसानोमेघः वृधसानः पुरुषः मन्दसानोग्निर्जीवश्च सहसानोयज्ञोमयूरश्च॥ ८९**

जगन्तौजगन्तइत्यादिभवति·[illegible]गमिजुहोतीनांद्वेचेतिक्वुप्रत्यादितस्यतुनुमभावाज्जगत्·जगतौजगतइत्यादीतिवोध्यम्·॥ ❁ ॥संश्चत्· चिञ्चयने·तृपप्रीणने हनहिंसागत्योः निपात्यन्तइति·अति प्रत्ययान्ताइतिशेषः·निवृत्त्यर्थमिति·एवञ्चसंश्चदित्यत्रोगित्वाभावान्नुमः·शंकैवनास्तिवेहदित्यत्रतूगितश्चेतिङीपुनेतिभावः·संचिनोतेरिति·सुपूर्वति·चन्द्रंतुसंपूर्वात्त्वयतेः संश्चदित्याह[illegible]त्रमिति·चन्द्रमाइत्यन्ये·विहंतिगर्भमितिवेहत्· इतएवेति· विशब्दसम्बन्धि[illegible]स्यएकारइत्यर्थः·गौरित्यनुवृत्तौ· वेहद्गर्भोपघातिनीत्यमरः छन्दसि श्रुगतौ जृषवयोहानौ·पन्थाइति·प्रमन्महइत्यादिमंत्रद्वयोःशवसानशब्दोगंतृपरतयाव्याख्यातः· ऋंजि· ऋजिभर्जने राम·
वृधुवृद्धौ· मदिस्तुत्यादौ·षहमर्षणे·एभ्योऽवसानच्‌कित्स्यात्· ऋंजसानोमेघइति·ऋजेरिदित्वान्नुम्·इदित्वादेवनलोपाभावः एवञ्चायंमंदिसहीचत्रयोपि ५७

पूर्वसूत्र एव पठितुं शक्याः किंत्वनुबन्धधातावेवोपयुज्यते उत्तरसूत्रेपि गुणग्रहणं सुत्यजम् ॥ ॐ ॥ अर्तेः सुट् च । कृधेः किदित्युक्तौ सर्वे सामंजस्यादित्याहुः अंजसान
पुरुवास्कैचे अस्मिन् यज्ञे मन्दसानाः वृषण वसुडस्यादि मंत्राणां भाष्ये तु यौगिकार्थ एव पुरस्कृतः अर्तेः ऋगतौ धातोर्गुणः प्रत्ययस्य सुडागमः असाविषदर्शो
सानापेति मंत्रस्य भाष्ये तु अर्शसानाय शत्रूणां हिंसित्रे इति व्याख्यातम् । समि । ष्टुञ् स्तुतौ । अस्मात्सम्युपपदे आनच् युधि युध संप्रहारे । युधानो रिपुः बुधिर्बोध
ने बुधान आचार्यः दृशिः प्रेक्षणे वाहुलकात्कपेरप्यानच् कृपाणः खड्गः कृपाणेन कथंकारं कृपणाः सहग राधेते परिषंदानसमयेय स्वःकोशं विमुंचति
हुर्च्छः हुर्च्छा कौटिल्ये अस्मात्सनन्तात् आनच् स्यात्सनो लुक् छलोपश्च पुयोध्यस्माज्जुहुराणमेन इति मंत्रे जुहुराणः कौटिल्यकारिणः पापंसुयोधि पिप्यक्कुत्व

अर्तेर्गृणः शुट् च अर्शसानोग्निः सम्यानच् स्तुवः संस्तवानो वाग्मी युधिबुधिदृशिभ्यः किच्च युधानः बुधानः दृशानो लोकपालकः
हुर्च्छेः सनो लुक् छलोपश्च जुहुराणश्चन्द्रमाः श्वितेर्दश्च शिश्विदानः पुण्यकर्म्मा तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ
शंसेः क्षदादिभ्यश्च क्रमात्तृन् तृचौ स्तः तौ चानिटौ शंस्ता स्तोता शंस्तारौ शंस्तारः क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च अनुदा
त्तेत् क्षत्ता च क्षदानमिति मन्त्रात् उपशाणाम्बा वेहतम्वा क्षदने इति ब्राह्मणाच्च क्षत्ता स्यात्सारथौ द्वास्थे वैश्यायामपि शूद्रजे ॥ :

नि भाष्यम् । श्विते । श्विता वर्णे अस्मात्सन्नन्तादानच् । सन्यङोरिति द्वित्वम् । सनो लुक् तकारस्य च दकारः किदित्यनुवृत्तेर्न गुणः पुण्यकर्मेति शिश्विदानो कृष्ण
कर्मा इति विशेष्यनिघ्नेऽमरः अकृष्णकर्मा शुक्लम् । निष्पापत्वाम् । शुद्धंकर्मयस्येत्यर्थः । क्षीरस्वामिना तु प्रकृतसूत्रं विस्मृत्य श्विदिश्वैत्ये । अस्माद्विटः कानजिति
व्याख्यातं तदसंगतम् । कानच श्छान्दसत्वात् इदित्त्वेन नलोपानुपपत्तेश्चेति दिक् तृन् तृचौ । शंसेति । शंसस्तुतावस्मात्तृन् । अप्तृन्निति सूत्रेण नप्त्रादिग्रहणं
यमार्थमौणादिकतृन्नन्तानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेव स्युक्तम् । तेनात्र दीर्घो नेत्युदाहरति शंस्तारौ शंस्तार इति । नित्त्वादाद्युदात्तः तृचोच
ः प्राव ग्रावग्राम उत शंस्ता सुविप्रः आदिशब्दाच्छासु अनुशिष्टौ शास्ति विनयति सत्वान् शास्ता बुद्धः शास्तारौ शास्तारः शास्ता समन्तभद्रेनाशासकं पुरं

कृ
सि·कौ· स्यवादिति·मपूर्वस्यतुनश्चा दिषुपाठादग्न्निति दीर्घः प्रशास्तारौ प्रशास्तारः क्षत्ताशूद्राच्च वैश्यादीप्रतीहारे चासारथ्या विति मेदिनी कोशानुसारेणाह·वैश्यायामिति
धी·त· अमरस्तु क्षत्रियायां च शूद्रजेइत्याह रणाज्ञापणे·उत्सुर्वेः उन्नेताकर्त्विग्भेदः॥ ॐ ॥ बहुलमन्यत्रापि· अन्यत्रापि धातोर्बहुलं तृन्तृचौ भवतः पूर्वसूत्रस्यादिरूप
५८ · व्दैनैव मन्ता हन्ते त्यादेः सिद्धत्वात्सप्रपञ्चार्थमिदं सूत्रम् नप्तृनेष्टृ नशब्दयोर्दशन्तर्जनानिपातस्तने नशेति नञः प्रकृतिभावः पत्लृगतावित्यस्या च्छन्दलोपः गोत्र
प्रापणेत्विषृदीप्तौहुदानादनयोः पूञ्पवने भ्राजृदीप्तौ मामाने पाक्षणे दुहप्रपूरणे त्वष्टापुमान्देवशिल्पिनस्यादित्यभिधपीतिमेदिनीजायामाती स्वनर्भोक्ति

बहुलमन्यत्रापि मन् मन्ता हन् हन्ता इत्यादि नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ नपतेर्न्सनेनन प्रापैतेनिरेरे हि
अश्च नयतेःषुक्युक्षाम्च नेष्टा त्विषेरितोऽत्वं त्वष्टा होता पोता कर्त्विग्भेदः भ्राजतेर्ज्जलोपः भ्राता जायाम्माति जामाता मानपू
जायांनलोपः माता पातेराकारस्येत्वं पिता दुहेस्तृच्इडागमाभावश्च दुहिता सावसेर्ऋन् स्वसा यतेर्ह्रस्वश्च याता भार्य्यास्तुभ्रातृ
वर्गस्य यातरः स्युः परस्परम् नञिचनन्देः नमन्दतीति ननान्दा इह वृद्धिर्नानुवर्ततइत्येके नानान्दातुस्वसापत्युर्ननन्दाननन्दिनीच।
सेतिशब्दार्णवः दिवेर्ऋः देवा देवरः स्वामिनोदेवृदेवरौ नयतेर्डिच्च ना नरौ नरः सव्येस्थश्छन्दसि अस्मान्वेसत्रस्थ्यास्तिरूपाणामु
पसंख्यानं सव्येष्ठा सारथिः सव्येष्ठौ सव्येष्ठरः अर्त्तिसृधृधम्यम्यश्यवितृभ्योनिः अष्टभ्योऽनिप्रत्ययः स्यात् अरणिः सरणिः।
सरणिः धरणिः धमनिः अमनिर्गतिः अशनिः अवनिः तरणिः बाहुलकाद्रजनिः॥ ९९ ॥ अर्थ्यः सुप्यसे सुनिडपपदे·असुसुपराऽस

स्मात्·अन् परादेशः स्वसाभगिनीसावसेरितितुका वित्कः पा ठः पतेः यतीप्रयत्ने॰नञिच टुनदि समृद्धौ अस्मान्नञ्युपपदेऋन्·ननन्दतीति कृतायामपि
मानतुष्यत्सर्थः उणाप्युणानना न्दाननन्दा च प्रकीर्तितेति द्विरूपकोशः दिवेः दिवुक्रीडाविजिगीषादौ देवेति भ्रातरीत्यनुवृत्तौ स्वामिनोदेवृदेवरावित्यमरः नय
तेः गतौ प्रापणे अस्मात्·ऋप्रत्ययः सचडित्·डित्वाट्टिलोपः सुः पुमांसः पञ्चजनाः पुरुषाः पूरुषानरइत्यमरः सव्ये स्थागतिनिवृत्तौ·अस्मात्सव्यशब्दे उप

उणा
५८

८ ३७

अर्चि अर्च पूजायाम्‌ शुच शोके हुदाने सृप्ऌ गतौ छद अपवारणे ऽयन्तः छर्द वमने अर्चिरिति सान्तम्‌ तमर्चिषा स्फूर्जयन्नितिमन्त्रः नयनमिव सनिद्रं घूर्णितं देवस्य र्चिरिति माघः ज्वालाभासो न पुंस्यर्चिरिति नानार्थो सान्तेष्वमरः इदन्तोपि णिजन्तादर्चेस्त्वङ्डीरिति भावः अर्चिर्हेतिशिखा स्त्रियामित्यमरः रोचिः शोचिरुभे क्लीबे इति सर्पिर्घृतम्‌ छ यतेऽनया छदिः छदिः स्त्रियामेवेति लिङ्गानुशासनसूत्रम्‌ एवञ्च पटलं छदिरित्यमरग्रन्थे पटलसाहचर्याच्छदिषः क्लीबता तावदन्तउपेक्ष्यः छ र्यतीति छर्दिस्त्वतिसारश्च बलस्त्वनानियस्य सन्नोतिविग्रहः ॥ ॥ बृंहेः बृहि वृद्धौ अस्मादिसिः कुशशुष्मणोरिति शुष्मा नाम अग्निः अग्निर्वैश्वानरो वह्निरित्यु पक्रम्य बर्हिः शुष्म इत्यमरेणोक्तत्वात्‌ द्युतेः द्युतदीप्तौ ज्योतिरग्नौ दिवाकरे पुमान्‌ नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोरिति मेदिनी वसो रुचदीप्तावस्माद्वसुशब्दे उ

बृंहेर्नलोपश्च बर्हिर्नो कुशशुष्मणोः द्युतेरिसिन्नादेश्च जः ज्योतिः वसो रुचेः संज्ञायां वसुरोचिर्यज्ञः भुवः कित्‌ भुविः समुद्रः सहो।
धश्च सधिरनड्वान्‌ पिबतेस्थुक्‌ पाथिश्चक्षुः समुद्रयोः जनेरुसिः जनुर्जननं मनेर्धश्छन्दसि मधुः अर्त्तिपृवपियजितनिधनित
पिभ्यो नित्‌ अरुः परुर्ग्रन्थिः वपुः यजुः तनुः तनुषी तनूंषि धनुरस्त्रियां धनुर्वंशविशुद्धोपि निर्गुणः किङ्करिष्यति सा तनुस्य उदः
नस्य वा ह्रस्वं तपुः सूर्याग्निशत्रुषु एतेर्णिच्च आयुः आयुषी चक्षेः शिच्च चक्षुः ॥ १९ पपदद्गमिन्स्यात्सञ्ज्ञायाम्‌ बाहुलकात्केवलादपि रो

विशेषोऽर्विरुभे क्लीबे इत्यमरः भुवः भवतेरिसिन्स्यात्स च कित्‌ सहो सह मर्षणेऽस्मादिसिन्‌ धश्चान्तादेशः पिबतेः पापाने अस्मादिसिन्थातोश्च दुगाग मः जनेः जनी प्रादुर्भावे मनेः मन अवबोधनेऽस्मादुसिः स्याच्छन्दसि धकारश्चान्तादेशः मधु पवित्रद्रव्यम्‌ अर्त्ति पृ ऋगतौ पृ पालनपूरणयोः डुवप बीजसन्ताने यजदेवपूजादौ तनु विस्तारे धन धान्ये तप सन्तापे एभ्य उसिर्नित्स्यात्‌ व्रणो स्त्रियामीर्ममरुः क्लीबे इत्यमरः ग्रन्थिर्नापर्वपरुषीइतिच वपुः क्लीवं तनौ शस्ताकृतावपीति मेदिनी शस्ताकृतिः प्रशस्ताकृतिरित्यर्थः यजुरिति यजुर्वेदः तनुः शरीरम्‌ तनुषे तनुषेऽनङ्गमितिसुबन्धुः स्यात्तनुस्तनुषा सा धनुषा च धनुं विदुरिति द्विरूपेषु विश्वः अथास्त्रियां धनुश्चापावित्यमरः धनुः प्रियालेनानस्त्री राशिभेदे शरासने धनुर्धरेत्रिष्विति सान्ते मेदिनी एतेः इण्‌ गतौ

ह॰
सि॰कौ॰ टी॰त॰ ६

द्वस्नार नयोरित्य स्मात्स्वरात्पुकारलोपः उपकूलं समीपे स्यादेकान्ते पिनपुंसकमितिमेदिनी उपह्वरोरथइतिकेचित् इण् इण्गतौ षिञ् बन्धने जि जये दीङ् क्षये उपदाहे

नवरसहो इनः पत्यौ नृपार्कयोरितिमेदिनी जिनोऽर्हतिच बुद्धे च पुंसि स्यात्त्रिषु जित्वरे इतिच दीनामूषिकयोषायां दुर्गते त्वतरेऽन्यवदितिविश्वः उष्मा पीनेपुमान्

दृष्णाशीतयोरन्यलिङ्गकइतिमेदिनी ज्वरत्वरेत्यूठ् ऊनमसम्पूर्णम् फेन स्फायी ष्ठ्ठी अस्य फेइत्यादेशः मीञ् हिंसायाम् डिण्डीरोऽब्धिकफः फेनइत्यमरः मीनो राशि

न्तरे मत्स्ये इति विश्वः ॥ ❀ ॥ कृषेः कृषविलेखने अस्माद्धुर्यो वाच्येन कृ स्यात् कृष्णः सत्यवती पुत्रे केशवे वायसेऽर्जुने कृष्णास्याद्द्रौपदीनीलीकणाद्राक्षासु योषि

ति मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोरितिमेदिनी बन्धेः बन्ध बन्धने अस्मान्नक् भास्करोऽहस्करो ब्रध्नः प्रभाकरो दिवाकरइत्यमरः बुध्नो नामूलहृद्योरि

तिमेदिनी धाप्र इ धाञ् धारणादौ पृपालनादौ वस प्रनिवासे अजगतौ अतसातत्यगमने एभ्यो नः स्यात् नक् प्रत्यये सतितु वलइत्यत्र सम्प्रसारणं स्यात् वेनइत्यत्र

कृषेर्वर्णे। कृष्णः। बन्धेर्ब्रधिबुधी च ब्रध्नः बुध्नः धाप्रवस्यज्योतिभ्यो नः धाना भृष्टयवे स्त्रियः पर्णमन्यत्र। पर्णः किंशुकः वस्नो मूल्ये वेतनेच अजेर्वी। वेनः। अन्न आदित्यः बाहुलकात् स्फुरणोतेः। श्रोणः पङ्गुः लक्षेरट् च लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च वा नुडित्येके। लक्षणं लक्ष्मणं नाम्नि चिह्ने च लक्षणो लक्ष्मणश्च रामभ्रात। लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा वनेरिच्चोपधायाः

गुणो न स्यादितिभावः धाना भृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदीतिविश्वः पर्णपत्रं किंशुके ना इतिमेदिनी वस्न स्त्वक्रये पुंसि चेतने स्या १ वेन्ना नदी ॥

नपुंसकमितिच वेनइति लुएयकः प्रजापतिश्च लक्षेः लक्ष दर्शनाङ्कनयोः लक्षणमित्यादि लक्षणलक्ष्मशब्दौ द्वावपि नाम चिन्हयोः क्लीबौ रामभ्रातरि तु पुंलिङ्गौ

हंसयोषायां लक्षणा सारसस्य योषायां तु लक्ष्मणेतिव्य वस्थेत्यर्थः लक्षणं नाम्नि चिह्ने च सौमित्रिरपि लक्षणः लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणइतिविश्व

लक्षणो लक्षणोऽपि चेति द्विरूपेषु च विश्वः लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित् लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति रामभ्रातरि पुंसि स्यात् स एम॰

श्रीकेवाभिधेयवदितिमेदिनीकोशेतु सारस्यामपि लक्ष्मणेति निर्मकारः स्वीकृतः वनेः वनसम्भक्तौ अस्मान्नः उपधाया इत्वञ्च वेन्नेति लघूपधगुणः ॥ ❀ ॥ ६०

स्त्रि वे: षिवु तन्तुसन्ताने· बाहुलकादिति एतच्चक्तो: सृडिति सूत्रे दृष्टौ येनाविधिरिति सूत्रे केयटग्रन्थे च स्पष्टम्· पणिति लघूपधगुणे कृते लकारस्यायादेशे ङ्ठापि सार्वधातु:
कास्यादिना गुणे कृते सर्वानदूतिस्यादिति भाव: स्योन: किरणसूर्ययोरिति मेदिनी ह्वृ ह्वृ विक्षेपे ह्वृ वरणे· दीर्घपाठे तु ह्वॄ वरणे जॄ पूवयोर्हानौ दिवादि: जृ इति क्र्यादौ
च रादौ च षिञ् बन्धने· हगतौ पुनृ पुनर्गतौ अन प्राणने त्रिषप् शये एभ्यो नप्रत्ययो णित्स्यात्· कर्ण: पृथात्मजे सुते सुवर्णालौ श्रुतावपीति विश्वमेदिन्यौ वर्णो द्विजादिशुक्लादिय
शो गुणकथासु च स्तुतौ ना न स्त्रियां भेदे रूपाक्षरविलेखने इति मेदिनी विश्वमेदिन्यौ स्यमाहा जर्णश्चन्द्र इति· जर्णो जीर्णद्रुमेन्दुषिति हेमचन्द्र: ध्वजिनी वाहिनी सेनेत्यमर:
द्रोणी स्त्रियामाढके स्यादा ढकादिचतुष्टये पुमान् कृपीपतौ कृष्णकाके स्त्रीनीवृदन्तरे स्त्रियां काष्ठाम्बुवाहिन्यां गवादीनामपीष्यते अन्नं भक्ते च भुक्ते स्यादिति मेदिनी· स्वप्न:

सिवेष्ठ्यूचे दीर्घोच्चारणसामर्थ्यान्न गुण: स्यून आदित्य: बाहुलकात् केवलोन: ।उङ्। अन्तरङ्गत्वाद्गुण गुण: स्योन: ह्वृजृसिद्धपन्यानित्स्वपिभ्यो नित्
कर्ण: वर्ण: जर्णश्चन्द्रे च वृक्षे च सेना द्रोण: पन्नोनीचैर्गति: अन्नमोदन: ।स्वप्नो निद्रा धेट् इच्च धेन: सिन्धुर्नदी धेना तृषिशुषिरसिभ्य: कित् तृष्णा शु
ष्ण: सूर्यो वह्निश्चा रस्नं द्रव्यं सुन्नो दीर्घश्च सूनावधस्थानम् रमेस्तश्च रमयतीति रत्नम् रास्नासास्नास्थूणावीणा: रास्ना गन्धद्रव्यं सास्ना गोगलकम्बल:

स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमानिति मेदिनी धेट: धेट पाने अस्मान्न: स्यादिच्चान्तादेश: धेना नद्यां नदे पुमानिति मेदिनी धेन:॥ स्थूणा गृहस्तम्भ: वीणा वल्लकी।
समुद्रे नद्यां च धेना इति विश्व: स्तोके धाने त्यादिषु वाङ्नामसु धेनेति· वैदिकनिघण्टौ पठितम्· अत एव धेना जिगाति दाशुषे इत्यादिमन्त्रेषु धेना वागिति व्याख्यातम्।
च्छे· तृषि जितृष पिपासायाम्· शुष शोषणे रस शब्दे· तृष्णा लिप्सा पिपासयोरिति विश्व: सुन: षुञ् अभिषवे अस्मान्न: स्याद्धातोर्दीर्घश्च सूनाध्वजिह्विकापि चेति नान्ते
ऽमर: सूनं प्रसवपुष्पयो: सूना पुत्र्यां वधस्थान गलशुण्डिकयो: स्त्रियामिति मेदिनी· रमे: रमेर्ण्यन्तान्न: स्यात्तकारश्चान्तादेश: रत्नं स्वजाति श्रेष्ठेपि म ण्यर्थेपि नपुं
सकमिति मेदिनी रास्ना रसआस्वादने उपधादीर्घ: रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियामिति मेदिनी षस स्वप्ने ऽपधादीर्घ: सास्ना तु गलकम्बल इत्यमर:
सास्ना गोगलकम्बल इति पाठान्तरम्· ष्ठा गतिनिवृत्तावित्यस्य ऊत्वं प्रत्ययस्य णत्वञ्च अथ स्थूणा स्यात्स्तम्भे गृहस्य चेति मेदिनी· सर्मीलोहप्रतिमा वीणा इत्यादि

सृवृषि· सृगतौ वृषुसेचने आभ्यान्निः कित्स्यात्· अङ्कुशो स्त्री सृणिः स्त्रियामित्यमरः सृणिः स्यादंकुशे पुमान्· इतिकोशान्तरम्· अतएव आरसमगमव मत्यसृणिं शितनाग्र मिति माघे पुंलिङ्ग प्रयोगः वृष्णिस्तु पादवे मेषे· वृष्णिः पाखण्डचण्डयोरिति विश्वः ऐन्द्रे वृष्णिं षोडशिनि तृतीयमिति श्रुतौ वृष्णिं मेषमित्यर्थः अङ्गे अगिगत्यर्थः अग्निर्वैश्वानरेपिस्याच्चित्रकाख्यौषधौ पुमानितिमेदिनी· वहि· वहप्रापणे श्रिञ्सेवायाम्· श्रुश्रवणे युमिश्रणे द्रुगतौ ग्लै म्लै हर्षक्षये ओहाक् त्यागे· त्रि त्वरा सम्भ्रमे· एभ्योनिः प्रत्ययः स्या— त्सचणित्· वह्निर्वैश्वानरेपिस्याच्चित्रकाख्यौषधौ पुमानितिमेदिनी श्रेणिः पंक्तिः निःश्रेणिस्त्वधिरोहिणी श्रेणिः स्त्रीपुंसयोः पंक्तौ समाने शिल्पिसंहताविति मेदिनी· श्रोणिः कटिप्रदेशः कटिः श्रोणिः ककुद्मती त्यमरः योनिर्भगं योनिः स्त्रीपुंसयोश्च स्यादाकारे स्मरमन्दिरे इति मेदि

सृवृषिभ्यां कित् सृणिरङ्कुशः वृष्णिः क्षत्रियमेषयोः अङ्गेर्नलोपश्च अग्निः वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् वह्निः श्रेणिः श्रोणिः योनिः द्रोणिः ग्लानिः हानिः तूर्णिः बाहुलकात् म्लानिः घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः एते पञ्च निपात्यन्ते घृणिः किरणः सृक्वातेः। सलोपः पृश्निरल्पशरीरः पृषेर्वृद्धिश्च पार्ष्णिः पादतलं चरेरूपधाया ऊत्वं चूर्णिः कपर्दकशतं बिभर्तेरुत्वं भूर्णिर्धरणी वृदृभ्यां विन्। वर्विर्घस्मरः दर्विः जॄशॄस्तॄजागृभ्यः क्विन् जीर्विः परशुः शीर्विर्हिंस्रः स्तीर्विरध्वर्युः जागृविर्नृपः ॥ ९॥

नी· द्रोणिः सेचनी कदिकारणिः द्रोषि द्रोणी स्त्रियामाढके स्याद् ढकादिचतुष्टये पुमान्· कृपीपतौ द्रोणकाके— स्त्रीनीवृदन्तरे· इतिमेदिनी· ग्लानिर्दौर्बल्यम्—— हानिरपचयः क्षयश्च तूर्णिर्मोनः घृणि घृसेचने स्पृशसंस्पर्शने· पृषुसेचने· चर गतौ डुभृञ्· धारणपोषणयोः निप्रत्यययोर्गुणाभावश्च निपात्यते घृणिः पुनः अंशुज्वालातरङ्गेष्विति हेमचन्द्रः पृश्निरल्पतनौ विस्तमरः पार्ष्णिः स्यादुन्मदः स्त्रियाम्· स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेपि चेति मेदिनी· भूर्णिर्धरणिरिति· तकानभूर्णिरिति मंत्रस्य भाष्ये तु भूर्णिर्धारकः पोषकोवेतिव्याख्यातं· वृ दृ वृञ्वरणे दृङ् आदरे स्त्रियां कृदिकारादिति ङीन् पूर्वीं जॄ शॄ· जॄवयोहानौ शॄहिंसायाम्· स्तॄञ् आच्छादने· जागृनिद्राक्षये क्विनः कित्वा दृतइद्धातोरितिइत्वे रपरत्वं जीर्विरित्यादि ॥

दिवो हे दिवु क्रीडादौ · अस्मात्क्विन् क्वित्वाद्गुणाभावः दीदिविर्धिषणान्नयोरितिविश्वः दीदिविर्ना धिषणोऽन्नेतदस्त्रियामिति मेदिनी · धिषणो बृहस्पतिः दीदिविर्द्वौ दश
काश्च भसुरगुरुर्गुरुरमितित्रिकाण्डशेषः दीदिविर्द्वौ दशार्चिः स्याज्जीवः प्राग्फल्गुनीसुत इति हारावली · ओदनाख्यो दीदिविस्त्रियमरः अत्र सर्वो दीदिविर्दीदिवि
रुदित इति व्याख्यानं न्याय्यम् · अत्र स इति विशेषणाद्दीदिवेः पुंस्त्रिङ्ग इति केषाञ्चिद्व्याख्यानं नादर्तव्यम् · स इति च्छेदने तु · अस्त्रियामिति नलभ्येत · ततश्चान्येत
दस्त्रियामितिपूर्वोक्तमेदिनी ग्रन्थो विरुध्येतेति ध्येयम् · गोपामृतस्य दीदिविमिति मन्त्रे तु द्योतमानमित्यर्थः · क्षुविः इदित्वान्नुक् रणेषु सेचने · छो छेदने षा
गति निवृत्तौ · दिवु क्रीडादौ एते क्विन्नानि पात्यन्ते · घृष्विर्वराह इति · उग्रस्य पूनस्य विरप्स घृष्टेः रिमन्त्रे तु · घृष्टेः कामानां वर्षकस्येत्यर्थ इति व्याख्यातम् ·

दिवो हे दीर्घश्चाभ्यासस्य दीदिविः स्वर्गमोक्षयोः क्षुविः घृष्विः इति विस्तु विकिकिदीदिवि क्षुविः तन्तुवायद्रव्यम् घृष्विर्वराहः छास्यो ईसैत्व।
च्छवि दीप्तिः स्यविः तन्तुवायः दीव्यतेः किकीपूर्वात् किकीदिविश्चाषः वाहुलकात् ह्रस्वदीर्घयोर्विनिमयः चाषेण किकिदीविना
पातेर्डतिः पतिः शकेर्डतिन् शकृत् अमेरतिः अमतिः कालः वहिवस्यर्तिभ्यश्चित् वहतिः पवनः वसतिर्गृहयामिन्योः अरतिः
क्रोधः अञ्चेः कोवा अङ्कुतिः अञ्चतिर्वातः हन्तेरंह च हन्तेरतिः स्यादंहादेशश्च धातोः हन्ति दुरितमनयाँहतिर्दानं प्रादेशनञ्च।
वैपरीत्यमपवर्जनमंहतिः रमेर्नित् रमतिः कालकामयोः॥ ९९ घृषु सेचने इति धात्वर्थानुगमात् छविः शोभारुचोर्योषिदितिमेदिनी · अथ चाषः कि
कीदिविस्त्रियमरः विनिमय इति · किकिदिविः किकीदिवावितिद्विरूपकोशः पातेः पारक्षणे डित्वाट्टिलोपः पतिर्धवे नाम्नि स्वामिशे इति मेदिनी शकेः शक्लृ शक्तौ उ
च्चारावस्करौ शमलं शकृत् गूथपुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियामित्यमरः · अमेः अम गतौ अथामतिः पुंसि हिमदीधितिकालयोरिति मेदिनी · वहि वह
प्रापणे वस निवासे ऋ गतौ वसतिस्तु चिवे गवीतिविश्वः वसतिः स्यात् स्त्रियां वासे यामिन्याञ्च निकेतने इति मेदिनी · अञ्चेः अञ्चु गतौ अस्मादतिः स्यात्ककारश्च
श्चान्तादेशो विकल्पेन · हन्तेः हन हिंसागत्योः अमरोक्तिमाह · प्रादेशनमित्यादि · रमेः · रमते रतिः स्यात्स्त्रचनित रमतिर्नायके नाके पुंसि स्यादिति मेदिनी · नित्वमाद्युदात्त

सू॰ सूङ् प्राणिप्रसवे क्विन्बाहुलकाद्गुणाभावः पुमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षण इत्यमरः दशपाद्यामनुसुनोरिन् दीर्घश्चेति पाठः तत्र रिनो नकारेणानुबन्धः उत्तरसू
त्रे क्रिन्प्रत्ययारम्भात् अनुबन्धत्वे हि प्रत्ययवादिहैव किन्नु च्येत तथा च सूरी सूरिणौ सूरिणः इत्यादि रूपम् अत एवाभिधानमालायां सूरीति नान्तमुदाहृतमित्यभि
धेयम् इत्यादीवृत्तिकारैः स्तुनिर्नवस्वी क्रमसूरिविद्दाहृतम् तदेतेन प्रत्युक्तम् स्वरविरुद्धमपि सत्यप्रत्ययनि सूरयः विसूर्यो दधतो विश्वमायुरित्यादौ सूरिश
ब्दस्यान्तोदात्तत्वदर्शनात् अद्रि अद भक्षणे वङ्घ्रणाननेभूसत्तायाम् शुभ शुंभ शोभार्थे अद इत्याद्युमशैलार्का इत्यमरः भूरिर्नो वा सुरे देवे च हरे च परमेष्ठिनि नपुंस
कं सुवर्णे च प्राज्येस्याद्वाच्यलिङ्गक इति मेदिनी वंक्यादयः वकि कौटिल्ये उदुपूर्वीजसन्तानेनिपातनात्सम्प्रसारणाभावः अहिभावार्थ श्वुरादिरयमनः आधिप
तो मस्यारम्भे च त्रिभी भये तन्द्रिरिति कृदिकारादिति ङीष् तन्द्री निद्राप्रमीलयोरिति मेदिनी तन्द्री तन्द्रिश्च तन्द्रायामिति द्विरूपकोशः विभज्य नत्तोरिवमक्त

सू॰ क्विप् सूरिः। अद्रि शुद्रि भू शुभिभ्यः क्रिन्॥ अद्रिः शाद्रिः शार्कराः। भूरिः प्रचुरम्। शुभ्रिर्ब्रह्मा। वंक्यादयश्च। क्रिन्नन्ता निपात्यन्ते। वंक्रि
र्वास्वमे देहे गृहदारुपार्श्वास्थिचा। वप्रिः क्षेत्रम्। अंह्रि रंघ्रिश्च चरणः। तद्रिः सौत्रो धातुः। तन्द्रिर्मोहः। बाहुलकाद्गुणः। भेरिः राशादिभ्यां त्रिप्॥
क्रिन् शात्रिण कुंजरः। अदेस्त्रिनिश्च। चात्त्रिप्। अत्त्री। अत्त्रिणौ। अत्त्रिणः। अत्त्रिः। अत्त्री॥ अत्त्रयः। पतेरत्रिन्॥ पतत्रिः पक्षी॥ ॥

तन्द्रिलेति भारविः प्रत्ययस्य कित्त्वाद्गुणाभावमाशंक्याह बाहुलकादिति राशदिराहाने शादृशातने शात्रिर्नाम्नो धेरविभ्यां छिविमेदिनी शात्रिमग्र उपमाकेतुमर्पयस्ति
मन्त्रस्य वेदभाष्ये नृपमा उपमानभूतं केतुं प्रख्यातं शात्रिं एतन्नामकं राजर्षिमिति व्याख्यातम् अदेः अद भक्षणे अत्रीपुंस्कः अत्रिर्मुनिभेदः उज्ज्वलदत्तस्तु अ
दस्त्रिन्नितिपठित्वा अत्रिरित्युदाजहार तन्न त्रिपे बहुसिद्धौ प्रत्ययान्तरवैयर्थ्यात् गोवर्धनस्तु अदेस्त्रिन्निश्चेति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा अत्री अत्रि
णौ अत्रिण इत्याह तदपि न नित्वे सत्याद्युदात्तत्वापत्तेः न चेष्टापत्तिः अहीन्द्रा अत्रिणां पतिं अग्ने हंसि न्या अत्रिणमित्यादावन्तोदात्तस्य निर्विवादत्वात् अन्यथा न शुभार
न्स्यादिति सूत्रे अदेस्त्रिन्निश्चेत्येव वक्तव्ये यत्नेन टोप्याहेति दिक् पतेः पत्लृ गतौ पतत्रिरिति पक्षवाचकान्यनेन शब्दान्यन्यत्रैव इति तु नान्तः पतत्री पतत्रिणौ पतत्रिण इत्यादि

सि॰ कौ॰
टी॰ त॰
७१८

मृकालि मृकु धातोल्त्याग॰ कलशब्दार्थः मरीचिः कृपणो दीप्तौ ऋषिभेदे च दृश्यते इति विश्वः मरीचिर्मुनिभेदे नागभेदे च वनपुंसकमिति मेदिनी॰ कलीचिः पुष्पितलता याम॰ वयोः शकटे स्त्रियामिति च श्रूयते॰ टुओश्वि गतिवृद्ध्योः असादीवि मध्यपक्षिश्व स्यात् वेनः वेनृ तन्तुसन्तानेः स्यादीवीर्ड् स्यात्॰ वीचिः स्वल्पे तरङ्गे स्याद्वकाशे सु खेदृयोरिति विश्वमेदिन्यौ॰ ऋहनि ऋगतौ हन् हिंसागत्योः कृपणः किन्त्वा दुलमाकः पुरुषः पुरुषे सांख्यतत्त्वे च पुन्नागपादपे इति विश्वमेदिन्यौ पृ नहि पृपालनपूर णयोः लाहवन्धने कलशब्दसंख्यानयोः परुषं कर्बुरे रुक्षे निष्ठुरोक्तौ च वाच्यवदिति मेदिनी नहुषो राजविशेषे नागभिद्यपीति हेमचन्द्रः उपचश्चिन्त्यानहुषश ब्दस्यान्तोदात्तत्वे प्रामे ग्रामादित्वाद् पादित्वाद् आयुदात्तत्वमित्याहुः एतच्च देवाअकृ एवं नहुषस्य विश्वमिति मन्त्रस्य भाष्ये स्पष्टम्॰ कलुषं त्वाविले नसोरिति विश्वः

मृकालिभ्यामीचिः मरीचिः। कलीचिः। पल्लवीनिनादश्च श्रूयते श्विन्॥ श्वयीचिर्व्याधिः वेत्रो डिच्च॥ वीचिस्तरङ्गः। नञ्समासे अवीचिर्नर कभेदः॥ ऋहनिभ्यामूषन्। अहरुषः सूर्य्यः। हनूषो राक्षसः। पुरः कुषन्। पुर अग्रगमने। पुरुषः। अन्येषामपीति दीर्घः। पूरुषः पृ नहि कलिभ्य उषन्। परुषम्। नहुषः। कलुषम्। पीयरूषन्॥ पीयइति सौत्रो धातुः। पीयूषम्। बाहुलकाद् गुणः। पेयूषोभिनवपयः। मसजेर्नुम् चोपधाया गडेश्च॥ गण्डूषः। गण्डूषा। अर्त्तेररुः॥ अररुः शत्रुः। अररुः। अररवः॥ ॥ ८ पीयेः पीयूष ममृतं सुधेत्यमरः पीयूषं समदिवसावधिक्षीरेत थामृते इति मेदिनी॰ अमरोक्तिमाह पेयूषरत्नादि मन्त्रेः दुमस्जोशुद्धौ॰ असादृक्ष्यस्यानुमागमश्च धातोः मिदचोन्त्यात्परः सस्य श्चुत्वेन शस्य जश्त्वेन जस्य मरोक शैतिवालोपः लोपाभावपक्षे जकारद्वयम्॰ मज्जूषाका ष्ठमयं द्रव्यम् पेटक इति यावत्॰ पिटकं पेटकं पेटीमञ्जूषेत्यमरः गण्डेः गडिवदनैकदेशे गण्डूषो मुखपूर णः अर्त्तेः ऋगतौ उकारान्तोः यंप्रत्ययो न तु सं कारान्त इति स्फोरयति॰ अररुः अररवः इत्यनेन नन्वो कारान्तत्वे विवदितव्यम्॰ कश्चिद्यावि ररुं शूरमर्त्यम्॰ आपारुरमदे वयजनो जहीत्यादिमन्त्रेषु तथा दर्शनात्॰ अत्र व्याचष्टे तेमान ष्टः सार रुषइ विमन्त्रस्य भाष्ये सान्तोयमिति माधवेनोक्तम्॰ यत्तस्यौढि वादमात्रं न तु वास्तवम्॰ अररुष इतिपदस्य आद्युदात्तत्वानुपपत्तिप्रसङ्गात्॰ तस्माद्वातेः लिटः कसुश्चेति कसो ररिवानित्यनेन नञ्समासे उ स्याररुष इति व्याख्येयम्॰ ततश्च तत्पुरुषे तुल्यार्थत्यादि

नापूर्वपदप्रकृतिस्वरेणान्तोदात्तत्वं सिध्यति। गुरुडे बोः र इत्येव घनीत्यत्र स्वयमेव ग्रन्तेः कृसृजन्सृजन्त्र समास इत्यादिव्याख्यानात्। यो नो अग्ने — अरिर्वाञ्
चायुरित्यादिमन्त्रान्तरसम्भवाच्चेति॥ ॥ कुटः। कुट कौटिल्ये। स्मार इति स्यात्सच किच्च। चिन्त्यमिति। गाङ्कुटादिभ्य इति ङित्वेनैव गुणाभावसिद्धेरिति
भावः। शकि गत्यर्थ इति। शक्नोति शक्नोति वा तस्मादटन्नित्येके लृवेनं शकटोऽस्त्री स्यादित्यमरः। देवट इति। देवृ देवने। करट इति। डुकृञ् करणे। कृ विक्षेपे इत्यस्मा
द्वा अटन्। ब्रुके भगण्डो करटौ इत्यमरः। वरटा गजगण्डे स्यात् कुसुम्भे निष्यजीविनि। एकादशाहादिश्राद्धे दुर्दुरूढे पि वायसे इति मेदिनी। कृकदि। डुकृञ् करणे
कटे वर्षावरणयोः। करम्बो मिश्रिते वा ना भानलु दधिसक्तुषु इति विश्वः। करम्बं निकुरम्बे स्यात् नीपसर्षपयोः पुमानिति च। कलिः। कल संख्याने। कर्द कुत्सिते

कुटः किच्च॥ कुटरुर्वस्त्रगृहं। किल प्रयोजनश्चिन्त्यम्॥ शकादिभ्योऽटन्॥ शकटोऽस्त्रियाम्। ककिर्गत्यर्थः। कङ्कटः सन्नाहः। देवटः शिल्पी
करटः इत्यादि। कृकदिकडिकटिभ्योऽम्बच्॥ करम्बं व्यामिश्रम्। कदिकडी सौत्रौ। कदम्बो वृक्षभेदः। कडम्बोऽग्रभागः। कटम्बो वादित्रम्॥
कदेर्णित्त्वं चास्थिरिणि॥ कादम्बः कलहंसः। कलिकर्द्योरमः। कलमः। कर्दमः। कुणिपुल्योः किन्दच्॥ कुणिः शब्दोपकरणयोः। कुलिन्दः। पु।
न्दः। पुलिन्दो जातिविशेषः। कुपेर्वा वश्च॥ कुपिन्दः कुविन्दो तन्तुवाये। नौ षञ्जेर्घथिन्॥ निषङ्गथिः आलिङ्गकः। उदि ग्रथेः श्चितः॥ उद्रथिः
समुद्रः। सर्तेर्णिच्च॥ सारथिः॥ खर्जिपिञ्जादिभ्य ऊरोलचौ॥ खर्जूरः। कर्पूरः। वल्लूरं शुष्कमांसम्। पिञ्जूलं कुशवर्तिः॥ ॥

शब्दे। कलमः पुंसि लेखिन्यां शालौ पाटच्चरेऽपि च इति मेदिनी। कणिपुल्योः। पुल महत्वे। कुपेः। कुप क्रोधे। स्मात्किन्दच् स्यान्तवकारश्चान्तादेशो विकल्पेन। तन्तुवायः कुवि
न्दः स्यादित्यमरः। वाहुलकात् स्वल्पभूषणादौ। अलिन्दः। यस्मामलिन्देषु न चक्कुरेवमुग्धाङ्गनागोमयगोमुखानीति माघः। नौ षञ्ज सङ्गे निपूर्वादस्मात्। घथिन् स्यात्। उपस
र्गे ... णत्वम्। चजोरिति कुत्वम्। आमुरस्य निषङ्गथिः रथकूवर इत्यर्थः। उदि। ग्रन्थ गतावुत्पूर्वादस्मात्। घथिन् स्मात् सच चित्। सर्तेः सृ गतावस्मात् घथिन् णिच्च स्या
त्। नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिरित्यमरः। खर्जि। खर्ज मार्जने पिञ्ज हिंसायाम्। खर्जादिभ्यः पिञ्जादिभ्यश्च यथाक्रमं ऊर ऊलचौ स्तः। खर्जूरं रूप्यफलयोः खर्जूरः

॥१४४२५४॥

सि·को· किटइरूसयोरिति मेदिनी हेमचन्द्रौ· कूपस्तामर्थ्ये वाहुलकात्कपोरोलइति लत्वाभावः अथ कर्पूरमस्त्रियाम्· घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुकेइत्यमरः· वस्त्र
टी·न· सम्वरणे· वल्लूरमत्रत्र संशुष्कमांसस्यात् वल्लूरं तु त्रिलिङ्गकमित्यमरः· एवं शालूरादयोऽप्युद्दिष्टाः मेके मण्डूकवर्षाभू शालूरप्लवदर्दुराइत्यमरः॥ ॥ लङ्गूलम्लिं
७६ गन्यर्कलाङ्गूलं पुच्छशेफसोरिति मेदिनी· कुसूलइति कुस संश्लेषणे वृलो दन्त्यसकारवान्· कुसूलं च कुसीदं च मध्यदन्त्यमुदाहृतमिति विश्वः· नाम्बूलादयोऽप्यत्रदृष्ट
व्याः तमुम्लंगौ त्वगद्दीर्घलम्बा· नाम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकमिति मेदिनी· शृहिंसायां धातोरौणादिकइद्दिर्गागमश्च· शार्दूलो राक्षसान्तरे व्याघ्रे च पशुभेदे च सत्
त्तमे नूत्तरस्थितइति मेदिनी· विश्वप्रकाशो· उत्तरस्थितः उत्तरपदभूतः शार्दूलशब्दस्तु श्रेष्ठवाची राजशार्दूल इति यथा· इमौ तौ कुङ्कशब्दे अनयोः कुकं च दुकूलं
सूक्ष्मवस्त्रे स्यात् क्षौमे चेति मेदिनी· कुकूलं शङ्कुसंकीर्णे श्वभ्रे ना तु तुषानले इति विश्वमेदिन्यौ· शिरोवाद्यपि मृद्दङ्गादिके पेलायतलोचना· अयं च कुकूले

लङ्गूरिह्मिश्च॥ लांगूलं कुसूलः। कुवश्चाद्दीर्घश्च। कूचीचित्रलेखनिका। समीरणः॥ समीचः समुद्रः। समीची हरिणी॥ सिवेष्टेरू च॥ सूचो दर्भाङ्कु
रः। सूची शमेर्वन। शम्बो मुसलम्। उल्वादयश्च॥ वन्नन्तानि पात्यन्ते। उच समवाये। वत्सलत्वं। गुणभावश्च। उल्वः गर्भाशयः। शुल्वं ताम्रं॥
विल्वम्। स्थलः। स्तवकौ॥ निष्टेरश्च अवकरनौ समस्तादेशश्च। स्तम्बः गुच्छस्तृणादिनः। स्तवकः पुष्पगुच्छः॥ ९ पिकर्कशोमदनानलइति

प्रयोगश्च· कुचः कु शब्दे कुचः स्तनः कुचकूचौ स्तनौ भत्ताविति विश्वः कूचीति टित्वाद् ङीप्· समीरणः इण गतौ अस्मात्सम्युपपदे च इस्याद्दीर्घश्च धातोः सिवेः षिवुत
न्तुसन्ताने स्माद्रप्रत्ययः स्याद्देहलत्वं टित्वाद् ङीप्· सूची तु सीवनद्रव्ये प्याङ्गि कामिन्याय्यानरेइति मेदिनी· शमेः शमउपशमे शम्बः स्यान्मुसलाग्रस्थलोहमण्ड
लेकेपवौ शुभान्विते त्रिष्विति विश्वमेदिन्यौ· उल्वमिति गर्भाशये जरायुः स्यादुल्वं तु कललेऽस्त्रियामित्यमरः· शुच शोके च स्तलत्वं गुणाभावश्च प्राग्वत् शुल्वं
ताम्रे यज्ञकर्मण्यपाचारे जलसन्निधाविति मेदिनी हेमचन्द्रौ· वी गतिप्रजनकान्त्यसनखादनेषु· अस्य नुमागमो ह्रस्वत्वं च· ववयोरभेदाद्विल्वम्· विल्वस्तु प्रतिवि
ष्किस्त्राम्रण्डले पुंन्नपुंसकम्· विंविकायाः फले क्लीबं हतकलासे पुनः पुमानिति मेदिनी· स्थलः ष्ठा गतिनिवृत्तौ स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि चेति

टी· री· न ७०

ट्षइति शकः कित्वान्नगुणः मत्स्यइति स्यप्रत्ययेचवर्णेनदस्यतः अन्तोदात्तोयम् अतन्यज्ञोतिसूत्रेतु आद्युदात्तः साधितः षंडइति वाहुलकाड्डत्वादेः षस्यसकारेण प्रत्ययादेर्टस्यानुप्रयोजनाभावान्नेत्संज्ञाप्रमेहइतिसूत्रेतुनालव्याद्दिस्साधितः सायंसायोमवेत्कोशः कोषंषंढश्चषंढवदितिद्विरूपकोशः षंढोवर्षवरइत्यमरः नटीनल्योषधीस्त्रीस्याच्छैलूषाशाकयोः पुमानितिमेदिनी नटइति नमते ईट् भरटइति विभर्त्तेरटच अन्येभ्योपि इत्वन्नादयोऽनुक्तन्तेपत्वमिति पापानेऽस्मादिल्वन् भृशामिति भृशः शकु कुसेः कुसश्लेषणेऽस्मादुम्भउमईदइतएतेप्रत्ययाः स्युः कुसुंभम् हेमनिमहारजनेनाकमंडलाविति मेदिनी कुसुमंस्त्रीरजोनेत्ररोगयोः फलपुष्पयोरितिच कुसीदंजीवनेद्रव्याप्तौवंत्रिषुकुसीदकेइतिच इहसूत्रेततीयोह्रस्वादिर्दीर्घादिश्चतन्त्रेणोक्तः वृषाकप्यग्नीतिसूत्रेह्रस्वादिरेव।

ट्शः आर्द्रकंमूलकञ्च मत्स्यः षण्ढः डित्वाट्टिलोपः नमतीतिनटः शैलूषः विभर्त्तिभरटः कुलालोभृतकश्च अन्येभ्योपिदृश्यन्ते पत्वमम् तुम्भशाम् कुसेरुम्भोमेदेताः कुसुम्भम् कुसुमम् कुसीदम् कुसितोजनपदः सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः सनोतेरसिप्रत्ययउपधावृद्धिः सानसिर्हिरण्यम् वृञोनुक् वर्णसिर्जलम् पृ पर्णसिर्जलगृहम् तडआघाते तण्डुलाः अकिलक्षणे उशच् अङ्कुशः चषेरालच् चषालोयूपकटकः इल्वलोदैत्यभेदः पल्वलम् ञिधृषा संस्कारस्यइकारः धिष्ण्यम्।

निष्टतिकारहरदत्तादिग्रन्थोपष्टम्भेननिर्णीतम् पारलौकिकंकुसीदमसौदितिश्रीहर्षप्रयोगात्तुदीर्घादिरित्यपि सानसि सनोतेरिति षणुदाने वृञोनुक्चेति वृञ्वरणेऽस्मादसिः दशपाद्यान्तुसानसिर्धर्णसीतिपठित्वा धृञोनुक्चधर्णसिर्लोकपालइतिव्याख्यातम् युक्तञ्चैतत् धर्णसिंभूरिधायसमित्यादिमन्त्रानुगुणत्वात् पर्णसिरिति पृपालनपूरणयोरस्मादसिप्रत्ययोनुक्च तण्डुलोइति उलच्प्रत्ययोनुमागमश्चधातोः त्रेधातण्डुलान्विभजेत् इहचित्स्वरः तण्डुलः स्याद्विहङ्गेचधान्यादिनि। करेपुमानितिमेदिनी अङ्कुशइति अयमपिचित्स्वरेणान्तोदात्तः तथाचमन्त्रः दीर्घंह्यङ्कुशंयथेति अङ्कुशोऽस्त्रीसृणिःस्त्रियामित्यमरः चषालइति चषभक्षणेप्रत्ययस्वरेणाद्युदात्तः उज्ज्वलदत्तस्तुआलजितिचितमाह तन्न चषालयेअश्वयूपायप्रतक्षतिचषालवन्तः स्वरवः पृथिव्यामित्यादौचित्स्वरादर्शनात् अमरोक्तिमाह चषालइ

रामः ७७

सि॰कौ॰ टी॰न॰ ७८

यमनिषिधाधीत्क कारादुकारस्येत्वं नेतितत्रैव हरदत्तः एवं स्थितेऽभ्यादयो यगन्ताद्वृतिप्राप्तो वादः ॥ ॥ लामदि· ष्मा शौचे· मदी हर्षे· पद गतौ· ऋ गतौ· पृ पालनपूरण
योः शक्र शक्तौ· अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्ग· कदुतिमेदिनी· पर्व स्त्रीवं स्यहे यन्थे प्रस्तावे लक्षणान्तरे दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपीति च ङीप्राविति·
वनोर चेत्यनेन· अङ्गु लिरिति· एतद्यारोहतंदश तशक्करीमिमेत्यादिमन्त्रव्याख्यायांस्पष्टम्· शक्करीछन्दसो भेदे नदीमेखलयोरपीति मेदिनी शीङ्· स्वप्ने कुश्
आह्वाने रोदने च· रुह बीजजन्मनि प्रादुर्भावे च· जिजये· षिञ्बन्धने· सृगतौ· धृञ् धारणे आप्लृ व्याप्तौ· ध्यै चिन्तायाम्· पेङ्· हृद्वाभ्यां कनिप्यात्संप्रसारणं च धा
तोः· हलङ् इति दीर्घः· अदेः अदभक्षणे· स्मात्कनिप् धकारश्चान्तादेशः· अध्वा मार्गः मईरः ईरगतौ· शद्रु शातने· आभ्यां प्रपूर्वाभ्यां कनिप्यात्तस्य तुडागमश्च प्रे

लामदि पद्यर्तिपृशक्तिभ्यो वनिप् लावा रसिकः मद्वा शिवः पद्वा पन्थाः अर्वा तुरङ्गगर्ह्ययोः पर्वा ग्रन्थिः स्नावेश्च शक्वा हस्ती ङीप्रौ
शक्करी अङ्गुलिः शीङ्कृशिरुहिजिक्षिसृधृञ्भ्यः क्वनिप् शीवा अजगरः कृश्वा सृगालः रुह्वा वृक्षः जित्वा जेता क्षित्वा वायुः सृत्वा प्रजा
पतिः धृत्वा विष्णुः ध्याप्योः संप्रसारणञ्च धीवा कर्मकरः पीवा स्थूलः अदेर्ध च अध्वा प्रईरशदोस्तुट् च प्रेत्वा प्रशत्वा च सागरः प्रेत्वरी
प्रशत्वरी च नदी सर्वधातुभ्य इन् पचिः पक्तिः तुडिः तुण्डिः वलिः वटिः यजिः देवयजिः काशतृ इति काशिः यतिः मल्लिः मल्ली केलिः म
सी परिणामे मसिः बाहुलकान्तुणः कोटिः हेलिः बोधिः नन्दिः कलिः ॥ त्वरा इति स्त्रियां वनोर चेति ङीप्रौ सर्वधातुभ्य इन्· डुपचष् पाके· तुडितोडने
तोडने दारणे हिंसनश्च वल संवरणे· वट वेष्टने यज देवपूजादौ काशृ दीप्तौ· यती प्रयत्ने· यतिः स्त्री पाठविच्छेदे निकारयति नौः
भूमानिति मेदिनी मल मल्ल धारणे केलृ चलने भ्वादिः केला विलासे कण्ड्वादिः किल श्वैत्यक्रीडनयोस्तुदादिः कुट कौटिल्ये हिल भावकरणे बुध अवगमने टुनदि स
मृद्धौ कल शब्दसंख्यानयोः गाङ्कुटादिभ्य इति ङित्वाद्गुणाभावमाशङ्क्याह· बाहुलकादिति· कोटिः स्त्री धनुषोयेऽ श्री संख्याभेदप्रकर्षयोरिति मेदिनी· बोधिः पुं
सि समाधेश्च भेदे पिप्पलपादपे इति च नन्दिः पुंनाङ्ग आनन्देऽस्त्रीनन्दिकेश्वरे पुमानिति च· इह इन्नित्येव सूत्रं सर्वधातुभ्य इति तु प्रक्षिप्तं व्यर्थं च· एवं सर्वधातु
॥

सि· कौ मनेः मनत्वानेः स्मादिन्स्यात्सच्चवित् अकारस्योकारादेशश्च स्यात्· मन्यते जानातीति मुनिः मुनिः पुमान् वसिष्ठादौ वङ्गसेन नरौ जिने इति मेदिनी· वर्तेः असमादिन्स्यात्स
टी· तं च किम्· वसि वस निवासे डुवपृ बीजसन्ताने· यज देवपूजादौ· राजृ दीप्तौ· व्रज गतौ· षद्लृ विशरणादौ· हन हिंसागत्योः वाशृ शब्दे· वद व्यक्तायां वाचि एभ्यः ण्यन्तः हन्त्रवृ र लो
७८ ण्यन्तः वासिरिति· दन्त्यसकारवान् सूत्रेष्टमसुनालव्यशकारवान् वास्यादीनामिव करणानां कर्तृत्वापायत्वनियमादिति विशेषिकाः वास्यर्थमित्यत्र स्वो(?)रिति सलो
पः प्राप्नोतीति भाष्यं वापिः उदकधारः वापी प्रसिद्धा राजिः स्त्री पङ्क्तिरेखयोरिति मेदिनी· इह वादीति ण्यन्तनिर्देशोपि बाहुलकाद्ण्यन्तादपि इञ्· तथा च भूवादिसूत्रे
वदन्तीति वादयो वाचका इति न्यासकारादयः वारिः स्मृता सरस्वत्यां वारि ह्रीबेरनीरयोः वारी घटीभबन्धन्योरिति विश्वः हन्तेर्हरलोऽस्मादिञ् हारिः पथिकसन्तो

मनेरुच्च॥ मुनिः। वर्तेर्वलिश्चाहिरण्ये॥ वर्तिः सौत्रः। अस्य वलिरादेशः। करोपहारयोः पुंसि वलिः प्राण्यङ्गे तु स्त्रियाम्। हिरण्ये तु। वर्तिः
सुवर्णं। वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्॥ वासिः छेदनवस्तुनि। वापिः वापी। याजिर्यष्टा। राजिः राजी। व्राजिर्वातालिः। सा
दिः सारथिः। निघातिर्लोहघातिनी। वाशिरग्निः। वादिर्विद्वान्। वारिर्गजबन्धनी। जले तु क्लीबम्। बाहुलकाद्धारिः पथिकसंहतौ। नहो भश्च॥ नाभिः
स्यान्नाभिः क्षत्रिये पुंसि प्राण्यङ्गे तु स्त्रियां पुंस्यपीति केचित्। कृषेर्वृद्धिश्छन्दसि॥ कार्षिः। शः शाकुनौ। शारिः। शारिका। कृञ उदीचां कारुषु॥ कारिः शि
ल्पी। जनिघसिभ्यामिण्॥

नचूडादिभङ्गयोः स्त्रियामिति मेदिनी· नहः णह बन्धने स्मादिञ्स्यात् भश्चान्तादेशः स्त्रियामिति लिङ्गानुशासने स्त्रिया
मित्यधिकारे नाभिरक्षत्रिये इति सूत्रितत्वादिति भावः पुंस्यपीति· तथा च मेदिनी· नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् द्वयोः प्राणिप्रतीके स्यात् स्त्रियां क
स्तूरिकामदे इति· भारविश्च पुंसि प्रायुंक्त सममुच्छ्वसत्पङ्कजकोशकोमलैः पाहितश्रीरुपनीविनाभिभिरिति· कृषेः कृष विलेखने स्मादिञ् वृद्धिश्च· इको गुणवृ
द्धिरित्येकः स्थाने एव वृद्धिरित्युदाहरति कार्षिरिति· भाष्यायां तु कृषिरित्येव· श्रः शॄ हिंसायाम् अस्माच्छकुनौ वाच्ये इञ्स्यात्· शारिर्नाम्नोपकरणे स्त्रियां शकुलि
कान्तरे युद्धार्थगजपर्याणे व्यवहारान्तरे पिचेति मेदिनी· कपिलकादित्वाल्लत्वम्· शालिस्तु कलमादौ च गन्धमार्जारके पुमानिति मेदिनी· कृञः करोतेरिञ्स्या

दुरीवाम्यतेवारुणुवाच्येपुकारिस्त्रियांक्रियावांस्याद्वाच्यलिङ्ग· सुशिल्पिनीतिमेदिनी· ॥ ॐ ॥ जनि जनी प्री दुर्भावे घस्लृ अदने आभ्यामिण् जनिवध्योश्चेति इणि
वृद्धिप्रतिषेधः जनिरिति स्त्रीलिङ्गम् कृदिकारादक्तिन इति पक्षे ङीष्· जनी सीमन्तिनीवध्वोरुत्पत्तौ चौषधीभिदीतिमेदिनी· अजि· अ जगतिक्षेपणयोः अतसातत्यग
मने· बाहुलकादजेर्वीभावो न· पारे च पारे चोपपदे अज्यतिभ्यामिण् पारस्य पराज्यतिगोपहते पतिपदादेशः· पराजिः पारञ्चारी पदातिपत्तिपदगपदा
तिकपदाजयः पद्गश्च पदिकश्चेत्यमरः अशिपणाय्योः अशिश्च पणायिश्च· अशिपणायी तयोरिति विग्रहः अशू व्याप्तौ· पण व्यवहारे आयप्रत्यया
न्तः आभ्यामिण् स्यादनयोर्यथाक्रमं रुडायप्रत्ययलुकौ च भवतः राशिर्मेषादिपुञ्जयोरिति मेदिनी· वा गतिगन्धनयोरस्मादिण् स्यात्· डित्वाट्टिलो

जनिर्जननं। घासिर्भक्ष्यमग्निश्च। अज्यतिभ्यां च॥ आजिः संग्रामः। आतिः पक्षी। पारे च॥ पराजिः। पदातिः। अशिपणाय्यो रुडायलुकौ
च॥ अशेः रुट्। राशिः पुञ्जः। पणायतेरायलुक्। पालिः करः। वातेर्डिच्च॥ विः पक्षी स्त्रियां वीत्यपि। प्रे हरतेः कूपे। प्रहिः कूपः। नौ व्यो यलोपः
पूर्वस्य च दीर्घः। व्येञः स्यात् यलोपश्च नेर्दीर्घः। नीविः। नीवी वस्त्रग्रन्थौ मूलधने च। समाने ख्यः। स चोदात्तः। समानशब्दे उपपदे ख्या
इत्यस्मादिण् स्यात् स च डिच्च यलोपश्च समानस्य तूदात्तः सरूपादेशश्च। समानं ख्यायते जनैरिति सख्युः ९ पः प्रे प्रपूर्वाद्धरतेः कूपे वाच्ये

इण् पुंसि वा स्युः प्रहिः कूप उदपानं तु पुंसि वेत्यमरः नौ व्येञ् संवरणे स्त्री कटीवस्त्रबन्धेपि नीवी परिपणोपि चेत्यमरः परिपणो मूलधनम्· समाने ख्या
प्रकथने इण् स्यादिति· यत्तु ज्वलदन्ते नोक्तमिञ् स्यात्स चोदात्त इति तन्न सन्निहितेन जनिघसिभ्यामिण् इत्यनेनैव पियजित्यादिना विहितस्येञो वि
च्छिन्नत्वात्· यदपि तेनैव नौ व्य इति पूर्वसूत्रे उक्तमिञ्त्रानुवर्तनेनेवाविणः उत्तरसूत्रे उदात्तवचनाज्ज्ञापकादिति· तदपि न स चोदात्त इति हि नायं धा
तोः परत्र विहितं प्रत्ययं निर्दिष्टं तच्छब्दः किन्तु समानशब्दस्य ख्याने विधीयमानमादेशं निर्दिष्टशब्दस्वरूपपरः तथा च कथं ज्ञापकता स्यात्· यदपि
सरत्र उदात्त इति व्याख्याय समानस्य सभाव इति प्रक्रियास्मरणमात्रं कृतं· तदपि न सभावविधायकस्याभावात्· यदपि स्वरमञ्जरीकारादिभिरुक्तं स

सि·कौ·
टी·न·
८०

लोके सखिशब्दस्यासाधुत्वापत्तेः अपि च सखायमब्रवीत्· सखायस्त्वा ववृमहे· सखा सखिभ्य ईड्य इत्यादिमन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवाद
म्· एवञ्च इजुदात्तत्र तूज्ज्वलदत्तादिव्याख्यानं वेदवार्त्तानभिज्ञत्वप्रयुक्तमेवेति दिक्॥ ❁ ॥ आङि च्छिन्नसेवायाम्· हन हिंसागत्योः अमरोक्तिमाह स्त्रि
यामिति एवञ्च सुप्यातिसृभ्यश्चेति सूत्रे चतुरश्चेति तालव्यपाठः संगच्छत एव तत्सूत्रे केषाञ्चिद्दन्त्यपाठस्तु एतत्सूत्रपर्यालोचनामूलक एवेत्यवधेयम् नन्वेवं च
तुरस्त्रमिति दन्त्यप्रयोगस्य कथं निर्वाह इति चेदत्राहुः अकारान्तेन दन्त्यगर्भेणास्त्रशब्देन विग्रहे तत्प्रयोगः साधीयान्· वचनादेशशब्दे विप्रतिपत्तव्यम्·
अस्त्रः कोणे क्लीबे पुंसि क्लीबमश्रु णि शोणिते इति मेदिनी कोशादिति· अहिर्वृत्रासुरे सर्पे इति मेदिनी· अचरः अजेर्नाड्डा तो रिः स्यात्· रुशब्दे पूर्वपद
ने· पविर्वज्रम्· वृक्षवनतरणयोः तरिर्वस्त्रादिस्थापनभाण्डम्· स्त्रियां नौस्तरालिस्तरिरित्यमरः कुशब्दे कविर्वाल्मीकि शुक्रयोः सूरौ काव्यकर्तरि बुधे

आङि श्रिहनिभ्यां ह्रस्वश्च॥ इणस्त्यात्स्वड्ति। आङोह्रस्वश्च। स्त्रियः पाल्यश्रिकोटयः। सर्पे वृत्रासुरेप्यहिः। अचरः॥ रविः। पविः न
रिः कविः। अरिः। अलिः। खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च॥ खनिः। कषिर्हिंसकः। अजिः। असिः। वसिर्वस्त्रं। वनि
रग्निः। सनिर्भक्तिर्दानं च। ध्वनिः। ग्रन्थिः। चलिः पशुः। वृते श्छन्दसि॥ वर्तिः। भुजेः किच्च। भुजिः॥ १ स्याद्वलीनेतुर्योषितीतिमेदिनी·

ऋगतौ अरिः शत्रुः कपिलकादित्वाद्वैकल्पिकत्वं अलिर्भ्रमरः खनिः खनु अवदारणे· कष खष इति दण्डकः हिंसार्थकः· अज गतिक्षेपणयोः असु क्षेपणे
वस आच्छादने· वन षण सम्भक्तौ वनु याचने· षणु दाने· ध्वन शब्दे· ग्रन्थ बन्धने उभौ चुरादी· चल कम्पने· रम्भरः स्यात्· खनिः स्त्रियामाकरः स्यादि
त्यमरः एयन्तादप्यच इरिति पक्षे खानिरपि खनिरेवमताखानिरिति हि रूपकोशः ग्रन्थिस्तु ग्रन्थिपर्णीनावन्धेरुग्भेदपर्वणोरितिमेदिनी· ग्रन्थिर्ना
पर्वपरुषी इत्यमरः वनी रग्निरिति· वनु याचने इत्यस्मादि प्रत्यये वनिर्याचा इत्याहुः चलिः पशुरिति चरिभ्यश्चेति पाठान्तरम्· चर गतौ चरतिर्भक्षणेपि च
रिः पशुः वृत्तेः वृतु वर्तने अस्मादिः स्यात्· बाहुलकाल्लोकेपि साज्यं त्रिवर्त्ति संयुक्तमिति प्रयोगः वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः गात्रानुलेपनी
दीपदशा दीपे स्त्री योषितीति मेदिनी· भुजेः भुज पालनाभ्यवहारयोरस्मादिः स्यात्स किन्· भुजिरग्निः॥

हृपृ कृविक्षेपे मृ निगरणे शॄ हिंसायाम् पॄ पालनपूरणयोः कुट कौटिल्ये भिदिर् विदारणे छिदिर् द्वैधीकरणे वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटि
रित्यमरः इगुपधज्ञाप्रीकिरः इति कप्रत्यये किर इत्यकारान्तोपि क्वचित्वचः किरोपिस्यात् किरौ प्रोक्तः पथः पथिरितिद्विरूपकोशः गिरिर्नाने त्ररुग्भिदि अद्रौगि
रिजाके पुंसि स्त्रीपुं ज्येषु नसिद्धिपितिमेदिनी कुटिरितिङीपितु कुटी कुटीशमीशुण्डाभ्योरः कुटीरः कुटिः कोटे पुमान स्त्री घटे स्त्रीपुंसयो गेहे कुटास्यात् कुम्भदास्या
ध्वसुरापात्रगुच्छकेइति मेदिनी कुडिङ् कुडिदाहे कपिचलने आभ्यामिः किन्स्याद्वा तो नेलोपश्च कपिर्नासिंहके शाखामृगे च मधुसूदन इति च सर्वा
धातुभ्यः डुकृञ् करणे चर गतौ चरति भर्क्षणेपि जनजनने भस भर्त्सनदीप्त्योः शॄ हिंसायाम् शर्म सुखं ष्ठा गतिनिवृत्तौ छद अपवारणे चुरादिः त्रैङ् पा

हृपृशॄपृकुटिभिदिछिदिभ्यश्च इः कित्स्यात् किरिर्वराहः गिरिर्गोत्राक्षिरोगयोः गिरिणाकाणः गिरिकाणः शिरिः शलभः हन्ता च
पुरिर्नगरं राजा नदी च कुटिः शाला शरीरं च भिदिर्वज्रं छिदिः परशुः कुडिकंप्योर्नेलोपश्च कुडिदाहे कुडिर्देहः कपिः सर्वधातुभ्यो
मनिन् क्रियत इति कर्म चर्म भस्म जन्म शर्म स्थामबलम् इत्स्मन्निति इत्वरः छद्म सुत्रामा इंद्रे नौ च नकारस्याकारः ब्रह्मतत्त्वं
पो वेदो ब्रह्मा विप्रः प्रजापतिः अशिशकिभ्यां छन्दसि अश्मा शक्माहम् भूधृसूस्तृभ्य इमनिच् हरिमा कालः भरिमा कुटुम्बम् धरिमा रूपम्
सरिमा वायुः स्तरिमा तल्पम् शरिमा प्रसवः ॥ ॥ त्रैङ् पालने सुष्ठु त्रायते इति सुत्रामा इन्द्रः कर्मण्याप्यक्रियायां च पुंनपुंसकयोर्मतमिति रुद्रः चर्मच

नौ चफलके इति मेदिनी वृहेः वृहि वृद्धौ अस्मान्मनिन् नुमोनस्याकारः अकारस्य यणादेशः ब्रह्मतत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि ऋत्विग्योगभिदोर्विप्र इति मेदि
नी अशिश् अभूव्याप्तौ संघाते च शक्लृ शक्तौ शक्मा इन्द्रः छन्दसीत्यस्य शकिना सम्बन्धो न त्वशिना अत एवाश्मानमारोपयतः स्मरारेरिति प्रयोगः हृभृ हृञ् हरणे डु
भृञ् धारणपोषणयोः धृञ् धारणे सृगतौ स्तृञ् आच्छादने शॄ हिंसायाम् शरिमेति एतच्चोज्ज्वलदत्तरीत्योक्तम् दशपाद्यान्तु स्मरणातिर्नपठ्यते तत्स्थाने स्तृधातुं प्र
क्षिप्य प्रत्ययस्य दीर्घो दिनितं च कृत्वा स्तृञ् स्यामीमनित्यच्यते छन्दोग्रहणस्यानुवर्तितम् युक्तश्चैतत् पिएतान्नोभरीमभिः वातस्य सर्गो भवत्सरोमणिस्तीर्णवर्हि

स्वामतेः स्यैश्यैशब्दसंघातयोः स्त्रीति डित्वाट्टिलोपः लोपोव्योरिति यलोपः टित्वान्ङीप् स्त्री योषिदबला योषा नारी सीमन्तिनी वधूरित्यमरः गुध् गुड् सव्यक्ते
शब्दे धृञ् धारणे चोगति प्रवनादो डुपचष् पाके वच परिभाषणे यमउपरमे षद्लृ विशरणगत्यादौ हसदद्भ निसोत्रः गोत्रा भूगव्ययोर्गोत्रः गोत्रं शैलकुला
ख्ययोः सम्भावनीयबोधे च काननक्षेत्रवर्त्मसु इति मेदिनी सत्रमाच्छादने यज्ञे सदादानेवनेपि चेत्यमरः सत्रं यज्ञ सदादान च्छादनारण्यकैतवेषु इति मेदिनी छत्रं
ब्राह्मणानन्तरं जातिः हु या मा हु दानादनयोः या प्रापणे माम्माने श्रु श्रवणे भस भर्त्सने दीप्तयोः होत्रा शब्दः स्त्रियामपि स्त्रीलिङ्ग इति होत्राम्भ ह इति सत्रे हर रत्ना
दयः यात्रा तु यापने पि स्यात् गमने उत्सवयोः स्त्रियामिति मेदिनी मात्रा कर्णविभूषायां वित्ते माने परिच्छदे अक्षरावयवे स्वल्पे मात्रं कार्त्स्न्येऽवधारणे इति च

स्यायेतेऽपि च स्त्री गुर्वी पचिवचियमिसदिक्षदिभ्यस्त्रः गोत्रं स्यान्नामवंशयोः गोत्रा पृथिवी धर्त्रं गृहं वेश्म पत्रं वक्त्रं यन्त्रम् सत्रं
छत्रं हुयामाश्रुभसिभ्यः त्रन् होत्रं यात्रा मात्रा श्रोत्रं भस्त्रा गमेरा च गात्रं दादिभ्यश्छन्दसि दात्रं पात्रं भूवादिगृभ्यो णित्रन् भावित्रं
वादित्रं गारित्रं मोदने चरेर्वृत्ते चारित्रं अशित्रादिभ्य इत्रोत्रौ अशित्रं वहित्रं धरित्री मही त्रैङ् एवमादिभ्य उत्रः त्रोत्रम् प्रहरणं

कर्णशब्दग्रहो श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः इत्यमरः भस्त्रा चर्मप्रसेविका इति च गमेः गम्लृ गतौ अस्मात् त्रन् स्यात् आत्तोरा कारान्तादेशः ॥ वृञ् वरुत्रं प्रावरणं॥
शब्दमात्रसंगेकलेवरे लवेर् मात्रं जघादि विभागेपि समीरितमिति विश्वः दादिभ्यः दाप् लवने एवमादिभ्यस्तत्रम् दात्रं धान्यादिच्छेदनसाधनम् पापाने योग्यभा
जनयोः पात्रमित्यमरः क्षिनिवासगत्योः क्षेत्रमित्यादि योज्यम् भूवादि सूत्रानां भावित्रं त्रैलोक्यम् वद व्यक्तायां वाचि एयन्त वादित्रं तूर्यादि गृ निगरणे चरेः चरग
तौ भक्षणे वर्तने च वृत्ते वाच्ये वृत्तं पद्ये चारित्रे चेत्यमरः ननु इत्र प्रत्यये चरित्रमित्युक्ते ततश्च प्रज्ञाद्यणि चारित्रमिति सिद्धौ किमनेनेति चेत् मैवम् स्वरे विशेषात्
अशि अशू व्याप्तावेवमादिभ्य इत्रः त्रैङ् पालने एवमादिभ्य उत्रश्च स्यात् वहित्रमिति वह प्रापणे धरित्रीति धृञ् धारणे गौरादित्वात् ङीष् ॥ ६ ॥

अमेः अम गतौ अस्मादित्रः स्यात्स च चित् उत्र इत्युनानुवर्ततेऽस्वरितत्वात् मित्रं नेति विग्रहे त्व मित्रमिति नपुंसकम् आः इण् गतौ अस्मादप्रत्यये गुणे सत्य यादेश
कषेरिति कषस्वेषेति दण्डकः समया निकषा शब्दौ समीपवाचकौ बाहुलकात् दुषेः दोषाँ दिवेरप्रत्यये बाहुलकादेवास्य गुणाभावे दिवाँ स्वदेरप्रत्यये बाहु
लकादेव धातोर्धान्तादेशः अस्य स्वधेत्यादि चितेः चिती संज्ञाने अस्मात्कणप्रत्ययः स्यात्कश्चान्तादेशः अमरोक्तमाह चिक्कणमिति सूचेः सूच — पैशून्ये
चुरादि — रस्मात्मन् णिलोपः कुत्वषत्वे सूक्ष्मं स्यात्कतके ध्यात्मे पुंस्यणौ त्रिषु चाल्पके इति मेदिनी पातेः पा रक्षणेऽस्मात् डुमसुन् स्यात् डित्वाट्टिलोपः
उकार उच्चारणार्थ इत्युज्ज्वलदत्तः वस्तुतस्तूगित्कार्यार्थः सुपुंसी उगितश्चेति ङीप् नकारः स्वरार्थः पुंसोऽसुङिति सूत्रे न्यासरक्षिताभ्यां पुनातेर्मक्सुन् ह्रस्व

अमेर्द्विषति चित् अमित्रः शत्रुः आः समिण्निकषिभ्यां सम्पूर्वादिणः निपूर्वात्कषेश्चा स्यात् स्वरादित्वादव्ययत्वं समया निकषा
चितेः कणः कश्च बाहुलकादगुणः चिक्कणं मसृणं स्निग्धं सूचेः स्मन् सूक्ष्मम् पातेर्डुमसुन् पुमान् रुचिभुजिभ्यां किष्यन् रुचिष्य
मिष्टम् भुजिष्यो दासः वसेस्तिः वस्तिर्नाभेरधो द्वयोः वस्तयः स्युर्दशासूत्रे बाहुलकात् शासः शास्तिः राजदण्डः विंध्यास्त्यामगमस्य
तौ तिः अगस्तिः शकंध्वादिः सावसेः स्वस्तिः स्वरादिपाठादव्ययत्वं वौ तसेः वितस्तिः पदिप्रथिभ्यां णित् पत्तिः प्रथितिः तितुत्रेष्वग्रह

श्चेति परितम् पूनोडुमसुन्निसन्ये भाष्ये तु सूत्रे सप्रत्यये पुमानित्युक्तम् उपेयप्रतिप्रस्यर्थोऽउपाया अव्यवस्थिता इति तत्त्वं रुचि रु। ((दीनामितो द्
चरी प्राप्य भिप्रीतौ च भुज पालनादौ भुजिष्यस्तु स्वतंत्रे ब्रह्म सूत्रकयोः स्त्रियामिति मेदिनी वसेः वस निवासे वस आच्छादने वस्तिर्द्वयोर्निरूढे नाभ्यधोभू
मिदशासु चेति मेदिनी शास इति शासु अनुशिष्टौ अस नीति असु क्षेपणे अगस्तिः कुम्भयोनौ च बङ्गसेन तरौ पुमानिति मेदिनी सावसेः अस भुवि अस्मा
त्सावुपपदे तिः स्यात् बहुलवचनान्न भूभावः वौ तसु उपक्षयेऽस्माद्विपूर्वात्तिः स्यात् अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः इत्यमरः स्त्रीपुंसयोर्वितस्तिः स्या
दिति समरमाला पदि पद गतौ प्रथ प्रख्याने आभ्यां तिः स्यात्स च णित् पत्तिरिति पदातिः प्रथितिरिति प्रख्यातिः तितुत्रेष्विति ग्रहादित्वादिडागमनिषेधो नेति भा

हणातेः इविदारणे। स्मात्तिः स्याद्धातोर्हृस्वत्वञ्चेदतिश्रमपुटे मत्सेवाइतिमेदिनी। क्षात कृविक्षेपे तृप्लवनतरणयोः कृपूसामर्थ्ये। किरीटं मुकुटे नस्त्रीति हेमचन्द्रः। गोमी। कृपीटमुदके नीरेइतिविश्वः दशपाद्यानुक्तात्कृपिकपिभ्य इतिपठित्वाकं पीठइतिचतुर्थमुदाहृतं। रुचिवचि। रुचदीप्तावभिप्रीतौच। वचपरिभाषणे। कुः। अशब्देतारे अथवाकुञ्च कौटिल्याल्पीभावयोः इकःकित्वात्सूत्रेनलोपेनानिर्देशः कुटकौटिल्ये। उचितमिति। वचिस्वपीत्यादिनासंप्रसारणम्। कुटिकुषि।। कुङ्मलोमुकुलेपुंसिनद्ययोर्नरकान्तरेइतिमेदिनी। कुषनिष्कर्षे कुष्मलंछादनं विकसितमित्यन्ये। सर्वधातुभ्योसुन्। दशपाद्यानु। असुन्नित्येवसूत्रम्। चितीसंज्ञाने। चितसञ्चेतने। चुरादिः सृगतौ गौरादित्वान्ङीष्। सरसीतुमहासरः इतिशब्दार्णवः महान्तिसरांसिसरस्यइति। भाष्यम्। पयगतौ। पीङ्पाने पयः स्यात्क्षीरनीरयोरितिमेदिनी। षद्लृविशरणादौ सदः सभा वर्च दीप्तौ। वर्चोनपुंसकं रूपे विष्ठायामपितेजसि। पुंसिचन्द्रस्यतनयेइतिमेदिनी। रुदिर् अश्रुविमोचने। रोदश्च

हणातेर्ह्रस्वश्चेतिः क्षतकृषिभ्यःकीटन् किरीटं तिरीटं सुवर्णं शिरोवेष्टनं कृपीटं कुक्षिवारिणोः रुचिवचिकुञ्चिकुटिभ्यः कितच्।
रुचितं सिद्धं उचितं कुचितं परिमितं कुटितं कुटिलं कुटिकुषिभ्यां क्मलन् कुड्मलम् कुष्मलम् कुषेर्लश्च कुल्मलम्पापम् सर्व।
धातुभ्योऽसुन् चेतः सरः पयः सदः रपेरत एच्च रेपो वर्चः ॥ (१) रोदसी। चापिदिविभूमौ पृथक्। पृथक्सहप्रयोगेण्नपोः रोदः स्यादपि रोदसीतिविश्वः।।

वेगस्यादिषुंवयः पक्षिणिवाल्यादौयौवनेचनपुंसकमितिमेदिनी। अनप्राणने। अनोभक्तम्। अनोस्मायःसरसांजातिसंज्ञयोरितिटचिनुअदनं। पाकस्थानंमहानसमित्यमरः तमुग्लानौ तमःक्लीवंगुणेशोकेसैंहिकेपान्धकारयोरितिरभसः तमोध्वानेगुणेशोके क्लीवंवानाविधुन्तुदेइतिमेदिनी। षहमर्षणे। सहोबलेज्योतिषिचपुंसिहेमन्तमार्गयोरितिमेदिनी। तपसन्तापे। तपोलोकान्तरेपिच। चान्द्रायणादौधर्मेचपुमान्शिशिरमाघयोरितिच। महपूजायाम्। महउत्सवतेजसोरितिचमेदिनी। नभेः नभहिंसायांभौवादिकः क्रैयादिकश्च नभोन्तरिक्षंगगनमित्यमरः नभन्तुनभसासार्द्धं तपन्तुतपसासह सहञ्च सहसासार्द्धं महञ्चमहसा। सम। सह। तमेनचतमः प्रोक्तंरजेनापिरजः सममितिद्विरूपकोशः नन्वसुन्प्रत्ययेनभः सहस्तमः इत्यादिसान्तशब्दाः सिद्धन्ति ॥ ६ ॥ ८२

१

रूपे· रूपेवाच्येआप्नोतेरसुन्ह्रस्वत्वञ्च धातोः प्रत्ययस्यजुडागमश्चस्यात्· अब्रुइति रुलोजशरुश्चीतियकारस्यवकारः उदके उदकेवाच्येआप्नोतेरसुन्· ह्रस्वस्य अनुमागमो
भश्चान्तादेशः नहेः णहबन्धने ऽस्मादुमनेकाच्ये ऽसुन्भश्चान्तादेशःस्यात्· नभोव्योम्निन भोमेघे श्रावणेचपतद्गुहे घ्राणेमृणालसूत्रेचवर्षासुचनभः स्मृतइविश्वः नभः खे
आवर्णेनेभइत्यमरः नभन्तुनभसासार्द्धमितिद्विरूपकोशादकारान्तोपि इणः इणो ऽसुन्स्यादपराधेवाच्येधातोराणादेशश्च· विश्वोक्तिमाह आगइति अमेः अमगसा
दौ अस्मादसुनेहुगागमश्चधातोः स्यात्· अमन्तिगच्छन्त्यनेनाधस्तादित्यंहोदुरितम्· रमेश्च रमेरसुन्स्यात् हुगागमश्चधातोः रंहोवेगः अहिरहिभ्यामसुनासिद्धे
अघिरघिस्याममुनि· अघोरंघइतिमाभूदितिसूत्रद्वयमितिगोवर्द्धनः तथाचस्यान्मध्योषमचतुर्थलमंहसोरंहसस्तथेतिद्विरूपकोशः· एवञ्चदत्तार्घोस्तिइसंघेविंद
धनुघृणाय· शीघ्रेमुघोविघ्नमितिरंघसंघ स्तुरणीनगडुपक्षतयेनित्यपुक्तस्ययस्यस्तोतिप्रीतिप्रसन्नोन्वहमहिमरुचेस्मा ऽवतात्स्यन्दनो वः इत्यत्र अघोरंघइति

रूपेजुटुं अञ्जोरूपं उदकेनुमभौच अम्भः नहेर्दिविभश्च नभः इणआगो+ पराधेच आगः पापापराधयोः अमेर्हुक्क अंहः रमेश्च
रंहः देशे ऽहच रमन्तेस्मिन् रहः अस्यञ्जियुजिभृजिभ्यः कुश्च एभ्योसुन्कवर्गश्चान्तादेशः अङ्कश्चिह्नशरीरयोः अङ्कः पक्षी यो
गः समाधिः भर्गस्तेजः भूरञ्जिभ्याङ्कित् भुवः रजः ॥ ९९ घकारपाठो ऽनुमासरसिकानांप्रामादिक इतिवदान्तोदेशे· देशेवाच्येरमेरसुन्हकारश्चा

न्तादेशःस्यात्· रहस्तत्वेरतेगुह्येइतिमेदिनी· अंचि· अंचुगतिपूजनयोः अञ्जूव्यक्तिम्रक्षणकान्तिगतिषुयुजिरयोगेयुजसमाधौ· भृजीभर्जने अंकः अं
कसीअंकांसि अंगः अङ्गसी· अङ्गांसि· योगः योगसीयोगांसि· भर्गस्तेजइति· हरः स्मरहरोभर्गः इत्यत्र भर्गशब्दोघञन्तः पुंल्लिङ्गइतिबोध्यः उचसंमा
न्याये ऽस्मादसुनिवाहुलकात्कुत्वम्· न्यं कादित्वाद्वा ओकः आश्रयमात्रेपिमन्दिरेपि नपुंसकमितिमेदिनी· भूरंजि· भूसत्तायाम्· रंजरागे आभ्यामसु
न्कित्स्यात्· भुवः अन्तरिक्षम्· षष्ठ्य न्तप्रतिरूपकमव्ययमिदम्· रजोरेणुः रजः क्लीवंगुणान्तरे· आर्तवेचपरागेचरेणुमात्रेपिदृश्यतेइतिमेदिनी· घ
ञर्थेकप्रत्ययेनुअकारान्तोप्ययं· रजोयंरजासार्द्धंस्त्रीपुष्पगुणधूलिष्वितिजयकोशः ॥ ६ ॥

सि॰ कौ॰ थे॰ त॰ ८५

वसेः वस निवासे अस्मादसुन् स्यात् सच णित् णित्वाद्वृद्धिः चन्देः चदि आह्लादने अस्मादसुन् आदेः छकारश्च छन्दः पद्यभेदे पि स्वैराचाराभिलाषयोरिति मेदिनी अकारान्तोऽप्ययम् छन्दो वभिप्रायवशाविति अमरः द्विरूपकोशे पचि डुपचष् पाके वचपरिभाषणे आभ्यामसुन् स्यात्तस्य सुडागमश्च चस्य कुत्वे सस्य षत्वम् पक्षः पक्षसी पक्षांसि पक्षाशालायै पक्षसीइति श्रुतिः पूर्वोत्तरे द्वे पक्षसी इति श्रुतिः पूर्वोत्तरे द्वे पक्षसीइति अनीकाधिकरणे शाबरभाष्यम् माधवस्तु पक्षपरिग्रहइत्यस्मादसुन् इत्याह वहि वह प्रापणे ओहाक् त्यागे डुधाञ् धारणादौ एभ्योऽसुन् स्यात् अत्र पूर्वसूत्रात्सुट मनुवर्तयतामुज्ज्वलदत्तादीनां मतेनोदाहरणमाह वक्षाः हासाः धासाइति प्राञ्चइति सकलवृत्तिकृतः प्रसादकारादयश्च स्यर्थः एतच्चायुक्तम् उक्तोदाहरणानि हि लोके तु न दृश्यन्ते

वसेर्लिङ् वासोवस्त्रं चन्देरादेश्च छः छन्दः पचिवचिभ्यां सुट् पक्षसी तु स्मृतौ पक्षौ वक्षो हृदयं वहिहाधाञ्भ्यश्छन्दसि वक्षाः अनड्वान् हासाश्चन्द्रः धासाः पर्वतइति प्राञ्चः वस्तुतस्तु णिदित्यनुवर्तते न तु सुट् तेन वहेरुपधावृद्धिः इतरयोरातो युगिति युक् श्रोणाधृष्णुसु वाजस ओमाहवं गृणानावस्तोमवाहाः विश्वाविहायाः वाजम्भरोविहायाः देवो नयः पृथिवीं विश्वधायाः अधारयत् पृथिवीम्विश्वधायसं धर्णीसम्भूरिधायसमित्यादि इणआसिः अयाः वह्निः स्वर्गदिपाठादव्ययं मिथुनेऽसिः पूर्ववच्च सर्वम् उपसर्गाविशिष्टो धातुर्मिथुनं नत्रा सनोपवादाः सिः स्वार्थः नञि हन एह च अनेहाः अनेहसौ विधाञो वेध च विदधातीति वेधाः नुवो

वनासम्भवन्तिसूत्रे अस्मिन् छन्दसीत्युक्तत्वात् वेदेतु विपरीतान्येवोदाहरणानि दृश्यन्त इत्याह वस्तुतस्त्विति वेदभाष्यकारादयश्चेहानु १९ धुट् च नोधाः।

कूलादुत्सवधेयम् इणः इण् गतौ अस्मादासिः स्यान्मिथुने सुयशा इति अशेर्वेदने पुरुद्वेत्यादि पूर्ववत् सुपयाः सुरलोता इत्याद्युदाहार्यम् नञि हन्तेर्नञ्युपपदेऽसिः स्यात् धातोरेहादेशश्च ऋदुशनसपुरुदंशइत्यादिनाऽनङ् विधाञः डुधाञ् धारणादौ विपूर्वादस्मादसिः स्याद्वेधादेशश्च सोपसर्गधातोः वेधाः पुंसि ऋषीकेशे बुधे च परमेष्ठिनीति मेदिनी नुवः णु स्तुतौ अस्मादसिः स्यात्तस्य धुडागमश्च नोधा इति सघोभवद्दीर्घापनोधा इति मन्त्रे नोधा ऋषिर्भवतीति

एम॰ ८५

कृ·
सि·कौ· माविचर्चिके त्यमरः शिरोऽर्तिरिति शिरोः पीडा अर्दीहिंसायाम् तितुत्रेति नेट् धात्वर्थनिर्देश इति क्रियानिर्देश इत्यर्थः आसिका शायिकेति असनं शयनमि
टी·न· त्यर्थः॥ इकश्तिपौ धातोर्निर्देशे अनुकरणम् बहुलमित्यनुवृत्तेः क्वचिन्न गुप्तिज्किद्भ्यः सन् भुवो वुक्लुङ्लिटोः पचतिरिति उपसर्गात्सुनोतिसुवतिस्या
८८ ति ध्यायतेः सम्प्रसारणं चेत्यादिनिर्देशाद् इकर्तृवाचिन्यपि सार्वधातुके परे शबादयः एवम्भावकर्मवाचिन्यपि सार्वधातुके क्वचिद्युक् विभाषा लीयतेरिति प्रयुज्यते
विहिलीलीङ्गोर्यकानिर्देशो न तु श्यनेत्युक्तम् यत्तु प्राचा श्तिपः शित्करणसामर्थ्याच्छबादय इत्युक्तम् तन्नापि कृतेर्ग्लायतिरित्यादौ पि वादेशप्रवृत्त्या आत्वनि
वृत्त्या च शित्वस्य चरितार्थत्वात्॥ ॥वर्णादिति वर्णानुकरणादित्यर्थः न तु वर्णादुच्चार्यमाणादिति तथाहि सत्यकार इत्यादावेव स्यान्न तु ककार इत्यादौ
अत्र हि संघातस्योच्चारणात् अनुकार्येत्विह वर्णमात्रं अकारस्योच्चारणार्थत्वात् कथं तर्हि संमुच्चयार्थश्चकारः एवकारोऽन्यनिवृत्त्यर्थ इत्यादि प्रयोगा इति चे

वर्णात्कारः॥ निर्देशे इत्येव। अकारः। ककारः। रादिफः॥ रेफः। मत्वर्थाच्छः॥ बहुलेवचनाद्रकारलोपः। मत्वर्थीयः॥ इणजादिभ्यः
॥आजिः। आतिः। इञ्वपादिभ्यः॥ वापिः। वासिः। स्वरभेदः। इक्कृषादिभ्यः॥ कृषिः। गिरिः॥ ११ इत्याहुः क्वचित्संघातादपि भवति उच्चै
स्तरां वा वषट्कार इति सूत्रनिर्देशात् सर्वे च काराः प्रत्याख्यायन्ते भाष्यप्रयोगाद् बहुलवचनाच्चेति इहकारप्रत्ययस्य धातोरविहितत्वेपि धात्वधिकारस्थत्वात्कृ
त्संज्ञा तेन कृदन्तत्वात्प्रातिपदिकत्वम् प्रयोजनाभावान्न ककारस्येत्संज्ञा आर्द्धधातुकत्वाभावादिडागमो न अस्य चाविस्पष्टत्वात् कारप्रत्ययाभावो बाहुल
कादेव रादिफः वा सरूपविधिना कारोऽपि तेन रकारादीनि नामानि शृण्वतामम पार्वतीत्यादिप्रयोगः साधुरेव अकारलोप इति अन्तर्हितपरत्वादभत्वाच्च यस्ये
ति लोपस्याप्राप्तिरिति भावः कृदन्तत्वात्प्रातिपदिकत्वमिह पूर्ववद्बोध्यम् नसो मत्वर्थे इत्यत्र बाहुलकाच्छेन रौषिकान्मतुवर्थीयादित्यत्र तु बाहुलकादेव
मतुवर्थश्च च्छः अन्ये तु नेतत्कृदन्तं मत्वर्थे भव इति विगृह्य गहादित्वाच्छप्रत्यये तद्धितान्तमेवेत्याहुः इणजा धात्वर्थनिर्देशे प्राप्तस्य ण्वुलोऽपवादोऽयम् ए
वमग्रेपि आजिरिति बाहुलकादजेर्वीभावो न॥

कृ०
सि०कौ० शृषत्वविवक्षामाश्रित्य वार्त्तिकमिदमप्रत्याख्यातं माकरोदिति चेत्तर्हि नत्वा माण्यास्यायेणशेषत्वविवक्षैवेत्यस्तु · तथा च घर्ष्टहननमित्यादि तु न प्रसज्यते एवं क्वचित्तु द्वितीया
टी०त० पि दृश्यते · आनन्देशमनेकदुर्गविषमिति दिक् · ॥ ॥ कर्मणि च · कर्तुरिति कर्मणि षष्ठी · उभयप्राप्तौ कर्मणीति नियमाद्येनेति तृतीयात दाह · येन स्पृश्यमानस्य कर्तु
९९

कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ३।३।११६ । येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे ल्युट् स्यात् पूर्वेण सिद्धे
नित्यसमासार्थं वचनम् पयःपानं सुखम् कर्तरीति किम् गुरोः स्नापनं सुखम् नेह गुरुः कर्ता किन्तु कर्म वायौ २।४।५७ अजेर्वी वा स्यात् यौ प्रवय
णं प्राजनं करणाधिकरणयोश्च ३।३।११७ ल्युट् स्यात् इध्मप्रव्रश्चनः कुठारः गोदोहनी स्थाली खलः प्राक् करणाधिकरणयोरित्यधिकारः
अन्तर्देशे अन्तःशब्दाद्धन्तेर्नेस्यणः स्यात् अन्तर्हणने देशस्तु अन्तर्हननो देशः अन्तर्घणो देश एव अन्तर्घ्नन्ति तपरः किम् अन्तर्घाणि अ
यनञ्च अयनस्य णोऽन्तःशब्दात्परस्य अन्तरयणम् अदेश इत्येव अन्तरयनो देशः पुंसि संज्ञायां घः प्रायेण ३।३।११८ छादेर्घेऽद्व्युपसर्गे
स्यादिति प्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्यात् परे दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः आकुर्वन्त्यस्मिन् आकरः गोचरसञ्चरवहव्रजव्यजापणनिगम
माश्च ३।३।११९ घान्ता निपात्यन्ते हलश्चेति वक्ष्यमाणस्य घञोऽपवादः गावश्चरन्त्यस्मिन्निति गोचरो देशः सञ्चरन्तेऽनेन सञ्चरो मार्गः।
वहन्त्यनेन वहः स्कन्धः व्रजः व्यजः णत्वाभावोऽत्र निपातनाद्वीभावो न आपणः पण्यस्थानं निगच्छन्त्यनेन निगमः छन्दः चात्कषः निक
षः अवे तॄस्त्रोर्घञ् ३।३।१२० अवतारः कूपादेः अवस्तारो जवनिका हलश्च ३।३।१२१ हलन्ताद्घञ् स्यात् घापवादः रमन्ते योगिनोऽ
स्मिन्निति रामः अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः विमार्गः समूहनी अध्यायन्यायोद्यावसंहाराश्च ३।३।१२२ अधीयतेऽस्मिन्
अध्यायः नियन्ति उद्युवन्ति संहरन्त्यनेनेति विग्रहः ॥ ११ रिति · ल्युट् स्यादिति · नपुंसके भाव इति बोध्यम् · अत एवाह · पूर्वेणेति · ल्युडित्यनेनेत्यर्थः · नेहे

ति · स्नानकर्तृत्वेपि स्नापने न गुरुः कर्ता किन्तु शिष्य इत्यर्थः · शरीरग्रहणं किं पुत्रस्य परिष्वञ्जनं सुखं · मानसी प्रीतिरत्र करणाधिकरणयो येन नाप्राप्तिन्यायेन घञो
९९

उञ्छादि· अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति· इध्मेति· इध्मानि वृश्च्यन्ते येन· गौर्दुह्यते यस्यामिति विग्रहः· आकुर्वन्तीति एत्य कुर्वन्त्यस्मिन्व्यवहारमित्या करः· उत्पत्तिस्थानम्· अवे अवे उपपदे तॄस्तृभ्यां करणाधिकरणयोः पुंसि संज्ञायां घञ्स्यात्· घस्यापवादः ॥ ॥ अवहारेत्यादि· वृत्तिकारस्त्वाधारावायशब्दौ सूत्रे प्रक्षिप्य वकारेणावहारशब्दं संजग्राह· तदसम्बद्धमिति स्पष्टमेव· उदङ्को हलश्चेत्येव सिद्धे उदकप्रतिषेधार्थमिदम्· उदकोदञ्चन इति· पुंसि संज्ञायामिति घे प्राप्ते घञ्विहितः· उदके तु घञ्प्रतिषिद्धे घ एव स्यान्न तु ल्युडिति चेन्नैवम्· प्रतिषेधसामर्थ्यात् घस्याप्रवृत्तेः नहि इह घे घञि वा स्वरे विशेषोस्ति· न च स्वरे विशेषः घे सति कृदुत्तरप

अवहाराधारावायानामुपसंख्यानम् उदङ्कोऽनुदके ३।३।१२३ उत्पूर्वादञ्चतेर्घञ्स्यात् न तूदके· घृतमुदच्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्कः चर्ममयम्भाण्डम् अनुदके किं उदकोदञ्चनः जालमानायः ३।३।१२४ आनीयन्ते मत्स्यादयोऽनेनेत्यानायः जालमिति किम्· आनयनः खनो घ च ३।३।१२५ चाद्घञ् आखनः आखानः घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम् तेन भगः पदमित्यादि खनेर्डडरेकेकवका वाच्याः आखः आखरः आखनिकः आखनिकवकः एते खनित्रवचनाः ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३।३।१२६ करणाधिकरणयोरिति निवृत्तम् एषु दुःस्वसुस्वार्थेषूपपदेषु खल् स्यात् तयोरेवेति भावे कर्मणि च कृच्छ्रे दुष्करः कटो भवता अकृच्छ्रे ईषत्करः सुकरः निमिमीलियां खल्चोरात्वन्नेति वाच्यम् ईषन्निमयः दुष्प्रमयः सुविलयः। निमयः मयः लयः ॥

दप्रकृतिस्वरेण नोदात्तता· घञ्यपि थाथादिस्वरेण तथैवेति· जालमाँ जलधान्ये ज्वलितिकसन्तेभ्यो ण इति णप्रत्यये जालशब्दः सिद्धः तेन जालशब्दोऽत्र निपात्यत इति न भ्रमितव्यम्· खनो· घित्करणमिति· [illegible] स्यादौ च जोरिति कुत्वस्य प्रसक्त्यभावादिति भावः भगः पदमिति· ननु पदमित्यत्र घस्य किं प्रयोजनमिति चेदत्राहुः करणाधिकरणयोः पुंसि संज्ञायामिति प्रादिघः स्यान्तदा पदमिति नपुंसकं न स्यादनेन चेत् घो भवति तदा त्विष्टसिद्धिरिति· एत इति आखनादयः षडित्यर्थः· ईषद्दुःसुषु इह सामान्योक्तावपि योग्यताबलाद्विशेषणास्य विषयविभागो लभ्यते· दुरिति कृच्छ्रार्थे इतरौ त्वकृच्छ्रार्थे इति तदेतद्दर्शयति· कृच्छ्रे दुष्कर इत्यादिना भवतेति· न लोकेति षष्ठीनिषेधात्कर्तरि तृतीया कृच्छ्रेत्यादि॥

ईषत्कार्यं स्वल्पं कार्यमित्यर्थः खलिति लकारः स्वार्थः खित्करणं तु नरन्त्रमुम र्थम् · निमिमीते मिनाति मिनोतिदीङां ल्यपि च विभाषा लीयतेरिति प्राप्तं निषिध्यते नि मयङ्इत्यादिरास्त्र ॥ ॥ उपसर्गात्खल्घञोः लभेश्चेत्स नेनैव सिद्धे नियमार्थमिदमित्याह · उपसर्गादेवेति · यदास्वतीति सुः पूजायाम् · अतिरतिक्रमणे चेतित्योः कर्मप्रवचनीयत्वं कर्तृकर्मणोः चकारः सन्नियोगार्थः यदा कर्तृकर्मणोरीषदादीनां च युगपत्सयोगस्तदैव प्रत्ययो यथा स्यात् · न च कर्तृकर्मणोः प्रत्ययार्थत्वमेवास्तु

उपसर्गात्खल्घञोः ७।१।६७ उपसर्गादेव लभेर्नुम् स्यात् ईषत्प्रलम्भः दुःप्रलम्भः सुप्रलम्भः उपालम्भः उपसर्गात्किम् ईषल्लाभः। लाभः नसुदुर्भ्यां केवलाभ्याम् ७।१।६८ उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात् खल्घञोः सुलभं दुर्लभम् केवलाभ्यां किम् सुप्र लम्भः अतिदुर्लम्भः कथन्तर्हि अतिसुलभमतिदुर्लभमिति यदा स्वतीकर्मप्रवचनीयौ तदा भविष्यति ॥

कर्तृकर्मणोश्च भूकृञोः ३।३।१२७ कर्तृकर्मणोरीषदादिषु च भूकृञोः खल् स्यात् यथासंख्यं नेष्यते कर्तृकर्मणी च धातोः प्राग्वाच्ये ४॥४। नेन प्रयोज्ये ईषदादयस्तु ततः प्राक् कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम् खित्त्वान्मुम् अनाढ्येनाढ्येन दुःखेन भूयते दुराढ्यम्भवम् ईष दाढ्यम्भवम् स्वाढ्यम्भवम् ईषदाढ्यङ्करः दुराढ्यङ्करः स्वाढ्यङ्करः च्व्यर्थयोः किम् आढ्येन सुभूयते आतो युच् ३।३।१२८ खलोपवा दः ईषत्पानः सोमो भवता दुःपानः सुपानः भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः दुःशासनः दुर्योधन इत्यादि वा सदा। नात् ८।४।३५ नस्य णो न निष्पानं सर्पिष्पानं वा स्किं निर्णयः पदान्तात्किं पुष्णाति पदेऽन्तः पदान्तो यमिति सप्तमीसमासोयम्। तेनेह न सुसर्पिष्केण आवश्यकाधमर्ण्ययोर्णिनिः ३।३।१७० अवश्यङ्कारी शतन्दायी कृत्याश्च ३।३।१७१ आवश्यकाधमर्ण्य योरित्येव अवश्यहारिः सेव्यः शतन्देयं ॥ ६ ॥

नन्तूपपदत्वमिति वाच्यम् · ईषदादीनामेवोपपदत्वे तु खलः खित्त्वस्य वैयर्थ्यापत्तेः मुमर्थं हि तत् मु म् चानव्ययस्य विधीयते · तस्मात्कर्तृकर्मणोरिति · उपपदत्वमेव तदेतदाह · ईषदादिषु चेति · कर्तृकर्मणी द्वे भूकृञोश्च द्वौ तयोर्यथासंख्यं प्राप्तम् · लोकस्त्वकारिका

प्राचापितथैवोक्तम्· तद्व्याख्यातृमिश्रानुमोदितम्· तत्सर्वन्नादर्तव्यम्· यथासंख्य सूत्रस्य भाष्यविरोधादिति ध्वनयन्नाह· यथासंख्यं नेष्यत इति· ननूपपदयोर्मध्ये पूर्वापरी·
भावव्यवस्था न सिध्यति भूकृञोरव्यवहितत्वं कर्तृकर्मणोरेवेष्यते· न त्वीषदादीनाम्· एवञ्च कथमत्रेष्टव्यवस्था सिध्यतीति चेदत्राहुः बहुलग्रहणानुवृत्त्या दुरा·
ढ्यं भवन्तीति भाष्योदाहरणे त्विष्टव्यवस्था सिध्यतीति तदेतदभिप्रेत्याह· कर्तृकर्मणोश्चेति· भवतेः कर्तर्युदाहरति अनाढ्येनाढ्येनेति· कर्मणि त्वनाढ्य आढ्यो भू
यत इति विग्रहः भाव्यत इति तदर्थः एवमग्रेपि विग्रहद्वयमुन्नेयम्· अनाढ्येनाढ्येन स्वयमेव क्रियते· अनाढ्यः आढ्यः क्रियत इति· इत्यादीति· आदिशब्देन दुर
ः दुर्धर्षणः दुर्मर्षणः॥ ॥क्तिचक्तौ· क्तिचश्चकारो न क्तिचीति विशेषणार्थः न क्ताविन्नुक्ते हि क्तिनोपि ग्रहणं स्यादिति भाष्ये· तन्न· एकानुबन्धपरिभा

क्तिच्क्तौ च संज्ञायाम्॥ ३।३।१७४॥ धातोः क्तिच्क्तश्च स्यातामाशिषि संज्ञायाम्। तितुत्रेति नेट्। भवतात्। भूतिः। न क्तिचि दीर्घश्च। ६।४।३९॥ अनि
टां वनति तनोत्यादीनाञ्च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे। यन्तिः रन्तिः वन्तिः तन्तिः। सनः क्तिचि लोपश्चास्यान्यतरस्याम्। ६
।४।४५॥ सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा। सनुतात्। सातिः। सतिः। सन्तिः। देवा एनं देयासुः। देवदत्तः। अलङ्खल्वोः प्रतिषेधयोः प्रा
चां क्त्वा। ३।४।१८॥ प्रतिषेधार्थयोरलङ्खल्वोरुपपदयोः क्त्वा स्यात्। प्राचां ग्रहणं पूजार्थम्। अमैवाव्ययेनेति नियमान्नोपपदसमासः। दो
दद्घोः। अलन्दत्त्वा। घुमास्था। पीत्वा खलु॥ अलङ्खल्वोः किम्। माकार्षीत्। प्रतिषेधयोः किम्। अलङ्कारः॥

षयैव क्तिनोप्यावृत्तिसिद्धेरिति हर
दत्तः· यत्तु वदन्ति तितुत्रेत्यत्र सामान्यग्रहणार्थश्चकारः अन्यथा एकानुबन्धत्वादस्यैव ग्रहणं स्यान्न तु क्तिन इति तदसत्· तितुत्रेति सूत्रेऽनुबन्धविशिष्टरूपा
मुच्चारणेनैकानुबन्धपरिभाषया उक्तिसम्भवस्यैवाभावात्· एतेन तितुत्रेति सूत्रे एकानुबन्धत्वान्निवेवगृहीतेन नत्वं पंक्तिच्· न तश्चरोदितीति रूपन्नस्यादि
निर्दिष्टं काप्यपाठाद्भूतिरिति यद्यपीह परत्वात् श्र्युकः कितीत्येवेट्निषेधोन्याप्यस्तथापि वनितन्त्योरिण्निषेधार्थमावश्यकत्वात् फले विशेषाभावाच्चेति तुत्रे
सुपन्न्यस्तम्· दीर्घानुनासिकेति· अनुनासिकस्य क्विझलोरिति दीर्घम्प्राप्नुदात्तोपदेशेत्यादिनानुनासिकलोपस्य च प्राप्तिरिति बोध्यम्· यन्तिरित्यादि· यम उप

पूज्यार्थमिति· ननु विकल्पार्थमेवास्तु· अलंकृत्वा अलं रोदनेनेति रूपद्वयसिद्ध्यर्थमिति चेन्नैवम् वासरूपन्यायेनैतत्सिद्धेः न च क्त्वाल्युट्तुमुन्खलर्थेषु वास-
रूपविधिर्नेति सिद्धान्तात् ल्युटि वासरूपन्यायो नास्तीति वाच्यम् क्त्वाल्युडादयोऽपवादभूताः स्ववाध्यं नित्यं बाधन्ते इति हितस्य निष्कृष्टोऽर्थः इह तु ल्युटोऽपवादः
क्त्वेति वैषम्यात्· ननु प्रैषादिषु कृत्याश्चेति वचनेन स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नावश्यमस्तीति ज्ञापितमिति चेत्किं ततः ज्ञापकसिद्धं न सर्वत्रेतीष्टानुरोधे
न तदभ्युपगमे बाधकाभावात् अलं दत्वेति· अपात्रे न देयमिति फलितोऽर्थः॥ ॥ उदीचां म· व्यतिहारो व्यतिक्रमः मेङः कृतात्वस्य माङ इति निर्देशो नानु-
बन्धकृतमनेजन्तत्वमिति परिभाषां ज्ञापयति तेन घुसंज्ञायां देपोऽप्यदाविति पर्युदासः सिध्यति अपमित्येति· समासेऽनञ्पूर्व इति वक्ष्यमाणेन क्त्वो ल्य-

उदीचां माङो व्यतीहारे।३।४।१९। व्यतीहारेऽर्थे माङः क्त्वा स्यात्। अपूर्वकालार्थमिदम्। मयतेरिदन्यतरस्याम्।६।४।७०। मेङ इका-
रोऽन्तादेशः स्याद्वा ल्यपि। अपमित्य याचते। अपमाय। उदीचांग्रहणाद्यथाप्राप्तमपि। याचित्वा अपमयते। परावरयोगे च।३।४।२०। परे-
ण पूर्वस्यावरेण परस्य योगे गम्यमाने धातोः क्त्वा स्यात्। अप्राप्य नदीं पर्वतः परः नदीयोगेऽपर्वतस्य अतिक्रम्य पर्वतं स्थिता नदी अवरपर्वतयोगोऽत्र वा। समान-
कर्तृकयोः पूर्वकाले।३।४।२१। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। क्त्वातु अव्ययकृतो भावे। भुक्त्वा व्रज-
ति। द्वित्वमतन्त्रम्। स्नात्वा भुक्त्वा पीत्वा व्रजति। अनुदात्तेत्यनुनासिकलोपः। विहन्नत्वान्नेति। स्वरत्यादेः श्र्युकः कितीति नित्यमिडभावः। पू-

पितुक· याचित्वाऽपणि ददातीत्यर्थः· परावर अप्राप्येति· दक्षिणदेशस्थानां गङ्गामप्राप्य विन्ध्यः गङ्गायाश्चिरहविशिष्टदेशस्थो विन्ध्य इत्य- ''र्वं विप्रतिषेधेन।
र्थः अतश्च विन्ध्यात्परा गङ्गेति गम्यते· अतिक्रम्येति· दक्षिणदेशस्थानामेवायमपि प्रयोगः अत्र हि गङ्गायाः पूर्वो विन्ध्य इति गम्यते· इह त्रिसूत्र्यां क्त्वाप्रत्ययस्य भावमात्रा-
र्थत्वेऽपि विशेषणविशेष्यसंसर्गाभिधानमिति नास्ति वैयर्थ्यमिति दिक्· समानक· इह धात्वधिकारेऽपि समानकर्तृत्वं क्रिययोरेव सम्भवतीत्याशयेनाह· धात्वर्थयोरिति·
निर्धारणे षष्ठी सप्तमी वा धात्वर्थयोर्मध्ये पूर्वकालो यस्य धात्वर्थस्य तस्मिन्विद्यमानादित्यर्थः एवं च निर्धारणे विभक्तिरेव पूर्वकाल इत्यस्य बहुव्रीहित्वद्योतिकेति फलि-

सच धातुनैव लब्धः क्त्वाप्रकृत्यर्थभूता क्रिया च क्रियान्तरं प्रति विशेषणं धातुसम्बन्धाधिकारात्· संसर्गश्चेह सामानाधिकरण्यं पूर्वोत्तरकालत्वं च तत्र संसर्गविशेषता
न्यर्थग्राहकाः क्त्वाणमुलादयः अत्र च समानकर्तृकयोरिति सूत्रांशेन सामानाधिकरण्यमुपनिबद्धम्· धातूपात्तव्यापाराश्रयस्य कर्तृतयानन्यपर्यवसानादिति दिक्। न
हित्वमिति· नन्वमीषां त्रासलानां पूर्वमानये तु क्ते मध्यमानानीयन्ते तथेहापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् क्त्वा प्रत्ययो न स्यादिति चेदत्राहुः
इहाप्याख्यातवाच्या क्रिया क्रियाप्रधानम्· तां प्रति क्त्वान्तोपस्थिताः क्रियाः सर्वा एव विशेषणम्· न तु तासां परस्परसम्बन्धः गुणानां च परार्थत्वादिति· न्या
यात्· अत एव स्नात्वा पीत्वा भुक्त्वा व्रजतीत्याद्यनियमेन प्रयुज्यते· इति स्वरतिसूतीत्यादिना विकल्पे प्राप्ते नित्यार्थमाह स्वरत्यादेरिति· ॥ ❁ ॥ क्त्विस्कन्दि· स्कन्दिर्ग
तिशोषणयोः इर इत्संज्ञेति वार्तिकादिकारमात्रस्य संज्ञा नेत्यनिदितामिति पर्युदासोऽत्र न प्रवर्तत इति स्कन्दिग्रहणम्· स्कन्त्वेति· एकाच इति नेट्· मृड मृद· मृड सु

क्त्विस्कन्दिस्यन्दोः।६।४।३१।। एतयोर्नलोपो न स्यात् क्त्वि परे स्कन्त्वा। ऊदित्वादिड्वा। स्यन्त्वा। स्यन्दित्वा। न क्त्वा सेट्।१।२।१८।। सेट् क्त्वा किन्न स्यात्। श
यित्वा। सेट् किम्। कृत्वा। मृडमृदगुधकुषक्लिशवदवसः क्त्वा।१।२।७।। एभ्यः सेट् क्त्वा कित्। मृडित्वा। क्लिशः क्त्वेति वेट्।। क्लिशित्वा। क्लिष्ट्वा। उदित्वा
उषित्वा। रुदविदेति कित्त्वं रुदित्वा। विदित्वा। मुषित्वा। गृहीत्वा। नोपधात्थफान्ताद्वा।१।२।२३।। सेट् क्त्वा कित् स्याद्वा। श्रथित्वा। श्रन्थित्वा। गुफित्वा। गुम्फि
त्वा। नोपधात् किम्। कोथित्वा। रेफित्वा। वञ्चिलुञ्च्यृतश्च।१।२।२४।। सेट् क्त्वा किद्वा। वचित्वा। वञ्चित्वा। लुचित्वा। लुञ्चित्वा। ऋतित्वा। अर्तित्वा·॥

खने· मृद क्षोदे· गुध परिवेष्टने· गुध रोषे च कुष निष्कर्षे· क्लिशू हिंसायां दिवादिः क्लिशू विबाधने क्र्यादिः वद व्यक्तायां वाचि· वस निवासे· किदिति· असंयोगाल्लि
ट् किदित्यतः किदित्यनुवर्तते इति भावः उदित्वेति· यजादित्वात्सम्प्रसारणम्· उषित्वेति· वसतिक्षुधोरिडितीट् यजादित्वात्सम्प्रसारणम्· शासिवसिघसीनां चेति षः· गृहीत्वेति·
ग्रहिज्येति सम्प्रसारणम्· ग्रहोऽलिटि दीर्घ इति इटो दीर्घः नोपधायाः· अन्तग्रहणं स्पष्टार्थम्· थफादित्युक्तेऽपि धातोरेव क्त्वाप्रत्ययविधानाद्विशेष्यसन्निधाने न तदन्तविधि
ना थफान्तादिति लाभात् कोथित्वा रेफित्वेति· कुथ पूतीभावे रिफ कत्थनयुद्धनिन्दाहिंसादानेषु इह रलो व्युपधादिति विकल्पोऽपि न भवति नोपधग्रहणसामर्थ्यात्
वचित्वेति· वञ्चु प्रलम्भने· लुचित्वेति लुञ्च अपनयने· ऋतित्वेति· ऋतिः सौत्रो धातुर्घृणार्थकः तस्मादार्धधातुकविषये ऋतेरीयङिति तस्य वैकल्पिकत्वात्तदभावे कि॥

कृ
सि॰ कौ॰ त॰ १९२

तृषिमृषि· त्रि तृष पिपासायां मृष तितिक्षायाम्· कृश तनूकरणे· नोपधेत्यतो वेत्यनुवर्तनात् काश्यपग्रहणं पूजार्थम्· अञ्चेरिति· उदितो वेति विकल्पप्राप्तावयमारम्भः। अञ्चित्वेति· न क्त्वा सेडिति कित्त्वाभावान्नलोपो न· एवं चेह नाञ्चेः पूजायामिति· नलोपो नेति प्रसादकारोक्तिर्दृष्टेत्याहुः· जॄव्रश्च्योः· जॄ इत्यस्मात् श्र्युकः किति

तृषिमृषिकृशेः काश्यपस्य। १।२।२५॥ एभ्यः सेट् क्त्वा किद्वा। तृषित्वा। तर्षित्वा। मृषित्वा। मर्षित्वा। कृशित्वा। कर्शित्वा। रलो व्युपधादिति वा कित्त्वम्। द्युतित्वा। द्योतित्वा। लिखित्वा। लेखित्वा। रलः किम्। सेवित्वा। व्युपधात् किम्। वर्तित्वा। हलादेः किम्। एषित्वा। सेट् किम्। भुक्त्वा। वसतिक्षुधोरिट्। उषित्वा। वसित्वा। क्षुधित्वा। क्षोधित्वा। अञ्चेः पूजायामिति नित्यमिट्। अञ्चित्वा। गतौ तु अक्त्वा। अपि। लुभित्वा। लोभित्वा। लुभो विमोहन इतीट्। विमोहने तु लुब्ध्वा। जॄव्रश्च्योः क्त्वि। ७।२।५५॥ आभ्यां परस्य क्त्व इट् स्यात्। जरीत्वा। जरित्वा। व्रश्चित्वा॥ उदितो वा। ७।२।५६॥ उदितः परस्य क्त्व इड्वा। शमित्वा। अनुनासिकस्य क्वीति दीर्घः। शान्त्वा। घूत्वा। देवित्वा। क्रमश्च क्त्वि। क्रम उपधाया वा दीर्घः स्यात् झलादौ क्त्वि परे। क्रान्त्वा। क्रन्त्वा। झलि किम्। क्रमित्वा। पूङश्चेति वेट्। पवित्वा। पूत्वा। जान्तनशां विभाषा। ६।४।३२॥ जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे। भक्त्वा। भङ्क्त्वा। रक्त्वा। रंक्त्वा। मस्जिनशोरिति नुम्। नस्य परत्वे लोपः। नष्ट्वा। नंष्ट्वा। रधादिभ्यश्चेतीट्पक्षे। नशित्वा। झलादाविति वाच्यं नेह। अञ्जित्वा। ऊदित्वादिट्प
१९ क्षे। अक्त्वा। अङ्क्त्वा। जनसनखनां सञ्झलोः। खात्वा। खनित्वा। द्यतिस्यतीति इत्। दित्वा। सित्वा। मित्वा। स्थित्वा। दधातेर्हिः। हित्वा। जहातेश्च क्त्वि। ७।४।४३॥ हित्वा। हाङस्तु हात्वा। अदो जग्धिः। जग्ध्वा। समासेऽनञ्पूर्वे क्त्वो ल्यप्। ७।१।३७॥ अव्ययपूर्वपदे अनञ्समासे क्त्वो ल्यबादेशः स्यात्। तुक्। प्रकृत्य। अनञ् किम्। अकृत्वा। पर्युदासाश्रयणान्नेह। परमकृत्वा॥ ॥

१९ तिनिषेधे प्राप्ते वश्च स्यादित्वाद्विकल्पे प्राप्ते वचनमिदम्· जरीत्वेति· वृतो वेति दीर्घः· व्रश्चित्वेति· इह न क्त्वा सेडिति कित्त्वनिषेधाद् ग्रहिज्येति सम्प्रसारणं न· पूत्वेति· इडभावपक्षे श्र्युकः किदिति पूङ· झलादाविति· जान्तनशामिति सूत्रे वक्तव्यमित्यर्थः· खात्वा खनित्वेति· उदितो वेति वेट्· जग्ध्वेति· झरो झरीति पाक्षिको धलोपः· समासेऽनञ्· नञि नेन सह समासमव्ययमिति यावत्· नञ्पूर्वपूर्वपदस्य

व्याचष्टे· अप्रपेतिप्रकृत्येति· प्रशब्दः क्त्वाप्रकृत्यर्थगतप्रकर्षस्यद्योतकः सतुकुगतिप्रादयइति क्त्वान्तेननिसंसमस्यते· पर्युदासेतिप्रसज्यप्रतिषेधाश्रयणेतु समासेवाक्त्वस्यवितिभावः॥ ॥षत्वतुकोरसिद्धःकषत्वविषयमुदाहरति· कोसिचदिति· कोऽसिचिदितिस्थितेएङःपदान्तादतीतिपूर्वरूपमेकादेशः तस्मान्नादि वृत्तेतिप रादिवत्वेनसात्पदाद्योरितिनिषेधाभावादिणः परत्वेनषत्वंप्राप्तंएकादेशस्यासिद्धत्वेसति अकारेणव्यवधानादिणः परत्वाभावान्नभवति· प्रकृतंल्यपिकार्यमुदाहरति· अधीत्येति·विधायेति·दधातेर्हिर्नेप्रदाय दोदद्घोरितिनप्रबन्ध्य·जनसनखनेत्यात्वंन प्रस्थाप्यतिस्यतीतीत्वंन·प्रक्रम्य·क्र

षत्वतुकोरसिद्धः षत्वेतुकिचकर्तव्येएकादेशशास्त्रमसिद्धंस्यात्कोसिचत्इहषत्वंन अधीत्य प्रेत्य ह्रस्वस्येतितुक् वाल्यपि ६।४।३८ अनुदात्तोपदेशानांवनतितनोत्यादीनामनुनासिकलोपोवास्यात्ल्यपि व्यवस्थितविभाषेयं तेनमान्तानित्यम्वानान्तानित्यम्वनादीनाञ्च। नित्य आगत्य आगम्य प्रणत्य प्रणम्य प्रहत्य प्रमत्य प्रवत्य वितत्य अदोजग्धिः अन्तरङ्गानपिविधीन्वहिरङ्गोपिल्यब्बाधते ज। ग्धिर्विधौल्यपग्रहणात् तेनहित्वदत्वआत्वेत्वदीर्घत्वशुइट्इटोल्यपिन विधाय प्रधाय प्रबन्ध्य प्रस्थाय प्रक्रम्य आपृच्छ्य प्रदीव्य नल्यपि ६।४।६९ ल्यपिपरेघुमास्थादेरीत्वंनधेट् प्रधाय प्रमाय प्रगाय प्रपाय प्रहाय प्रसाय मीनाति मीनाति मीनोतीत्यात्वं प्र माय निमाय उपदाय विभाषालीयतेः विलाय विलीय णिलोपः उत्तार्य विचार्य ल्यपिलघुपूर्वात् ६।४।५६ लघुपूर्वात्परस्यणेरया ·देशःस्यात्ल्यपिविगणय्य प्रणमय्य प्रवेभिदय्य लघुपूर्वात्किं सम्प्रधार्य॥ अप्रच्छीतिदीर्घोन· आपृच्छ्यप्रदीव्य छ्वकारवकारयोश्शूठिति· ऊठोन इडभावस्योदाहरणान्तुप्रबन्ध्यप्रदीव्येत्यादेव नल्यपि·कथन्तर्हिनिपीयधस्येतिश्रीहर्षप्रयोगइतिचेदत्राहुः·पीङ्पानेइतिदिवादिगणस्थाल्ल्यपिन दोषइति·इहप्रशाप प्रच्छायेत्यत्रशाच्छोरन्यतरस्यामितिप्राप्तस्येत्वस्याप्यभावोबोध्यः लघुपूर्वादिति· लघुःपूर्वोयस्माद्वर्णात· लघुपूर्ववर्णात्परस्येत्यर्थः विगणय्ये ति· नन्विहणेरकृतस्याल्लोपस्यपूर्वस्माद्विधौस्थानिवद्भावाल्लघुपूर्वकवर्णात्परत्वंनास्ति· नचारम्भसामर्थ्यं अनुगमय्येत्यादौमित्त्वचरितार्थत्वात्· अत्रोच्यते·

तथा चात्र स्थानिवत्त्वाभावात् णेरयादेशो भवत्येव । निष्ठायां सेटीत्यस्यानित्यत्वज्ञापकत्वं त्वचः परस्मिन्निति सूत्र एवास्माभिरुपपादितम् इति नात्रोपपाद्यते । प्रमय्येति । अम
न्तत्वान्मित्त्वे मितां ह्रस्वः । प्रवेभिदय्येति । भिदेर्यङ् । नाद्रे भिद्य इत्यस्मात् णि च्यन्तात् ल्यपि यस्य हलः इति यलोपः ननु ह्रस्वयलोपाल्लोपानामाभीयत्वेनासिद्धत्वात् लघुपूर्वकत्वाभावा
त् णिर्नास्तीति कथमिह णेरयादेशः स्यादिति चेन्मैवम् । असिद्धवदत्राभादित्यत्र समानाश्रये तस्मिन् कर्तव्ये तदसिद्धं स्यादिति हि व्याख्यातं तेनात्राशङ्कैव नास्ति । ह्रस्वा
द्यो हि णौ णेरयादेशस्तु ल्यपि परत इति व्याश्रयत्वात् ॥ ॐ ॥ विभाषापः । अप्राप्तविभाषेयम् । आप्नोतेरिति । यद्यपीडो णिचि परतः क्रीङ्जीनां णाविति आत्वे ऽर्तिह्री॥

विभाषापः ६।४।५७ आप्नोतेर्णेरयादेशो वा स्यात् ल्यपि प्रापय्य प्राप्य क्षियः ६।४।५९ क्षियो ल्यपि दीर्घः स्यात् प्रक्षीय ल्यपि च ६।१।४१ वे
ञो ल्यपि सम्प्रसारणं न स्यात् प्रवाय ज्यश्च ६।१।४२ प्रज्याय व्यश्च ६।१।४३ उपव्याय विभाषा परेः ६।१।४४ परेर्व्येञो वा सम्प्रसारणं स्या
त् ल्यपि तुकं बाधित्वा परत्वात् हलः इति दीर्घः परिवीय परिव्याय कथं मुखं व्यादाय स्वपिति नेत्रे निमील्य हसतीति व्यादानसम्मीलनोत्त
रकालेपि स्वापहासयोः स्वप्नवृत्तेः तदंशविवक्षया भविष्यति आभीक्ष्ण्ये णमुल् च ३।४।२२ पौनःपुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् ।
क्त्वा च द्वित्वं स्मारं स्मारं नमति शिवं स्मृत्वा स्मृत्वा पायं पायं भोजं भोजं श्रावं श्रावं चिण्णमुलोरिति णमुल्परे णौ वा दीर्घः गामं गामं गमं गमं
विभाषा चिण्णमुलोरिति नुम् वा लम्भं लम्भं लाभं लाभं व्यवस्थितविभाषया उपसृष्टस्य नित्यं नुम् प्रलम्भं प्रलम्भम् जाग्रो विचिण्णल्ङित्सु इति गुणः
स्यादिति कथं पुनः किं आवितिशब्दोऽस्ति तथापि तस्यनेह ग्रहणं लाक्षणिकत्वादिति भावः प्राप्येति । एतेनायमयोगिवर्धः जागरं जागरम् एयन्तस्याप्येवम् । ॥
वधपातकैर्भेमिमवाप्य दिवः खलु पास्यते इति श्रीहर्षप्रयोगो व्याख्यातः । अवाप्येत्यस्यावापय्येत्यर्थसम्भवात् एतेन न तत्रान्तर्भावितण्यर्थेनेति क्लेशमनुभवन्तः
परास्ताः ल्यप्स्थानिनः किंत्वाद्वचि स्वपीति प्राप्तं सम्प्रसारणं निषेधयितुमाह ल्यपि चेति । ज्यश्च सम्प्रसारणं न स्यात् एवं व्यश्चेत्यत्रापि व्याख्येयम् कथमिति ल्यबा
देशस्य स्थानिभूतः क्त्वाप्रत्ययो दुर्लभः तद्धि धातुपूर्वकालेऽस्य युक्तः न चेह तदस्ति पूर्वं हसो स्वपिति पश्चान्मुखं व्याददाते यदैव हसति तदैव नेत्रे सम्मीलयति तथा च क्त्वाप्र॰ १०३

प्रसक्तिरेव नास्तीति प्रश्नः समाधत्ते व्यादाने त्यादिना · एतेनेश्वरः सर्वं व्याप्य वर्त्तते ज्ञात्वा तिष्ठतीत्यादि व्याख्यातम् · श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते · इत्यादौ तु समाना
कर्तृकत्वानिर्वाहार्थं स्थितस्येत्यादि यथासम्भवमध्याहार्य्यं · आभीक्ष्ण्ये णमुल् च · ननु वासरूपन्यायेन क्त्वाप्रत्ययो भविष्यतीति चग्रहणमिह व्यर्थमिति चेन्नैवम् · उक्तन्यायस्य
कारे तु लडादिरपीह प्रवर्त्तेत न त्वेष्टापत्तिः विभाषाग्रे इति वक्ष्यमाणसूत्रस्थ विभाषाग्रहणस्य वैयर्थ्यप्रसङ्गात् · तत्र हि क्त्वाणमुलौ विभाषाग्रहणेन लडादिसमावे
शार्थं विकल्प्येते · यद्यपि वासरूपन्यायेनैव लडादिः सिध्यति तथापि णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्र वासरूपविधिर्न प्रवर्त्तत इति ज्ञापनार्थं विभाषाग्रहणं तत्फलं
तु आभीक्ष्ण्ये णमुल् चेत्यत्र लडाद्यप्रवृत्तिः तत्र च चकारेणैव क्त्वाप्रत्ययो लभ्यत इति नास्त्येव तस्य वैयर्थ्यं किञ्च वासरूपं विनैव क्त्वा लडाद्योः
स्तौ कारे तु न यद्यनाकांक्ष इत्यत्र क्त्वाप्रत्ययवत् · लडादिरपि निषिध्येत · तथा च यदयं भुङ्क्ते ततः पठतीत्युदाहरणं न स्यात् · सिद्धान्ते त्वाभीक्ष्ण्येण मुल् चेति विशेषविहित

न यद्यनाकांक्षे ३।४।२३ यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तं तन्न यत्र पूर्वोत्तरे क्रिये तद्वाक्यमपरं नाकांक्षते चेत् यदयं भुङ्क्ते ततः
पठति इह क्त्वाणमुलौ न · अनाकांक्षे किम् यदयं भुक्त्वा व्रजति ततोऽधीते विभाषाग्रेप्रथमपूर्वेषु ३।४।२४ आभीक्ष्ण्ये इति नानु
वर्त्तते एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः अग्रेभोजं व्रजति अग्रेभुक्त्वा प्रथमं भोजं प्रथमं भुक्त्वा पूर्वं भोज
म् पूर्वं भुक्त्वा पक्षे लडादयः अग्रे भुङ्क्ते ततो व्रजति आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः अग्रेभोजं भोजं व्रजति भुक्त्वा भु
क्त्वा कर्मण्याक्रोशे कृञः खमुञ् ३।४।२५ कर्मण्युपपदे आक्रोशे गम्ये चौरङ्कारमाक्रोशति करोतिरुच्चारणे चोरशब्दमुच्चार्य्येत्यर्थः

यः · क्त्वाणमुलोरेव निषेधात्सामान्यविहितलडादिर्भवत्येवेति नास्त्येवानुपपत्तिरिति दिक् · पूर्वविषय इति · समानकर्तृकयोः पूर्वकाल इत्यर्थे · पायं पायमिति · आतो युक् · चि
दीर्घ इति · गमेर्णमुलि मित्वाद्ध्रस्व इति ह्रस्वे कृते वा दीर्घ इत्यर्थः · णयन्तस्यापीति · यत्तु प्राचा एधनज्ञागर्त्तेश्चिण्णमुलोर्वा वृद्धिरिति · मतमुपन्यस्तं तदपाणिनीय
मिति भावः ॥ ॥ न यदि · अनाकाङ्क्ष इति पर्युदासेन तन्न समास इति दर्शयति · नाकांक्षते चेदिति · इहेति नन्वेवमनन्तरस्येति न्यायात् · णमुलमा[illegible] क्त्वा तु समान
कर्तृकयोरिति सूत्रान्तरेणास्त्वेवेति चेदत्राहुः · पूर्वकाले यत्प्राप्नोति · तन्नेति व्याख्यानात् · क्त्वाप्रत्ययोऽपि न भवतीति · विभाषाग्रे · यद्यप्यग्रशब्दो देशादिशब्दवचनोऽप्यस्ति

अग्रे भुङ्क्ते इत्यादिप्रयोगात्तथापीह कालविशेषवाच्येव गृह्यते · प्रथमशब्दसाहचर्य्यात् · प्रथमं भुङ्क्ते इत्यादौ तु काल एव प्रतीयते · अग्रे इति सप्तम्यन्तस्यानुकरणं · प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वाद्विभक्तेर्लुङ् न · अस्य वामीयमितिवत् · अग्रेभोजमिति · अग्रेवाच्ये येनेति नियमाद्व्यस्तमेवेदं · न त्वत्रोपपदसमासः ननु अग्रेप्रथमपूर्वशब्दैः पूर्वकालत्वमुच्यते · इति कथमिह क्त्वाणमुलौ स्यातामिति चेदत्राहुः अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीति हि वाक्यार्थस्तत्राग्रेप्रभृतिभिर्भोक्त्रपेक्षया पूर्वत्वमुच्यते चेदत्रापि अन्येभ्यो भोक्तृभ्यः पूर्वं व्रजतीति व्रजनापेक्षया पूर्वत्वं तु क्त्वाणमुलक्षणं द्योत्यत इत्याशङ्क्य · वात्रनास्तीति · नित्यमेव विधिरिति · अग्रे भुङ्क्ते इत्येवं लडादिर्न प्रयुज्यत इति भावः ॥ ॥ स्वादुमि स्वादुमीत्यर्थग्रहणं व्याख्यानात्तदाह · स्वार्थ्येष्विति · मान्तत्वमिति · ननु स्वादोरित्येव सूत्रं मकुमात्वत्र

स्वादुमि णमुल् ३।४।२६ स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले पूर्वपदस्य मान्तत्वं निपात्यते अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते सम्पन्नङ्कारं लवणङ्कारं सम्पन्नलवणशब्दौ स्वादुपर्यायौ वा सरूपेणापि स्वादुं कृत्वा भुङ्क्ते अन्यथैवङ्कथमित्थंसु सिद्धाप्रयोगश्चेत् ३।४।२७ एषु कृञो णमुल् स्यात् सिद्धः अप्रयोगोऽस्य एवंभूतश्चेत्कृञ् व्यर्थत्वादप्रयोगार्ह इत्यर्थः अन्यथाकारम् एवङ्कारं कथङ्कारम् इत्थंकारं भुङ्क्ते इत्थं भुङ्क्ते इत्यर्थः सिद्धेति किम् शिरोऽन्यथा कृत्वा भुङ्क्ते यथातथयोरसूयाप्रतिवचने ३।४।२८ कृञः सिद्धाप्रयोग इत्येव असूयया प्रतिवचने ॥ ९९ णमुल्स्वमुन्ने वानुवर्त्यतां · अहृद्विषदिति मुम्भविष्यति · एवञ्च निपातनं विनापि मान्तत्वं सिध्यतीति महद्व्याघा

वमिति चेन्नैवम् · च्व्यन्तस्य मुम् नस्यादनव्ययस्येति वचनात्तनश्च स्वादुंकारमित्यत्र च्वौ चेति दीर्घः स्यात् · संपन्नंकारमित्यादिष्वसच्चा विनीतं स्यात् · किञ्च लिङ्गमन्ये नोगुणवचनादिति ङीषि स्वाद्वीकारमिति स्यात् · अतोऽत्र स्वादुमीति रूपं निपात्यते · तत्र च्व्यन्तानां तान्ते स्वदीर्घो न वा ऽनेष · निपातनमिह भावप्रत्ययमात्रावि षयकं तेन स्वादुंकृत्वेत्यपि सिध्यति · स्वादेतत् · उक्तदोषपरिहाराय स्वादुमीत्येव सूत्रमङ्गीक्रियतां णमुल् तु त्यज्यतां कृञः स्वमुत्रिके स्वादुंकारमित्यादिषु

पसिद्धिरितिचेन्नैवम्· तथासत्युत्तरसूत्रेषुसन्निहितत्वात्· खमुञेवानुवर्ततइतिकन्यादर्शंब्राह्मणवेदमित्यादिषुपूर्वपदस्यमुमागमः स्यादितिदिक्· व्यर्थत्वादिति
निष्प्रयोजनत्वादित्यर्थः· तदेतद्दर्शयति· इत्थंभुंक्तइत्यर्थइति· इहशाब्दबोधेविशेषसत्त्वेपिफलतार्थकथनपरतयाकारपितिणमुलन्तस्यनिः फलत्वमुक्तमना
तिप्रयोजनत्वात्· विस्तरस्तुमनोरमादावनुसन्धेयः शिरोन्यथेति· इहशिरोऽन्यथाकृत्वौदनादिकंभुंक्तइत्यर्थेप्राभायकरोतेः प्रयोगस्यावश्यकः तदभावेतुभुक्ति
क्रियायाएवप्रकारोगम्यतेनतुशिरसोऽन्यथाकरणम्· अतः करोतेः प्रयोगार्हत्वमस्तीतिणमुलन्तः· करोतिरिहनप्रयुज्यतइतिभावः· ॥ ठ ॥ यथाकारमिति
प्रश्नोन्नेर्हः सत्यदिष्टच्छति· तदेदमुत्तरम्· अत्रापिवासरूपन्यायेनपक्षेक्त्वाप्रत्ययोबोध्यः कन्यादर्शमिति· अत्रदर्शनविषयीभूतानांसर्वासांकन्यानांवाक्यार्थे

यथाकारमहंभोक्ष्ये तथाकारम्भोक्ष्येकिन्तवानेन कर्म्मणिदृशिविदोः साकल्ये ३।४।२९ कर्म्मण्युपपदेणमुल्स्यात् कन्यादर्शंवरयति स
र्वाः कन्याइत्यर्थः ब्राह्मणवेदम्भोजयति यंयंब्राह्मणञ्जानातिलभतेविचारयतिवातंसर्वम्भोजयतीत्यर्थः यावतिविन्दजीवोः ३।४।३०
यावद्वेदम्भुङ्क्ते यावल्लभतेतावदित्यर्थः यावज्जीवमधीते चर्म्मोदरयोः पूरेः ३।४।३१ कर्म्मणीत्येव चर्म्मपूरंस्तृणाति उदरपूरंभुङ्क्ते वर्ष
प्रमाणऊलोपश्चास्यान्यतरस्याम् ३।४।३२ कर्म्मण्युपपदेपूरेर्णमुल्स्यादूकारलोपश्चवासमुदायेनवर्षप्रमाणेगम्ये गोष्पदपूरंवृ
ष्टोदेवः गोष्पदप्रंवृष्टोदेवः अस्येतिकिम् उपपदस्यमाभूत् मूषिकाविलप्रम्॥ ठ ॥ ठ ॥ ठ ॥ ठ ॥ ठ ॥

अन्यथासाकल्यम्बोध्यम्· सर्वाइति· दर्शनविषयीभूताः सर्वाइत्यर्थः· अतिशयप्रतिपादनपरमेतत्· ब्राह्मणवेदमिति· विदज्ञाने· विद्लृलाभे· विदविचारणेइ
तिधातवः चार्थान्पर्यालोच्यव्याचष्टे· जानातीत्यादि· सत्तार्थस्यविदेरनेकार्थत्वान्नेहग्रहणमितिभावः· यावतिविन्द· विदेर्लाभार्थस्यानुकरणं· तस्यहिविंदा
तीत्यादौशेमुचादीनामितिनुमस्ति· यावल्लभतइति· असाकल्यमनेनदर्शयति· साकल्येहिकर्मणिदृशिविदोरित्यनेनैवसिद्धम्· चर्मोकर्मणीत्येवेति
एवञ्चपूरेरितिण्यन्तस्यनिर्देशोनतुकेवलस्य· इकृस्तिपेति· इकानिर्देशः· तस्याकर्मकत्वादितिभावः चर्मपूरमित्यादि· चर्मपूरयित्वा ॥ ठ ॥

उदरंपूरयित्वा·उदरपूरणविशिष्टाभुजि॰ क्रियेत्यर्थः· इहपूर्वकालेइतिनसम्बध्यते।सम्भवादप्रतीतेश्च· एवमन्यत्रापियथासम्भवम्बोध्यम्॥·॥ चेले · व्या।
ख्यानादर्थग्रहणमित्याहुः चेलार्थेष्विति· चेलक्नोपमित्यादि· यथावर्षणेचेलानिशव्दायन्ते·तथावृष्टइत्यर्थः· अन्येतुक्नूयीशब्देउन्देच·उन्दीक्लेदने·क्लिदूआर्द्री
भावेःइत्येवंक्नोपमितिणमुलन्तस्यप्रकृत्यर्थपर्यालोच्ययथावर्षणेनचेलान्यार्द्रीभवन्ति·तावद्वृष्टइतिव्याचख्युः निमूलमिति·निगतंमूलमस्यनिमूलंसहमूले
न समूलंनिमूलसमूलकषणाभिन्नंकषणमितिशाव्दवोधः· तेनेति· अत्रेदम्बोध्यम्· सामान्यविशेष्यंविशेषस्तुविशेषणम्· अमोट्यइत्यादौ अत्रा।

चेलेक्नोपेः ३।४।३३ चेलार्थेषुकर्मसूपपदेषुक्नोपेर्णमुल्स्याद्वर्षप्रमाणे चेलक्नोपंवृष्टोदेवः वस्त्रक्नोपं वसनक्नोपं निमूलसमूल
योःकषः ३।४।३४ कर्मणीत्येव कषादिष्वनुप्रयोगम्वक्ष्यति अत्रप्र करणेपूर्वकालइतिनसम्बध्यते·निमूलकाषङ्कषति समूलका
षंकषति निमूलंसमूलंकषतीत्यर्थः एकस्यापिधात्वर्थस्यनिमूलादिविशेषणसम्बन्धाद्भेदः तेनसामान्यविशेष॰ भावेनविशेष
णाविशेष्यभावः शुष्कचूर्णरूक्षेषुपिषः ३।४।३५ एषुकर्मसुपिषेर्णमुल् शुष्कपेषम्पिनष्टि शुष्कम्पिनष्टीत्यर्थः चूर्णपेषं रूक्षा।
पेषम् समूलाकृतजीवेषुहन्कृञ्ग्रहः ३।४।३६ कर्मणीत्येव समूलघातंहन्ति अकृतकारङ्करोति जीवग्राहंगृह्णाति जीवतिइति
जीवः इगुपधत्वात्कः जीवंतंगृह्णातीत्यर्थः करणेहनः ३।४।३७ पादघातंहन्ति पादेनहन्तीत्यर्थः यथाविध्यनुप्रयोगार्थःसन्नित्य
समासार्थोयंयोगः भिन्नधातुसम्बन्धेतुहिंसार्थानाञ्चेतिवक्ष्यते स्नेहनेपिषः ३।४।३८ स्निह्यतेयेनतस्मिन्करणेपिषेर्णमुल् उदपेषम्पि
विशेषणंवृक्षस्तुविशेष्यमिति॰सर्वजनानुभवात् ततश्चात्रनिमूलकषणादिकं·विशेषणंकेवलकषणन्तुविशेष्यमिति॥ नष्टि उदकेनपिनष्टीत्यर्थः
·स्नेहने·शुष्कचूर्णेतिसूत्रे एवस्नेहनग्रहणन्नकृतं· तत्रहिकर्मणिदृशिविदोरितिसूत्रात्कर्मणीत्यनुवर्ततेइहतुपूर्वसूत्रात्करणइत्यनुवर्तनीयमिति॥

हस्ते हस्त इत्यर्थग्रहणन्तदाह· हस्तार्थ इति· संज्ञायाम्· अनधिकरणार्थ आरंभः तथैवेति· निमूलकाषंकषतीत्याद्युदाहृतमित्यर्थः मूलकोपदंशमिति· अयमर्थः मूलके

हस्ते वर्त्तिग्रहोः ३।४।३९ हस्तार्थे करणे हस्तवर्त्तं वर्त्तयति करवर्त्तम् हस्तेन गुलिकां करोतीत्यर्थः हस्तग्राहं गृह्णाति करग्राहं पाणिग्राहं स्वेपु
षः ३।४।४० करणाद् इत्येव स्वइत्यर्थग्रहणान्नेन स्वरूपे पर्य्याये विशेषे च णमुल् स्वपोषं पुष्णाति धनपोषं गोपोषं अधिकरणे बन्धः ३।४।
४१ चक्रबन्धम्बध्नाति चक्रे बध्नातीत्यर्थः संज्ञायाम् ३।४।४२ बध्नातेर्णमुल् संज्ञायाम् क्रौञ्चबन्धं बद्धः मयूरिकाबन्धं अट्टालिकाबन्धं
बन्धविशेषाणां संज्ञा एताः कर्त्रोर्जीवपुरुषयोर्नशिवहोः ३।४।४३ जीवनाशन्नश्यति जीवो नश्यतीत्यर्थः पुरुषवाहम्वहति पुरुषो वहती
त्यर्थः ऊर्द्ध्वे शुषिपूरोः ३।४।४४ ऊर्द्ध्वे कर्त्तरि ऊर्द्ध्वशोषं शुष्यति वृक्षादिः ऊर्द्ध्व एव तिष्ठन् शुष्यतीत्यर्थः ऊर्द्ध्वपूरम्पूर्य्यते ऊर्द्ध्वमुख एव
व घटादिः वर्षोदकादिना पूर्णो भवतीत्यर्थः उपमाने कर्मणि च ३।४।४५ चात्कर्त्तरि घृतनिधायन्निहितञ्जलम् घृतमिव सुरक्षित
मित्यर्थः अजकनाशन्नष्टः अजक इव नष्ट इत्यर्थः कषादिषु यथाविध्यनुप्रयोगः ३।४।४६ यस्मात्णमुलुक्तः स एवानुप्रयोक्तव्य।
इत्यर्थः तथैवोदाहृतम् उपदंशस्तृतीयायाम् ३।४।४७ इतः प्रभृति पूर्वकाल इति सम्बध्यते तृतीयाप्रभृतीन्यन्यतरस्यामिति वास
मासः मूलकोपदंशं भुङ्क्ते मूलकेनोपदंशं दश्यमानस्य मूलकस्य भुजिम्प्रति करणत्वात्तृतीया यद्यप्युपदंशिना सह न शाब्दः सम्ब।
न्धः तथाप्यर्थोऽस्त्येव कर्मत्वात् एतावतैव सामर्थ्येन प्रत्ययः समासश्च तृतीयायामिति वचनसामर्थ्यात् हिंसार्थानाञ्च समानकर्म
काणाम् ३।४।४८ तृतीयान्ते उपपदेऽनुप्रयोगधातुना समानकर्मकाद्धिंसार्थाण्णमुल् स्यात् दण्डोपघातङ्गाः कालयति दण्डेनोपघा

नं भुंक्ते किं कृत्वा उपदश्य। किमुपदश्य अर्थान्मूलकमिति सम्बध्यते· एतावतैवेति· शाब्दान्वयाभावेपि आर्थिकान्वयमात्रेणेत्यर्थः वचनसामर्थ्यादिति· यदि हि तृती

कृ॰
सि॰ कौ॰ यानेन शाब्दान्वये सत्येव प्रत्ययो भवेत्तर्हि करणे हन इतिवदुपदंशः करणे इत्येव ब्रूयात् ततश्च क्रियान्तरव्यतिकरणात्वं मूलकेनेत्यस्येष्टमिति भावः एतच्च मनोरमाग्र
टी॰ त॰ न्थानुसारेणोक्तम् अत्र केचित् नन्वेवमुपदंशः कर्मणीत्येव सूत्रमस्तु अथवोपदंश इत्येवास्तु उपमाने कर्मणीत्यतः कर्मणीत्यनुवर्त्य कर्मण्युपपदे उपपूर्वकाद्
१०६ दंशेर्णमुलिति व्याख्यायतां किमनया कुसृष्ट्येति नन्वेवं कर्मण्युपपदे नित्यसमासः स्यादिति वाच्यम् करणे इत्युक्तेप्युक्तदोषस्य तुल्यत्वात् न च तृतीयाप्रभृती
नीति सूत्रे करणप्रभृतीनीत्युक्ते नास्त्येव दोषः करणे हन इत्यारभ्य विकल्प इति सन्देहवारणाय व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति परिभा
षास्वीकारादिति वाच्यम् तृतीयाप्रभृतीनीति सूत्रे कर्मणिप्रभृतीत्युक्तेपि दोषाभावात् कर्मण्याक्रोशे कृञः खमुञ् कर्मणि दृशिविदोः इत्यारभ्य विकल्प इति
सन्देहस्य व्याख्यानतो विशेषप्रतिपत्तिरिति परिभाषया वारयितुं शक्यत्वात् तस्मादुपदंशः करणे इत्येव ब्रूयात् इति मनोरमाचिन्त्येत्याहुः वस्तुतस्तु कर्मणिप्रभृती ।

दण्डताडम् समानकर्मकाणामिति किम् दण्डेन चोरमाहत्य गाः कालयति ॥ सप्तम्यां चोपपीडरुधकर्षः । ३।४।४९ । उपपूर्वेभ्यः पीडा-
दिभ्यः सप्तम्यन्तेन तृतीयान्तेन चोपपदे णमुल् स्यात् पार्श्वोपपीडं शेते पार्श्वयोरुपपीडम् पार्श्वाभ्यामुपपीडं व्रजोपरोधं गाः स्थापय-
ति व्रजेन व्रजे उपरोधं वा पाण्युपकर्षं धानाः संगृह्णाति पाणावुपकर्षं पाणिनोपकर्षं

न्यतरस्यामित्युक्ते उपमाने कर्मणि चेत्यतः कर्मणीत्यनुवर्त्य उपदंश इत्येव सूत्रमिति स्वीकारपक्षे कषादिषु यथा
विध्यनुप्रयोगोपि विकल्पेन स्यात् मण्डूकप्लुत्याश्रयणं त्वगतिकगतिः उपदंशः कर्मणीति सूत्रस्वीकारपक्षेपि मूलकोपदंश मिति समासस्य वै
कल्पिकत्वात्समासाभावपक्षे मूलकमुपदंशमिति वाक्यं स्यादिष्यते तु मूलकेनोपदंशमिति करणेप्रभृतीनीति मनोरमोक्तौ तु समासाभावपक्षे मूलकेनोपदं
शमिति सिध्यत्येव करणे तृतीयायाः प्रवृत्तेरिति दिक् कालयतीति कालविक्षेपे चुरादिः प्रेरयतीत्यर्थः ॥ ॐ ॥ दण्डताडमिति तड आघाते अयमपि चुरादि पम॰
रिवं सप्तम्यां चो उपपूर्वेभ्य इति सूत्रे पीडादीनां समाहारद्वन्द्वं कृत्वा उपपूर्वः पीडरुधकर्ष इति उत्तरपदलोपी समास इति भावः इह सौत्रं पुंस्त्वं पञ्चम्य १०६

प्रथमेति ज्ञेयं कर्षतिशपा निर्देशः कृषविलेखने इत्यस्य गुणसहितस्योच्चारणात्तत्फलं तु दाद्देर्व्युदासः यद्यपि विलेखन एव सोऽपि पठ्यते· तथापि क्षेत्रविषयकवि-
लेखन एव सम्प्रयुज्यते· पञ्चभिर्हलैः कर्षतीति दर्शनात्· एवञ्च तौदादिकात्कृषेः क्त्वाप्रत्यय एव भवति· क्षेत्रे उपकृष्य हलेनोपकृष्येति· न त्विह णमुलि॥
निस्थितमाकरोत्॥ ६० ॥ समासत्तौ·। केशग्राहमिति· केशेषु ग्रहणमभवत्तु वा मा भूत्· सन्निकर्षप्रतिपादनपरमेतत्· द्व्यङ्गुलोत्कर्षमिति· द्वयोरङ्गुल्योः समाहारो

समासत्तौ ३।४।५० तृतीयासप्तम्योर्धातोर्णमुल् स्यात् सन्निकर्षे गम्यमाने केशग्राहं युध्यन्ते· केशेषु गृहीत्वा हस्तग्राहं हस्ते
न गृहीत्वा प्रमाणे च ३।४।५१ तयासप्तम्योरित्येव द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति द्व्यङ्गुलेन द्व्यङ्गुले वोत्कर्षम् अपादाने।
परीप्सायाम् ३।४।५२ परीप्सा त्वरा शय्योत्थायं धावति द्वितीयायाञ्च ३।४।५३। परीप्सायामित्येव॥· १ ॥· १ ॥

द्व्यङ्गुलं तत्सुरूपस्याङ्गुलेः संख्याव्ययादेरित्यच्समासान्तः द्व्यङ्गुले नोत्कृष्यपरिच्छिद्येत्यर्थः स्वल्पः खण्डः खण्डिका ह्रस्वः खण्डः खण्डिकेति मनोरमा[illegible]
यद्यपि ह्रस्वशब्दो वामनपर्यायतया चेतनेष्वेव प्रायेण प्रयुज्यते· अल्पे ह्रस्वे इति पृथक्सूत्रस्वारस्यात्· तथापि ह्रस्वदीर्घ इत्यादिनिर्देशादचेतनेष्वपि क्वचिद्दृश्य-
तो स्याहुः द्वितीयापरीप्सायामित्येवेति· कथन्तर्ह्यनुदात्तं पदमेकवर्जमिति· न ह्यत्र त्वरा गम्यते· अत्राहुः अस्यां हि परिभाषायां त्वरा विवक्षिता तेनायमर्थः उदात्तः स्वरि-
तो वा यत्र विधीयते· तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्तव्यं न विलम्बितव्यमिति·॥ १ ॥

सि॰ कौ॰ यष्टिग्राहमित्यादि॰ एवं खलु युद्धव्यतिकरेणेपरासन्नं यष्ट्यादिकमपि गृहीत्वा धावन्तीना युधं प्रतीक्षन्त इति भारविः — अस्यपगोरमिति॰ अभिमुखमेत्यर्थः उपपदसंज्ञार्थमि

टी॰ न॰ यष्टिग्राहं युध्यन्ते। लोष्टग्राहं। अपगुरो णमुलि। ६।१।५३। गुरी उद्यमने इत्यस्यैचो वा आत्वं णमुलि। अस्यपगोरं युध्यन्ते। अस्यपगारं। स्वाङ्गेऽध्रु

९७ वे। ३।४।५४। द्वितीयायामित्येव। अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल्। भ्रूविक्षेपं कथयति। भ्रुवं विक्षेपं। अध्रुवे किम्। शिर उत्क्षिप्य। येन विना न

जीवनं तद्ध्रुवं। परिक्लिश्यमाने च। ३।४।५५। सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते णमुल् स्यात्। उरःप्रतिपेषं युध्यन्ते। कृत्स्नमुरः पीडयन्त इत्यर्थः

उरोविदारं प्रतिचस्करे नखैः। ध्रुवार्थमिदम्। विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः। ३।४।५६। द्वितीयायामित्येव। द्वितीयान्ते उपपदे विश्या

दिभ्यो णमुल् स्यात् व्याप्यमाने आसेव्यमाने चार्थे गम्ये। गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः। क्रियायाः पौनःपुन्यमासेवा। नि

त्यवीप्सयोरिति द्विर्वचनं न भवति। समासेनैव स्वभावतस्तयोरुक्तत्वात्। यद्यप्याभीक्ष्ण्ये णमुलुक्त एव तथापि उपपदसंज्ञार्थमासेवायामिह पुन

र्विधिः। गेहानुप्रवेशमास्ते। गेहङ्गेहमनुप्रवेशं। गेहमनुप्रवेशमनुप्रवेशं। एवं गेहानुप्रपातं। गेहानुप्रपादं। गेहानुस्कन्दं। असमासे तु गेहस्कण

मुलक्षणचपर्यायेण द्वित्वं। अस्यतितृषोः क्रियान्तरे कालेषु। ३।४।५७। क्रियामन्तरयति व्यवधत्त इति क्रियान्तरः तस्मिन्व्यावर्त्तमानादस्य

तेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषु उपपदेषु णमुल् स्यात्। द्व्यहात्यासं गाः पाययति। द्व्यहमत्यासं। द्व्यहतर्षं द्व्यहन्तर्षं। अत्यसनेन तर्षणेन च

गवां पानक्रिया व्यवधीयते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः। नाम्न्यादिशिग्रहोः। ३।४।५८। द्वितीयायामित्येव। नामादेश

ति विशिपतीति सूत्रे द्वितीयायामित्यनुवर्तनात्तदन्तस्योपपदसंज्ञार्थमित्यर्थः॥ ॥ ॥ ॥ १माचष्टे। नामग्राहमाह्वयति॰ ॥

अव्यये अयथेति। नयथाभिप्रेतं तथाख्यानम् इत्यर्थः। अप्रियस्य नीचैः कथनं यथाभिप्रेताख्यानम्, तद्विपरीताख्याने इति यावत्। नन्वप्रियाख्याने इत्येव कुतो नोक्तमिति
चेदुच्चैः प्रियस्य नीचैः कथनमपि प्रियाख्यानमेव न त्वप्रियाख्यानमिति। नीचैः कृत्य नीचैः कारं प्रियं ब्रूते इति प्रयोगो न स्यात्। अप्रियस्य नीचैः कथनमप्यप्रिया॥
ख्यानमिति नीचैः कृत्य नीचैः कारमप्रियं ब्रूत इति प्रयोगोपि स्यादित्ययथाभिप्रेताख्याने इत्युक्तमिति। तिर्यक्कृत्वेति। अतः जलादग्रतः स्थितं पार्श्वतः कृत्वा गत इ
त्यर्थः। स्वाङ्गे तस्प्रत्ययो यस्मात्तस्प्रत्ययस्तस्मिन्स्वाङ्गे उपपदे इत्येके। प्रत्ययग्रहणपरिभाषया तस्प्रत्ययान्ते स्वाङ्गे इत्यन्ये। तस चासौ प्रत्ययश्चेति कर्मधारयः

अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ। ३।४।५९॥ अयथाभिप्रेताख्यानन्नाम अप्रियस्योच्चैः प्रियस्य नीचैः कथनं। उच्चैः कृत्य। उ
च्चैः कृत्वा। उच्चैः कारमप्रियमाचष्टे। नीचैः कृत्य। नीचैः कृत्वा। नीचैः कारं प्रियं ब्रूते। तिर्यच्यपवर्गे। ३।४।६०॥ तिर्यक्शब्दे उपपदे कृञः क्त्वा
णमुलौ स्तः समाप्तौ गम्यमानायाम्। तिर्यक्कृत्य गतः। तिर्यक्कारं समाप्य गत इत्यर्थः। अपवर्गे किं। तिर्यक्कृत्वा काष्ठं गतः। स्वाङ्गे तस्प्रत्यये कृभ्वोः
।३।४।६१॥ मुखतः कृत्य गतः। मुखतः कृत्वा। मुखतः कारम्। मुखतोभूय। मुखतोभूत्वा। मुखतोभावम्। नाधार्थप्रत्यये च्व्यर्थे। ३।४।६२॥ ना
धार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलौ स्तः। अनाना नाना कृत्वा। नाना कृत्य। नानाकारं। विनाकृत्य। विनाकृत्वा। विनाकारं।
नानाभूय। नानाभूत्वा। नानाभावं। अनेकं द्रव्यमेकं

तस्प्रत्यये परतो यत्स्वाङ्गं तस्मिन्नुपपदे इति तु प्राञ्चः। तत्र यद्यपि स्वाङ्गमात्रं नोपपदं तथापि तस्मिन्नि
ष्पन्ने तस्प्रत्ययसमुदायपरमिति बोध्यम्। मुखतः कारं मुखतोभूयेति। क्त्वाणमुलोः कृभुवोश्च यथासंख्यं नेष्यते इति भावः। मुखत इत्यत्राद्यादित्वात्सप्तम्यर्थे त
सिः। प्रत्ययग्रहणं किम्। मुखे तस्यतीति मुखतः। तसु उपक्षये क्विप्। धातुत्वादिहात्वसंतस्येति दीर्घो न। मुखतः कृत्वा गत इति काशिकोदाहरणं स्थितं। वस्तुतस्तु प्रत्यय
प्रत्ययपरिभाषयैवेष्टसिद्धेः प्रत्ययग्रहणं सुत्यजम्। नाधार्थ। नाधाविनञ्भ्यामिति विहितौ नानाञौ। धार्थाः द्वित्र्योश्च धमुञिति धमुञादयः। संख्याया विधार्थे धा
निधा प्रत्ययो धार्थको भवतीत्याशयेनोदाहरति॥

कौ॰
सि॰कौ॰ एकधाभूयेत्यादि॰ एवं द्वैधंकृत्य त्रैधंभूय द्वैधभावमित्याद्युदाहर्तव्यम्॰ ननु नानाञौ प्रत्ययौ धा च प्रत्ययः धमुञादिविधौ तु एकाद्धो धमुञन्यतरस्यामित्यतो
टी॰त॰ ध इत्यनुवर्त्य तेषामादेशत्वाश्रयणेऽपि स्थानिवद्भावेन धमुञादिर्धाप्रत्ययो भवतीति किमर्थं प्रत्ययग्रहणमित्याक्षिपति· प्रत्ययग्रहणमिति· यद्यप्युक्तरी
९८ त्या धाग्रहणेन धमुञादेर्ग्रहणं सम्भवतीत्यर्थग्रहणमिह व्यर्थम्॰ तथापि धमुञन्तात्स्वार्थे डदर्शनमिति डप्रत्ययान्तसंग्रहार्थं ग्रहणं· अर्थग्रहणं त्वक्
लनु द्वैधीकृत्येत्यादिप्रयोगः तूष्णीमिति कृञो निवृत्त्यर्थं तूष्णीग्रहणम्॰ अन्वच्यानन्विहा च इत्यकारलोपे चाविति पूर्वस्याणो दीर्घः नूचीरिति निर्देष्टुमु

एकधाभूय। एकधाभूत्वा। एकधाभावं। एकधाकृत्य। एकधाकृत्वा। एकधाकारं। प्रत्ययग्रहणात्किं। हिरुक्कृत्वा। पृथग्भूत्वा। तूष्णीमि भुवः। ३।४। ६३॥ तूष्णीं शब्दे भुवः क्त्वाणमुलौ स्तः। तूष्णींभूय। तूष्णींभूत्वा। तूष्णींभावं। अन्वच्यानुलोम्ये। ३।४। ६४॥ अन्वक्शब्दे उपपदे भुवः क्त्वाणमुलौ स्त आनुकूल्ये गम्यमाने अन्वग्भूय आस्ते अन्वग्भूत्वा अन्वग्भावं अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वास्त इत्यर्थः आनुलोम्ये किं अन्वग्भूत्वा तिष्ठति॥

चितम्॰ तु प्रागपागिति सूत्रे प्रतीचोप्र दितिवत्॰ एवं तिर्यच्यपवर्ग इति सूत्रेऽपि तिरश्चीत्येव निर्देष्टुमुचित मिति चेदत्र के चित्॰ शास्त्रोक्तं कार्यमर्थवदेव भवति अर्थश्च लोके प्रसिद्ध एव गृह्यते॰ अभिव्यक्तपदार्था ये स्वतन्त्रा लौकिका मताः शास्त्रार्थस्तेषु कर्तव्य इति न्यायात्॰ अतोऽनुकरणे न भविष्यतीत्यन्वचीति सम्यगेवेति॰ तच्चिन्त्यम्॰ एवं तर्हि स्त्रियै दीर्घादित्यादावियङादिकं न स्यात्॰ प्रतीचोऽयदित्यपि न स्या द्येदिति· वस्तुतस्तु प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वादन्वचीत्यादिनिर्देशे तु न दोषः· वैकल्पिकत्वञ्च यन्न दते नेभ्य इति सूत्रे न्यदाय त्वस्य वारणादेक

शेषाभावदर्शनाच्चोन्निर्णीयत इति प्रागेव प्रपञ्चितम्‌ अग्रत इत्यादि अन्वक्‌ शब्दस्यानुकूल्यमात्रे विश्रान्ते देशविशेषवाचित्वे नियमो नेति ध्वनयितुमिदम्‌
॥ ❀ ॥ पश्चाताभूत्वेत्यर्थ इति इहात्वक्‌ शब्देनानुकूल्ये ननु कूलो वेति नस्यस्यनेतस्य देशविशेषमात्रे पर्यवसानात्‌ प्रमाणान्तरेण कश्चिदनुकूलालाभेपि अन्व

पृष्ठताभूत्वेत्यर्थः इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितं विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे भट्टोजिदीक्षितकृतिः
सैषा सिद्धान्तकौमुदी प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्द्धं समाप्तं॥

शब्दस्य तत्तन्मपणाव्यापाराभावाममुल्लून किन्तुल्कैव भवतीति व्यवस्था बोध्या इति श्रीपरमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामिचरणसेवकज्ञाने
न्द्रसरस्वतीकृतायां सिद्धान्तकौमुदीव्याख्यायां कृदन्तं समाप्तम्‌ ॥

॥ इतिकृदन्तसमाप्ता ॥

सि. कौ.
वै. सु.
१

॥श्रीगणेशाय नमः॥ सिंदूरेण विराजितं त्रिनयनं दिक्संख्यदोर्भिर्युतं॥ भक्तानुग्रहकारकं प्रमदया श्लिष्टं सदानंदनं अष्टाविंशतिवर्णकैर्व्यसनतां यो वर्जयंतेज
नास्तं देवं गणपं स्मरामि सततं चंद्रार्कचूडं विभुं १ यत्पादादिसमस्तगात्रकमलध्यानेप्रसादेस्थितं मत्यसः प्रमितः परं किरणवानन्वर्थगोवर्द्धनः सोयं पंडितमंड
लोद्भटरत्नबाहीद्रदायणीः श्रीरामांघ्रिनिषेवकः समजनि श्रीमौनिगोवर्द्धनः २ रघुनाथपदारविंदसेवावशतस्तस्य बभूव नंदनः रघुनाथ इतीद्धनामग
श्चारघुनाथांघ्रिनिसेवकः सुधीः ३ बभूवुस्तस्य चत्वारस्तनयास्तु नयाबुधाः महादेवाभिधः श्रेष्ठो महाभाष्यसुभाषितः ४ रामकृष्णद्वितीयोसौ रामकृष्णांघ्रिसेव
कः तृतीयो जयकृष्णोस्मि श्रीकृष्णानामस्तद्भवः ५ श्रीमत्सिद्धांतकौमुद्याः स्वरवैदिकखंडयोः नाम्ना सुनिः यद्याटीकां कुर्वे सुबोधिनीं ६ सुशब्दज्ञानश्रीकुमुदव
नप्रियोतनकरी सदास्वस्तुत्पत्तिप्रसरणपरानंदनकरी कुशब्दध्वांतस्य प्रसभमभिविध्वंसनकरी कृतिर्भूयादेषा बुधजनमनः संगणचरी ७ इयना प्रबंधेन लौ
किकेषु शब्देषु व्याख्यातेष्वपि वैदिकान्व्याख्यानमवशिष्यते नचेदिदमप्रयोजनं रक्षोहागमलघ्वसंदेहाः प्रयोजनमिति वदता भाष्यकारेण वेदरक्षाव्याकरणप्र
भप्रयोजनत्वेन मुख्यतयाभिधानात् ब्राह्मणेन निःकारणः षडंगो वेदोध्येयो ज्ञेयश्चेति वेदार्थज्ञानोपायतया वेदांगत्वेनैव व्याकरणाध्ययनविधानाच्च नन्वेव
मपि वैदिकशब्दानां लौकिकशब्दाभिन्नत्वात्तदनुशासनेनैव सिद्धे किमर्थं तेषामनुशासनमिति चेन्न लौकिकशब्देभ्यो भिन्ना अपि वैदिकशब्दाः संति तद्यथा त्म त्मनः
नादेवेषु गच्छभारग्भ्यामि गेदृत्वारयो वेदे दृश्यंते लोके तु आत्मना जहार गृह्णामीत्यादयः अत एव भाष्यकारो लौकिकेभ्यो वैदिकान्भेदेन व्यपदिशति अ १
थशब्दानुशासनं केषां शब्दानां लौकिकानां वैदिकानां चेति तेषामाख्यानमावश्यकमिति मनसि विभाव्याह ॥ ६ ॥ ॥ ॥

छन्दसीत्यादि॥ ॥पुनर्वसुशब्देनोद्भूतावयवस्य ज्योतिः समुदायस्याभिधानाद् द्वयोर्द्विवचने प्राप्ते एकवचनं विधीयते तदाह॥ द्वयोरित्यादि वा स्यादिति। द्वयोरेकवचनं वा स्यादित्येतद् व्याख्यायामित्यतः अन्यतरस्यामित्यनुवर्तनात्। लोके त्विति गगनाविव दिवः पुनर्वसू इत्यादौ॥ विशाखयोश्च प्राग्वदिति द्वयोरेकवचनं वा स्यादित्यर्थः॥ विशाखेति अमरस्तु विशाखेति प्रयुञ्जानो द्विवचननियमं नेच्छति सूत्रं तु छन्दसीनं २ षष्ठीयुक्तश्छन्दसि वा पतिः समास एवेत्यतः पतिरिति वर्तमाने पतिः समास एवेति नियमाद् समासेन प्राप्नोतीति वचनमारभ्यते पतिनेति घित्वाद् आङो नेतिना भावः षष्ठीति किम् मया पत्या जरदष्टिर्यथासः छन्दसीति किम् ग्रामस्य पत्ये योगं विभजेति षष्ठीयुक्तश्छन्दसीति उक्त एवार्थः ततो वा छन्दसीति निवर्तते यावदिह शास्त्रे कार्यं तच्छन्दसि वा भवति तदाह तेनेत्या।

॥ॐ॥ श्रीगणेशाय नमः॥ छन्दसि पुनर्वस्वोरेकवचनम् १।२।६१ द्वयोरेकवचनं वा स्यात्। ।पुनर्वसुर्नक्षत्रम्। पुनर्वसू वा। लोके तु द्विवचनमेव॥ विशाखयोश्च १।२।६२ प्राग्वत्। विशाखा नक्षत्रं। विशाखे॥ षष्ठीयुक्तश्छन्दसि वा १।४।९ षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात्। क्षेत्रस्य पतिना वयम्। इह वेति योगं विभज्य छन्दसीत्यनुवर्तते। तेन सर्वे विधयश्छन्दसि वैकल्पिकाः। बहुलं छन्दसीत्यादिरस्यैव प्रपञ्चः। यचि भम्॥ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्॥ नभसा तुल्यं नभस्वत्। भत्वात् रुत्वाभावः। अङ्गिरस्वदङ्गिरः। मनुष्वदग्ने। जनेरुसीति विहित उसिप्रत्ययो मनेरपि बाहुलकात्॥ वृषण्वस्वश्वयोः॥ वृषन् वर्षकं वसु यस्य सः वृषण्वसुः। वृषा अश्वो यस्य स वृषणश्वः। इहान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तो भत्वाद् बाध्यते। अत एव पदान्तत्वेन णत्वनिषेधोऽपि न। अल्लोपोऽन इत्यल्लोपो नाभत्वात्॥

॥ दिनान नभोऽङ्गिरो नभस् अङ्गिरस् मनुष् एषां वतिपरे भत्वं वक्तव्यमित्यर्थः नभस्वदिति तेन तुल्यमिति वतिः भत्वफलमाह रुत्वाभाव इति ससजुषो रुरिति प्राप्तस्य तत्र हि पदस्येत्यनुवर्तते अङ्गिरसा तुल्यमङ्गिरस्वत् अत्रापि देहलीदीपकन्यायेन रुत्वाभाव इति संबध्यते मनुष्वदिति मनुषा तुल्यम् अत्र भत्वादादेशप्रत्यययोरिति षः पदसंज्ञायां तु रुत्वं स्यात् न तु षत्वं अपदान्तस्येति वचनात् बाहुलकादिति बहुला

सि॰ कौ॰ वै॰ सु॰ २

स्वातीति बहुलम् । स्वाम्नादाने । अस्मादातोनुपसर्गे के इति कः वहुलं स्वभावो बाहुलकं मनोज्ञादित्वाद्वुञ् वृष वृषणित्यत्र ह्रस्वस्य योऽम्परतो भं स्यात् निपाताः नान्येतानि छन्दोविषयाणीति कैयटः वृषण्वसुरिति लोके वृषवसुः वृषाश्वः नलोपः प्राप्तइति नलोपः प्रातिपदिकान्तस्येत्यनेन अतएवेति भत्वादेवेत्यर्थः अनंगत्वादिति अल्लोपोन इत्यत्रांगस्येत्यधिकारात् ३ ॥ ॥ अयस्मादीनि आनन्तर्यादुसंज्ञाद्वारेणैव निपातनं प्राप्तमित्याह संज्ञाद्वयमिति नन्वनन्तरस्यैति न्यायं संबाधित्वोभयसंज्ञाविधाने किं प्रमाणमित्याशंक्याह तथाचवार्त्तिकमिति कुर्त्वमिति चोः कुरित्यनेन जश्त्वाभावइति झलां जशोन्त इति प्राप्तस्य ऋक्कुमाति अयस्मयादिषु अर्कतेत्यादयः समुदाया एव बोध्याः तेन जस्त्वमस्तु कुत्वं माभूदिति वैपरीत्येन प्रसज्यतेति बोध्यम् नैनमिति पाचामिना प्रभवन्तेषु पदेनं वि

अयस्मयादीनि छन्दसि । १।४।२० एतानि छन्दसि साधूनि । भपदसंज्ञाधिकारा यथायोगं संज्ञाद्वयं बोध्यं तथा च वार्त्तिकम् । उभयसंज्ञान्यपीति वक्तव्यमिति ॥ सस्तुष्टभा सत्रचकना ग सेना । पदत्वात्कुत्वं । भत्वाज्जस्त्वाभावः । जश्त्वविधानार्थास्याः पदसंज्ञाया भत्वसामर्थ्येन बाधात् । नैनं हि न्वंत्यपि वाजिनेषु । अत्र पदत्वात् जश्त्वम् । भत्वात्कुत्वाभावः ॥ ते प्राग्धातोः ॥ छन्दसि परेऽपि १।४।८१ व्यवहिताश्च १।४।८२ हरिभ्यां याहो क आ । आ मन्द्रैरिन्द्रहरिभिर्याहि । इन्विभवतिभ्याञ्च । आभ्यां परो लिट् कित् । समीधे दस्युहन्तमम् । पुत्र ईधे अथर्वणः । बभूवादिदमन्यत्रारव्या तम् । इन्धेश्छन्दो विषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थकमिति । इति प्रथमोऽध्यायः ॥ हंसेन हिम्वंतिविवदि तुनगच्छतीत्यर्थः ने

भावे व्याख्यातम् अस्यापवादमाह छंदसीत्यादि गत्युपसर्गसंज्ञकाश्छंदसि परे प्रयोक्तव्याः ॥ ५ अपिशब्दात्पूर्वे व्यवहिता अपि गत्युपसर्गसंज्ञकाः प्रयोक्त । राम॰

व्याः सूत्रद्वयस्योदाहरणमाह हरिभ्यामित्यादि आयाहीति प्राप्ते तेप्रागित्यत्र संज्ञानियमपक्षो भाष्ये उक्तः ते इत्यनेन प्रादीनुपेत्येतत्पर्यालस्वरूपेणापराम् स्यधा २

तोः प्राक् प्रयुक्तानामेषां पूर्वसूत्रैकवाक्यतया संज्ञाविधानात् अस्मिंश्च पक्षे छंदसि परेपि व्यवहिताश्चेति सूत्रद्वयं न कर्तव्यम् इंधिइंधात्युच्चारेणार्थेन इकारेणनि

ईयुः सुपतिपीपरिति वत् न तु इकुस्तिपाविति इकान्तलोपापत्तेः असंयोगादित्यतः लिट् किदित्यनुवर्तते तदाह लिट् किदिति इंधीत्यासो लिटं कित्त्वादनिदितामिति नलोपः संयोगान्तस्य लोपात् पूर्वेणाप्राप्तो वचनं बभूवेति कित्त्वाद् गुणाभावे भुवो वुगिति वुक् अत्रापि त्वाम् पूर्वेणाप्राप्तो वचनं इदमिति इंधीति सूत्रम् छन्दोविषयत्वादिति अस्य म निमाय इन्धेर्भाषायामिज्यादेश्चानृच्छ इत्याम् भाव्यं छन्दसि तु अमन्त्रे इति प्रतिषेधात् यद्यप्याम् नास्ति तथापि छन्दस्युभयथेति लिटः सार्वधातुकत्वे ङित्त्वात् श्नमीधेद इति नलोपः अम सार्वधातुकार्धधातुकत्वात् छन्दस्युभयथानुविधानात् वुको नित्यत्वादिति परनित्येति परिभाषया परान्नित्यस्य बलीयस्त्वात् कृताकृतप्रसंगित्वेन नित्यत्वात् ६॥ ॥इति प्रा यसो पादः॥ ३॥ तृतीया कर्मणि द्वितीयेत्यतः कर्मणीति वर्तते द्वितीयायां प्राप्तायां तृतीया विधीयते चशब्दात् सापि भवति तदाह कर्मणीति यवाग्वेति अत्र यवागूशब्दात् तृतीया अग्निहोत्रशब्दाच्च द्वितीया अग्निहोत्रशब्दोऽत्र हविर्वाचकः जुहोतिश्च प्रक्षेपणार्थः यवाग्वभिन्नं हविरग्नौ प्रक्षिपतीत्यर्थस्तदाह यवाग्वाख्यमित्यादि भिन्नवि

तृतीया च होश्छन्दसि २।३।३ जुहोतेः कर्मणि तृतीया स्यात् द्वितीया च। यवाग्वाऽग्निहोत्रं जुहोति। अग्निहोत्रशब्दोऽत्र हविषि वर्तते। यस्याग्निहोत्रमधिश्रितममेध्यमापद्येतेत्यादिप्रयोगदर्शनात्। अग्नये हूयत इति व्युत्पत्त्या यवाग्वाख्यं हविर्देवतोद्देशेनाग्नौ प्रक्षिपतीत्यर्थः॥ द्वितीया ब्राह्मणे २।३।६० ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात्। षष्ठ्यपवादः। गामस्य तदहः सभायां दीव्येयुः॥ चतुर्थ्यर्थे बहुलं छन्दसि २।३।६२ षष्ठी स्यात्। पुरुषमृगश्चन्द्रमसे। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। वनस्पतिभ्य इत्यर्थः। षष्ठ्यर्थे चतुर्थीति ॥ वाच्यम्। याश्च खर्वेणापिबति तस्यै खर्वः॥

भक्तावरुद्धत्वेऽपि भिन्नार्थकविभक्त्यनवरुद्धत्वान्नामार्थयोरभेदान्वयः भाष्ये त्वेतत्सूत्रं प्रत्याख्यातं अग्निहोत्रशब्दो ऽग्नावपि वर्तते यस्याग्निहोत्रं प्रज्वलितमिति दर्शनात् हूयतेऽस्मिन्निति व्युत्पत्तेश्च तत्र यदा यवागूशब्दात् तृतीया तदाग्निहोत्रशब्दो ह्यग्नौ वर्तते जुहोतिश्च प्रीणने यवाग्वाग्निं प्रीणयतीत्यर्थः यदा यवागूशब्दाद् द्वितीया तदाग्निहोत्रशब्दो हविषि वर्तते जुहोतिश्च प्रक्षेपणे यवाग्वाख्यं हविर्द्रव्यं प्रक्षिपतीत्यर्थः दिवी यादिवस्तदर्थस्येति वर्तते। तदाह ब्राह्मणेत्यादि सोपसर्गस्य छन्दसि विभाषोपसर्ग इत्यनेन व्यवस्थितविभाषयापि सिद्धे निरुपसर्गार्थ आरम्भः षष्ठ्यपवाद इति दिवे

सि.कौ. वहुलग्रहणाच्चंद्रमसेरुदमोषाय्येइत्यादौ षष्ठ्यभावः १॥ ः॥ यजेर्धातोः करणे कारके छंदसि विषये बहुलं षष्ठी स्यात् ९ बहुलं अदो जग्धी त्यनः अदद् इति लुङ् म
वै. धु. नोरित्यनः घस्लृ इति च अदो बहुलं घस्लादेशः स्यात् छंदसि घस्तामिति अदेर्लुङि रूपम् अडभावइति बहुलं छंदसि न माङ्योगइत्यनेन नचेदं लुङ् सन्निहि
३ तेन नसिद्धमित्याशंक्योदाहरणांतरमाह स ग्धिरिति अदनं ग्धिः अदेः क्तिनि घस्लादेशे घसिभसोर्हलि चेत्युपधालोपे झलो झलीति सलोपः झषस्तथोरिति धत्वम्
घस्य जश्त्वम् न च जश्त्वे कर्तव्ये सलोपस्यासिद्धत्वं न पदांतेति सूत्रेण तस्य तन्निषेधात् ततः समानशब्देन समासे कृते समानस्य छंदस्यमूर्द्धप्रभृत्युदर्केष्विति सूत्रेण

यजेश्च करणे २।४।६३ इह छन्दसि बहुलं षष्ठी। घृतस्य घृतेन वा यजते॥ बहुलं छन्दसि २।४।३९ अदो घस्लादेशः स्यात्। घस्तां नूनम्। सु
ग्धिः सम्धिः इत्यत्र बहुलं छन्दसि २।४।७३ इति लुक्। अडभावः। सग्धिश्च मे॥ हेमन्तशिशिरावहोरात्रे च च्छन्दसि २।४।२८ द्वन्द्वः पूर्ववल्लिङ्गः। हेमन्तश्च शिशिरश्च हेम
न्तशिशिरौ। अहोरात्रे। अदिप्रभृतिभ्यः शपः॥ बहुलं छन्दसि २।४।७३ वृत्रं हनति वृत्रहा। अहिः शयत उपपृक्। अत्र लुङ् न। अदादि
भिन्नेऽपि क्वचिल्लुक्। त्राध्वं नो देवाः। जुहोत्यादिभ्यः श्लुः॥ बहुलं छन्दसि २।४।७६ दाति प्रियाणि चिद्वसु। अन्यत्रापि। पूर्णां विवष्टि॥

समानस्य सः ११ हेमंतशिशिरा परवल्लिंगं द्वंद्वतत्पुरुषयोरिति प्राप्तम् अहोरात्रे इति अहश्च रात्रिश्चेति द्वंद्वे कृते ऽहः सर्वैकदेशेत्यनेन समासांतो अच् यस्ये
ति चेति लोपः रात्राह्नाहाः पुंसीति प्राप्तम् द्वित्वमतंत्रं अहोरात्राणि विदधत् छंदसि किं ऽऽ हेमंतशिशिरे अहोरात्रौ यद्यपि पाठक्रमेणेदं बहुलं छंदसीति
घस्लादेशविधायकसूत्रात्पूर्वं व्याख्यातुं युक्तं तथापि व्यत्ययो बहुलमिति वक्ष्यमाणेन लिंगव्यत्ययविधायकेन गतार्थमिति ध्वनयितुं तथा न व्याख्यातं राम: ३
१२ बहुलं छंदसि बहुलं शपो लुक् स्यात् अदिप्रभृतिभ्य इत्युक्तं ततो न भवति न चैवोदाहरति वृत्रं हनतीत्यादि हंति शेते इति लोके त्राध्वमिति त्रैङ् पालने
श्चेच उपदेशे ऽशीलित्यात्वं त्रायध्वमिति लोके दातीति ददातीति लोके अन्यत्रापीति जुहोत्यादिभिन्नेऽपि श्लुर्भवतीति शेषः बिवष्टीति वशकांतौ अदादिस्था।

न्यतरस्यां निपात्यंते षद्लृ विशरणगत्यवसादनेषु जनी प्रादुर्भावे रमु क्रीडायां एयंतेभ्य एभ्यो लुङि आम् प्रत्ययो निपात्यते चिञ् चयने गुणाद्यभावाम् प्रत्ययो द्विर्व-
चनं कुत्वं च अक इति प्रत्यये कं संबध्यते तदाह आमेवेति अकद्विति कर्त्तो लुङि तिपि च्लेर्मन्त्रे घसेत्यादिना लुक् तिपो हल्ङ्याब्भ्य इत्यादि लोपः सादयामक इति आम्...
लुक् अभ्युदसीषददिति सदेर्ण्यन्ताल्लुङि चङि णौ चङ्युपधाया ह्रस्वः चङीति द्विर्वचनं हलादिः शेषः सन्वल्लघुनीति सन्वद्भावे सन्यत इतीत्वं लघोर्दीर्घ इत्यकर्द्द।
ति वेदे पिपासिकमिदं बोध्यम् विदांकुर्वन्त्विति सूत्रादन्यत्र रस्यां ग्रहणानुवृत्तेः यावयामिति यवजेंपुनाने वाण्यन्तादाशीर्लिङ्याम् क्रियादित्यनुप्रयोगाश्च कि-
यादिति करोतेराशीर्लिङि रूपम् लिङाशिषीत्यार्धधातुकत्वाद्विकरणाभावः रिङ् शयग्लिङ्क्षु इति रिङ् विदामक्रन्निति विदेर्लुङि आम् गुणाभावः लु-
ङं न करोत्यनुप्रयोगश्च ॥ ❁ ॥ गुपेः आप्प्रत्ययाभावस्थले एवेदं सूत्रे केवलस्योच्चारणात् अजूगुपन्मिति गुपू रक्षणे तस्यास्य मिपामिति पसत्तम् तुजादीनां दीर्घो-

गुपेश्छन्दसि ३।१।५० च्लेश्चङ्वा। गृहान जूगुपतं युवं। अगोपायतमित्यर्थः॥ नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ३।१।५१ च्लेश्चङ् न। मा त्वा यतो
जरितुः काममूनयीः। मा त्वाग्निर्ध्वनयीत्॥ कृमृदृरुहिभ्यश्छन्दसि ३।१।५९ च्लेरङ् वा। इदं तेभ्योऽकरं नमः। अमरत्। अदरत्। यत्सानोः सानु-
मारुहत्॥

ऽभ्यासस्यान्यभ्यासस्य दीर्घः अगोपायमिति कृत्वादिडभावे वदव्रजेति वृद्धिः झलो झलीति सिचो लोपः इट्पक्षे अगोपिष्टम् आयप्रत्यये ऽअ-
गोपायिष्टम् इत्यत्र वा च्छन्दसि लोके तु चङ्वर्जयित्वा त्रीण्येवेति विवेकः॥ नोनयति ऊन परिहाने ध्वन शब्दे इल प्रेरणे अर्द गतौ याचने च एभ्यो ण्यन्तेभ्यश्च्लेर्णि-
श्रिदिति प्राप्तश्चङादेशो नेत्यर्थः तत्रोनयत्येलनी चुरादी एयंतो ध्वनयतिरपि चुरादिरदंतो घटादिर्नोन्तश्च अर्दयतिस्तु हेतुमण्यन्तः ऊनयीरिति मध्यमपुरुषैकवचन-
म् नमाङ्योगर्द्दति आट्प्रतिषेधः इदमिदं प्रतिषेधस्य ऋषेर्वचनम् त्वा पत त्वामिच्छतः जरितुः स्तोतुः मम काममभिलाषं माऊनयीः ऊनं मा कार्षीरित्यर्थः ओननदि-
ति भाषायाम् ध्वनयीदिति तिप् नमाङ्योगद्दत्यट्प्रतिषेधः भाषायां तु घटादेरदिध्वनत् चुरादेरदध्वनत् ऐलयीत् आर्दयीत् आर्दिदत् ऐलिलदिति लोके छ-
न्दव च्लिलुङीत्यतः च्लेरिति अस्यानिवर्त्तते। ङितिइरितो वेत्यतो वेत्यनुवर्त्तनेनाह च्लेरित्यादि अकरमिति डुकृञ् करणे मिप् अङि ऋदृशोऽङीति गुणः अमरादि

ति बहुलमाम्नायेऽन्वयेन परस्मैपदम्। अदरदिति दृविदारणे। अरुहदिति रुह बीजजन्मनि प्रादुर्भावे च। लोके तु अकार्षीत्। अमृत। अकारीत्। अकृत्। छंदसि लिटः
[illegible] शब्दाः छंदसि निपात्यन्ते इति क्यपि प्राप्त इति ऋदुपधाच्चेति सूत्रेण आपृच्छ्यमिति प्रच्छ ज्ञीप्सायाम्। ग्रहिज्येति संप्रसारणं प्रतिषीव्येति षिवु तन्तुसंताने
[illegible] उपचाय्यपृडमिति उपचाय्यं च तत्पृडं चेति कर्मधारयः। हिरण्य इति हिरण्येऽभिधेय इत्यर्थः॥ छंदसि एभ्य इति वनषणसंभक्तौ रक्षपालने मंथ

छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृ
डानि ३।१।१२३ कृन्ततेर्निसपूर्वात् क्यपि प्राप्ते ण्यत्। आद्यन्तयोर्विपर्यासः निसः सत्वं च। निष्टर्क्यं चिन्वीत पशुकामः। देवशब्दे उपपदे
ह्वयतेर्जुहोतेर्वा क्यप् दीर्घश्च। स्पर्धन्ते वा उ देवहूये। प्रउत् आभ्यां नयतेः क्यप्। प्रणीयः। उन्नीयः। उत्पूर्वाच्छिषेः क्यप्। उच्छिष्यः।
मृङ् स्तृञ् ध्वृ एभ्यो यत्। मर्यः। स्तर्या। स्त्रियामेवायं। ध्वर्यः। खनेर्यण्यतौ। खन्यः। खान्यः। यजेर्यः। शुन्धध्वं दैव्याय कर्मणे। देवय
ज्यायै। आङ्पूर्वात् पृच्छेः क्यप्। आपृच्छ्यं धरुणं वाज्यर्षति। सीव्यतेः क्यप् षत्वं च। प्रतिषीव्यः। ब्रह्मणि वदेर्ण्यत्। ब्रह्मवाद्यम्। लोके तु वदः।
सुपि क्यप् चेति क्यप्यतौ। भवतेः स्तौतेश्च ण्यत्। भाव्यः। स्ताव्यः। उपपूर्वाच्चिनोतेर्ण्यत् आयादेशश्च पृडे उत्तरपदे। उपचाय्यपृडम्॥ हिरण्य
इति वक्तव्यं। उपचेयपृडमेवान्यत्। मृड सुखने पृड च इत्यस्मादिगुपधलक्षणः कः॥ छन्दसि वनसनरक्षिमथाम् ३।२।२७ एभ्यः कर्मण्युपपदे
इन् स्यात्। ब्रह्मवनिं त्वा क्षत्रवनिं। उत नो गोषणिं धियम्। ये पथां पथिरक्षयः। चतुरक्षौ पथिरक्षी। हविर्मथीनामभि॥ विलोडने एभ्य इत्यु[illegible] वर्त

[illegible]स्याः इन्निति वर्तते तदाह इन् स्यादिति वन षण संभक्तौ इति भ्वादिगणे न सह निर्दिष्टयोरेव ग्रहणं न तु वनु याचने षणु दाने इति तनादिकयोः सानुबंधका[illegible]
निमिति ब्रह्म वनति संभजतीति विवक्षायामिन्। तदंतात् द्वितीयैकवचनं सुषामादित्वात् षत्वम्। पथिरक्षय इति पथानं रक्षयंतीति विग्रहः। पथिरक्षी इति पथानं रक्ष

सि. कौ. वै. सु. ६

क्तिरित्यतः क्तिरिति वर्तते वीरा इति पंचम्यर्थे प्रथमा तदाह वृषादिभ्य इति वृष्टिमिति वृषु सेचने इष्टये इति इषु इच्छायां चतुर्थ्येकवचनम् मतिरिति मन ज्ञाने क्तिन् अनुदा
त्तोपदेशेत्यनुनासिकलोपः वित्तिरिति विद सत्तायाम् कित्वान्न लघूपधगुणः वीतये इति वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु रातौ इति रा दाने ॥ ॥ छन्दसि लुङ्ल
ङ्लिटः अत्र हरदत्तेषु धातुसंबन्धो मृग्यः आगमदिति गम्लृ गतौ पुषादीति लृदित्वादङ् अकरमिति कृमृदृरुहिभ्यश्छन्दसीति च्लेरङ् ऋदृशोऽङीति गुणः अत्र लेनीति
अवरणे लङ् मादिभ्यः आईड् हल्ङ्यापो रितीत्वम् इतश्च लेटो डाटाविन्यतः लेट इति वैतोऽन्यत्रेत्यतो वेति चानुवर्ततेतदाह ॥ ॥ लेट इत्यादि लेटो आगमौ स्त इति चपप

छन्दसि लुङ्लङ्लिटः । ३।४।६ । धात्वर्थानां सम्बन्धे सर्वकाले घ्वेते वा स्युः । पक्षे यथास्वमन्ये प्रत्ययाः । लुङि । देवो देवेभिरागमत् । लोडर्थे लुङ् । इदं तेभ्यो करं नमः । लङ् । अग्निमद्य होतारमवृणीतायं यजमानः । लिट् । अद्य ममार । अद्य म्रियत इत्यर्थः ॥ लिङर्थे लेट् । ३।४।७ विध्यादौ हेतुमदादौ चोपातो लेट् स्याच्छन्दसि ॥ सिब्बहुलं लेटि । ३।१।३४ । इतश्च लोपः परस्मैपदेषु । ३।४।९७ । लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु ॥ लेटोऽडाटौ । ३।४।९४ । लेटः अट् आट् एतावागमौ स्तस्तौ च पितौ ॥ सिब्बहुलं णिद्वक्तव्यः ॥ ॥ वृद्धिः । प्रण आयूंषि तारिषत् । सुपेशसस्करति जोषिषद्धि । आसाविषदंशोना[?]य । सिपः लोपस्य चाभावे पतानि दिद्युत् । प्रियः सूर्ये प्रियो अग्ना भवाति ॥ स उत्तमस्य । ३।४।९८ । लेडुत्तमसकारस्य वा लोपः स्यात् । करवाव करवावः । टेरेत्वं ॥ आत ऐ । लेट आकारस्य ऐः स्यात् । सुतेभिः सुप्रयसा मादयैते । आतामित्याकारस्य ऐकारः । विधिसामर्थ्यादाट ऐत्वं न । अन्यथा हि सिटमेव विदध्यात् । यायजातिय जात इति ॥

येण न तु यौगपद्येन आड्विधिसामर्थ्यात् अन्यथा सवर्णदीर्घकृते विशेषाभावात् आडुत्तमस्येति सूत्रान्मंडूक
प्लुत्यापि वेत्यनुवर्तते इत्याशयेनाह तौ च पिताविति तत्फलं तु विकरंदसीउर्वरा सुव्रते तेइत्यादिषु गुणः ॥ ॥ वृद्धिरिति अचो ञ्णितीत्यनेन तारिषदिति तॄ प्लवनतर
णयोः तिपइकारलोपः सिप् इट् जोषिषदिति जुषी प्रीतिसेवनयोः अनुदात्तेत्त्वात्त्वयेन परस्मैपदम् असाविषदिति आङ्पूर्वो षुप्रसवैश्वर्ययोरित्यस्माल्लेट् पतानीति
पतॢ पतनेतिप् आडागमः करवावेति कृञो लेटो वस् तनादिकृञ्भ्य इति उः गुणः रपरः लेटो डाटावित्याट् तस्यापित्वेनाङित्त्वाद्विकरणस्य गुणः अत उत्सार्वधा

स्व: ६

नकच्छन्दस्युक्ताभावश्च मदीहर्षेणिच् तदंताल्लेट् आतामित्यनेनाह टेरेत्वमिति टित आत्मनेपदानामित्यनेन आकारस्येति प्रथमस्येत्यर्थः द्वितीयस्य टित आत्मनेपदाना
मित्यनेनैत्वमेव नित्यत्वात् न च शब्दान्तरप्राप्त्याऽनित्यत्वं कृताकृतप्रसंगित्वमात्रेण कचिन्नित्यताश्रयणात् उत्तरसूत्रेऽन्यत्रेति लिङ्गाच्च आट एत्वन्नेत्युक्तेन स्यफ
लमाह यजातै यजातै इति यज देवपूजादौ लेट् आडागमः ॥ ॥ वैतोऽन्यत्र किमपेक्ष्येत्याकांक्षायां पूर्वसूत्रविषयादिति लभ्यते सन्निधानात् तदाह आत
इत्यादि ईशै इति ईश ऐश्वर्ये उत्तमैकवचनमिट् इतश्च लोपो नास्ति परस्मैपदेषु इत्युक्तेः टेरेत्वे तस्य ऐः गृह्यांता इति ग्रहेः कर्मणि लेट् झः तस्याडागमः यक्
ग्रहिज्येति संप्रसारणं टेरेत्वं पूर्ववद्वैत्वम् पणबन्ध इति यदि मे भवानिदं कुर्यान्न हीदमहं दास्यामीति समयकरणं पणबंधः आशंकासंभावना अहमेवेति त्रि

वैतोऽन्यत्र। ३।४।९६ लेट एकारस्य ऐः स्यात्। आ वै इत्यस्य विषयं विना। प्रभूनामीशै। यहा गृह्यान्तै। अन्यत्र किम्। सुप्रयसा मादयैते॥ उप
सम्वादाशङ्कयोश्च ३।४।८ पणबन्धे आशङ्कायां च लेट् स्यात्। अहमेव पशूनामीशै। नेज्जिह्मायन्तो नरकं पताम॥ हलः श्नः शानज्झौ॥ छन्दसि शा
यजपि। ३।१।८४ अपि शब्दाच्छानच्। हृग्रहोर्भश्छन्दसीति हस्य भः। गृभाय जिह्वया मधु। बधान देव सवितः। अनिदितामिति बध्नाते र्नलोपः। गृभ्
णामि ते। मध्वा जभार॥ व्यत्ययो बहुलम् ३।१।८५ विकरणानां बहुलं व्यत्ययः स्यात् छन्दसि। आण्डा शुष्णस्य भेदति। भिनत्तीति प्राप्ते। जरसा मरते पतिः
। म्रियत इति प्राप्ते। इन्द्रो वस्तेन नेषतु। नयतेर्लोट् शप्सिपौ द्वौ विकरणौ। इन्द्रेण युजा तरुषेम वृत्रं। तरेमेत्यर्थः। तरतेर्विध्यादौ लिङ्। उः शिपूश

पुरविजयेदैवैः प्रार्थितस्य रुद्रस्येदम्वचनम् पशवः संसारिणः नेदिति इत्वद् आशंकायां नयति जिह्माचरणेन नरकपातः स ॥ पूचेति त्रयो विकरणाः ॥
माभूदित्यर्थः पताम इति सउत्तमस्येति सलोपः छंदसि शायच् छंदसि श्नः शायजप्यादेशः स्याद्धौ परे गृभायेति ग्रह उपादाने लोटः सेर्हिः क्र्यादिभ्यः श्ना ग्रहि ....
रणम् बधानेति बंध बंधने अतो हेरिति लुक् प्रसंगात् हृग्रहोर्भश्छंदसीत्यस्योदाहरणमाह गृभ्णामि इति जभारेति हृञ् हरणे लिटो णलि वृद्धौ हस्य भः गृह्णामि
हारेत्यर्थः इत्भेदतीति भिदिर् विदारणे रौधादिकः श्नमि प्राप्ते शप् म्रियत इति मृङ् प्राणत्यागे तुदादिभ्य इति शे कृते रिङ् शयग्लिङ्क्षु इति रिङादेशः इयङ नेष

सिद्धं बाहुलकात्। एतेन सेमामविड्ढि इत्यादि व्याख्यातम्। अवरक्षः अस्मात् लोटि शपि प्राप्ते बाहुलकात् श्लुः। हुझल्भ्यो हेर्धिः षत्वं ष्टुत्वम्। जश्त्वम्। नरुषेमेति नरुषम
सिति जातिया सुट् लिङ्। सलोपोऽनन्त्यस्येति। ङिनः अतो येयः लोपो व्योर्वलि। आद्गुणः। अत्र प्रत्ययान्तस्य सिपं प्रत्यङ्गत्वात् सार्वधातुके इति गुणः प्राप्तः पित्त्वं ...
पित्त्वपूपधगुणश्च प्राप्तो बाहुलकान्न भवति॥ ॥ सुप्तिङि ति शास्त्रकृत्पाणिनिराचार्य एषां सुप्रभृतीनां व्यत्ययमिच्छति सोऽपि तथा विधो व्यत्ययो बाहुलकेन सि
ध्यति। बहुलस्य भावो बाहुलकं मनोज्ञादित्वाद्वुञ्। न तु पुनर्बहुलशब्दस्य प्रवृत्तिनिमित्तम्। बहुर्थादानत्वं च शब्दो हेतौ यस्मादेवमुक्तमकारो व्यत्ययो बहुलग्रहणेन

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन॥१॥ धुरि दक्षिणायाः। दक्षिण
स्यामिति प्राप्ते। चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते। उपग्रहः परस्मैपदात्मनेपदे। ब्रह्मचारिणमिच्छते। इच्छतीति प्राप्ते। प्रतीपमन्य
ऊर्मिर्युध्यति। युध्यत इति प्राप्ते। मधोस्तृप्ता इवासते। मधुन इति प्राप्ते। नरः पुरुषः। अधा स वीरैर्दशभिर्वियूयाः। वियूयादिति प्राप्ते। कालः का
लवाची प्रत्ययः। श्वोऽग्नीनाधास्यमानेन। लुटो विषये लृट्। तमसो गा अदुक्षत्। अधुक्षदिति प्राप्ते। मित्रं वयं च सूरयः। मित्रा वयमिति प्राप्ते। स्व
रव्यत्ययस्तु वक्ष्यते। कर्तृशब्दः कारकमात्रपरः। तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः। अन्नादाय। आधारविषये अच्। अवग्रहे विशेषः। य
ङेयशब्दादारभ्य लिङ्याशिष्यङ् इति ङकारेण प्रत्याहारः। तेषां व्यत्ययो भेदतीत्यादिरुक्त एव॥

पाद्गति। यूमिश्रणे विपूर्वः। आशिषि लिङ्। आधास्यमानेनेति। आङ्पूर्वाद्धधातेर्लृटः सद्वेत्यनेन शानजादेशः। स्यतासी इति स्यः। आनेमुगिति मुक्। मित्रं वयमिति द्वि॥ वसिध्यति तस्माद्बहुलग्रहणं कृतमित्यर्थः। वियू
धिसहस्वव्यत्ययः स्वरव्यत्ययस्त्विति गवामिव श्रियसे इत्यत्र तुमर्थे इत्यनेन कसेनिकृतेन्नित्यादिरिति आद्युदात्ते प्राप्ते व्यत्ययेन मध्योदात्तता कृत्तद्धितानामिति तेषां
मेवीत्यतीत्यादो विधीयमाना नाठमादीनां देवतादिकर्तृत्वादेवमुक्तम्। न त्विह कारकवाचित्वेपाग्रहः कृत्तद्धितमात्रे तात्पर्यात्। तथा च किमो विहितोऽतिर्यञ्चः।

वेविमेति वचेराशीर्लिङो मस् अङ् वचउमू यासुट् छन्दस्युभयथेति लिङः सार्वधातुकसंज्ञाप्यस्तीति तेन यासुट इयादेशः बलिलोपः ५० आदृपदार्थे प्रयुज्यमानाः शब्दा एवं
ति मंतरेणापि वन्तर्थं गमयन्तीति गौर्वाहीक इतिवदित्याशयेनाह लिड्वदिति किकिनौ भवतः लिट्प्रत्ययस्य भवतीत्ययमर्थस्तु न भवतीति तथाहि सति लिट् किकिनद्त्यो
वक्ष्यमाणं बभ्रिरिति भृञ् अस्मात् किः लिड्वद्भावाद्द्वित्वं किकिनोः स्थानेतिवादयस्तु न लिड्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात् न लोकाव्ययेति षष्ठीनिषेधे
वज्रं शब्दाद्द्वितीया जघ्निरिति गमहनेत्युपधालोपः जघ्निरिति हो हन्तेरिति कुत्वं जज्ञिरिति श्चुत्वं ज नोर्ज्ञः ननु लिड्वद्भावे सत्यसंयोगाल्लिट् किदित्येव सिद्धे कित्वकरणमनर्थ

लिङ्याशिष्यङ्।३।१।८६। आशिर्लिङि परे धातोरङ् स्याच्छन्दसि। वचउमू। मन्त्रं वोचेमाग्नये॥ दृशेरग्वक्तव्यः॥ पितरं च दृशेयं मातरं च। अङि तु ऋदृशोऽङि गुणः स्यात्॥ छन्दस्युभयथा।३।४।११७ धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात्। वर्धन्तु त्वा सुष्टुतयः। व र्धयन्त्वित्यर्थः। आर्धधातुकत्वाण्णिलोपः। विशृण्विरे। सार्वधातुकत्वात् श्नुः श्नुभावश्च। हुश्नुवोरिति यण्॥ आदृगमहनजनः किकिनौ लिट् च।३।२।१७१ आदन्तादृवर्णान्ताद्गमादेश्च किकिनौ स्तः तौ च लिड्वत्। बभ्रिर्वज्रम्। पपिः सोमम्। ददिर्गाः। जग्मिर्युवा। जघ्निर्वृत्रममित्रियम्। जज्ञिः। लिड्वद्भावाद्द्वित्वम्। ऋच्छत्यृतामिति गुणबाधनार्थं कित्त्वं बहुलं छन्दसीत्युत्वम्। ततुरिः। जगुरिः॥ तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः।३।४।९। से। वक्षे रायः। सेन्। ता वामेषे। असे। शरदो जीवसे धाः। असेन्नित्याद्युदात्तः। क्से। प्रेषे। कसेन्। गवामिव श्रियसे॥ अध्यै। अध्यैन्। जठरं पृणध्यै। पक्षे आद्युदात्तम्। कध्यै। कध्यैन्। आहुवध्यै। पक्षे नित्स्वरः। शध्यै। राधसः सह मादयध्यै॥ शध्यैन्। वायवे पिबध्यै। तवै। दातवा उ। तवेङ्। सूतवे। तवेन्। कर्तवे॥

कमित्याशङ्क्येनाह लिड्वद्भावादिति असंयोगाल्लिट् किदिति कित्त्वं सिद्धमिति भावः आदिति मुखसुखार्थो दकारः
ननु तकारः तेन तात्परत्वाभावाद्दीर्घस्यापि ऋकारस्य ग्रहणं तदाह ततुरिर्जगुरिरिति तॄ प्लवनतरणयोः गॄ निगरणे आभ्यां किः द्वित्वात्परत्वाद्बहुलं छन्दसीत्युत्वेऽप्रा
प्ते द्विर्वचनेऽचीति निषेधादुत्वाभावे द्वित्वम् उरदत्वम् उत्तरस्योत्त्व ५१ तुमर्थे तुमुनोऽर्थे तुमर्थो भावः ननु कर्तरि कृदिति वचनात्कर्तरि तुमुनो विधानात्कथं भावे

सि॰कौ॰ ध्यै इति चेच्छृणु अध्ययन्कृतो भावे इति वचनात् तुमुनो भावे विधानात् तुमर्थे पञ्चदश प्रत्ययाः भवंति वक्षे इति वच से कुत्वं षत्वं कषसंयोगे क्षः एषे इति इणो गुणः
वै॰ नकारे क्रित्यादिर्नित्यमित्याद्युदात्तार्थः प्रेषे इति इणः से कित्त्वाद्गुणे आद्गुणः श्रियसे इति इयङ् नित्त्वादाद्युदात्तः इह मंत्रे मध्योदात्तः पठ्यते तत्र बाहुलकात्प्र-
८ त्ययस्वरो बोध्यः आहुवध्यै इति जुहोतेरुवङ् मादयध्यै इति मदी हर्षे ण्यन्ताद्ध्यै प्रत्ययः तस्य भाववाचि सार्वधातुकत्वात् सार्वधातुके यकि प्राप्ते व्यत्ययेन
शप् गुणायादेशौ पिबध्यै इति अत्रापि यक्प्रसंगे व्यत्ययेन शप् पाघ्रेति पिबादेशः दामनवा इति ददातेस्तवै आयादेशौ लोपः शाकल्यस्येति यलोपः सूतवे इति ङि-
त्त्वान्न गुणः कर्तवे इति कृञो गुणः कर्तुमित्यर्थः॥ ॥ प्रयै प्रपूर्वो यातेः कै प्रत्ययः रुहेरिष्येन अपूर्वो व्यथेश्च दृशे योगविभागश्चिन्त्यप्रयोजनः दृशेः ख्यातेश्च के प्रत्ययः

प्रयै रोहिष्यै अव्यथिष्यै।३।४।१०। एते तुमर्थे निपात्यन्ते। प्रयातुं रोढुं अव्यथितुमित्यर्थः॥ दृशे विख्ये च।३।४।११। द्रष्टुं विख्यातुमित्यर्थः॥ शकि णमुल्कमुलौ।३।४।१२। शक्नोतावुपपदे तुमर्थे एतौ स्तः। विभाजं नाशकत्। अपलुपं नाशकत्। विभक्तुमपलोप्तुमित्यर्थः॥ ईश्वरे तोसुन्कसुनौ।३।४।१३। ईश्वरो विचरितोः। ईश्वरो विलिखः। विचरितुं विलेखितुमित्यर्थः॥ कृत्यार्थे तवैकेन्केन्यत्वनः।३।४।१४। न म्लेच्छितवै। अवगाहे। दिदृक्षेण्यः। भूर्यस्पष्टकर्त्वम्॥ अवचक्षे च।३।४।१५। रिपुणा नावचक्षे। अवख्यातव्यमित्यर्थः॥

॥ कित्त्वाद्दृशेर्न गुणः ख्यातेरालोपश्च विभाजमिति विपूर्वाद्भजतेर्णमुल् लुपि-
त्वादुपधाया इति वृद्धिः अपलुपमिति लुप्लृ छेदने कित्त्वाद्गुणाभावः ईश्वरे ईश्वरशब्दे उपपदे धातोस्तोसुन्कसुनौ स्तश्छन्दसि विचरितोरिति चर गतौ विट् विलि-
ख इति लिख विलेखने कित्त्वान्न गुणः क्त्वातोसुन्कसुन इत्यव्ययत्वाद्व्ययादाप्सुप इति विभक्तेर्लुक् न लुमतेति निषेधादत्र सन्नस्येति दीर्घो न कृत्यार्थे कृत्यानामर्थो भावकर्मणी
तयोरेवेति कृत्यानां भावकर्मणोर्विधानात् तत्र एते प्रत्ययाः स्युः यद्यपि कृत्यानामर्थो भव्यगेयेत्यादौ कर्तापि वर्तते स्नानीयमित्यादौ करणादिरपि तथापि न तत्र कृत्यत्वे- रामः
न कर्त्रादिषु विधानं किं तर्हि स्वरूपेण कृत्यतया विधानं तु भावकर्मणोरेवेति भावः न म्लेच्छितवै इति न म्लेच्छितव्यमित्यर्थः अवगाहे इति गाहू विलोडने दिदृक्षेण्य इ- ८
ति दृशेः सन्नन्तात्केन्यः अतो लोपः कर्त्वमिति कृञः त्वन् कृत्यमित्यर्थः यद्यपि तुमर्थे सेसेनित्यनेन तुमर्थे तवै विहितस्तथापि भावमात्रविषयकर्मकारके तवेङ् च अस्पष्टिः

तुमर्थम् अवचक्षे अवपूर्वाच्चक्षिङ एश्प्रत्ययो निपात्यते शित्वात्सार्वधातुकत्वं तेन ख्याञादेशो न ॥ ॥ भावलक्षणे । कृत्यार्थे इति निवृत्तम् तुमर्थ इति
वर्तते प्रकृत्यर्थविशेषणं भावलक्षणग्रहणं भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यस्तुमर्थे तोसुन् स्याच्छन्दसि संस्थानादीनामवधित्वेन लक्षणं भाव
स्य समाप्तेरिति संपूर्वो हि तिष्ठतिः समाप्तौ रूढः संतिष्ठते पिंडपितृयज्ञ इत्यादौ तथादर्शनात् आतमितोरिति तमुन्नन्तो सृपितृदोः सृप्लृ गतौ उतृदिर् हिंसानादरयोः
भावलक्षणेर्थे वर्तमानयोः सृपितृदोस्तुमर्थे कसुन् विसृप इति गमनादित्यर्थः ॥ इति तृतीयः ३ राज्ञेश्च जसो नजसिंअजासत्वस्मिन् इकार उच्चारणार्थः आहोप्रभूतादिभ्य

भावलक्षणे स्थेणकृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् । ३।४।१६ । आसंस्थातोः सीदन्ति । आसमाप्तेः सीदन्तीत्यर्थः । उदेतोः । अपकर्तोः । प्रवदितोः । प्रच
रितोः । होतोः । आतमितोः । काममाविजनितोः सम्भवामः ॥ सृपितृदोः कसुन् । ३।४।१७ । भावलक्षणे इत्येव । पुरा क्रूरस्य विसृपो विरप्शिन् । पुरा जतृभ्य
आतृदः ॥ इति तृतीयोध्यायः ॥ ३ ॥ रात्रेश्चाजसौ । ४।१।३१ । रात्रिशब्दान्ङीप् स्यात् अजस्विषये छन्दसि । रात्री व्यख्यदायती । लोके तु कृदिकारादिति
ङीष्यन्तोदात्तः ॥ नित्यं छन्दसि । ४।१।४६ । वह्वादिभ्यश्छन्दसि विषये नित्यं ङीष् । वह्वीषु हित्वा । नित्यग्रहणमुत्तरार्थम् ॥ भुवश्च । ४।१।४७ । ङीष् स्या
त् छन्दसि । विभ्वी । प्रभ्वी । विप्रसंभ्य इति डुप्रत्ययान्तं सूत्रेऽनुक्रियते । उत इत्यनुवृत्तेः । उवङादेशस्तु सौत्रः । मुद्गलाच्छन्दसि लिच्च । ङीषो लिच्चमानुग
गमः । लित्स्वरः । रथीरभून्मुद्गलानी ॥ इतिवत् छन्दसीति नवृत्तिमिरपटेरवगुंठिताराज्य इति प्रयोगो न स्यात् छंदसीत्युच्यते न चेदं छन्दः अजसाविति निषेधाच्च
किंच वेदेपि राज्य इति प्रयोगो न स्यात् इत्याशंक्याह लोके त्विति तुशब्दोनुक्तसमुच्चयार्थः लोके जसि वेदे चेत्यर्थः कृदिकारादिति राशदिभ्यां त्रिविति व्युत्पत्तिपक्षे क्ति
कारान्तः अव्युत्पत्तिपक्षे तु सर्वतोक्तिन्नर्थादिति ङीष् बोध्यः नित्यम् वह्वादिभ्यश्चेति वर्तते अन्यतो ङीषित्यतो ङीषिति च तदाह वह्वादिभ्य इति नन्वारंभसामर्थ्यादेवनि
त्यत्वे सिद्धे नित्यग्रहणं व्यर्थमित्याशंक्याह नित्यग्रहणमुत्तरार्थमिति भुवः विभ्वी इति विप्रसंभ्यो ड्वसंज्ञायामित्यतो डुप्रत्ययान्तान् ङीष् ननु स्वयंभूरत्रापि स्यादित्याशंक्या
ह डुप्रत्ययान्तमिति ननु डुप्रत्ययान्तानुकरणे प्रमाणं किमतस्त्राह उत इत्यनुवृत्तेरिति वोतो गुणवचनादिति सूत्रात् ननु तर्हि डुप्रत्ययान्तस्य घेर्ङितीति गुणे कृते भोरि

सि·कौ· दत्तमित्यर्थे यत्प्रत्ययो भवति· बर्हिष्यमिति· बृंहतेर्नलोपश्चेतीसुन्प्रत्ययः बर्हिस्तस्माद्यत्· ॥ ॐ ॥ दूतस्य दूतशब्दात्षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत्प्रत्ययः स्यात् भागे
वै· तस्येदमित्यणि प्राप्ते वचनम्· कर्मणि तु दूतवणिग्भ्यां चेत्योपसंख्यानिके ये· दूत्यमित्यादि दूतस्य भागो दूत्यः कर्म दूत्यम् रक्षोयातूनां· षष्ठीबहुवचनान्ताभ्यां रक्षोयातुभ्यां
९० हननीत्यस्मिन्नर्थे यत्स्यात् रक्षेरसुनि रक्षः कमिमनिजनिगमीत्यादिना यातेस्तुन् यातुशब्दो रक्षः शब्दपर्यायः नचविरूपाणामपि समानानामित्येकशेषः स्यादिति वा
च्यम्· बहूनामभिधायि स्वरूपवचनेन सहत्र अभिन्नार्थत्वात्· रक्षस्येति· हन्यतेनया सा हननी रक्षस्या एवं यातव्या· बहुवचनं स्तुतिविशेषं ज्ञापनाय· बहूनां रक्षसां हननेहि
स्तुतिः प्रतीयते रेवती जगती· प्रशंसनं प्रशस्यं· प्रपूर्वाच्छंसु स्तुतावित्यस्माद्भावे क्यप् तदाह प्रशंसने इति· रयिरस्यास्तीति रेवती· रयिशब्दान्मतुप्· छंदसीर इति
वत्वम्· रयेर्मतौ बहुलमिति संप्रसारणं· उगितश्चेति ङीप्· नक्षत्रे गौरादित्वान्ङीष्· जगच्छब्दाद्वर्तमाने वृत्यनेनं शतृवद्भावादुगितश्चेति ङीप्· हविषे हिता हविष्या· उगवा

दूतस्य भागकर्मणी॥४।४।१२०॥ भागो कर्म वा दूत्यं॥ रक्षोयातूनां हननी॥४।४।१२१ याते अग्ने रक्षस्या तनूः॥ रेवतीजगतीहविष्याभ्यः प्रशस्ये॥४।४।१२२
प्रशंसने यत्स्यात्॥ रेवत्यादीनां प्रशंसनं रेवत्यं जगत्यं हविष्यं॥ असुरस्य स्वम्॥४।४।१२३॥ असुर्यं देवेभिर्धायि विश्वं॥ मायायामण्॥४।४।१२४॥ आसु
री माया॥ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः॥४।४।१२५ वर्चस्वानुपधानो मन्त्र आसामिष्टकानां॥ वर्चस्या उपधेयाः॥ ऽदित्याद्यत्· नासापरं

सर्वं हविष्यं यस्येति लोपे कृते हलो यमां यमि लोप इति यलोपः असुरस्य स्वं· असुरशब्दात्षष्ठीसमर्थात्स्वमित्येतस्मिन्नर्थे यत्स्यात् असुर्यमिति नसुरः असुरः सुरप्रतिपक्षः अथवा
असु क्षेपणे असवाति· अस्यतेर्वा असुरः तस्य स्वमसुर्यम्· मायायामण्· मीयतेनयेति माया अभूतार्थप्रकाशनशक्तिः माङ् औणादिको यः तस्याभिधायामसुरशब्दादण्।
स यतोऽपवादः आसुरीति टिड्ढाणञिति ङीप्· तद्वानासां मत्वन्तात्प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्स्यात्· तत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति यत्तदासामिति नि रम: 
र्दिष्टमिष्टकाश्चेत्ताः भवन्ति मतोश्च लुक् वर्चस्वानिति वर्चः शब्दो यस्मिन्मंत्रेऽस्ति स वर्चस्वान्· कुंभेष्टकोपधानमंत्रः भूतं च भव्यं च स्य देवस्य त्वा सवितुः प्रसव इत्यादिकः ९०
उपधीयतेनेनेत्युपधानं चयनरचनमित्यर्थः ऋतव्या इति· ऋतुशब्दो यस्मिन्मंत्रेऽस्ति स ऋतुमान्· स च मधुश्च माधवश्चेत्यादिकः ऋतुमानुपधानो मंत्र आसामिष्टकानां

मयधः स्वार्थिके इति वृत्तिकारस्तु यदेवानुवर्त्तयति न तु यं नक्षत्रात् स्वार्थे इति समूह इति नानुवर्त्तते तेनाऽनिर्दिष्टार्थत्वात् स्वार्थे प्रत्यय उत्पद्यत इत्यर्थः सर्वदेवात् सर्वशब्दा
द्देवशब्दाच्च तातिल् स्यात् शिवशम करशब्दसामानाधिकरण्यात् शिवशमरिष्टस्येत्युभयथा ऽकर्मणीति षष्ठी ॥ ॥इति वैदिकस्य चतुर्थोऽध्यायः॥ सप्तनोऽञ् सप्तन्शब्दा
त्संख्यावाचकादञ् छन्दसि साप्तानीति सप्तन् शब्दादञि नस्तद्धित इति टिलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां जस् जश्शसोः शिः नपुंसकस्येति नुम् उपधादीर्घः नान्तस्य टि
संख्यायास्तदन्तस्य टिलोपार्थम् पंचदशिन इति पञ्चदशाहानि परिमाणमेषामिति डिनिः टिलोपः एतेन त्रिंशिनो मासा व्याख्याताः विंशिनोऽङ्गिरस इति विंशतिर्गोत्राणि परिमा

मधोः ।४।४।१२९। मधुशब्दान्मयडर्थे यत् स्यात् । मधव्यः । मधुमय इत्यर्थः ॥ वसोः समूहे च ।४।४।१४०। चान्मयडर्थे यत् । वसव्यः । अक्षरसमूहे छन्दस
उपसंख्यानम् ॥ छन्दःशब्दादक्षरसमूहे वर्तमानात् स्वार्थे यदित्यर्थः । ओ श्रावयेति चतुरक्षरं अस्तु श्रौषडिति चतुरक्षरं ये यजामह इति पञ्चाक्षरं य
जेति द्व्यक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदशाक्षरश्छन्दस्यः ॥ नक्षत्राद्घः ।४।४।१४१। स्वार्थे । नक्षत्रियेभ्यः स्वाहा ॥ सर्वदेवात्तातिल् ।४।४।१४२। स्वार्थे ।
सविता नः सुवतु सर्वतातिम् । प्रदक्षिणिद्देवतातिमुराणः ॥ शिवशमरिष्टस्य करे ।४।४।१४३। करोतीति करः पचाद्यच् । शिवङ्करोतीति शिवतातिः । याभिः
शन्ताती भवथो ददाशुषे । अथो अरिष्टतातये ॥ भावे च ।४।४।१४४। शिवादिभ्यो भावे तातिः स्याच्छन्दसि । शिवस्य भावः शिवतातिः । शन्तातिः । अरिष्टता
तिः ॥ इति चतुर्थोऽध्यायः ॥ सप्तनोऽञ् छन्दसि ।५।१।६१। तदस्य परिमाणमिति वर्गे इति च । सप्त साप्तान्यसृजत् । प्रनूशतो डिनिश्छन्दसि । तदस्य परि
माणमित्यर्थे वाच्यः ॥ पञ्चदशिनोऽर्धमासाः । त्रिंशिनो मासाः । विंशतेश्चेति वाच्यं ॥ विंशिनोऽङ्गिरसः । युष्मदस्मदोः सादृश्ये वतुब्वाच्यः ॥ त्वावतः पुरू
वसो । न त्वावाँ अन्यः । यज्ञं विप्रस्य मावतः ॥ छन्दसि च ।५।१।६७। प्रातिपदिकमात्रान्नदर्हतीति यत् ॥ णमेषामिति विग्रहे डिनि कृते विंशतेर्डिति तिशब्दलोपे

कृते यस्येति लोपः आंगिरस ॥ अयास्यगार्ग्यगौतमरुत्यादिप्रवरभेदभिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः त्वावत इति त्वमिव त्वावान् तस्य त्वावतः मद्
मिवेति मावान् तस्य मावतः प्रत्ययोत्तरपदयोश्चेति त्व मादेशौ आ सर्वनाम्न इत्यात्वम् ॥ ६ ॥ ॥ ६ ॥ ॥

सि॰ कौ॰ सादन्यमिति सदनं गृहमर्हतीति सादन्यः अन्येषामपीति दीर्घः विदथ्यमिति विदथो यज्ञस्तमर्हतीत्यर्थः इद्वत्सरीय इति इद्वत्सरेण निर्वृत्तः इद्वत्सरमधीष्टो भृतो भूतो भावी
वा इद्वत्सरीयः इद्वत्सरे द्वावत्सरश्चाष्टौ पञ्चवर्षे युगे द्वयोर्वर्षयोः संज्ञे एवं संवत्सरपरिवत्सरयोर्द्वावपि सम्परिपूर्वौ सम्परिपूर्वाद्वत्सरशब्दात् अनियतविकाच्छंदसि विषये नि
१२ र्वृत्तादिष्वर्थेषु सः साञ्चाच्छः छंदसि घस् समयस्तदस्य प्राप्तमित्यतस्तदस्य प्राप्तमिति ऋतोरणित्यतः ऋतोरिति चानुवर्तते तदाह ऋतुशब्दादित्यादि ऋत्विय इति सि
द्धेति पदत्वेन भत्वे निरस्ते ओर्गुण इति गुणाभावे यण् उपसर्गात् इत्यधातुशब्देन धातुर्वा व्याक्रियालक्ष्यते स्वार्थः प्रयोजनं यस्य साधनस्य तस्मिन्वर्तमानादित्यर्थः

सादन्यं विदथ्यम्॥ वत्सरान्ताच्छश्छन्दसि।५।१।९१। निर्वृत्तादिष्वर्थेषु। इद्वत्सरीयः॥ सम्परिपूर्वात्ख च।५।१।९२। चाच्छः। सम्वत्सरीणः। सम्वत्सरीयः
।परिवत्सरीणः। परिवत्सरीयः॥ छन्दसि घस्।५।१।१०६। ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे। भागं ऋत्वियः॥ उपसर्गाच्छन्दसि धात्वर्थे।५।१।११८।धा
त्वर्थविशिष्टे साधने वर्तमानात्स्वार्थे वतिः स्यात्। यदुद्वतो निवतः। उद्गतान्निर्गतानित्यर्थः॥ थट् च छन्दसि।५।२।५०। नान्तादसंख्यादेः परस्य डटः
थट् स्यान्मट् च। पञ्चथम्। पञ्चमम्॥ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि।५।२।८९। अपत्यं परिपन्थिनम्। मात्वा परिपरिणो विदन्॥ बहुलं छ
न्दसि।५।२।१२२। मत्वर्थे विनिः स्यात्। छन्दो विन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्। इति दीर्घः। मंहिष्ठमुभयाविनं
शुनमष्ट्राव्यचरत्॥ छन्दसि वनिपौ च वक्तव्यौ॥ ईरथीरभूत्। सुमङ्गलीरियं वधूः। मघवानमीमहे॥ इत्याह धात्वर्थविशिष्ट इति उपसर्गास्य पुनरेवमाव

का: धर्मत उन्नतायां क्रियायां तामेव विशिंषन्ति यथाऽऽगच्छति यत्र तु न श्रूयते तत्र क्रियाविशिष्टसाधनमाहुः यथा निष्कौशाम्बिः यथा च तत्र क्रियापदं न श्रूयते तत्रैव
संख्याद्यादिन्यमर्थं धात्वर्थ इत्युक्तम् यद्वत् तस्य पूरणे इत्यतः डडिति नान्तादसंख्यादेरिति पन दाह नान्तादित्यादि पंचथमिति पञ्चानां पूरणमित्यस्मिन्नर्थे डटि कृ राम॰
ते तस्य थडागमः छंदसि परिपंथिन् परिपरिन् एतौ निपात्येते छन्दसि पर्यवस्थातरि वाच्ये पर्यवस्थाता प्रतिपक्षः सपत्न इत्युच्यते निपातनं चात्र पर्यवस्थातृशब्दात्स्वा १२
निपतयोः वस्थातृशब्दस्य पन्थिपरि एतावादेशौ च निपात्येते बहुलम्॥ ॥अस्मायामेधास्रजो विनिरिति वर्तते तदाह विनिः स्यादिति अष्ट्राविनी अरोः इन्न

शृङ्गस्त्रापर्यायोऽयम् मेखलावी द्वयावी उभयावी रुजावी हृदयावी अत्र हृदयोऽभयहृदयान्यवदीर्घत्वं प्रयोजयन्ति अन्येषां त्वत एव दीर्घत्वात् छन्दसीवनिपौ च
ईवनिपौ ई इति ईप्रत्ययस्योदाहरणमुच्यते रथीरिति रथोऽस्यास्तीति रथीः सुमङ्गलीरिति सुष्ठु मङ्गलमिति सुः पूजायामिति समासः ततोऽनेन मत्वर्थीय ईकारप्र
त्ययः मघवानिति मघं धनं तदस्यास्तीति वनिपि मतुपि तु मघवच्छब्दः ॥ ॥ तयोः तच्छब्देनेदमो हिल् तदोऽश्चेति सन्निहिताविदन्तदोपरामृश्येते तेनदाह इदन्त
योरिति सूत्रे व्यत्ययेन पञ्चम्याः स्थाने षष्ठी यथासंख्यं स्त इति इदम् शब्दात्तच्छब्दात् हिल् इदाद् इति इदम् शब्दाद्दाद् इदमद् इत्यनेनेशादेशः थाहेतौ प्रका
रवचने थाल्तिन्यतः प्रकारवचन इति किमश्चेतितदाह किमस्यास्यादित्यादि कथमग्रामं न एद्धसीति केनहितु नानन्ध रुसीत्यर्थः तस्य प्राग्दिशो विभक्तिरित्यधिकाराद्वि

तयोर्दाहिलौ च छन्दसि । ५।३।२० । इदन्तदोर्यथासंख्यं स्तः । इदा हि व उपस्तुतिम् । तर्हि ॥ था हेतौ च छन्दसि । ५।३।२६ । किमस्थास्याद् हेतौ प्रकारे
च । कथाग्रामं न पृच्छसि । कथा दाशेम ॥ पश्च पश्चा च छन्दसि । ५।३।३३ । अवरस्य अस्तात्यर्थे निपातौ । पश्च हि सः । नो ते पश्चा ॥ तुश्छन्दसि । ५।३।
५९ । तृजन्तात् तृन्नन्ताच्चेष्ठन्नीयसुनौ स्तः । आसुतिं करिष्ठः । दोहीयसी धेनुः ॥ प्रत्नपूर्वविश्वेमात्थाल् छन्दसि । ५।३।१११ । इवार्थे । तं प्रत्नथा
पूर्वथा विश्वथेमथा ॥ अमु च छन्दसि । ५।४।१२ । किमेत्तिङव्ययघादित्येव । प्रतन्नय प्रतरम् ॥ वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि । ५।४।
४१ स्वार्थे । यो नो दुरेवो वृकतिः । ज्येष्ठतातिं बर्हिषदम् ॥ भक्तिसंज्ञायां किमः क इति कादेशः प्रकारवचने उदाहरणमाह कथादाशेमेति केन प्रकारेण ॥

त्यर्थः पश्च पश्चा अवरस्य पश्चभावः अकाराकारौ च प्रत्ययौ निपात्येते अस्तात्यर्थे इति दिक्शब्देभ्यः सप्तमीपंचमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः करिष्ठ इ
ति कर्तृशब्दादिष्ठन् तुरिष्ठेमेयः स्विति तृलोपः ॥ दोहीयसीति अतिशयेन दोग्ध्रीत्यर्थः लिंगविशिष्टपरिभाषया दोग्ध्रीशब्दात्प्रत्ययः भस्याढे इति पुंवद्भावे
नङीपो निवृत्तिः । ततस्तुरिष्ठेमेयः स्विति तृचि निवृत्ते निमित्ताभावात् द्वत्वकुत्वयोरपि निवृत्तिः प्रत्नपूर्व प्रत्नपूर्वे विश्वइमएभ्य स्थाल्स्यात् अमु च किमेत्तिङव्य
याघादित्यप्रकर्षे वर्तमानादमुप्रत्ययो भवति प्रतरमिति प्रकर्षार्थस्य प्रकर्षे तरप् प्रकृष्टतर इतिवत् तदन्तादमुः स्वरादिषु अमु अम् आम् इति पठ्यते तेन तदन्तं

प० म
वै०
१३

स्वाव्ययत्वेसुपोलुक् अत्रो दित्करणमिच एकाचोऽम्प्रत्ययवच्चेत्यत्रास्यग्रहणंमाभूत् यदिस्यात्तर्हि अत्रापिप्रवृत्तंकार्यंतदप्यतिदिश्येत तत्रकोदोषः इहाक्षि यंमन्यमानः यस्येतिलोपः प्राप्नोति॥ ॥ अनसन्तात् अन्नन्तस्योदाहरणमाह ब्रह्मसाममिति असन्तस्याह देवच्छंदसानीति बहुप्रजाः बहुप्रजाइति निपात्यते छन्दसितु प्रजादिति बह्व्यः प्रजायस्येतिबहुव्रीहिः असिच्प्रत्ययः यस्येतिचेत्य कारलोपः अत्वसंतस्येतिदीर्घः रुत्वविसर्गौ छंदसिच वयसिदंतस्यदतृइत्यतोदंत स्यदंतृ इत्यनुवर्ततेतदाह दन्तस्यदतृस्यादिति उभयतोदतइति उभयतोदन्ता यस्येतिविग्रहः हतमाताइति नद्यृतश्चेतिनित्यंकप्प्राप्तः इतिसुब्व्यत्ययोऽध्याय जागारेति जागृनिद्राक्षये लिटिप्रथमपुरुषैकवचनम् दातीतिडुदाञ्दाने लट्शपःश्लुः श्लाविति नित्यद्वित्वेप्राप्तेविकल्पः तूतुजानइति तुजेर्लिटःकानच्

अनसन्तान्नपुंसकाच्छन्दसि।५।४।१०३ तत्पुरुषाट्टच्स्यात्समासान्तः। ब्रह्मसामम्भवतिदेवच्छन्दसानि॥ बहुप्रजाश्छन्दसि।५।४।१२३। बहुप्रजानि र्ऋतिमाविवेश॥ छन्दसिच।५।४।१४२ दन्तस्यदतृस्याद्बहुव्रीहौ। उभयतोदतःप्रतिगृह्णाति॥ ऋतश्छन्दसि।५।४।१५८। ऋदन्ताद्बहुव्रीहेर्नकप्। हतमातायस्यहतमाता॥ ॥इतिपञ्चमोध्यायः॥ ॥एकाचोद्वेछन्दसिवेतिवक्तव्यम्॥ योजागारतमृचःकामयन्ते। दातिप्रियाणि॥ तुजादीनान्दीर्घोऽभ्यासस्य।६।१।७ तुजादिराकृतिगणः। प्रभरातूतुजानः। सूर्येमामहानंदाधारयःपृथिवीम्। सतूताव॥ बहुलञ्छन्दसि।६।१।३४। ह्वः सम्प्रसारणंस्यात्। इन्द्रमाहुवहूतये॥ अचिश्नुधात्वपदादिलोपश्चछन्दसि॥ ऋचत्वे परेश्नुः॥ सम्प्रसारणमुत्तरपदादेर्लोपश्चेतिवक्तव्यम्॥ तृचंसूक्तं।छंदसिकिम्। त्र्यचा नि॥ रयेर्मतौबहुलम्॥ रेवान्। रयिमान्पुष्टिवर्द्धनः॥

देवाः मामहानमिति महपूजायांकानच् तूतावेति तुःसौत्रोधातुः तस्माल्लिट् बहुलंछन्दसिह्वः सं प्रसारणमितिवर्ततेतदाहह्वः संप्रसारणंस्यादिति आहुवेइति आङ्पूर्वात्ह्वेञोलडात्मनेपदोत्तमैकवचनम् बहुलंछंदसीतिशपोलुकिकृते संप्रसारणमुवङादेशः राम: त्र्यचंसूक्तमितितिस्रःऋचोयस्मिन्तत्त्र्यचं ऋक्पूरब्धूः पथामानक्षेइतिसमासान्तोअः रयेर्मतौ रयिशब्दस्यमतौपरतः सम्प्रसारणंस्याच्छन्दसि रेवानिति छन्दसीत्युक्ति १३ वांत्वम् रयिमानिति बहुलग्रहणात्संप्रसारणवत्वयोरभावः॥ ॥ ॥ ॥

चायः कीत्येवायतेर्बहुलं कीत्ययमादेशः स्याच्छंदसि विचक्युरिति कुहो श्चुरिति चुः निचाय्येति चाय पूजानिशामनयोः अस्मात्क्वाप्यनिसमासेसमासेन ल्यप् पूर्वेक्वोल्यपितिल्यप् बादेशाः स्पर्धेलेङ्आथामिति द्विर्वचनंरेफस्य संप्रसारणमकारलोपश्च निपातनात् अस्पर्धेथामितिभाषायाम् अपरे तुअपपूर्वस्यस्पर्धेलेङ्आथामि संप्रसारणमलोपश्च निपातनात् बहुलंछंदस्यमाङ्योगेपीत्यडागमाभावः तन्मते प्रत्युदाहरणमपास्पर्धेथामितिभाषायाम् अर्चेर्वरर्हश्चेति संप्रसारणमलोपश्च निपातनात् ततोद्विर्वचनस्य हलत्वमतआदेरितिदीर्घत्वम् तस्मान्नुड्द्विहलइति नुडागमः आनर्चुरानर्हुरिति भाषायाम् च्युङोलिटीति अभ्यासस्य संप्रसारणमनिटत्वं च निपातनात् चुच्युविषेति भाषायाम् त्यजेर्णलीति त्यजवयोहानौ अभ्यासस्य संप्रसारणं निपात्यते तत्याजेति भाषायाम् आतानइति श्रीञ्पाकेइत्यस्य निष्ठायांश्राभावः श्रिताइति नस्येवश्री

चायः की ॥ ६।१।३५। नाभ्यस्ति विक्युः। निचिक्यरन्या। लिटिडमिरूपं। बहुलग्रहणाद्वृत्तैर्नेह। अग्निज्योतिर्निचाय्य॥ अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्त्तः। ६।१।३६। एते छंदसि निपात्यन्ते। इन्द्रश्च विष्णो यदपस्पृधेथाम्। स्पर्द्धेर्लङि आथाम्। अर्कमानृचुः। वसून्यानृहुः। अर्चेरर्हेश्च लिटि उसि। चिच्युषे। च्युङो लिटि थासि। यस्तित्याज। त्यजेर्णलि। श्राता। सङ्हृत्सोमाः श्रिता नो ग्रहाः। श्रीञ्पाके। निष्ठायाम् नान्यत्र। मध्यतश्राशीर्त्तः॥ श्रीञ एव क्विपि निष्ठायां च॥ खिदेश्छंदसि। ६।१।५२। खिददैन्ये। अस्यैवआत्स्यात्। चिखाद। चिखेद। त्यर्थः॥ शीर्षंछंदसि। ६।१।६०। शिरःशब्दस्य शीर्षन् स्यात्। शीर्ष्णो जगतः॥ वाछन्दसि। ६।१।१०६। दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात्। वाराही।
॥ वाराह्यौ॥

त्वानेहस्त्वंच आशिरमिति आङ्पूर्वस्यश्रीणातेःक्विपूधातोःशिरआदेशः तस्माद्द्वितीयैकवचनम् अशीर्तइति श्रिञः आङ्पूर्वस्यशिरइत्यादेशः निष्ठायांश्च नत्वाभावो निपातनात् हलिचेतिदीर्घः खिदेश्छन्दसि आदेचउपदेशइत्यतः आदितिएजितिचवर्त्ततेविभाषालीयतेरित्यतो विभाषेतिच तदाहआत्स्यादिति चखादेति व्यत्ययेनपरस्मैपदम् शीर्ष्णइति अल्लोपोनइत्यल्लोपः रषाभ्यामितिणत्वम् पूर्वस्मादपिविधौ स्थानिवद्भाव इति पक्षेतुअट्कुप्वाङित्यनेनवाछंदसि नादिचिदीर्घाज्जसि चेतिच वर्त्तते तदाह दीर्घादित्यादि वाराहीइति वराहस्यविकारइति अवयवे च प्राण्योषधिवृक्षेभ्य इतिप्राणिरजतादिभ्योऽञ् ङीप् द्विवचनेपूर्व

मानुषीरिति प्रथमाबहुवचनम् मनोर्ज्ञातावन्यतोषुक्चेति अञ्मनोः षुगागमः सूत्रद्वयेइति अभिपूर्वः संप्रसारणाच्चेत्यत्र वाक्यभेदेनेति अकः अभिपूर्वरूपं वा स्याच्छन्दसि तथा संप्रसारणाच्चेति पूर्वरूपं वा स्याच्छन्दसितदाह तेनेति शम्यम्बेतिविकल्पविधानसामर्थ्यात्पूर्वरूपत्वाभावेपूर्वसवर्णदीर्घोपि न भवति न येोरत्र विशेषाभावादिति यणादेशएवभवति यज्यमानइति यजेर्लटः शानच् सार्वधातुके तियक् आने मुगिति मुक् ग्रहिज्येतिसंप्रसारणं पूर्वरूपस्यविकल्पिकत्वाद्भा वे यण् यातेइति यानीत्यर्थः यच्छन्दात्परस्य शेर्लोपेकृते प्रत्ययलक्षणेन त्यदादीनामइति अलेनपुंसकस्य झलचइति नुम् सर्वनामस्थाने चेति दीर्घः नलोपः ताताइ ति तानितानीत्यर्थः पूर्ववत् भय्यप्रवय्ये विभेतेः प्रपूर्वस्य वीइत्येतस्य च यति प्रत्ययेपरतश्छन्दसिविषयेयादेशो निपात्यते भय्यइति कृत्यल्युटइति अपादाने यत्

मानुषीरित्येते विग्रहः। उत्तरसूत्रद्वयेपीदं वाक्यभेदेन सम्बध्यते। तेनाभिपूर्वत्वं वा स्यात्। शमीश्वा शम्यश्वा। सूर्म्यं सुर्मि चा संप्रसारणाच्चेति पूर्व रूपमपि वा। इज्यमानः यज्यमानः॥ शेश्छन्दसि बहुलम्। ६।१।७०। लोपः स्यात्। या ते गात्राणाम्। ताना पिण्डानाम्॥ एमन्नादिषु छंदसि पररू पं वक्तव्यम्॥ अपां त्वेमन्। अपां त्वोद्मन्॥ भय्यप्रवय्ये च छन्दसि। ६।१।८३। बिभेत्यस्मादिति भय्यः। वेतेः प्रवय्या इति स्त्रियामेव निपातनम्। प्रवेयमित्यन्यत्र। छंदसि किम्। भेयम्। प्रवेयम्॥ ह्रदय्या उपसंख्यानम्॥ ह्रदे भवा ह्रदय्या आपः॥ भवे छन्दसि यत्॥ प्रकृत्यान्तःपादमव्यपरे। ६।१।११५। ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यात् अति परे न तु वकारयकारे। उपप्रयन्तो अध्वरम्। सुजाते अश्वसूनृते। अन्तःपाद किम्। एता स एतेन्द्रं स्तवाम (?)॥ अव्यपरे किम्। तेऽवदन्॥ इय्या इति अकारस्यायादेशः प्रकृत्यांतःपादस्य मध्ये इत्यन्तःपादमित्यव्ययीभावः अन्तरित्यव्ययमधिकरणशक्तिप्रधा नं मध्यमाचष्टे पादश्चेह ऋक्पाद एव गृह्यते न श्लोकस्य वा छंदसीत्यतो मंडूकप्लुत्या छंदसीति वर्त्तते तेनास्य वैदिकत्वं संपद्यत इत्याशयेनाह ऋक्पादमध्यस्थ इति एङः पदान्तादतीति सूत्रादेङ इति पंचम्यन्तमनुवृत्तं प्रथमया विपरिणम्यते ऽन्यस्य कार्यिणोऽसम्भवात् इत्यभिप्रेत्याह एङ् प्रकृत्येति संधिरूपविकारं न यातीत्य र्थः उपप्रयन्तो अध्वरमिति एङः पदान्तादतीति प्राप्तम् अंतःपादं किमिति ऋचीत्येव किं नोक्तमित्यर्थः॥ एतेर्वन्तीति कपामतीकुतएतासएतेर्चेति युष्मदः षणे वस्तूयाइति

अन्तःपादमव्यपरे इति पादस्यान्ते एङ् स्थितः अकश्च परस्य पादस्यादाविति तन्निमित्तनिमित्तिनोः पादमध्यस्थत्वमिति सत्यपि क्रचित्प्रकृतिभावः ॥ ०ः ॥ अव्यात् । एषामनुकरणत्वात्सुबन्तेन समासः अवरक्षणे आशीर्लिङ् अवद्यादिति पञ्चम्येकवचनान्तम् अवक्रमुरित्यव पूर्वस्य क्रमेर्लिट्युसि द्विर्वचनप्रकरणे छन्दसि वा वचनमिति द्विर्वचनाभावे रूपम् केचित्तु अवचक्रमुरिति सूत्रे कृतद्विर्वचनं ये पठन्ति तेषामुदाहरणं चिन्त्यम् बहुचास्त्वावदक्रमुरित्यधीयते अम्रनेति इङ् इत्येतस्मात् मन्त्रे घसेति च्लेर्लुक् आत्मनेपदेष्विति झस्यादादेशः अयमिति इदमः सौ इदोय् पुंसि अवन्तेर्लोट् अवन्तु अवस्युरिति अवेरसुन् औणादिकः ततः क्यच् क्याच्छन्दसी । उः यजुष्युरः उरोऽन्तरिक्षमिति नन्वत्र प्रकृत्यान्तःपाद इत्यनेनैव सिद्धे व्यर्थोऽयं योग इत्याशंक्याह यजुषि पादाभावादित्यादि आपोजुषाणो आपो इत्यादीनि एथ ।

अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च । ६।१।११६ । एषु व्यपरेऽपि एङ् प्रकृत्या । वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रत । शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः । यद्यपि बह्वृचैस्तेनोऽवन्तु रथतूः सोऽयमागात् तेरुणोऽभि रित्यादौ प्रकृतिभावो न क्रियते तथापि बाहुलकात्समाधेयम् । प्रातिशाख्ये तु वाचनिक एवायमर्थः ॥ यजुष्युरः । ६।१।११७ । उरःशब्द एङन्तोऽति प्रकृत्या यजुषि । उरो अन्तरिक्षम् । यजुषि पादाभावादनन्तःपादार्थं वचनम् ॥ आपो जुषाणो वृष्णो वर्षिष्ठे अम्बे अम्बाले अम्बिके पूर्वे । ६।१।११८ । यजुष्यति प्रकृत्या । आपो अस्मान्मातरः । जुषाणो अग्निराज्यस्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधिनाके । अम्बे । अम्बाले । अम्बिके । अम्बादेवचनादम्बार्थेति ह्रस्वो न ॥ अङ्ग इत्यादौ च । ६।१।११९ । अङ्गशब्दे य एङ् तदादौ च अकारे य एङ् पूर्वः सोऽति प्रकृत्या यजुषि । प्राणो अङ्गे

कं पदान्यनुकरणानि विभक्तिस्तु अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वान्न भवति सुपां सुलुगिति विभक्तेर्लुग्वा अंविके पूर्व इत्येतदप्यनुकरणमेव तत्र प्रथमं संज्ञकम् अनुकरणम् द्वितीयं स्वंतं तृतीयमष्टासंतं चतुर्थं ङ्यन्तमितरे संबुध्यन्ते आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दाः अंविके शब्दात्पूर्वौ यौ अंबे अंबाले शब्दौ तौ च तेऽजति प्रकृत्या स्युः अंग इत्यादौ च अंगशब्दे य एङिति प्रकृत्या भवतीति वक्ष्यमाणेन सम्बन्धः तदादौ अकारे य एङ् पूर्व इति अत्रापि पूर्ववत्संबंधः अतिक्रान्तपरामर्शि

सि·कौ· वै· १५

नातच्छेत्स्वइतिशब्दार्थमाचष्टे तस्यांगशब्दस्य आदिस्तदादिस्तद्रूपोयअकारस्तस्मिन्परेपूर्वोयएङ् सइत्यर्थः नन्वत्रचकारः किमर्थइति चेच्छृणु असतिचकारेऽगश
ब्दस्यैवेङ् तदादावतिपरतः प्रकृत्याभवतीत्यर्थः स्यात्तनच्चांगेअंगेइत्यत्रैवस्यात् अंगेअदीव्यदित्यत्रनस्यात् सति तुतस्मिन्नंगशब्दस्यएङ् यत्रकुत्रचिदतिप्रकृत्याभ
वतितदादौवातिपरतोयः कश्चिदेङ् सप्रकृत्याभवतीत्ययमर्थोभवति तेनअंगेअंगेअदीव्यत् प्राणोअंगेइत्युभयत्रापिभवति॥ ॐ॥ अनुदात्तेचकुधपरे कुधौपरौयं
स्मात्सतथोक्तः कवर्गधकारेति धकारेअकारउच्चारणार्थः अग्निरिति अग्निशब्दोअंगेर्निनलोपश्चेति निप्रत्ययांतोऽतोदात्तः अध्वरशब्दः प्रातिपदिकस्वरेणांतोदात्तःआ
द्युदात्तइति कर्मेन्द्रायेत्यादिनोणादिसूत्रेणनिपातितः आङो आङ् इति ङि टिलोपश्चाकारोग्रस्यतेय ईषदर्थेक्रियायोगेमर्यादाभिविधौचयः एतमातं ङितंविद्यात्

अनुदात्तेचकुधपरे।६।१।१२०।कवर्गधकारपरेऽनुदात्तेऽतिपरेएङ्प्रकृत्यायजुषि।अयंसोऽग्निः।अयंसोअध्वरः।अनुदात्तेकिम्।अग्रेऽ
ग्रे।अधराग्रुदात्तः।कुधपरे किम्।सोऽयमग्निमन्तः॥अवपथासिच।६।१।१२१।अनुदात्तेअकारादौअवपथाःशब्देपरेयजुषिए
ङ् प्रकृत्या।त्रीरुद्रेभ्योअवपथाः।वपेस्थासिलङि तिङ्तिङइत्यनुदात्तत्वम्।अनुदात्तेकिम्।यद्रुद्रेभ्योऽवपथाः।निपातैर्यद्यदीतिनिघातोन॥आ
ङोऽनुनासिकश्छन्दसि।६।१।१२६।आङोऽचिपरेऽनुनासिकःस्यात् सचप्रकृत्या।अभ्रआँअपः।गभीरआँउग्रपुत्रे॥ईषाअक्षादीनाञ्छन्द
सिप्रकृतिभावोवक्तव्यः॥ईषाअक्षोहिरण्ययः।ज्याइयम्।पूषाअविष्ट॥स्यश्छन्दसिबहुलम्।६।१।१३३।स्यइत्यस्यसोर्लोपःस्याद्धलि।एष
स्यभानुः॥ह्रस्वाच्चन्द्रोत्तरपदेमन्त्रे।६।१।१५१।ह्रस्वात्परस्यचन्द्रशब्दोत्तरपदस्यसुडागमःस्यान्मन्त्रे।हरिश्चन्द्रोमरुद्गणः।सुश्चन्द्रदस्म॥ ॥

कस्मरणयोरङिदित्यनेनलक्षितः यद्यपिअभ्रआँअपइत्यत्र आकारोनईषदर्थादिचतुष्टयवृत्तिः सप्तम्यर्थद्योतकत्वात्तथापिवाक्यस्मरणयोरङिदित्यत्रै। राम:
वतात्पर्यम्।अन्यत्रसर्वत्राङ् ङिदेवेतिव्यः एवंनावद्भाष्येस्थितम् अभ्रआँअपइति सप्तम्यर्थद्योतकोऽत्राङ् उपदेशेऽजनुनासिकइतीत्संज्ञा तुनउपदेशमह १५
णात्तस्यः बंदसिस्यइतिस्यदित्येनस्यप्रथमांतस्यानुकरणम् सुपांसुलुगितिलुप्तषष्ठीकम् एषस्येति एतदस्त्यदश्चतदायत्वंनशेः सः साविति सः एतदस्त्यदश्च

चंद्रशब्दे उत्तरपदे ह्रस्वात्परः सुडागमो भवति सचमभवत् चंद्रशब्दस्यैवोभयनिर्देशे पंचमीनिर्देशो बलीयानित्याशयेनाह चंद्रशब्दस्योत्तरपदस्येति सुडागमः स्या
दिति सुट्कात्पूर्वमित्यतः सुडित्यनुवर्त्तनात् ॥ ० ॥ पितरा पूर्वपदस्यारङादेशो निपात्यते उत्तरपदे तु सुपां सुलुगित्यादिना विभक्ते राकारादेशः ऋतो ङि सर्वनामस्था
नयोरिति गुणः समानस्य सः स्यादिति सह स्य सः इत्यतः स इत्यनुवर्त्तते सगर्भ्य इति समानो गर्भः सगर्भः तत्र भवः सगर्भ्यः सगर्भसयूथसनुताद्यदिति यत् प्रत्ययः
अमूर्द्धेत्यादि किम् समानमूर्द्धा समानप्रभृतयः समानोदर्काः छन्दसि स्त्रियाम् विष्वग्देवयोरिति सर्वनाम्नो ष्टुपलक्षणम् बहुलग्रहणात्क्वचिन्न भवति विष्वा
ची देवद्रीचीति विष्वमञ्चतीति देवानंचतीति किन् उगितश्चेति ङीप् अच इत्यकारलोपः चौ इति दीर्घत्वम् अत्र विष्वग्देवयोरद्र्यादेशः प्राप्तो बाहुलकान्न कचि।

पितरामातरा च छन्दसि ।६।३।३३। द्वन्द्वे निपातः। आ मा गन्तां पितरा मातरा च। चाद्विपरीतमपि। मातरा पितरा नू विदिष्टौ॥ समानस्य छन्दस्य मूर्द्धप्रभृत्युदर्केषु॥ समानस्य सः स्यान्मूर्द्धादिभिन्ने उत्तरपदे। सगर्भ्यः॥ छन्दसि स्त्रियां बहुलम्॥ विष्वग्देवयोरद्र्यादेशः। विष्वाचीवाघृताचीव देवद्रीचीं नयत देवयन्तः। कद्रीची॥ सधमादस्थयोश्छन्दसि ।६।३।९६। सहस्य सधादेशः स्यात्। इन्द्र त्वास्मिन्सधमादे। सोमः सधस्थम्। पथि च छन्दसि ।६।३।१०८। पथिशब्दे उत्तरपदे कोः कवकाचौ। कवपथः। कापथः। कुपथः॥ साढ्यै साढ्वा साढेति निगमे ।६।३।११३। ॥ चभवतीत्याह कद्रीचीति कुत्सितम

ञ्चतीति कद्रीचीति किंशब्दस्य टेरद्र्यादेशः ङीप् लोपदीर्घौ पूर्ववत् सधमादसहस्य सध्रिरित्यतः सहस्येति वर्त्तते मादस्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययमादेशः
स्यात् सधेत्यविभक्तिको निर्देशः सधमादे इति सहमाद्यन्ति देवा अस्मिन्निति सधमादो यज्ञ इति मदोनुपसर्गे इत्यपि प्राप्ते ऽज भ्यां ... ललनादिति तद्बाधके ल्युटि हलश्चेति
घञ् सूत्रे मादेत्यकारउच्चारणार्थः तेन मादयतेः क्विबन्तस्य मादिति यद्रूपं तत्रापि भवति आ त्वा वहंतो हरयो युज्यमाना अर्वाग्निन्द्र सधमादो वहंतु सहस्थ इति सह तिष्ठ
न्तीति सहस्थः आतोनुपसर्गे इति कः साढ्यै एते त्रयो निपात्यन्ते निगमे॥ ॥ ० ॥ ॥ ॥

इकः इगंतस्य सुञि परतो दीर्घः स्यात् विद्म चो द्व्यचस्तिङन्तस्यातो दीर्घः स्यात् विद्म वियेति विदज्ञाने लट् विदो लटो वेति मस्य स्थाने मः चक्रेति लिटो मध्यमपुरुषबहुवचन
मे निपातस्य च दीर्घः स्यात् मन्त्रे एवशब्दस्यादिषु पाठान्निपातः छन्दसु नामीति वर्तते द्रुलोप इत्यतो दीर्घ इति च तदाह नामीत्यादि ऋभुक्षाणमिति ऋभुक्षिन् शब्द उ
णादिषु निपातितः इतोत्सर्वनामस्थान इतीकारस्याकारादेशः जनितेति जनयितेत्यर्थः शमितानिपातनं पूर्ववत् आनक्षिति नशेर्लुङि मंत्रे घसेति लेर्लुक् नशेर्वेत्यस्याभावे न्नश्च
तिषः जश्त्वेन डः तस्य चर्त्वेन टः आप्वरिति वृञो लुङि लेर्लुक् गुणः रेफस्य विसर्गः बहुलं छन्दसि माङ्योगेप्यमाङ्योगेपि बहुलमडाटौ भवतः अमाङ्योगेपि न भवतः आ

इकः सुञि । ६।३।१३४। ऋचि दीर्घ इत्येव । अभीषुणः सखीनाम् । सुञ् इति निपातः नश्च धातुस्थोरुषुभ्य इति णः ॥ द्व्यचोऽतस्तिङः । ६।३।१३५। मन्त्रे दीर्घः
। विद्मा हि चक्रा जरसम् ॥ निपातस्य च । ६।३।१३६। एवा हि ते ॥ छन्दस्युभयथा । नामि दीर्घो वा । धाता धातॄणामिति बह्वृचाः । तैत्तिरीयास्तु ह्रस्वमेव प
ठन्ति ॥ वा षपूर्वस्य निगमे । ६।४।९। षपूर्वस्यान उपधाया वा दीर्घोऽसम्बुद्धौ सर्वनामस्थाने परे । ऋभुक्षाणम् । ऋभुक्षणम् । निगमे किम् । न स्ना
। न स्नासौ ॥ जनिता मन्त्रे । ६।४।५३। इडादौ तृचि णिलोपो निपात्यते । यो नः पिता जनिता ॥ शमिता यज्ञे । ६।४।५४। शमयितेत्यर्थः ॥ युप्लुवोर्दीर्घश्छ
न्दसि । ६।४।५८। ल्यपीत्यनुवर्तते । विपूय । विप्लूय ॥ आङ्जादीनाम् ॥ छन्दस्यपि दृश्यते । ६।४।७३। आनजादीनामित्यर्थः । आनट् । आवः ॥ न
माङ्योगे ॥ बहुलं छन्दस्यमाङ्योगेऽपि । ६।४।७५। जनिष्ठा उग्रः सहसे तुराय । मा वः क्षेत्रे परबीजान्यवाप्सुः ॥ इरयो रे । ६।४।७६। प्रथमं दध्र आ
पः । रेभावस्याभीयत्वेनासिद्धत्वादालोपः । अत्र रेशब्दस्येटि कृते पुनरपि रेभावः ॥ माङ्योगेपि च भवतः जनिष्ठा इति जनेर्लुङि थास् अडागमाभावः माङ्यो

गेप्यडागममुदाहरति मा व इति वो युष्माकं क्षेत्रे भार्यायां परबीजानि परेषां बीजानि वीर्याणि मा अवाप्सुः उप्तानि माभूवन् वपेः कर्मणि लुङ् व्यत्ययेन परस्मैपदम् सिः सिच्
वदव्रजेति वृद्धिः इदं काशिकानुरोधेनोदाहृतम् अध्ययनं तु वाप्सुरित्येव दृश्यते माङ्घटस्तदाहरणान्तरमन्वेषणीयम् इरयोरे इत्येतस्य रे आदेशः स्यात् छन्दसि
दध्रे इति धाञो लिटि इरस्य लिटस्तझयोरिति तरे विकृते रेभावः ननु चात्र परत्वाद्रेभावे कृतेऽनजादित्वादाल्लोपो न प्राप्त इत्यत आह रेभावस्येति नन्वेवमपि रेभावस्यैकवा

सि॰ कौ॰ दिनियमादिडागमः प्राप्नोति नचेरेभावस्यवैयर्थ्यम् कृसृभृवृस्तुद्रुस्रुश्रुवोलिटीत्यत्र चरितार्थत्वादत आह अत्रेति कथंपुनर्नोक्तणिकस्येरेशब्दस्यरेभावोभवतित्याहेत्यतः
वै॰ तदर्थंचेति॥ द्विवचननिर्देशादिर्नलक्षणप्रतिपदोक्तपरिभाषानप्रवर्त्ततइतिभावः तन्वादीनां तन्वादीनांबहुलमियङ्वङादेशस्याच्छंदसि तनुवमिति अधातुत्वादप्राप्त
९७ उवङ्विधीयते तन्वमिति वाछंदसीत्यमिपूर्वत्वाभावेयण् त्र्यम्बकमिति त्रीणिअम्बकानिनेत्राणियस्यासौत्र्यम्बकोरुद्रः वितन्निरेइति तनुविस्तारेलिटःप्रथमपुरुष
बहुवचनं अत्राल्लोपस्यासिद्धत्वेपिअत एकहल्मध्यइतिएत्वाभ्यासलोपौनलोपविधानसामर्थ्यात् पप्तिमेति पत्लृपतनेलिटोमस्मे मस्यइट् विनेनिरेपेतिमेतिभा
षायां घसिभसो अनयोरुपधालोपःस्याद्धलादावजादौचक्ङिति सग्धिरिति अदेःक्तिनूबहुलंछंदसीतिघस्लादेशेउपधालोपेचकृतेझलोझलीतिसलोपस्तकारस्यधत्वंधस्य

तदर्थंसूत्रेद्विवचनान्तन्निर्दिष्टंदूरयोरिति॥ छन्दस्युभयथा। ६।४।८६। भूसुधियोर्यण्स्यादियङुवङौच। वनेषुचित्रंविभ्वं। विभुवंवा। सुध्यो
नव्यमग्ने। सुधियोवा॥ तन्वादीनांछन्दसिबहुलम्॥ तन्वंपुषेम। तनुवंवा। त्र्यम्बकं। त्रियम्बकम्॥ ततनिपत्योश्छन्दसि। ६।४।९९। एतयोरुपधालो
पः क्ङितिप्रत्यये। वितत्निरेकवयः। शकुनाइवपप्तिम॥ घसिभसोर्हलि। ६।४।१००। सग्धिश्चमे। बब्धांतेहरीधानाः॥ हुझल्भ्योहेर्धिः॥ शृणुपृकृवृ
भ्यश्छन्दसि। ६।४।१०२। श्रुधीहवम्। शृणुधीगिरः। रायस्पूर्धि। उरुणस्कृधि। अपावृधि॥ वाछन्दसि। ६।४।८८। हिरपिद्वा। अङितश्च। ६।४।१०३। हेर्धिःस्याद्वा। रार
न्धि। रमेर्व्यत्ययेनपरस्मैपदम्। शपःश्लुरभ्यासदीर्घश्च। अस्मेप्रयन्धि। युयोधिजातवेदः॥ जेम्सवततः समानाग्धिः सग्धिरितिसमासेकृतेसमानस्यच्छन्दसि
मूर्द्धप्रभृत्युदर्केष्वितिसूत्रेणसमानस्यसः बब्धामिति भसेर्लोटिझांश्लुःपरनित्यमप्युपधालोपंबाधित्वाबाहुलकात्प्रथमंश्लौविहितेद्वित्वम् ततउपधालोपसलोपध
त्वजश्त्वानिकर्त्तव्यानि श्रुशृणु एभ्योहेर्धिःस्यात् श्रुधीति बहुलंछंदसीतिशपोलुक् अन्येषामपीतिदीर्घत्वम् शृणुधीति श्रुवःशृचेतिश्रुवःशृभावश्चविधानसामर्थ्या रामः
त् अत एवप्रत्ययादिति नहेर्लुक्दीर्घः पूर्ववत् पूर्धीति पृपालनेशपोलुक् उदोष्ठ्यपूर्वस्येत्युत्त्वम् हलिचेतिदीर्घः उरुणस्कृधीति नश्चधातुस्थोरुषुभ्यइतिणत्वम् कःक ९७
रत्यादिनाविसर्जनीयस्यसत्वम् अपावृधीतिदीर्घःपूर्ववत् अभ्यासस्यदीर्घश्चेतितुजादित्वादितिभावः रारंधीत्यत्रानुदात्तोपदेशेत्यादिनामलोपोनहेरङित्वात् ॥

यमे शपो लुगिति बहुलं छन्दसीत्यनेन न एवमुत्तरत्रापि विभाषर्जोरिऋतो हलादेर्लघोरित्यतः र ऋत इति तुरिष्ठेमेयस्स्विति च तदाह ऋतः स्थाने इत्यादि ऋत्व्य वास्त्व
ऋतुशब्दाद्यति वास्तुशब्दाद् ण्यति च यणादेशो निपात्यते मशब्दस्येति नस्यासिद्धत्वाद्यस्येति लोपेन अकृत्सार्वेति दीर्घत्वं गवत्तेन परिभाषया वारणीयः यद्वा मकार
मात्रस्य लोपः नतो यस्येति लोपः कृते प्रत्ययाकारस्य श्रवणं इति षष्ठोऽध्यायः ६ ॥ बहुलं छन्दसि छन्दसि विषये बहुलं रुडागमः स्यात् दुह्र इति दुहेर्लट्टेरत्वे झस्य
देशे रुट् न लोपः लोपाभावे इति लोपस्त आत्मनेपदेष्वित्यस्य वैकल्पिकत्वादित्यर्थः अदृश्रमिति दृशिर् प्रेक्षणे लुङ्व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपु

यमे शपो लुक् । यौतेः शपः श्लुः ॥ मन्त्रेष्वाङ्यादेरात्मनः । ६।४।१४१। आत्मन्शब्दस्यादेर्लोपः स्यादाङि । त्मनादेवेषु ॥ विभाषर्जोश्छन्दसि । ६।
४।१६२। ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्ठेमेयस्सु । त्वं रजिष्ठमनुनेषि । ऋजिष्ठं वा ॥ ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि । ६।४।१७५।
ऋतौ भवं ऋत्व्यम् । वास्तुनि भवं वास्त्व्यम् । वास्त्वं च । मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते । माध्वीर्नः सन्त्वोषधीः । हिरण्यशब्दाद्वि
हितस्य मयटो मशब्दस्य लोपो निपात्यते । हिरण्ययेन सविता रथेन ॥ इति षष्ठोऽध्यायः ॥ श्रीङो रुट् ॥ बहुलं छन्दसि । ७।१।८। रुडागमः स्यात् । लो
पस्त आत्मनेपदेष्विति पक्षे न लोपः । धेनवो दुह्रे । लोपाभावे घत्वं दुहते । अदृश्रम् ॥ अतो भिस ऐस् ॥ बहुलं छन्दसि । ७।१।१०। अग्निर्देवेभिः ॥ ने
तराच्छन्दसि । ७।१।२६। स्वमोरद्ड् ना वार्त्रघ्नमितरम् । छन्दसि किम् । इतरत्काष्ठम् ॥ समासेऽनञ्पूर्वे क्त्वो ल्यप् । क्त्वापि छन्दसि । यजमानं परि

रुषैकवचनमिप् तस्य रुडागमः नेतराद् इतरशब्दात्परयोः स्वमोरद्डादेशो न स्याच्छन्दसि इतरमिति अद्डुतरादिभ्य इत्यद्डभावे अतोमित्यम् धापयित्वा ॥
क्त्वो ल्यबिति । समासेऽनञ्पूर्वे क्त्वो ल्यपि प्राप्ते छन्दसि क्त्वापि विधीयते तदाह क्त्वापि अनञ्पूर्वसमासे क्त्वा इत्ययमादेशः स्यात् अपिशब्दात् ल्यबपि समासे समासे च भवति अप्राप्ति
विषये त्वप्यपः प्रापणार्थत्वादपिशब्दस्य अन्यथा वा छन्दसीत्येव ब्रूयात् तथा च छन्दो विधिमनुविदधानाः कल्पसूत्रकारा अपि प्रयुञ्जते आज्येनाक्षिणी अञ्ज्येति परिधा
पयित्वेति णिजन्तात्परिपूर्वाद्धातेः क्त्वा तस्य ल्यबादेशप्राप्ते क्त्वादेशः ॥ ६ ॥ ६ ॥ ६ ॥ ॥

सि॰ कौ॰ सुपं सुपां स्थाने सुलुक् पूर्वसवर्ण आ आत् शे या डा ड्या याच् आल् एते आदेशाः स्युः छन्दसि पन्था इति वक्तव्ये बहुलमित्येव सिद्धमिदमुक्तं हि तत्र सुप्तिङुपग्रहेत्यादि नस्येवायं प्रप
कै॰ ञ्चः धीती त्यादि धीती मती सुष्टुती शब्देभ्यस्तृतीयैकवचनस्य पूर्वसवर्णदीर्घ ईकारः प्रमाणतआन्तर्यो ऋवर्णादीर्घत्वं दिविस्पृशाविति प्राप्ते आ इति अनेनादिन्यत्रा कारोपि प्र
९८ सिध्यतं इति दर्शितम् नताद् इति नतशब्दादम् तस्यादादेशः न विभक्तौ तु इति संज्ञाप्रतिषेधः यादेवेत्यादि यत्शब्दादम् तस्यात् युष्मे इति युष्मदः सप्तमीबहुवच
नस्य शे आदेशः शेषेलोपः अस्मे इन्द्रे इति शे इति प्रगृह्यत्वाद यादेशाभावः नाभा इति डित्वाट्टिलोपः ना अनुष्ट्यानि षड्विंशतिरस्य वंक्रय इति प्रकम्य इदमन्वयुपृषे
पठितंताः वंक्रीः अनुष्ट्याः अनुष्ठानेन अनुक्रमेणगणनया गणयित्वा ड ड वचनात् भवान् विशसनं करोतु पृथक्करोतु भवानित्यर्थः अनुष्ठानमनुष्ठेति अनुपूर्वात् तिष्ठ

सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ७।१।३९। ऋजवः सन्तु पन्थाः। पन्थान इति प्राप्ते। सुः॥ परमे व्योमन्। व्योमनि इति प्राप्ते। ङेः
लुक्॥ धीती॥ मती॥ सुष्टुती॥ धीत्या मत्या सुष्टुत्येति प्राप्ते। पूर्वसवर्णदीर्घः। या सुरथा रथीतमा। दिविस्पृशा अश्विना ये सुरथौ दिविस्पृशावित्यादि
प्राप्ते। आ। नताद्ब्राह्मणम्। नतमिति प्राप्ते। आत्। यादेव विद्मतात्वा। यमिति प्राप्ते। आत्। यदेव विद्मतात्वा। न युष्मे वाजबन्धवः। अस्मे इन्द्रा
बृहस्पती॥ युष्मासु अस्मास्विति प्राप्ते। शे। उरुया धृष्णुया। उरुणा धृष्णुनेति प्राप्ते। या। नाभा पृथिव्याः। नाभाविति प्राप्ते। डा। ता अनुष्ठ्योच्या
वयनात्॥ अनुष्ठानमनुष्ठा। व्यवस्थावदड्। आङ्ङ्या। साधुया। साध्विति प्राप्ते। याच्। वसन्ता यजेत। वसन्ते इति प्राप्ते। आल्। इयाडियाजीकारा
णामुपसंख्यानम्॥ उर्विया। दार्विया। उरुणा दारुणेति प्राप्ते। इया।                    ॥ तेरङ्ग तृतीयैकवचनस्य ड्यादेशः डित्वाट्टिलोपः नन्वनुपूर्वा
तिष्ठतेरातश्चोपसर्ग इत्यङं बाधित्वा स्यागापापचो भावे इति क्तिना भाव्यमिति चेत्सत्यम् पूर्वपरावरदक्षिणोत्तरेति सूत्रे व्यवस्थायामिति निर्देशादङ् पि सामान्यापे राम॰
क्षाणापकाशश्रवणात् तदेतद्ध्वनयति व्यवस्थावदिति साधु इति प्राप्त इति सोर्लुकि प्राप्त इत्यर्थः वसन्ते इति प्राप्ते आल् इति पूर्वसवर्णे तु अतो गुण इति स्यात् उर्वियेति ९८
दारुशब्दात्तृतीयैकवचनस्येयादेशः                    ६ ॥ ६ ॥ ॥

यणिपकारस्येत्यादि प्रामादिकीतिलक्षेवकारपाठस्यनिर्विवादत्वात् वेदभाष्येपिप्रकृतसूत्रस्यमलोपमात्रपरतोक्तेश्चेतिभावः॥ ॰॰॰॥ तस्य मध्यमपुरुषबहुवचनस्ये
ति प्रथमपुरुषैकवचनस्यतुनग्रहणम् छन्दसिदृष्टानुविधानात् पूर्वोत्तराभ्यांबहुवचनाभ्यांसाहचर्य्याच्च कृणुतादिति कृविहिंसाकरणयोश्चधिन्विकृण्व्योरच्च
त्युप्रत्ययः वकारस्यचाकारः अतोलोपः गमयतादिति गमेर्णिच् जनीजृषक्नसुरञ्जोऽमन्ताश्चेतिमित्संज्ञायांमितांह्रस्वः लोड्मध्यमपुरुषबहुवचनस्यतादेशः तप्तनप्तनथनाश्च तस्यस्था
ने एतेआदेशाः सुः श्रृणोतेतिश्रुश्रवणे श्रुवःशृचेतिश्नुप्रत्ययः शृभावश्चपित्वेनाङित्त्वाद्गुणः सुनोततेति षुञ्अभिषवेस्वादिभ्यःश्नुः तद्गतस्यतनप् दधाततेति अत्रा
प्यङित्त्वात् श्नाभ्यस्तयोरित्याकारलोपाभावः इदंतो अन्तशब्दोऽवयववचनः इत् अंतोयस्यसइदंतः तपरकरणमसंदेहार्थम् तथाचायमर्थः ९ मसइत्ययंशब्दइका

तस्यतात्॥७॥१॥४४॥मध्यमपुरुषबहुवचनस्यस्थानेतात्स्यात्॥ गात्रमस्यनूनंकृणुतात्॥ कृणुतेतिप्राप्ते॥सूर्यंचक्षुर्गमयतात्॥ गमयतेतिप्रा
प्ते॥ तप्तनप्तनथनाश्च॥७॥१॥४५॥तस्येत्येव॥ श्रृणोतग्रावाणः॥ श्रृणुतेतिप्राप्ते॥ तप्॥सुनोतन॥पचतनपुरोडाशान्॥ दधातनद्रविणंचित्रम
स्मै॥ तनप्॥मरुतस्तज्जुजुष्टन॥जुषध्वमितिप्राप्ते॥ व्यत्ययेनपरस्मैपदं॥श्लुः॥ विश्वेदेवासोमरुतोयतिष्ठन्॥ यत्संख्याकाःस्थेत्यर्थः॥यच्छ
ब्दाच्छांदसोडतिः॥ अस्तेर्लस्यथनादेशः॥ इदन्तोमसि॥७॥१॥४६॥मसीत्यविभक्तिकोनिर्देशः॥इकारउच्चारणार्थः॥मसइत्ययमिकाररूपच
रमावयवविशिष्टःस्यात्॥मसइगागमःस्यादितियावत्॥ नमोभरन्तएमसि॥त्वमस्माकंतववस्मसि॥इमस्मइतिप्राप्ते॥औतोयक्॥७॥१॥४७॥दिवंसु

यन्तोभवति मसः सकारांतस्यइसागमोभवतिसचतस्यान्तोभवतीत्यर्थस्तदेतदाह मसइत्ययमिति तत्रयदिसकारोपमर्देनइकारोंतत्वमभिप्रेतंस्यात्तर्हिमसइ
तिविनाचंस्यात् तस्मादवस्थितएवसकारेइकारउपसंजनीयः अंतग्रहणाच्चतद्ग्रहणेनगृह्यते नचाष्टित्त्वकित्त्वादेरागमलिंगस्याभावेप्यर्थादागमोयंसंपद्य
ते॥ ॰॰॰आह मसइगागमःस्यादिति एवंचमसइगितिवक्तव्यंप्रत्याहारसंदेहप्रसंगात्तथानोक्तम् एमसीति इणगतौ मस तस्यइकारः अन्तावयवः
॰॰॰सीति अन्तेर्मस्त श्नसोरल्लोपः क्त्वोयक् क्त्वाइत्यस्ययगागमःस्याच्छंदसि गत्वायेति गमेः क्त्वाअनुदात्तोपदेशेत्यनुनासिकलोपः क्त्वाइत्यस्ययगागमः॥ ६ ॥

सि॰ कौ॰ वः ष्वक्षसुमित्वे तेसांनमहते तिदीर्घः संयोगांतलोपः तस्यासिद्धत्वान्नलोपोन स्कनवानितितुधातुः सौत्रोस्थ्यर्थः नतो ऽ सुनूस्वंनवोरुद्धिर्यस्येति विग्रहः ॥ ॰ ॥ ततुरिरिति ।
कौ॰ नरुते यङ्लगमेति किम् प्रत्ययः उत्वं तस्यद्विर्वचने ऽ चीतिस्थानिवद्भावात् इत्येतस्यद्विर्वचनं उरदत्वम् ह्वह्वरेः स्वीदितो निष्ठायामित्यनो निष्ठायामिति वर्जनेतदाह निष्ठायामि
२० ति अह्रुतमितिनह्रुतमह्रुतम् अपरिह्रुताः छन्दसिबहुवचनांतस्यैव प्रयोगदर्शनाद्बहुवचनांतस्य निर्देशः सोमे इट्गुणाविति ह्व इत्यादेशस्याभावो ऽ पिबोध्यः पूसि
त पसुअदने स्कंभुस्तंभुरोधनार्थेसौत्रौ चेतेयाचने कसगतौ शसुहिंसायाम् शसुस्तुतौ शासुअनुशिष्टौ तुद्धवननतरणयोः वृङ्संभक्तौ वृञ्वरणे ज्वलदीप्तौ क्षरसंच

नवुरिः ॥ ह्रुह्वरेश्छंदसि ।७।२।३१। ह्वरेर्निष्ठायां ह्रु आदेशः स्यात् । अह्रुतमस्मिहविर्धानम् ॥ अपरिह्रुताश्च ।७।२।३२। पूर्वेणाप्राप्तस्यादेशस्याभा
वो निपात्यते । अपरिह्रुताः सनुयामराजम् ॥ सोमेह्वरितः ।७।२।३३। इट्गुणौ निपात्येते । मानः सोमोह्वरितः ॥ ग्रसितस्कभितस्तभितोत्तभित
चत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीतिच ।७।२।३४। अष्टादशनिपात्यन्ते । तत्रय
सुस्कंभुस्तंभुएषामुदित्वान्निष्ठायामिट्प्रतिषेधेप्राप्तेइण्निपात्यते । युवंशचीभिर्ग्रसितामग्रुञ्चतम् । विष्कभितेअजरे । येनस्वःस्तभितम् । सत्ये
नोत्तभिताभूमिः । स्तभितेनेवसिद्धेउत्पूर्वस्यपुनर्निपातनमन्योपसर्गपूर्वस्यमाभूदिति । चतेयाचने । कसगतौ ॥ आस्यस्कसेड्भावः चत्तादत
च्यत्ताशुकः । निघाहस्यावमच्चिनाविकस्तम् । उत्तानायाहृदयंयद्विकस्तम् ॥ तनेप्तमूषुस्हने दुवमूउद्गिरणे अमगत्यादिषु अष्टादशेति स्तमितेः

पाठपक्षेतुएकोनविंशतिः उदित्वान्निष्ठायामिट्प्रतिषेधेप्राप्तेइति ऋदितो वेनित्का यां वेट्त्वाद्यस्य विभाषेतिनिषेधेप्राप्तेइत्यर्थः विष्कभितइति अनिदितामितिन
लोपः वेःस्कभ्नातेर्नित्यमितिषत्वम् उत्तभितेति उदःस्थास्तम्भोरितिपूर्वसवर्णः सकारस्यथकारः तस्यझरोझरिसवर्णेइतिलोपः अन्योपसर्गपूर्वस्यमाभूदिति राम
लीलाभ्यां [illegible] विग्रहसाम्यर्थस्यात् चत्तादिति चतशब्दाट्टापिङ्गासहआद्गुणः निपातेनसहएकीकृत्यच्छेदस्तुपदकाराणांसंप्रदायसिद्धः भूयामोइतिमंत्रे २०
भूयामोइतियथा अम्बस्याविशस्तेतिअन्येषामपीतिपूर्वपदस्यदीर्घः ॥

सि॰कौ॰ मीनातीति पावीनेत्यत्र च हस्वत्वनिवर्तनेनदाह शिनिहस्वइति प्रमीणन्तीतिहिनुमीनेतिणत्वम् आदृद्गमिति अकेलिङ्इति पू आद्ध्मारानामित्याद्यपोलुक् अभिसिवर

वै॰ गीडभावेःअण्कामाद्धलङ्यादिलोपः हल्वविसर्गौ संहितायान्तु भोभगोइतिरोर्यत्वम् लोपःशाकल्यस्येति यलोपः जसादिषुति आदिशब्दःप्रकारेतेनपूर्वयोगमपि

४१ छान्नामपिग्रहणम् शतक्रत्वइति जसिचेतिगुणाभावपक्षेप्रथमयोः पूर्वसवर्णदीर्घोपिवाछन्दसीति वचनादत्रनभवतीतियणादेशः प्रवर्गान्ते पश्वेइति घेर्ङितीत्यस्य

मीनातेर्निगमे। ७।३।८१। शिनिहस्वः। प्रमिणन्तिव्रतानि। लोकेप्रमीणाति॥ अस्तिसिचोऽपृक्ते॥ बहुलञ्छन्दसि। ७।३।९७। सर्वमाइदम्। इत्यस्यगु

णः। जसिच। जसादिषुछन्दसिवावचनम्प्राङ्णौचङ्युपधायाः॥ अधाशतक्रत्वोयुयम्। शतक्रतवः। पश्वेनृभ्योयथागवे। पशवे। नाभ्यस्तस्याचि

तिनिषेधेवक्तुलञ्छन्दसीतिवक्तव्यम्॥ अनुजुषञ्जुजोषत्॥ नित्यंछन्दसि। ७।४।८। छन्दसिविषयेचङ्युपधायाऋवर्णस्यऋदित्यम्। अवीवृ

धत्॥ नच्छन्दस्यपुत्रस्य। ७।४।३५। पुत्रभिन्नस्यादन्तस्यक्याचिईत्वदीर्घौन। मित्रयुः। क्याच्छन्दसीतिउः। अपुत्रस्यकिम्। पुत्रीयन्तःसुदानवः॥ अ

पुत्रादीनामितिवाच्यम्॥ जनीयन्तोन्वग्रवः। जनमिच्छन्तइत्यर्थः॥ दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति। ७।४।३६। एतेक्याचिनिपात्यन्ते। अ

पापान्तुउप्रत्ययाभावात्। दुष्टीयति। द्रविणीयति। वृषीयति। रिष्टीयति॥ अश्वाघस्यात्। ७।४।३७। अश्वअघएतयोःक्याचिआत्स्याच्छन्दसि।

अश्वायन्तोमघवन्। मात्वावृकाअघायवः। नच्छन्दसीतिनिषेधोनईत्वमात्रस्यकिन्तुदीर्घस्यापीति। अत्रेदमेवसूत्रंज्ञापकम्॥ देवसुम्न

योर्यजुषिकाठके। ७।४।३८। अनयोःक्याचिआत्स्याद्यजुषिकठशाखायाम्। देवायन्तोयजमानाः। सुम्नायन्तोहवामहे। इहयजुःशब्देन

नमन्त्रमात्रंपरंकिन्तुवेदोपलक्षकः। तेनऋगात्मकेऽपिमन्त्रेयजुर्वेदस्थेभवति। किञ्च। ऋग्वेदेपिभवति। सचेमम्नोयजुषिकठशाखायामिति

अविप्रेण जुजोषितिजुषीप्रीतिसेवनयोः लेटूव्यत्ययेनपरस्मैपदम्तिप् इतश्चलोपःपरस्मैपदेषुलेटोऽडाटावित्यट् व्यत्ययेनशपःश्लुः द्विर्वचनम् नच्छन्दसि इहय। एमः

यानन्तर्यादीत्वमात्रंप्रतिषिध्येनतर्हि अकृत्सार्वेतिदीर्घःस्यात् अपवादेपुनरुत्सर्गस्थितेः अतआह इत्वदीर्घौनेति क्वचियदुक्तंतन्नेतिव्याख्यानादितिभावः अत्रपक्षाप ४१

कमनुपदमेव वक्ष्यति पुत्रीयन्त इति पुत्रमिच्छन्तः पुत्रीयन्तः जनमिच्छन्तो जनीयन्तः लटः शत्रादेशः उगिदचामिति नुम् दुरस्युः दुष्टशब्दस्य दुरसभावो द्रविणशब्दस्य द्रवि णस्य [illegible] णभावः रिष्टस्य रिषणभावश्च निपात्यते दुष्टीयतीति प्रकृतिमात्रेण तात्पर्यम् उप्रत्ययस्य समानार्थेन तु नादुष्टीयितेत्यादि बोध्यम् अश्वायन्त इति अश्वमिच्छन्तः कर्मणः लटः शत्रादेशः अघायव इति छन्दसि परेच्छायां क्यच् क्याच्छन्दसीत्युप्रत्ययः इदमेव सूत्रं ज्ञापकमिति अन्यथा दीर्घविधिरेव सिद्धत्वादात्ववचनमनर्थकं स्यात् [illegible] देवान् जिगातीति नन्विदं प्रत्युदाहरणमङ्गद्वयविकलम् ॥ यजुषि काठके इत्यङ्गद्वयस्यापि तत्राभावादित्याशङ्क्याह बह्वृचानामस्तीति तत्रेदं दृष्टमिति भा

देवाञ्जिगाति सुम्नयुः बह्वृचानामप्यस्ति काठशाखान्तनो भवति प्रत्युदाहरणमिति हरदत्तः ॥ कव्यध्वरपृतनस्यर्चि लोपः ॥ ७।
४।३९ ॥ सपूर्वया निविदा कव्यतायोः । अध्वर्युं वा मधुपाणिम् । दमयन्तं पृतन्युम् ॥ दधातेर्हिः ॥ जहातेश्च क्त्वि ॥ विभाषा छन्दसि ॥ ७।४।४४ ॥ हीत्वा श
रीरम् । हित्वा ॥ सुधितवसुधितनेमधितधिष्वधिषीय च ॥ ७।४।४५ ॥ सुवसुनेम एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्त्वं निपात्यते । गर्भं माता सुधितं वक्षणा
सु । वसुधितमग्नौ । नेमधिता न पौंस्या । क्तिन्यपि दृश्यते । उत श्वेतं वसुधितिं निरेके । ॥ धिष्व वज्रं दक्षिण इन्द्र हस्ते । धत्स्वेति प्राप्ते । सुरेता रे
तो धिषीय । आशीर्लिङ् इट् । इटोऽत् । धासीयेति प्राप्ते ॥ अपो भि ॥ मासश्छन्दसीति वक्तव्यम् । माद्भिः । शरद्भिः ॥ स्ववः स्वतवसोरुषस इष्यते । स्ववद्भिः ।
अवतेरसुन् । शोभनमवो येषां ते स्ववसः तैः तु इति सौत्रो धातुः तस्मादसुन् । स्वन्तवो येषान्तैः स्वतवद्भिः । समुषद्भिरजायथाः ॥ मिथुनेऽसिः । वसेः कि
त्यसि प्रत्यय इति हरदत्तः । पञ्चपादीरीत्या तु उषः किदिति प्राग्व्याख्यातम् ॥

वः काठक इति किम् यजुर्वेदशाखान्तरे मा भूत् अन्यत्र सुम्नयुरिदमस्ति कव्यध्वरकविश्वध्वरपृतनानामेषामन्त्यस्य लोपः स्यात् क्याचि परे क्यचि विषये मृगय्वादिगणेऽध्वर्युशब्दः पठ्यते तस्य तु तत्र त्वन्तरं बोध्यम् विभाषा जहातेरङ्गस्य विभाषा हि आदेशः स्यात् हीत्वेति हि आदेशाभावे घुमास्थेतीत्वम् कथं तर्हि हित्वेति पाठः स्तनान्तरं सत्वाद्घुमास्थेतीत्वाभावः वसुधितमिति कर्मधारय इति हरदत्तः वसूनां धातारं प्रशातारमित्यर्थ इति वेदभाष्यकारा नेमधितमिति नामि पर्यायो नेमशब्दः अयं कर्मधारयः धत्स्वेति प्राप्ते भ्यस्तयोरात इत्याकारलोपः दधस्तथोश्चेति भष्भावः धिषीयेति आशीर्लिङात्मनेपदे म

सि.कौ. पुरुषैकवचने दधातेरित्वं निपात्यते तवाह आशीर्लिङीति माद्भिरिति पद्दन्नो मास् इति मासशब्दस्य मास् आदेशः ॥ ॥ नकवतो रात अनुवृत्त्यर्थ उपन्यासः करीकृष्यत इति

वै. नकवतेर्यङि ॥ कृषेश्छन्दसि ।७।४।६४। यङि अभ्यासस्य चुत्वं न । करीकृष्यते ॥ दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनि

२२ ष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतो दविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ।७।४।६५। एते षट्त्रिंशन्निपात्यन्ते । आद्या

स्त्रयः धृङो धारयतेर्वा ॥ भवतेर्यङ्लुगन्तस्य गुणाभावः । तेन भाषायां गुणो लभ्यते । तिजेर्यङ्लुगन्तात्तङ् । इयर्त्तेर्लटि हलादिःशेषापवादो रे

फस्य लत्वं इत्वाभावश्च निपात्यते । अलर्षि युधमखजकृत्तुरन्दरः । सिपा निर्देशो न तन्त्रम् । अलर्त्ति दक्ष उता फणतेराङ्पूर्वस्य यङ्लुगन्तस्य श

तरि अभ्यासस्य नीगागमो निपात्यते । आपनीफणत् । स्यन्देः सम्पूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक् । धातुसकारस्य षत्वम् । करोतेर्य

ङ्लुगन्तस्याभ्यासस्य चुत्वाभावः करिक्रत् । क्रन्देर्लुङि च्लेरङ् द्विर्वचनं अभ्यासस्य चुत्वाभावो निगागमश्च । कनिक्रदज्जनुषम् । अक्रन्दीदित्यर्थः । बिभ

र्तेरभ्यासस्य जश्त्वाभावः रिगागमश्च यो भरिभ्रदोषधीषु । ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमः । धातोर्ऋकारलोपश्च । दविध्वतो रश्म

यः सूर्यस्य । द्युतेरभ्यासस्य सम्प्रसारणाभावोऽत्वं विगागमश्च । दविद्युतद्दीद्यच्छोशुचानः । तरतेः शतरि श्लौ अभ्यासस्य रिगागमः । सहो

जा तरित्रतः । सृपेः शतरि श्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य । वृजेः शतरि श्लावभ्यासस्य रीक् । मृजेर्लिटि णल् अभ्यासस्य रुक् । धातोश्च

युक् । गमेर्लङ् पूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावो नीगागमश्च । वस्यन्तीवेदागनीगन्ति कर्णम् ॥ ससूवेति निगमे ।७।४।७४। सूतेर्लिटि परस्मैपदं

वुगागमो अभ्यासस्य चात्वं निपात्यते । गृष्टिः ससूव स्थविरम् । सुषुवे इति भाषायाम् ॥ बहुलं छन्दसि ।७।४।७८। अभ्यासस्य इकारः स्याच्छन्दसि । पू. रामः

रुपिको चलुकीति रीगागमः लोके तु चरीकृष्यते कृषीवलः धृङ् इति धृङ् न वस्थाने धारयतेर्वेति स एव एयन्तः तत्र दाधर्तीत्यत्र धारयतेः शपः श्लौ णिलुक् अभ्यासस्य २२

[illegible] घञो वा शेप्राप्ते व्यत्ययेन शप् तत्र श्लावभ्यासस्य दीर्घत्वं च अत्र परस्मैपदमपि निपात्यते तस्यैव यङ्लुक्यभ्यासस्य रुगाद्यपवादकं दीर्घत्वं निपात्य-
ते इति दर्धर्तीत्यत्र यङ्लुक्पक्षे दाधर्तीति निपातनेन प्राप्तस्य दीर्घस्याभावो निपात्यते रुग्रिकौ च लुकि इति तस्यैवेत्येव रुक् सिद्धः श्लुपक्षे तु रुगपि निपात्यः दर्धर्षीत्य-
त्र यङ्लुक्पक्षे न किंचिन्निपातनं किंतु श्लावेव भवतेर्यङ्लुगन्ताल्लोट् गुणाभाव इति ननु भूसुवोस्तिङीत्येव गुणनिषेधे सिद्धे निपातनमनर्थकमिति चेत्सत्यम्
ज्ञापकार्थं तर्हि निपातनम् एतज्ज्ञापयति अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति तेन बोभवीत्यत्र भाषायां गुणनिषेधः सिद्धस्तदेतदाह तेन भाषायामिति नि-
जेर्यङ्लुक्यात्मनेपदं निपात्यते तदाह निजेरिति ऋगतौ लटि सिपि श्लौ इति द्वित्वम् अभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वं निपात्यते अर्तिपिपर्त्योश्चेत्य-
भ्यासस्य प्राप्तस्येत्वस्याभावो निपात्यते तदाह इयर्तेरिति करोतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य चुत्वाभावो निपात्यते ऋतश्चेति रिगागमस्तदाह करोतेरिति चुत्वा-

प्रसमुपोदः पादपूरणे। ८।१।६। एषां द्वे स्तः पादपूरणे। प्रप्रायमग्निः। संसमिद्युवसे। उपोप मे परामृश। किं नोदुदु हर्षसे॥ छन्दसीरः। ८।२।१५। इ-
वर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात्। हरिवते हर्यश्वाय॥

भाव इति कुहोश्चुरिति प्राप्तस्य विभर्जेर्यङ्लुगन्तस्य शतरि अभ्यासस्य जश्त्वाभावो निपा-
त्यते तदाह विभर्जेरिति जश्त्वाभाव इति अभ्यासे चर्च्चेति प्राप्तस्य दविध्वत इति ध्वरतेर्यङ्लुगन्तस्य शतरि रूपम् नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः द्युतेर्यङ्लुगन्तस्य
शतरि अभ्यासस्य संप्रसारणाभावोऽत्वं च निपात्यते तदाह द्युतेरिति सम्प्रसारणाभाव इति द्युतिस्वाप्योः संप्रसारणमिति प्राप्तस्य मस्तूवति निगमे दाधर्त्यादिषु नत्वपठितत्वा-
म् विवष्टीति वश कान्तौ लटि तिपि शपः श्लौ द्वित्वम् अभ्यासस्येत्वं व्रश्चेति षत्वम् ष्टुत्वम्॥ इति सप्तमोऽध्यायस्समाप्तः ७॥ ॥ प्रसमुपोदः पादपूरणे समाहारद्वन्द्वः स-
मासान्तविधेरनित्यत्वाद्द्वन्द्वाच्चुदषहान्तादिति न टच् प्रप्रायमग्निरिति। नात्र द्विर्वचनस्य किंचिदर्थोऽयं केवलं पादपूरणमेव कार्यम् न चैवंविधस्य भाषायां प्रयोगोऽस्ती-
ति सामर्थ्याच्छन्दस्येवेदं विधानमित्याहुः॥ छन्दसीरः॥ हरिवते इति। हरयो विद्यन्ते यस्येति हरिवान् तस्मै। हरिशब्दान्मतुप् मकारस्य वकारः॥ ० ॥ ६

त्वपक्षाम्नयुक्तेनपरिभाषाणामसिद्धत्वप्रकरणेपि प्रवृत्तेः। पू र्वमिति। पूर्वमितिभाषायां॥ ःः॥ अम्ना उभयथेतिव्याचष्टे। रुर्वा रेफो वेति। समजुषो रुरिति नित्यं रुत्वे प्राप्ते पक्षे रे
फार्थं प्रार्थमिदम्। अम्नस्। शब्दइ परर्थे अम्नरत्वमिति यथा। अवोरहणम्। अम्नएवेति। यदा रुत्वं तदा भोभगोइतिरोर्यत्वं लोपः शाकल्यस्येति लोपः भुवश्च महाव्याहृ
तेर्भुवस्। इत्येतस्य छन्दसि विषये रुर्वा रेफो वा। तिस्रो महाव्याहृतयः पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः। इह तु मध्यमाया ग्रहणम्। महाव्याहृतेरिति किं भुवो विश्वेषु भुवनेषु।
निङंतमेतद्भुवने छन्दसि लुङ्लङ्लिट इति वर्तमाने लङ् सिपूर्वापि गुणाभावश्छान्दसः बहुलं छन्दस्यमाङ्योगेपीत्यडभावः लाक्षणिकत्वादेवास्य ग्रहणे सिद्धे महाव्याहृ
तिग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं तेनक्रापयतीत्यादौ वुक् सिध्यति भुवइतीति भुवइत्येतदव्ययमन्तरिक्षवाची महाव्याहृतिः ओमभ्यादाने आरंभ।

अम्नरूधरवरित्युभयथा छन्दसि। ८।२।७०। रुर्वा रेफो वा। अम्न एव। अम्नरेव। ऊधएव। ऊधरेव। अवएव। अवरेव॥ भुवश्च महाव्याहृतेः।
८।२।७१। भुवइति। भुवरिति॥ ओमभ्यादाने। ८।२।८७। ओंशब्दस्य प्लुतः स्यादारम्भे। ओ३म् अग्निमीले पुरोहितम्। अभ्यादाने किम्। ओमित्ये
काक्षरम्॥ ये यज्ञकर्मणि। ८।२।८८। ये३ यजामहे। यज्ञेति किम्। ये यजामहे॥ प्रणवष्टेः। ८।२।८९। यज्ञकर्मणि टेरोमित्यादेशः स्यात्। अपां
रेतांसि जिन्वतो३म्। टेः किम्। हलन्तेऽन्त्यस्य माभूत्॥ याज्यान्तः। ८।२।९०। ये याज्यान्ता मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि। जिह्वामग्ने चकृषे

लदाह आरंभे इति अत्र प्लुतप्लुत्याचूपरिभाषोपस्थानादच एव प्लुतः मकारस्त्वर्धमात्रः इति समुदायोऽध्यर्धचतुर्मात्रः संपद्यते ये यज्ञ येइत्येतस्य यज्ञकर्मणि प्लुतो भव
ति प्रणवः यज्ञकर्मणीति वर्तते यज्ञकर्मणि टेः प्रणवादेशः ओमित्याह यज्ञकर्मणीत्यादि जिन्वतोमिति जिवि प्रीणनार्थः लट् इति पूर्वः प्रणवादेशः टेः किमिति वाक्यस्य टेरि
त्यतः टेरित्यनुवर्तमाने पुनष्टेर्ग्रहणं किमर्थमिति प्रश्नः अस्ति टिग्रहणे लोन्त्यस्येति वचनात् टेर्योन्त्योऽल् तस्योकारः स्यात् तस्मात् सर्वादेशार्थं टिग्रहणमित्याह हलंतेन्त्यस्य माभूदिति
अजंते विशेषाभावाद्धलंत इत्युक्तं याज्यांतः येर्याज्या नाम मंत्रा इति याज्याकांडपठिते ये मंत्रा याज्यानुवाक्याकांडमिति समाख्याते प्रकरणे ये मंत्रा इत्यर्थः तेषामिति मं
त्राणामित्यर्थः तासामितिपाठे तासां याज्यानां इह इदमंतग्रहणं टेरित्यस्य निवर्तकं वास्यादिति शेषणा आद्यंचांते विशेषिते अजंताया एव याज्यायाः प्लुतः स्यात् प्रत्यांतरे त्वं

अन्तः किमिति इतरेऽपि विदिताभिप्रायमाह याज्यानामृचामिति याज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपाः तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति स चान्तस्यैवेष्यते तदर्थमन्तग्रहणमिति भावः अग्नीत्प्रेषणे परस्य च अग्नीधः प्रेषणम् अग्नीत्प्रेषणं तस्मिन्नित्याह अग्नीधः प्रेषणे इति विभाषा पृष्टप्रतिवचने विभाषा हेः प्लुतो भवति निगृह्यानि गृह्येति ल्यबन्तं स्वमतात्प्रच्यावनं निग्रहः तस्यैव स्वमतस्य एवं किल त्वं निरुपपत्तिकमात्थेति शब्देन प्रतिपादनमनुप्रयोगः तत्र यद्वाक्यं तदाह अत्र यद्वाक्यमिति निगृह्यानुयोगे यद्वाक्यमित्यर्थः अद्यामावास्ये त्येवं केनचित्प्रतिज्ञातं तमुपपत्तिभिर्निगृह्य साभ्यसूयमनुयुङ्क्ते अद्यामावास्येत्यात्थेति तदेव विवृणोति अमावास्येत्येव

अन्तः किम्। याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः स्यात्। सर्वान्तस्य चेष्यते॥ ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः। ८।२।९१। एषामादेः प्लुतो यज्ञकर्मणि। अग्नये३नुब्रू३हि। अग्नये गोमयानि प्रे३ष्य। अस्तु श्रौ३षट्। सोमस्याग्ने वीही३वौ३षट्। अग्निमा३वह॥ अग्नीत्प्रेषणे परस्य च। ८।२।९२। अग्नीधः प्रेषणे आदेः प्लुतस्तस्मात्परस्य च। ओ३श्रा३वय॥ विभाषा पृष्टप्रतिवचने हेः। ८।२।९३। प्लुतः। अकार्षीः कटं अकार्षं हि३ अकार्षं हि। पृष्टेति किम्। कटं करिष्यति हि। हेः किम्। करोमि ननु॥ निगृह्यानुयोगे च। ८।२।९४। अत्र यद्वाक्यं तस्य टेः प्लुतो वा॥ अद्यामावास्ये३त्यात्थ। अद्यामावास्येत्येवंवादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुयुज्यते॥ आम्रेडितं भर्त्सने। ८।२।९५। दस्यो दस्यो३ घातयिष्यामि त्वाम्। आम्रेडितग्रहणं द्विरुक्तोपलक्षणम्। चौर३ चौर। अङ्गयुक्तं तिङाऽऽकाङ्क्षम्। ८।२।९६। अङ्गेत्यनेन युक्तं तिङन्तं प्लवते। अङ्ग कूज३ इदानीं ज्ञास्यसि जाल्म।

मित्यादि दस्यो दस्यो इति वाक्यादेरामन्त्रितस्येत्यादिना द्विर्वचनं ननु द्विरुक्तसमुदाये परभागस्यैव प्लुतः प्राप्नोति न तु पूर्वस्य तस्य परमाम्रेडितमिति परभागस्यैवाम्रेडितसंज्ञाविधानात् दृश्यते द्वयोरपीत्याह आम्रेडितग्रहणमित्यादि द्विरुक्तोपलक्षणार्थमिति द्विरुक्तसमुदायभागद्वयोपलक्षणार्थमित्यर्थः एतच्चाम्रेडितस्य भर्त्सनेत्यस्य सम्भवाल्लभ्यते अङ्गयुक्तं आकाङ्क्षतीत्याकाङ्क्षं पचाद्यच् तिङन्तमिति आकाङ्क्षं तिङन्तमित्यर्थः अङ्ग कूज३ इति अङ्गशब्दोऽमर्षे कूज अव्यक्ते लोण्मध्यमपुरुषैक

वचनं त्वास्यसिन्नास्तीति कूजन फलमस्मिन्नेव खण्डे ज्ञास्यसीत्यर्थः॥ ९६॥ अङ्ग देवदत्तेति अङ्गशब्दोऽनुनये अङ्ग देवदत्तेत्येकं वाक्यं एतच्च मिथ्या वदसीति तदपेक्षते॥ विचार्यमाणानां कोटिद्वयस्योपस्थितानं विचार इति कथ्यते विचार्यमाणस्तत्त्वज्ञानविषयीभूत उच्यते इह तु विचार्यमाणविषयत्वाद्वाक्यानि विचार्यमाणानि गृह्यन्ते इति सप्तम्येकवचनान्तस्य गृहे इत्यस्य एचोऽप्रगृह्यस्येति प्लुतविकारः पूर्वं तु पूर्वेणैव सिद्धे नियमार्थमिदं तुशब्दस्त्वेतोऽवधारणार्थः यद्येवं विज्ञायेत पूर्वमेव प्लुत इति मैवं विज्ञापि पूर्वं भाषायामेवेति उदाहरणे तु शब्दो वितर्के प्रतिश्रवप्रतिश्रवणार्थमाह अभ्युपगमेत्यादि अङ्गीकार इत्यर्थः प्रतिज्ञाने इति अत्रोभयत्रापि गतिसमासः

अङ्ग देवदत्त३ मिथ्या वदसि। आकाङ्क्षं किम्। अङ्ग पच नैतदपरमाकाङ्क्षतीति भर्त्सन इत्येव। अङ्गाधीष्व भक्तं तव दास्यामि॥ विचार्यमाणानाम्। ८।२।९७। वाक्यानां टेः प्लुतः। होतव्यं दीक्षितस्य गृहा३इ। न होतव्य३मिति। होतव्यं न होतव्यमिति विचार्यते। प्रमाणेन वस्तुतत्त्वपरीक्षणं विचारः॥ पूर्वं तु भाषायाम्। ८।२।९८। विचार्यमाणानां पूर्वमेव प्लवते। अहिर्नु३ रज्जुर्नु। प्रयोगापेक्षं पूर्वत्वम्। इह भाषाग्रहणान्नपूर्वयोगाच्छन्दसीति ज्ञापयते॥ प्रतिश्रवणे च। ८।२।९९। वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च। गां मे देहि भोः। हन्त ते ददामि३। नित्यः शब्दो भवितुमर्हति३। दत्त किमात्थ३॥ अनुदात्तं प्रश्नान्ताभिपूजितयोः। ८।२।१००। अनुदात्तः प्लुतः स्यात्। दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्वमात्रमनेन विधीयते॥

अर्थद्वयेऽपि प्रतिपूर्वः शृणोतिः प्रसिद्धः आभिमुख्ये चेति अत्र लक्षणेनाभिप्रती आभिमुख्य इत्यव्ययीभावः दत्त किमात्थ इति किं ब्रूषे इत्येवं पृच्छ्यते अत्र श्रवणाभिमुख्यं गम्यते। अनुदात्तं प्रश्नान्त प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः नानेन प्लुतो विधीयते किं तु दूराद्धूतादिषु विहितस्य प्लुतस्योदात्तत्वे प्राप्ते प्रश्नान्ताभिपूजितयोरनुदात्तत्वगुणमात्रं विधीयते तदाह दूराद्धूतादिष्विति तत्रैषां वचनव्यक्तिः प्रश्नान्ते अभिपूजिते च यः प्लुतः सोऽनुदात्तो भवतीति तत्राभिपूजिते दूराद्धूते चेति प्लुत इत्युत्तरकालत्वं नन्यस्यापि प्रश्नाख्यानयोरिति॥ ॥ ॥ ॥

सि॰ कौ॰ आग्निभूता३ इइति पटा३ उइति आगमाः पूर्वान्प्रश्नानुद्दिश्य इदं वाक्यम् आग्निभूते पटो इत्यनंतरेण समासं तत्र आगमाद् इत्येवमादीनामनंत्यस्यापि आख्यानयोः स्वरि

वै॰ तः प्लुतः आग्निभूते पटो अनयोरनुदात्तः आग्निभूतिने उदाहरणमाह शोभनः खल्वसीत्यादि चिदिति चोप चिदित्येतन्निपाते उपमानेऽर्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः

२५ प्लुतो भवतीत्यर्थः प्लुतोऽप्यत्राविधीयते न गुणमात्रं इतीति आकिं यमाणेन स्मिन्नुपमानेऽर्थे कस्मिंश्चिच्छब्दे प्रयुज्यमाने चिच्छब्दः प्लुत इति विज्ञायते इति शब्दे

सति प्रयुज्यमानत्वेन चिच्छब्दस्य विशेषणं प्लुतस्तु वाक्यस्य टेरित्यधिकारात्तस्यैव भवतीति मनसि विभाव्योदाहरणमुखेनाह आग्निचिदिव भायादिति अग्न॰

आग्निभूता३इ पटा३उ। आग्निभूते पटो एतयोः सम्यान्ते टेरनुदात्तः प्लुतः। शोभनः खल्वसि माणवक३ इ॥ चिदिति चोपमार्थे प्रयुज्यमाने। ८

।२।१०१ वाक्यस्य टेरनुदात्तः प्लुतः। आग्निचिद्भाया३त्। आग्निचिदिव भाया३त्। उपमार्थे किम्। कथञ्चिदाहुः। प्रयुज्यमाने किम्। आग्निर्माणव

को भायात्॥ उपरि स्विदासीदिति च। ८।२।१०२ टेः प्लुतोऽनुदात्तः स्यात्। उपरि स्विदासी३त्। अधः स्विदासी३ दित्यत्र तु विचार्यमाणानामित्युदात्तः

। स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु। ८।२।१०३ स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये। असूयायां। आभिरूपक३ अभिरूप

क रिक्त ते आभिरूप्यम्। संमतौ। अभिरूपक३ अभिरूपक शोभनोऽसि। कोपे। अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म। कुत्सने।

शाक्तीक३ शाक्तीक रिक्ता ते शक्तिः॥

विच्छब्दस्य प्लुतः किं तु भायादित्यस्यैव आकिं यमाणे तु इति शब्दे चिच्छब्दस्यैव प्लुतः स्यात् आग्निचिद्भायादित्यत्र न स्यादिति भावः कथंचिदिति अत्र कथं चिच्छब्दः आग्निर्मा एम:

णवको भायादिति आग्निरिव माणवको दीप्यतामित्यर्थः अत्रोपमानार्थस्य गम्यमानत्वादस्ति चिच्छब्दस्य प्रतीतिः प्रयोगस्तु नास्ति यद्यन्येषामप्युपमानार्थो नास्ति वादी २५

नामस्ति प्रतीतिस्तथापि चिच्छब्दस्यापि तावदस्तीति भावः उपरि स्विदासीदिति अत्रापि विचार्यमाणानामिति विहितस्य प्लुतस्य गुणमात्रं विधीयते स्वरितमाम्रेडिते उदाह

सि.कौ. नइति प्लुतः विष्णुभूतेइतिनन्विदं परिगणनस्योदाहरणमयुक्तं. यावता सूत्रेएवादूराद्धूतइत्युच्यते अत आह अदूराद्धूतइति नवक्तव्यमिति अन्यार्थमवश्यं कर्तव्ये परि
वै. गणनेनैनैवसिद्धत्वात् अदूराद्धूतइतिनवक्तव्यं॥ ॥ भद्रं करोषि गो३ इति अत्रासर्वनामस्थानइति प्रतिषेधात्तौ परतः पूर्वपदं न भवति शोभने माले३ इति ईदूदेद्द्वि
२६ वचनं प्रगृह्यसंज्ञा आमंत्रितेति अप्राप्तेएव प्लुते वचनं अग्ने३ इइति अग्निशब्दस्य संबुद्धौ रूपं सामंत्रितमिति आमंत्रितसंज्ञा तयोश्चैनन्विदं व्यर्थं इकोयणचीत्यनेनै
व सिद्धमत आह इदुतोरसिद्धत्वादिति ननु सिद्धः प्लुतः स्वरसंधिषु कथं ज्ञायते प्लुतप्रगृह्याअचीति प्रकृतिभावविधानात् यस्य हि विकारः प्राप्तः तस्य प्रकृतिभावो विधेयः
प्लुतस्यासिद्धत्वेन न स्यात्स्वरसंध्याख्यो विकारः प्राप्नोति अस्तु प्लुतः सिद्धः किमायातमिदुतोः उच्यते प्लुतप्रकरणे यत्कार्यं तत्स्वरसंधिषु सिद्धमिति सामान्येन ज्ञापकमाश्र

भद्रं करोषि गो३ इति। अप्रगृह्यस्य किम्। शोभने माले३॥ आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः॥ अग्ना३ इ पत्नीव। तयोर्य्वावचि संहिता
याम्। ८।२।१०८ इदूतो यकारवकारौ स्तोऽचि संहितायां। अग्न३ याश्शा। पट३ वाश्शा। अग्ने३ यिन्द्रम्। पट३ वुदकम्। अचि किम्। अग्ना३ इ वरुणो।
संहितायां किम्। अग्ना३ इ इन्द्रः॥ संहितायामित्यध्यायसमाप्तेरधिकारः॥ इदुतोरसिद्धत्वादयमारम्भः। सवर्णदीर्घत्वस्य शाकलस्य वा नि
वृत्त्यर्थम्। यवयोरसिद्धत्वात्। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यस्य बाधनार्थो वा॥

यिष्यते तेन नन्विदुतोरपि सिद्धत्वात्सिद्ध एव यणादेशोऽनतया
ह्रस्वत्वं दीर्घत्वस्येति यदीदं नोच्येत अग्ना३ इइन्द्रं पट३ उउदकमित्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घः स्यात् अग्ना३ याशेत्यादौ च इकोऽसवर्णे शाकल्यस्येति प्रकृतिभावः
स्यात्तद्बाधनार्थमिदं वक्तव्यमेव ननु च तन्निवृत्तये यत्नान्तरमस्ति किं पुनस्तस्तु प्लुतपूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घनिवृत्त्यर्थः शाकल्यनिवृत्त्यर्थश्च तच्चावश्यं वक्तव्यं
यदिकं प्लुतपूर्वः नच प्लुतविकारः भो३ इदं भो३ यिदं गायतीति भोशब्दस्य [illegible] सः प्लुतः ततः परस्येकारस्य निपातत्वात् प्रकृतिभावे प्राप्ते तं बाधित्वा यणादेशः तदेवं तस्या रामः
वश्यं कर्तव्यत्वेनैव यणासिद्धेऽत आह यवयोरिति तथा चोक्तं वार्त्तिककृता किंतु यणाभवतीह न सिद्धं यावि दुतोर्यदयं विदधाति तौ च ममस्वरसंधिषु सिद्धौ शाकलदीर्घवि २६
धीतु निवर्त्यौ इकच यदाभवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादं तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः अयमर्थः इकोयणचीति यणादेशो न किंरूपं

प्रसिध्युनि यत्नो यमाचार्यः वृद्वुतो र्घैविदधानिनीचेद्वुतो स्वरसंधिषु सिद्धो ममेति सूत्रकारेणो की भूतस्य वचनं एवं चोदितेपरिहरति शाकलदीर्घविधीतुनिवर्त्यां विति
कलसेदंशाकलंकएवादिभ्योगोत्रेइत्यणपुनश्चोरयतिइकुवंयदेनिवार्त्तिककारोपिदृकः प्लुतपूर्वस्ययणंविदधातिसचप्रकृतिभावस्यैवशाकलदीर्घविध्योरपिअपवादः ततश्चैतेने
वयणाएतयोरपिद्रुतोः शाकलदीर्घौनभविष्यतइतिनार्थएतेनपरिहरति यणस्वरेतियणस्वरवाधनार्थमेवहेतुः सूत्रारंभस्येति॥ ॥ मतु अनुबंधपरित्यागेन
मकारांतस्यवसइत्यस्य मतुपासह द्वंद्वः अल्पाच्तरस्यापिसोत्रः परनिपातः मरुत्वइति मरुतोयस्यसंतीतिमतुप् अन इतिवत्वं नसोमत्वर्थइतिभत्वात्पत्वंनह

मतुवसोरुसंबुद्धौछन्दसि।८।३।१। इत्यविभक्तिकोनिर्देशः। मत्वन्तस्य वस्वन्तस्य च रुः स्यात्। अलोऽन्त्यस्येतिपरिभाषयातकारस्य। इ
न्द्र मरुत्व इह पाहि सोमम्। हरिवो मेदिनं त्वा। छन्दसीरइति वत्वम्। दाश्वान्साह्वान्मीढ्वांश्च।६।१।१२। एते क्वसन्ता निपात्यन्ते। मीढ्वो लोका
यतेनयाय॥ वनउपसंख्यानम्॥ क्वनिब्वनिपोः सामान्यग्रहणम्। अनुबन्धपरिभाषा तु नोपतिष्ठते। अनुबन्धस्येहानिर्देशात्। यस्त्वाय
तं वसुना प्रातरित्वः॥ इणः क्वनिप्॥ उभयथर्क्षु।८।३।८। अम्परे छवि नकारस्य रुर्वा। पन्थास्त्वम्। दीर्घादटि समानपादे।८।३।९। दीर्घा
न्नकारस्य रुर्वा स्यादटि। नो चेन्नाटो एकपादस्थौ स्याताम्। देवाँ अच्छा सुमती। महाँ इन्द्रो य ओजसा। उभयथेत्यनुवृत्तेर्नेह। आदित्या

रिवोमेदिनमिति हरयोविद्यंते यस्येतिमतुप् हरिवच्छब्दात्संबुध्येकवचनेउगिदचामितिनुम् हल्ङ्यादिलोपेसंयोगांतलोपेचकृतेनकारस्यरुः संयोगांतलोपोरु
त्वेसिद्धोवक्तव्यइतिवचनाद्विविचेत्युत्वंप्रसंगाराहस्पवामिति क्वनिपवनिपोः सामान्येनग्रहणमिति अनुबंधनिर्देशान्तदनुबंधकपरिभाषायाअनुपस्थानात्क्व
निपोपियहणं प्रातरित्वइति प्रातरेतीतिक्वलन्येभ्योपिदृश्यंतेइतिक्वनिप् ह्रस्वस्यपितिकृतितुक् नदाहद्गणः क्वनिविति उभयथेनऋच्छव्यवस्थानिनिवर्तते तेनैव
वैभाषिविकल्पार्थवचनं पन्थास्त्वमित्यपन्थाननानिनियंतेनस्यरुः पूर्वस्यात्वानुनासिकइतिवानुनासिकः उत्तरत्रत्वाणोटिनित्यमित्यनुनासिकः रफस्यविसर्गः॥

सि॰कौ॰ यद्यप्यस्मान्शब्दस्तदाह नोचेन्नाटावेकपादस्याविति नाटोनकारेऽटीदेवोऽस्वामहाँ इन्द्रोऽइति रेवानूऽस्वामहानिति नस्य रुः ॥ ॥ आतोटिनित्यमिति नित्यमनुनासिकः

नेहेति एतेनमहानूहिसदूतिवहृचानां पाठोपिव्याख्यातः आकरेतुमहाँहीन्दुराह तं तच्छास्वांतरेऽन्वेषणीयं एवंचेति विकल्पस्यैवव्यवस्थितत्वात्यामस्तु तस्य स्या

१२ आतोऽटिनित्यम् ॥८।३।३॥ अटिपरतः रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः। महाँ इन्द्रः। नैत्तरीयास्तु अनुस्वारमधीयते। तत्र छान्दसो व्यत्यय इति माधवः। एवञ्च सूत्रस्य फलञ्चिन्त्यम्॥ स्वतवान्पायौ॥८।३।११॥ रुर्वा॥ भुवस्तस्य स्वतवाँ पायुरग्ने॥ छन्दसि वाऽप्राम्रेडितयोः॥८।३।४९॥ विसर्गस्य सो वा स्यात्। कुप्वोः प्रशब्दमाम्रेडितञ्च वर्जयित्वा॥ अयेत्रातन्नतस्कविः। गिरिर्नविश्वतस्पृथुः नेह। वसुनः पूर्व्यः पतिः। अग्रेत्यादि किम्। अग्निः प्रविद्वान्। पुरुषः पुरुषः॥ कःकरत्करतिकृधिकृतेष्वनदितेः॥८।३।५०॥ विसर्गस्य सः स्यात्। प्रदिवो अयस्कः। यथा नो मित्रस्य सस्करत्। सुपेशसस्करति। उरुनस्कृधि। सोमन्नचारुम्मघवस्तु नस्कृतम्। अनदितेरिति किम्। यथा नो अदितिः करत्॥ पञ्चम्याः परावध्यर्थे॥८।३।५१॥ पञ्चमीविसर्गस्य सः स्यादुपरिभावार्थे परिशब्दे परतः। दिवस्परि प्रथमं जज्ञे। अध्यर्थे किम्। दिवस्पृथिव्याः पर्योजः॥ पातौ च बहुलम्॥८।३।५२॥ पञ्चम्या इत्येव। सूर्यो नो दिवस्पातु॥ षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु॥८।३।५३॥ वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय। दिवस्पृष्ठं मन्दमानः। तमसस्पारमस्य। परिवीत इळस्पदे। दिवस्पयो दिधिषाणाः। रायस्पोषं यजमानेषु॥ इडाया वा॥८।३।५४॥ पतिपुत्रादिषु परेषु। इडायास्पुत्रः। इडायाः पुत्रः। इडायास्पदे। इडायाः पदे॥ गेनमहत्लाघवं सूत्रारंभेतु व्यत्ययोपि त्यागकरणीय इति महानूहोमह

तिभावः स्वतवान्पायौ स्वतवानित्येतस्य नकारस्य रुर्वा पायुशब्दे परे स्वतवा इति तुवृद्धौ सौत्रो धातुः ततोऽसुन् स्वेन वा यस्या सोऽस्तु तवान् स्वकृतवः स्वनवसांऽछंदसीति नुम् रामः

पुरुषः पुरुष इति वीप्सायां द्विर्वचनं कः करत् करतीति कृञो लुङ् मंत्रे घसेत्यादिना च्लेर्लुक् तिपि गुणः हल्ङ्यादिलोपः बहुलं छन्दस्यमाङ्योगेपीत्यडभावः करतीति कृञ एव २२

गुर्वः करतीति लट्व्यत्ययेन शप् कृधीति लोट् सेर्हिः श्रुश्रृणु एकवचने ... दसीति हेर्धिरादेशः क्तत इति क्त एव कः पर्यो ज इति अत्र परिः सर्वतोभावे पातौ च क्वचित्पठ्यते
पताविति धातुनिर्देश इति अन्ये तूदाहरणप्रयोगे लोच नयालोडंतानुकरणं मन्यंते षष्ठ्याः वाचस्पतिमिति मत्सुहृत्पृष्ठे निवहुलमिति षष्ठ्या लुक् ॥ ॥ निसस्तपतावनासेवने
नः पुनर्वर्तने वसिन्नित्यर्थः युष्मत्तत्ततक्षुष्विति सकारांतानुकरणात् परस्य सुपः सकारस्य नुम् विसर्जनीयशर्व्यवायेपीति षत्वम् ह्रस्वात्तादावित्यतः तादाविति वर्तते नेदाहत

निसस्तपतावनासेवने। निसः सकारस्य मूर्द्धन्यः स्यात्। निष्टतं रक्षो निष्टप्ता अरातयः। अनासेवने किं। निस्तपति। पुनः पुनस्तपतीत्यर्थः॥ युष्मत्तत्ततक्षुःष्वन्तःपादम्। ८।३।१०३। पादमध्यस्थस्य सस्य मूर्द्धन्यः स्यात्तकारादिषु परेषु। युष्मदादेशाः त्वं त्वा ते तवाः। त्रिभिष्ट्वं देव सवितः। तेभिष्ट्वा। अग्निष्टे। अप्स्वग्ने सधिष्टव। अग्निष्टद्विश्वम्। द्यावापृथिवी निष्टतक्षुः। अन्तःपादं किम्। तदग्निस्तदर्यमा। यन्म आत्मनो निन्दाभूत्। अग्निस्तत्पुनराहजातवेदा विचर्षणिः। अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यः॥ यजुष्येकेषाम्। ८।३।१०४। युष्मत्तत्ततक्षुषु परतः सस्य मूर्द्धन्यो वा। अर्चिर्भिष्ट्वम्। अग्निष्टेऽग्रम्। अर्चिभिष्टतक्षुः। पक्षे अर्चिस्त्वमित्यादि॥ स्तुतस्तोमयोश्छन्दसि। ८।३।१०५। नृभिष्टुतस्य। नृभिस्तुतस्य। गोष्टोमम्। गोस्तोमम्। पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम्॥ पूर्वपदात्। ८।३।१०६। पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा। यदिन्द्राग्नी दिविष्ठः। युवं हि स्थः स्वर्पती॥ सुञः। ८।३।१०७। पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य सस्य षः। ऊर्द्ध्व ऊ षु णः। अभी षु णः॥

कमादिष्विति एतद्युष्मदस्य विशेषणं नेतरयोरव्यभिचारात् त्वं त्वा ते तवा इति एतेषामेव संभवादित्यर्थः स्तुतस्तोमयोः एतयोः परतः सस्य षत्वं स्यात् पूर्वपदादित्येव सि
द्धे इति पूर्वपदं पूर्वपदमिति सामान्यतश्चाश्रियते न तु समासावयव एवेति वाक्येपि तेनैव सिद्धं षत्वमिति भावः ततश्च स्तुतस्तोमग्रहणं प्रपंचार्थं छंदोग्रहणं तूत्तरार्थं का
र्यमेव उषुणादुत्यादिष्वु कः सुञीति पूर्वपदस्य दीर्घत्वं न सहःयादेवास्य नश्च धातुस्थोरुषुभ्य इति णत्वं॥

॥ ९ ॥

सि.कौ. सुनोर्विरनः अवंतस्ससनोतेः सस्यषः स्यात् गोषादिति जनसनखनक्रमगमो विट् विड्वनोरित्यात्वं गोसनिरिति छन्दसि वनिसनिरक्षिमथामिती प्रत्ययः निव्यभि
वै. व्यानरपरेत्यत्तोनेनिवर्तते नत्र निषेधविकल्पेविधिविकल्पएवफलतीत्याह सुञ्ञ्योवास्यादिति अभ्यष्टौदितिउतोवृद्धिर्लुकिहलीतिवृद्धिः छन्दस्यदव अवग्रह
२९ नेविच्छिद्यपदस्यतेइत्यवग्रहः ऋ चा सावग्रहश्चक्रदवग्रहस्तस्मात् नृमणादित्यादीति अत्रसंहिताधिकारात्संहिताकालएव एतेषांणत्वंपदकालेचावग्रहः
क्रियते तेनावग्रहयोग्यत्वादकारोवग्रहइत्युक्तः नतुनदृश्यप नः अत्रहि नृमनादितिपदकालेवगृह्यतेनश्चधातुस्थान्निमित्तादुत्तरस्यउरुस्त्राव्हापुत्राव्हास्वपरस्यनस्य
सनोतेरनः ८।३।१०८। गोषा इन्द्रो नृषा असि। अनः किम्। गोसनिः॥ सहेः पृतनर्ताभ्यां च ८।३।१०९। पृतनाषाहम्। ऋताषाहम्। चात्। ऋ
तीषाहम्॥ निव्यभिभ्योऽड्व्यवाये वा छन्दसि ८।३।११९। सस्य मूर्धन्यः। न्यषीदत्। न्यसीदत्। व्यषीदत्। व्यसीदत्। अभ्यष्टौत्। अभ्यस्तौत्॥ छ
न्दस्यृदवग्रहात् ८।४।२६। ऋकारान्तादवग्रहात्परस्य नस्य णः। नृमणाः। पितृयाणम्॥ नश्च धातुस्थोरुषुभ्यः ८।४।२७। धातुस्थात्। अ
ग्ने रक्षाणः। शिक्षाणोऽस्मिन्। उरुणस्कृधि। अभीषुणः। मोषुणः॥ इत्यष्टमोऽध्यायः॥ ॥ इति कौमुद्यां वैदिकप्रकरणं समाप्तम्॥ ॥
इत्येतस्य षः स्यात् धातोर्निष्ठतीति धातुस्थो रेफः षकारश्च उरु इति स्वरूपग्रहणं षु इति कृतषत्वस्य सु इत्यस्य ग्रहणं नस सप्तमी बहुवचनस्य नेनेद्रो धनो यः हे षु न इत्यादौ
न नश्चिति नासिको देत्रास्यनसादेत्रस्य च सामान्येन ग्रहणं रक्षाण इति रक्षेति लोटो मध्यमपुरुषैकवचनान्तं द्व्यचोतस्तिङ इति दीर्घः उरुणस्कृधीति कृञो लोट् से राम:
हि श्रुशृणु इत्यस्य दसीति हेर्धिः कः करत्यादिना विसर्जनीयस्य सत्वं अभीषुण इति इकः सुञीति दीर्घः एवम् षुण इत्यत्रापि सर्वत्रोदाहरणे अस्मदादेशो २७
नस इति श्रीमन्मौनि कुलतिलकायमानगोवर्द्धनभट्टात्मजरघुनाथभट्टात्मजेन जयकृष्णेन कृतायां सिद्धान्तकौमुदीव्याख्यायां वैदिकखंडसमाप्तिमगमत्॥ ॥

...मिति देवअच् इति स्थिते विष्वग्देवयोरिति देवशब्दस्य टेरद्रि आदेशः उगितश्चेति ङीप् अचइत्यंचतेरकारलोपः चाविति दीर्घत्वं द्रीतीकार उदात्तः ततः परस्ये
[illegible]न स्वरितत्वं ॥ ॥ अतद्धितइति चौयःस्वरः सतद्धितेपरतो न भवतीत्यर्थः अन्यथा देवद्रीचीभिरित्यादौ यथोदात्तनिवृत्तिस्वरं बाधते तथ
दाधीच इत्यादौ प्रत्ययस्वरमपि सतिशिष्टत्वाद्बाधेत तस्मादतद्धितइति वक्तव्यं अस्मिंश्च सति उदात्तनिवृत्तिस्वरस्यायमपवाद इति फलितं दाधीच इति दधि अच् अ
ण् इति स्थिते [illegible] उदात्तत्वे कृते चइत्यकारलोपे ततः सतिशिष्टत्वाच्चाविति स्वरः प्राप्तो निषिध्यते तथा चाणप्रत्ययस्वरेणैव [illegible] स्यात् तदाह प्रत्ययस्वर एवात्रेति आ
मइत्यादि सामंत्रितमित्येनेनामंत्रितत्वं प्रागुक्तषाष्ठस्येति आमंत्रितस्य चेत्यस्य इमम्मइति मेशब्दात्परत्वमाश्रित्य गंगेप्रभृतीनां त्रयाणामनुदात्तः स च पदपाठे स

[illegible]तद्धितइति वाच्यम् दाधीचः माधूचः प्रत्ययस्वरएवात्र आमन्त्रितस्य च ६।१।१९८ आमन्त्रितविभक्त्यन्तस्यादिरुदात्तः स्यात् अ
ग्नइन्द्र वरुणमित्रदेवाः आमन्त्रितस्य च ८।१।१९ पदात्परस्यापादादिस्थितस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात् प्रागुक्तस्यषाष्ठस्याप
वादोऽयमाष्टमिकः इमम्मेगङ्गेयमुनेसरस्वति अपादादौ किम् शुतुद्रिस्तोमम् आमन्त्रितम्पूर्वमविद्यमानवत् अग्नइन्द्र अत्रेन्द्रादी
नां निघातो न पूर्वस्याविद्यमानत्वेन पदात्परत्वाभावात् नामन्त्रितेसमानाधिकरणेसामान्यवचनम् समानाधिकरणे आमन्त्रितेपरे वि
शेष्यं पूर्वमविद्यमानवन्न अग्नेतेजस्विन् अग्नेत्रातः सामान्यवचनं किम् पर्य्यायेषु माभूत् अघ्न्येदेविसरस्वति ॥ १९ इत्यएव संहितायां तु

स्वरितात्संहितायामनुदात्तानामिति वक्ष्यमाणप्रचयापरपर्याया एकश्रुतिः प्रवर्तते शुतुद्रीति षाष्ठेनामंत्रितस्य चेत्यनेनाद्युदात्तः आमंत्रितंपूर्वं अग्नइन्द्रेति सर्वा
णि षाष्ठेनाद्युदात्तानि निघातो नेति आष्टमिकेनेति भावः नामंत्रिते अत्रोत्तरसूत्रस्थं सामान्यवचनमत्र संबध्यनीयमिति भाष्यं तद्व्याचष्टे विशेष्यमिति विशेष्यसम
र्पकमित्यर्थः क्वचित्तु नामंत्रिते समानाधिकरणे सामान्यवचनमिति पाठः स तूत्तरानुरोधेनेति ज्ञेयं अग्नेतेजस्विन्नित्यादि अग्ने इत्यस्याविद्यमानत्वा [illegible] चेतेजस्विन्नि
त्यस्यामंत्रितस्य चाष्टमिकनिघातः अघ्न्येदेविसरस्वतीति तैत्तिरीयके त्वा[illegible]सहस्लमतीं[illegible] इडे रन्ते दिते सरस्वति प्रिये प्रेयसि महि विश्रुति एतानि ते अघ्न्ये नो

स·

सि· कौ· मानि इतीन इडे कामे विहव्ये च निपाठः स तु शार्वर्वतो द्रष्टव्यः समानाधिकरणग्रहणं पाणिनिमते ऽनर्थकं बहुणइत्यादौ व्यधिकरणनिवृत्त्यर्थं भाष्यकृन्मते विस्पष्टार्थं सामान्यवच

टी· त· चनमिस्त्युक्तं तत्र सामानाधिकरण्यस्यावश्यं पस्थितत्वात्॥ ॥ सामान्य बहुवचनमिति पूर्वनिषेधस्यायं विकल्पस्य च विषयविभागार्थं देवीः षडिति अत्र देवीरित्या

२ मन्त्रितं नाविद्यमानवत् तेन षडित्यस्य निघातः शरण्याइति शरणं रक्षितृत्वं तत्र साधवः शरण्याः तत्र साधुरितियत् द्वितीयस्येति षष्ठशब्दस्य शरण्यशब्दस्य चेत्यर्थ

इत्यामंत्रिते परस्याङ्गवदिति तस्यैव परस्यामंत्रितस्याङ्गवद्भावे कदेशवद्भवतीति तद्ग्रहणेन गृह्यत इत्यर्थः षष्ठ्यामंत्रित अत्र षष्ठीशब्देन षष्ठ्यर्था विभक्तिरुच्यते तेन मोक्षुस्वामि

सामान्यवचनं विभाषितं विशेषवचने ८।१।७४ अत्र भाष्यकृता बहुवचनमिति पठितम् सामान्यवचनमिति च पूर्वसूत्रे योजितम् आम

न्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा देवीः षड्डुर्वीरुरु नः कृणोति अत्र देवीनां विशेषणं षडिति देवाः शरण्याः इह।

द्वितीयस्य निघातो वैकल्पिकः सुबामन्त्रिते पराङ्गवत्स्वरे २।१।२। सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्यात्स्वरे कर्त्तव्ये द्रवस्पाणी शुभस्प।

ती शुभ इति शुभेः क्विबन्तात्षष्ठ्यन्तस्य परशरीरानुप्रवेशेषाष्ठिकमामन्त्रिताद्युदात्तत्वम् न चाष्टमिको निघातः शङ्क्यः पूर्वामन्त्रितस्याविद्यमानत्वेन पादादित्वात् यत्ते दिवो दुहितर्मर्तभोजनम् इह दिवःशब्दस्याष्टमिको निघातः परशुनावृश्चन् षष्ठ्यामन्त्रितकारकवचनम्

षष्ठ्यन्तमामन्त्रितान्तं प्रतियत्कारकं तद्वाचकं स्वेतिपरिगणनं कर्त्तव्यमित्यर्थः तेनेह न अयमग्ने जरिता एतेनाग्ने ब्रह्मणा समर्थानुवृ।

त्त्या वा सिद्धम् पूर्वाङ्गवच्चेति वक्तव्यम् आ ते पितर्मरुताम् प्रतित्वा दुहितर्दिवः अव्ययानां च उच्चैरधीयान॥ ४ ॥ ३

न्तिस्त्वापि पूर्वाङ्गवद्भावः सिध्यति परशुनावृश्चन्निति आङ्परयोः खनिशृभ्यां डिच्चेति कुप्रत्ययान्तौ तौ ताद्यन्तः षष्ठ्यन्तं आमंत्रितान्तं प्रति यत्कारकमिति यद्यप्यामंत्रि

तस्य क्रियावचनत्वान्न कारकपि तथापि आमंत्रितं तया धातुवाच्यक्रियान्तस्यास्तदपेक्षास्तीति तत्कारकमित्यर्थः पितर्मरुतामिति अत्र मरुतामिति षष्ठ्यन्तं पूर्वं स्वस्थितमि। स्व·

त्यर्थमेवाङ्गवद्भवति पितरित्यामंत्रितनिघातेनानुदात्तं ततः परं मरुतामित्येतदप्यनुदात्तमेव भवतीत्यर्थः अव्ययानां नेति तेनोच्चैरधीयानेत्यत्रामंत्रितस्यैवाद्युदात्तत्वं २८

स॰
स्व॰ वै॰ वस्मिन्नन्यतरस्यामनुदात्तत्वे स्वरितत्वे वा आन्तरतम्यात्स्वरिते प्राप्ते विधिरयमिति ध्वनयन्नुदाहरणद्वयमाह कवेभ्या इत्यादि बहुवचनस्य वसत्वानि यत्रानुदात्ते सर्वम॰
टी॰ नं॰ पादः स्वविसर्गो विसर्गः अनुदात्तः अग्नेः कविनि ... आद्युदात्तः वसोहत्वं उत्वं एङः पदान्तादतीति पूर्वरूपं कोऽति किमोत् कातीति किमः कादेशः॰
२ स्वरितं अवेशशब्दः ... तानामित्युदात्तः तयोर्दीर्घ उदात्तः ॥ ॰ ॥ स्वरितो वा इत्यादि विशब्दो निपातत्वादाद्युदात्तः इदंशब्दः फिट्स्वरेणान्तोदात्तः तयो॰
रेकादेशः स्वरितः दिविशब्दे उ इदं पदादिति विभक्तिरुदात्ता ईयते इङ् गतौ दिवादिः तिङ् तिङ इति निहतम् अत्रैकादेश उदात्तः इकारयोः स्वरित इति ह्रस्वेकारयोरेव
र्यः दीर्घप्रवेशे त्विति दिवीयतइत्यत्र उदात्त इति एकादेश उदात्त इत्यनेन इयं च बह्वृचानां व्यवस्थोक्ता अन्येषामपि तदीयप्रातिशाख्यानुसारेण ज्ञेया पूर्वरूपे दनि

स्वरितो वाऽनुदात्ते पदादौ ८।२।६ अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् पक्षे पूर्वसूत्रेणोदात्तः वी३दं ज्योतिर्हृदये
अस्य श्लोको दिवीयते व्यवस्थितविभाषात्वादिकारयोः स्वरितः दीर्घप्रवेशे तूदात्तः किंत्वेङः पदान्तादिति पूर्वरूपे स्वरित एव तेऽव
द॰ सो ३ यमागात् उक्तं च प्रातिशाख्ये इकारयोश्च प्रश्लेषे क्षैप्राभिनिहतेषु चेति उदात्तादनुदात्तस्य स्वरितः ८।४।६६ उदात्ता॰
त्परस्यानुदात्तस्य स्वरितः स्यात् अग्निमीळे अस्य अप्रसिद्धत्वाच्छेषनिघातो न ॥ ९९ नेवदन्नित्यादौ तेइति तच्छब्दः फिट्स्वरेणान्तोदात्तः जसः सुप्त्वाद॰

नुदात्तौ सुप्पितौ वित्यनुदात्तः तयोरेकादेश उदात्तः अवदन्निति वदेर्लङि प्रथमपुरुषबहुवचनं ते इत्यतिङन्तात्परस्य तस्य तिङ् तिङ इति निघातः सोऽयमिति स इति तच्छ॰
ब्दस्य प्रथमैकवचनं तच्छब्दः फिट्स्वरेणान्तोदात्तः सुप् सुप्त्वादनुदात्तः तस्य हत्वे उत्वे गुणे च कृते एकादेशेनौकार उदात्तः अयमितीदमः प्रथमैकवचनं फिट्स्वरेणान्तोदा॰
त्तः तयोरेङः पदान्तादिति पूर्वरूपे ओकारः स्वरितः इकारयोश्च प्रश्लेष इति ह्रस्वयोरिकारयोः सवर्णदीर्घे ह्रस्वयोर्यत्र सवर्णदीर्घः स प्रश्लेष इत्युच्यते उदात्तस्वरित
योरेकादेशः प्रश्लिष्टसंधिः यत्र एङः पदान्तादिति स अभिनिहतसंधिरुच्यते तेषु स्वरितः स्वीक्रियत इत्यर्थः वी३दं ज्योतिः अप्पमिहि नेवदन्निति क्रमेणोदाहरणानि एम॰
उदात्तादनुदात्तस्य अत्र तयोर्व्यावर्त्यासत इति संहितायामित्यनुवर्तते तेन पदकालेऽनुदात्तमेव अग्निमीळे इति अग्निशब्दः फिट्स्वरेण प्रत्ययस्वरेण वान्तोदात्तः अस्मु॰

स्व. सि. कौ. टी. त. ५९

स्वब्रह्मणे। सुब्रह्मण्यायामेव देवाब्रह्माण इति पठ्यते तत्र पूर्वेण स्वरितस्योदात्तेऽप्राप्ते अनेनानुदात्तो विधीयते देवाब्रह्माण इति देवब्रह्मणोर्वैयधिकरण्ये द्वयोरप्यनुदात्तत्वं ततः परस्यानुदा-
त्तस्य स्वरितः तस्यानेनानुदात्तः आमन्त्रितनिघातस्तु तस्य न पूर्वामन्त्रिताविद्यमानत्वेन पदात्परत्वाभावात् पदात्सामानाधिकरण्ये न तु विभाषितं विशेषवचने इति पूर्वस्य पक्षेऽविद्य-
मानत्वात् पदात्परत्वात् ब्रह्माण इत्यस्य निघातोऽपि भवति अस्मिन्पक्षे देवशब्दे देवशब्दस्यैवानेनानुदात्तं विधेयम् ब्रह्मग्रहणं न कर्तव्यम् स्वरित अनुदात्तानामिति जातौ बहुवच-
नम् तेनैकस्य द्वयोर्बहूनां च भवति एकस्य पचति द्वयोः अग्निमीले पुरोहितं बहूनां तु मूल एव दर्शितं इमंमे इति इदम्शब्दः प्रातिपदिकस्वरेणान्तोदात्तः विभक्तिरनुदात्ता स्वरा-
यत्तेऽमि पूर्वः एकादेश उदात्तः मे इत्यनुदात्तं अनुदात्तं सर्वमपादादावित्यधिकारात् तस्य उदात्तादनुदात्तस्य स्वरितः तस्मात्परेषां गङ्गेप्रभृतीनामनुदात्तानामेकश्रुतिः सर्वेऽप्येते आमन्त्रित-
निघातानुदात्ताः अत्र मे इत्यस्य स्वरितस्य [illegible] विधायकं त्रिपादीस्थत्वादसिद्धत्वं स्यात् न च स्वरितादित्यारम्भ [illegible] इदम् [illegible] सुप्तेत्यादौ चरितार्थत्वादिति चेन्नैवम् तस्यादित इत्यारम्भ

देवब्राह्मणोरनुदात्तः। १।२।३८ अनयोः स्वरितस्यानुदात्तः स्यात् सुब्रह्मण्यायाम् देवाब्रह्माण आगच्छत स्वरितात्संहितायामनुदात्तानाम्। १।२।३९
स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात् इमंमे गङ्गे यमुने सरस्वति उदात्तस्वरितपरस्य सन्नतरः। १।२।४० उदात्तस्वरितौ परौ य-
स्मात्तस्यानुदात्तस्यानुदात्ततरः स्यात् सरस्वति शुतुद्रि व्यचस्व यत्स्वः तस्य परमाम्रेडितम् अनुदात्तं च ८।१।३। द्विरुक्तस्य परं रूपमनुदात्तं स्यात्।

न च स्वरस्यास्थानाद्दृष्टत्वं प्रयोक्तॄणां भाष्यवार्तिकयोरदर्शनात् न सुब्रह्मण्यायामिति सूत्रे स्वरितस्यानुदात्त इति कृत एवकारोत्कर्षे दिवेदिवे इति साधारणस्वरः
स्याज्ञापितत्वान्न सुब्रह्मण्यायामिति सिद्धः स्वरितोऽवाचीति वाच्यं तत्र एकादेश उदात्तेनेति सूत्रमवश्यकत्वात् तत्र स्वरितग्रहणं नानुवर्तते उदात्त मन्त्रशब्देन नीचैः
उच्यते तेन ततोऽनुदात्तत्वं लक्ष्यते इत्याह अनुदात्ततर इति प्रकर्षे तरप् न्यानुदात्तापेक्षः सरस्वतीत्यादि अत्र मे शब्दमाश्रित्य सरस्वतीत्यस्यामन्त्रितनिघातः शुतुद्रिशब्दस्य तु न पादा-
दित्वात् आमन्त्रितस्येति षाष्ठेन शुतुद्रीत्यस्याद्युदात्तं प्रथममक्षरं तस्मिन्परे पूर्वस्य सरस्वतीकारस्य सन्नतरः व्यचस्व यत्स्व इति वीति उपसर्गत्वादाद्युदात्तः ततः परस्याचस्य यदि-
तिङ्ङतिङ इति निघातः स्वरितिन्यङ् स्वरौ स्वरितावितिस्वरितः तस्मिन्परे यकारोकारस्य सन्नतरः साधारणः स्वर इति एकस्मिन्पदे पदद्वयेऽपि च वर्तमानात्साधारणः आ- स्वर
मुदात्तश्च त्रियादिर्नित्यमित्यादयस्तु एकस्मिन्नेव पदे वर्तमानान्न साधारणाः। प्रकृतिर्द्विधा धातुः। प्रातिपदिकं च। तत्र धातुस्वरानाह॥ ४ ४ ४ ४ ४ ३। ५

स्व॰ सि॰कौ॰ टी॰त॰ ७

त्वान्तं तसौमत्वर्थइतिमत्वाज्जश्त्वाभावः कर्षश्चात्वाश्चेतिसमाहारद्वंद्वः कर्षइतिशवंतस्यानुकरणं नघञंतस्यतदाह शपानिर्देशादिति पाकइति पर्यर्षघञ् नेत्यादि।
कुत्वं कालविशेषइतिऋतद्वापरादौ भस्त्राशब्दइति [illegible] अविस्यणंपताश्रुराद्यइतिप्रत्ययाणिच नास्तितदायत्र एंयताज्जुएरज्जुइत्यपिचसिद्धं एरजायं
तान्त्रमितितुनास्तीत्याहुः उत्तमशश्वत्तमाविति तमबंतावेतौ तेनद्रव्यप्रकर्षविवक्षायामाम्भावः पित्वादनुदात्तत्वेप्राप्तेपाठः ॥ ॐ ॥ चतुरः चतेरुरन्नित्तादा
द्युदात्तत्वेप्राप्तेऽन्तोदात्तार्थमिदं ननुचतस्रःपश्येत्यत्रचतसृअस्इतिस्थितेपरत्वादचिरऋतइतिरेफादेशेनकारान्तकारस्योदात्तत्वंप्राप्नोतिअतआह अचिरइतिस्थानि

चतुरःशसि ६।१।१६७ चतुरोऽन्तउदात्तःशसिपरे चतुरःकल्पयन्तः अचिरइतिरादेशस्यपूर्वविधौस्थानिवत्त्वान्नेह चतस्रःपश्य च
तेरुरन् नित्त्वादाद्युदात्तता झल्युपोत्तमम् ६।१।१८० षट्त्रिचतुर्भ्योयाझलादिर्विभक्तिस्तदंतेपदेउपोत्तममुदात्तंस्यात् अध्वर्युभिःपञ्च
भिः नवभिर्वाजैर्नवतीच सप्तभ्योजायमानः आदशभिर्विवस्वतः उपोत्तमंकिम् आषड्भिर्हूयमानः विश्वेदेवैस्त्रिभिः झलिकिम् ना
वाकानवतीनाम् विभाषाभाषायाम् ६।१।१८१ उक्तविषये सर्वस्यसुपि ६।१।१९१ सुपिपरेसर्वशब्दस्यादिरुदात्तःस्यात् सर्वेनन्दा।
न्तियशसा त्निसादिर्न्निसम् ६।१।१९७ ञिदन्तस्यनिदन्तस्यचादिरुदात्तःस्यात् यस्मिन्विश्वानिपौंस्या पुंसःकर्माणिब्राह्मणादि।
त्वात्ष्यञ् सुतेदधिष्वनश्चनः चायतेरसुन् चायेरन्नेह्रस्वश्चेतिचकारादसुनोनुडागमश्च॥ ११ वत्वादितिनचस्वरविधौस्थानिवत्त्वनिषेधःस्व
रदीर्घयलोपेषुलोपाजादेशएवनस्थानिवदितिनियमात् झल्युपोत्तमं षट्त्रिचतुर्भ्योहलादिरित्यस्यापवादः पंचभिरित्यादि पंचनवसप्तदशशब्दाःकनिन्ताः
आषड्भिरितिषष्शब्दः फिट्स्वरेणान्तोदात्तः तनोतेर्डिः त्रिः अयमपिफिट्स्वरेणप्रत्ययस्वरेणवांतोदात्तः उभयत्रापिषट्त्रिचतुर्भ्योहलादिरितिविभक्तेरुदात्त
त्वं नवानामिति अत्रापिविभक्तिरुदात्ता विभाषा उक्तविषयइति षट्त्रिचतुर्भ्यःपरायाझलादिर्विभक्तिस्तदंतस्योपोत्तमंभाषायामुदात्तंवास्यात् पंचभिःस
प्तभिःतिसृभिःचतुर्भिःपक्षेषट्त्रिचतुर्भ्योहलादिरित्यंतोदात्तानि सर्वस्य सर्वशब्दः उक्षादिष्वंतोदात्तोनिपातितःसर्वस्यविकारःसार्वइत्यत्रानुदात्तादेर Ho

स. सि.कौ. मनुष्य इति लुप् ननु प्रत्ययलक्षणेन नित्वात् ञ्नित्यादिर्नित्यमित्येव सिद्धमत आह एतदेवेति निष्ठा दत्त इति ददातेः क्तः दोदद्घोरिति दधादेशः चित्तिन इति चितिस्तूयांसुप

टी.त. दिः कृतं हृतमिति प्रत्ययस्वरेणांतोदात्तावेतौ असंज्ञार्थमिति संज्ञायां तु निष्ठा च द्व्यजनादिरित्येव सिद्धं शुष्कमिति शुषेः क्तः तस्य शुषः क इति कादेशः ॥ ॥ आशि

८ तः कर्तृवाचीति आङ्पूर्वादशभोजने ऽस्मात्कर्तरि क्तो निपात्यते अयमाह कर्तेत्यनेन भूतपूर्वगत्याऽण्णौ कर्ता णौ कर्मभूत एवं विवक्षितः तथा चाशितः प्र

योज्यकर्तेति गति बुद्धि प्रत्यवसानार्थेति कर्मसंज्ञके निष्ठायामाशित इति रूपमिति रिक्त इति रिचिर् विरेचने संज्ञायामित्यादि निष्ठा च द्व्यजनादिरित्यनेन दत्तः।

आशितः कर्ता ६।१।२०७ कर्तृवाची आशितशब्द आद्युदात्तः कृषन्निष्कालआशितम्. रिक्ते विभाषा ६।१।२०८ रिक्तशब्दे वादिरुदात्तः

रिक्तः संज्ञायान्तु निष्ठा च द्व्यजनादिति नित्यमाद्युदात्तत्वम्पूर्वविप्रतिषेधेन जुष्टार्पिते च च्छन्दसि ६।१।२०९ आद्युदात्ते वा स्तः नित्यम्म

न्त्रे ६।१।२१० एतत्सूत्रं शक्यमकर्तुम् जुष्टोदमूनाः षलरआहुरर्पितमित्यादेः पूर्वेणैव सिद्धेः छन्दसि पाठस्य व्यवस्थिततया विपरीतापा

दनायोगात् अर्पिताः षष्टिर्न चलाचलासइत्यत्रान्तोदात्तदर्शनाच्च युष्मदस्मदोर्ङसि ६।१।२११ आदिरुदात्तः स्यात् नहि षस्तवनो मम ङ

यि च ६।१।२१२ तुभ्यं हिन्वानः मह्यं वातः पवताम् यतोऽनावः ६।१।२१३ यस्सत्ययान्तस्य व्यचः आदिरुदात्तो नावं विना युञ्ज।

न्यस्य काम्या कमेर्णिङन्तादचो यत् ॥ १९ गुप्तः अस्य त्ववकाशः असंज्ञायां रिक्तो घट इति संज्ञायामुभयप्रसंगे पूर्वविप्रतिषेधः रिक्तो नाम कश्चित्।

जुष्टार्पिते जुषः अर्पित इत्येते शब्दरूपे छन्दसि विषये आद्युदात्ते वा स्तः जुषी प्रीतिसेवनयोः क्तः श्वीदितो निष्ठायामितीट्प्रतिषेधः जुष्टः अर्तेर्णिच् अर्तीत्यादि।

नापुक् अर्पितः नित्यं जुष्टार्पितशब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते स्तः पूर्वेणैव सिद्धेरिति ननु पक्षेंतोदात्तत्वमपि प्राप्नोतीत्याशंक्याह छन्दसीत्यादिना केवलं

गतार्थत्वं मत्वा किं त्वारभ्यमाणे सूत्रे दोषोऽप्यस्तीत्याह अर्पिताः षष्टिरित्यादिना युष्मदस्मदोः युष्मत्सि भ्यामदिमिति मदिकृ प्रत्ययांतानं तोदात्तौ ममेति युष्मदा। एम.

स्मदोर्ङसोऽश तवममौ ङसीति मपर्यंतस्य ममादेशः शेषे लोपः अतो गुण इति पररूपत्वं एकादेश उदात्तेनोदात्त इति विभक्तेरुदात्तत्वे प्राप्ते इदमुच्यते ङयि च ॥ ८

स्व॰

सि॰कौ॰ मतौबह्वचोनजिरादीनां शरादीनांचेतिदीर्घत्वं वेत्रवतीति मतुप् वत्वं नचात्रवत्वस्यासिद्धत्वादवतीशब्दोयंनभवतीतिशंक्यं तस्याप्यसिद्धत्वेनाभिमत्वा॥अत्र
टी॰त॰ अवस्याइतिनिर्देशादित्वनभवति राजवतीति स्वरविधौव्यंजनस्याविद्यमानत्वान्नायमवतीशब्दः अहीवतीति पूर्ववद्दीर्घः संज्ञायामितिमत्वं॥अथफिट्सूत्राणि
१ ॥१॥ फिषोंतउदात्तः फिडितिपूर्वाचार्यप्रसिद्धाप्रातिपदिकसंज्ञोच्यते तदाह प्रातिपदिकंफिडिति ननुकथमपाणिनीयानिसूत्राण्युपन्यस्यंते पाणिनीयसूत्रैःस्वर
आयातिसिद्धप्रयाणं तथाचशताचठन्यताचशतेरिति सूत्रेकैयटः नियतकालाश्चस्मृतयोव्यवस्थाहेतवइतिमुनित्रयमतेनाघत्वसाध्वसाधुप्रविभागइतिनैतान्

फिषोऽन्तउदात्तः प्रातिपदिकम्फिट्तस्यान्तउदात्तःस्यात् उच्चैःवृक्षःपाटलापालङ्कीवासागरार्थानाम् एतदर्थानामन्तउदात्तः पाटलाफले
रुहासुरूपापाकलेतिपर्य्यायाः लघावन्तइतिप्राप्ते अपालङ्कव्याधिघातआरेवतआरग्वधेतिपर्य्यायाः अम्बार्थः माताउनर्वनन्ता
माद्युदात्तेप्राप्ते सागरःसमुद्रः गेहार्थानामस्त्रियाम् गेहम् नविषयस्येतिप्राप्ते अस्त्रियांकिम् शालाआद्युदात्तोऽयम् इहैवपर्य्युदा
सान्ज्ञापकात् गुदस्यच अन्तउदात्तःस्यान्नतुस्त्रियाम् गुदम् अस्त्रियांकिम् आन्त्रेभ्यस्तेगुदाभ्यः स्वाङ्गशिटामदन्तानामित्यन्त
रङ्गमाद्युदात्तत्वम् ततष्टाप् ध्यपूर्वस्यस्त्रीविषयस्य धकारयकारपूर्वोयोऽन्त्योऽच्सउदात्तः अन्तर्धा स्त्रीविषयवर्णानाम्नामितिप्रा
प्ते कन्या माया जाया यान्तस्यान्त्यात्पूर्वमित्याद्युदात्तत्वेप्राप्ते स्त्रीतिकिम् बाह्यम् यजन्तत्वादाद्युदात्तम् विषयग्रहणंकिम् इभ्या॥
क्षत्रिया यतोनावइत्याद्युदात्तइभ्यशब्दः क्षत्रियशब्दस्तुयान्तस्यान्त्यात्पूर्वमितिमध्योदात्तः॥ १ अपाणिनीयान्यपिफिट्सूत्राणिपाणिनीयैराश्री

यंतेभाष्यकारेर्ज्ञापकात् तथाचाद्युदात्तश्चेतिसूत्रेभाष्यंप्रातिपदिकस्यचांतइतिप्रकृतेरंतोदात्तत्वंशास्तीति तथातस्मिन्नेवसूत्रेप्रत्ययाद्युदात्तत्वस्यावकाशः यत्रानुदा
त्ताप्रकृतिः समत्वंसिमत्वमिति नहिफिषोन्तउदात्तःस्वतत्वसमसिमेत्यादिफिट्सूत्राश्रयणंविनाप्रकृतेरंतोदात्तत्वंसर्वानुदात्तत्वंवासंभवतीतिदिक् पाट पाट राम॰
ले सादयश्चौषधिविशेषस्यवाचकाःलघावन्तइतिप्राप्ते इतिइदंपूर्वेण परेणचसंबध्यते पर्य्यायाइति वृक्षविशेषस्यवाचकाःसागरसमुद्रयोर्लघावन्तइतिप्राप्ते १

स्व॰

सि॰कौ॰ सावित्राएते आम्बरिति· लघावन्त इति प्राप्ते इत्यर्थः दक्षिणस्य· अन्त उदात्तः साधावित्यर्थे वीणायां दक्षिणः प्रवीण इत्यर्थः ॥ः०ः॥ छन्दसि दक्षिणस्याद्युदात्तो पर्याये

टी॰त॰ दात्तो स्यात् वेदे· कृष्णस्य अन्त उदात्तश्छन्दसि· ननु मृगाख्यायां एके इति· तन्मते ऽस्मिन् सूत्रे नामधेयस्येत्यनुवर्त्तते वचनविपरिणामेनान्वयः नामधेयं [illegible]

१ छन्दसि च· अस्वाङ्गार्थमिदम् दक्षिणाः इहपर्यायविवक्षायामनाद्युदात्तो कृष्णस्यामृगाख्या चेत् अन्त उदात्तः वर्णानां त णेत्याद्युदात्तत्वे प्राप्ते अन्तो
दात्तो विधीयते कृष्णानां व्रीहीणाम् कृष्णो नोनाव वृषभः मृगाख्यायान्तु कृष्णो रात्र्यै वा नामधेयस्य कृष्णस्येत्येव अयं वां कृष्णो अश्विना कृष्ण
ऋषिः शुक्लगौरयोरादिः नित्यमुदात्तः स्यादित्येके वेत्यनुवर्त्तत इति तु युक्तम् सरो गौरो यथा पिबेत्यत्रान्तोदात्तदर्शनात् अङ्गुष्ठोदकबकव-
शानां छन्दस्यन्तः अङ्गुष्ठस्य स्वाङ्गानामकुर्वादीनामिति द्वितीयस्योदात्तत्वे प्राप्ते ऽन्तोदात्तार्थमारम्भः वशग्रहणं नियमार्थं छन्दस्येवेति तेन
लोके आद्युदात्तत्वेत्याहुः पृष्ठस्य च छन्दस्यन्त उदात्तः स्याद्वा भाषायाम् पृष्ठम् अर्जुनस्य तृणाख्या चेत् उनर्वन्नन्तानामित्याद्युदात्तस्यापवा-
दः अर्यस्य स्वाम्याख्या चेत् यान्तस्यान्त्यात्पूर्वमिति यतोऽनाव इति वाद्युदात्ते प्राप्ते वचनम् आशाया अदिगाख्या चेत् दिगाख्याव्यावृत्त्य-
र्थमिदम् अत एव ज्ञापकाद्दिक्पर्यायस्याद्युदात्तता इन्द्र आशाभ्यस्परि नक्षत्राणामाव्विषयाणाम् अन्त उदात्तः स्यात् अश्लेषाऽनुराधा-
दीनां लघावन्त इति प्राप्ते ज्येष्ठाश्रविष्ठाधनिष्ठानामिष्ठन्नन्तत्वेनाद्युदात्ते प्राप्ते वचनम् नञ्पूर्वस्य कृत्तिकाख्या चेत् अन्त उदात्तो न कृत्तिकान-
क्षत्रम् केचित्तु कृपूर्वस्य आपत द्विषयाणामिति व्याख्याय आर्णिका बहुलिका इत्यत्राप्यन्तोदात्तो नेत्याहुः हृतादीनां च अन्त उदात्तः हृतमिमि
हे शा कृति गणोऽयम् ज्येष्ठकनिष्ठयोर्वयसि अन्त उदात्तः स्यात् ज्येष्ठ आह चमसा कनिष्ठ आह चतुरः वयसि किम् ज्येष्ठः श्रेष्ठः कनिष्ठोऽल्पः।
ल्पिष्ठः इहनित्वादाद्युदात्त एव बिल्वतिष्ययोः स्वरितो वा अनयोरन्तः स्वरितो वा स्यात् पक्षे उदात्तः

योरादिरित्यर्थः तेन सरो गौरो यथा पिबेत्यत्रान्तोदात्तत्वमेव नामधेयत्वाभावात् अङ्गु ष्ठ· एषामन्तोदात्तश्छन्दसि· अङ्गुष्ठ इति· उपलक्षणमिदं· बकवशेष्वपि

एम॰
१०

स०
सि० कौ०
टी० त०
३५

इति। दधृष्ठौ। युमिश्रणे। असंज्ञार्थोयमारंभइति। संज्ञायांतु संज्ञायामनाचितादीनामित्येव सिद्धम्॥ ॥कारकाद्दत्त। नन्वस्मिन्कृते संज्ञाया माशिषिकारकात्पर-
दत्तश्रुतयोरेवक्तान्तयोरंतउदात्तःस्यात्। संज्ञायामनाचितादीनामित्यनेन विहितमन्तोदात्तत्वमनेननियम्यते। देवदत्तइत्यादि। देवाएनंदेयासुरित्येवंप्रार्थिते देवै-
र्दत्तोदेवदत्तः आशिषिलिङ्लोटावितिवर्त्तमानेक्तिच्क्तौचसंज्ञायामितिक्तः दोदद्घोरितिदद्रादेशः विष्णुरेनंश्रूयादित्येवंप्रार्थिते विष्णुनाश्रुतो विष्णुश्रुतः क्तस्य
यः पूर्ववत्। संभूतोरामायणइति। कारकादित्यनुच्यमाने गतिकारकोपपदादितिक्तिन्नियाधिकाराद्यथैवकारकान्नियमोभवति तथागतेरपिस्यात्। एवकिमिति॥

कारकाद्दत्तश्रुतयोरेवाशिषि ६।२।१४८ संज्ञायामन्त उदात्तः विष्णुश्रुतः कारकात्किं संश्रुतो रामायणः दत्तश्रुतयोः किम् देवपालितः॥
असत्यस्मिन्नियमादत्र संज्ञायामनेति न तृतीयाकर्मणीतितु भवति एवकिम् कारकावधारणं यथास्यात् दत्तश्रुतावधारणंमाभूत् अकार-
कादपिदत्तश्रुतयोरन्तउदात्तो भवति संश्रुतः आशिषिकिं देवैःखाता देवखाता आशिष्येवेत्येवमत्रेष्टो नियमः तेनानाहतो नदति देवदत्तइत्यत्र न।
आर्षेविशेषस्यसंज्ञेयं तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरत्वमेव भवति इत्थम्भूतेनकृतमिति च ६।२।१४९ इत्थम्भूतेनकृतमित्येतस्मिन्नर्थे
यः समासः तत्रक्तान्तमुत्तरपदमन्तोदात्तंस्यात् सुप्तप्रलपितं प्रमत्तगीतम् कृतमितिक्रियासामान्ये करोतिर्न्नाभूतप्रादुर्भावेएव तेनप्रलपिता-
द्यपिकृतम्भवति तृतीयाकर्मणीत्यस्यापवादः॥ एवसिद्धेपि कारेणारभ्यमाणेऽतरेणाप्येवकारंनियमार्थोभविष्यतीतिप्रश्नः कारकावधारणमित्यादि असतिह्येवकारे

विपरीतनियमोपिस्यात्। कारकादेवदत्तश्रुतयोरितिएवंचकारकाद्दत्तश्रुतयोर्नेस्यात्। इष्यतेच। तथाकारकस्यानियतत्वाद्देवपालितइत्यादावन्तोदात्तः अतःकारकावधारणंयथा-
स्याद्दत्तश्रुतावधारणंमाभूदित्येवमर्थमेवकारग्रहणमित्यर्थः देवखातेति। तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरः इत्थं। इत्थंभूतेनकृतमित्येतस्मिन्नर्थे
इति। इत्थंप्रकारमात्रइत्थंभूतस्तेनकृतमित्यर्थे सुप्तप्रलपितमित्यादि। कथमेतान्युदाहरणानियावताकृतमित्युच्यते। नचप्रलपितानीतिकृतानि। अभूतप्रा-
दुर्भावएवहिकरोतिर्वर्त्ततेनतन्नश्च। सुप्तकृतसुप्तभाषितम्। उन्मत्तभाषितमित्यादिक्रमेणोदाहर्त्तव्यमित्यत आह कृतमितीति। क्रियासामान्येकरोतिर्वर्त्ततेनतु — राम०
३५

ता तस्य यथा क्रियावचनाद्धातोः क्रियायां क्रियार्थायामित्यादौ विशेषाणामपि ग्रहणं भवति तद्वदत्रापि · ननु सुप्रसुप पितमित्यादौ कारकादिति योगविभागेनैव सिद्धमि
त्याशंक्याह तृतीयेति · तस्य तु योगविभागो न बाधकः तस्य निर्विषयत्वं स्यात् · अभूतप्रादुर्भावो निष्पादनम भूतप्रादुर्भाव इति ॥ १४९ ॥ अनो · गतिकारकोपपदा
दित्यस्यापवादः · पयःपानमिति · कर्मणि चयेनेति कर्मण्युपपदे भावे ल्युट् उपपदसमासः राजभोजना इति · कृत्यल्युटो बहुलमिति कर्मणि ल्युट् · कर्तरि षष्ठीसमासः मन्क्तिन् कृ
त्स्वरस्यापवादः क्रीतेतु तृतीया कर्मणीत्यस्य · रथवर्त्मेति वर्तेरधिकरणे मनिन् कर्तरि षष्ठ्या समासः · पाणिनिकृतिरिति · कर्मणि क्तिन् पूर्ववत् समासः छन्दोव्याख्यानमिति · व्याख्या

अनो भावकर्मवचनः ६।२।१५० कारकात्परमनप्रत्ययान्तम्भाववचनं कर्मवचनञ्चान्तोदात्तम् पयःपानं सुखम् राजभोजनाः शालयः
अनः किम् हस्तादायः भेति किम् दन्तधावनं करणे ल्युट् कारकात्किं निदर्शनं मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ६।
२।१५१ कारकात्पराणि एतान्युत्तरपदान्यन्तोदात्तानि तत्पुरुषे कृत्स्वरापवादः रथवर्त्म पाणिनिकृतिः छन्दोव्याख्यानं राजशयनं राजासनं
अश्वस्थानं ब्राह्मणयाजकः गोक्रीतः कारकात्किं प्रभृतौ सङ्गतिं अत्रतादौ च नीती तिस्वरः सप्तम्याः पुण्यम् ६।२।१५२ अन्तोदात्तं अ
ध्ययनपुण्यं तत्पुरुषे तुल्यार्थ इति प्राप्ते सप्तम्याः किं वेदेन पुण्यं वेदपुण्यम् ऊनार्थकलहं तृतीयायाः ६।२।१५३ माषोनं माषविकलम्
वाक्कलहः तृतीयापूर्वपदप्रकृतिस्वरापवादोऽयम् अत्र केचिदर्थ इति स्वरूपग्रहणमिच्छन्ति धान्यार्थः ऊनशब्देन त्वर्थनिर्देशार्थेन त
दर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव सिद्धे तृतीयाग्रहणं स्पष्टार्थम् ॥

नमिति करणे ल्युट् · शयनासनस्थानेष्वधिकरणे ल्युट् · ब्राह्मणयाजक इति याजकादिभिश्चे
ति षष्ठीसमासः याजकादयस्त एव गृह्यन्ते · प्रभृतौ संगतिमिति · तादौ च निति कृत्यतौ इति पूर्वपदप्रकृतिस्वर एवात्र भवति · सप्तम्याः · सप्तम्यन्तात्परं पुण्य
मित्येतदुत्तरपदमन्तोदात्तं स्यात्तत्पुरुषे · अध्ययनपुण्यमिति · अध्ययने पुण्यमिति विग्रहः सप्तमीति योगविभागात्समासः ऊनार्थ · तृतीयान्तात्पराणि ऊना
र्थकलहश्चैतान्युत्तरपदान्यन्तोदात्तानि स्युः उदाहरणेषु पूर्वसदृशेत्यादिना तृतीयासमासः केचित्त्वित्यादिनान्वेवमूनशब्दस्यापि स्वरूपस्य ग्रहणं प्रस

ज्येनान्तस्य तदर्थानामन्येषां ग्रहणं न स्यादत आह ऊनशब्देनत्विति॰ अर्थे निर्देशार्थं त्वंतु व्याख्यानादवसेयम्॰॥ ❁ ॥ मिश्रं च तृतीयान्तान्त्यमनुपसर्गो मिश्रमन्तोदात्तं

मिश्रं चाऽनुपसर्गमसन्धौ ६।२।१५४ पणबन्धेनैकार्थ्यं सन्धिः तिलमिश्राः सर्पिर्मिश्राः मिश्रङ्किं गुडधानाः अनुपसर्गः किं तिलसंमि श्राः मिश्रग्रहणे सोपसर्गग्रहणस्येदमेव ज्ञापकं असन्धौ किं ब्राह्मणमिश्रो राजा ब्राह्मणैः सह संहितः ऐकार्थ्यमापन्नः नञो गुणप्रतिषे धे सम्पाद्यर्हहिताऽलमर्थास्तद्धिताः ६।२।१५५ सम्पाद्याद्यर्थे तद्धितान्ता नञो गुणप्रतिषेधे वर्त्तमानात्परेऽन्तोदात्ताः कर्णवेष्टकाभ्यां सम्पा दितं कार्णवेष्टकिकं न कार्णवेष्टकिकमकार्णवेष्टकिकं छेदमर्हति छैदिकः न छैदिकोऽच्छैदिकः न वत्सेभ्यो हितोऽवत्सीयः न सन्तापाय प्र भवति असान्तापिकः नञः किं गर्दभरथमर्हति गार्दभरथिकः विगार्दभरथिकः गुणप्रतिषेधे किं गार्दभरथिकादन्योऽगार्दभरथिकः। गुणो हि तद्धितार्थप्रवृत्तिनिमित्तं सम्पादितत्वाद्युच्यते तत्प्रतिषेधो यत्रोच्यते तत्रायं विधिः कर्णवेष्टकाभ्यां न सम्पादि मुखमिति संपेति। किं पाणिनीयमधीते पाणिनीयः न पाणिनीयमपाणिनीयः तद्धितः किं वोढुमर्हति वोढा न वोढाऽवोढा ययतोश्चाऽतदर्थे ६।२।१५६। ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेध विषयात्परस्यान्त उदात्तः स्यात् पाशानां समूहः पाश्या न पाश्यामपाश्या अ दन्त्यं अतदर्थे किं अपाद्यं तद्धितः किं अदेयं गुणप्रतिषेधे किं दन्त्यादन्यददन्त्यं तदनुबंधग्रहणे नातदनुबन्धकस्येति नेह अवामदेव्य म् अच्कावऽशक्तौ ६।२।१५७ अजन्तात् कान्तं च नञः परमन्तोदात्तमशक्तौ गम्यायां अपचः पक्तुमशक्तः अविलिखः अशक्तौ किं अपचो दीक्षितः गुणप्रतिषेधे इत्येव अन्योऽयं पचादपचः आक्रोशे च ६।२।१५८ नञः परावच्कावन्तोदात्तावाक्रोशे॥ स्यादसंधौ॰ अयमपि तत्पुरुषे तुल्यार्थेत्यस्यापवादः पणबंधेनैकार्थ्यमिति॰ पणबंधः परिभाषणं॰ यदिमं मवानिदं कुर्यादहमपि भवतः करिष्यामीत्येवं रूपं॰ तिलमिश्रा

पूर्वसदृशसमोनार्थेति समासः तिलसंमिश्रा इति कथं पुनर्मिश्रशब्दस्य विधीयमानं संमिश्रशब्दस्य प्राप्नोति कथं च मिश्रशब्देनोच्यमानः समासः सोपसर्गेणाप
भवतीत्यत आह· मिश्रग्रहणेत्यादि· तेन मिश्रं चानुपसर्गमसंधावितिविधीयमानं समासः सोपसर्गेणापि सिद्धः ब्राह्मणमिश्र इति· यदिमे भवन्तः कार्यं कुर्युस्तदहं भवतामुपका
रं करिष्यामीत्येवं रूपेण पणबन्धेन कृत्वा ब्राह्मणैः सह मिलित इत्यर्थः अपरे तु स्वरूपभेदग्रहणं संधिः ब्राह्मणमिश्र इत्यत्र ब्राह्मणो नैकीभावेऽपि राजास्वरूपेण
गृह्यते गुडमिश्र इत्यत्र गुडे नैकीभूतस्य स्वरूपभेदेन गृह्यते इत्याहुः नञो गुणा· कार्णवेष्टकिकमिति· संपादिनीति प्राग्वतेष्ठञ्· छैदिक इति· छेदादिभ्यो नि
त्यमिति ठक्· वत्सीय इति· तस्मै हितमिति छः सांतापिक इति· तस्मै प्रभवति संतापादिभ्य इति ठञ् नञ् इति किमिति· प्रतिषेधो प्रायेण नञ् एव वृत्तिदर्शना
त्प्रश्नः विगार्दभरथिक इति· अव्ययपूर्वपदप्रकृतिस्वर एवात्र भवति· गार्दभरथिकादन्य इति उदाहरणादस्य विशेषं दर्शयितुं गुणप्रतिषेध इति
संतानवयवं व्याचष्टे गुणा इति· तद्धितार्थप्रवृत्तिनिमित्तमिति· तद्धितार्थः संपाद्यादिस्तस्य यत् प्रवृत्तिनिमित्तं संपादित्वादीति· आदिशब्देन तदर्हत्वादेः
र्ग्रहणं स गुण इत्युच्यते· उक्तं हि संसर्गभेदकं यत्सव्यापारं प्रतीयते· गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतमिति वोढेति· अर्हे कृत्यतृचश्चेति तृच् धा
लुटस्तृलडलोपे गुणे सहिवहोरोदवर्णस्येत्योत्वं· पाश्यति· समूहे पाशादिभ्यो यः अदन्त्यमिति· शरीरावयववाच्चेति यत् अपाद्यमिति· पादार्घाभ्यां चे
ति यत् अदेयमिति· ददाने· अर्हार्थे अचो यत् ईद्यति गुणः अवामदेव्यमिति वामदेवेन दृष्टमित्यर्थे वामदेवात् ड्यड्ड्याविति ड्यः अपचइ
ति· पचापच्· अविलिख इति· इगुपधेति कः कृत्योकेष्णुच्चार्वादयश्चेति वक्ष्यमाणैः कृत्योकेष्णुभिः साहचर्यात् कयोः कृतोरिह ग्रहणं तेन कृद्ग्रहण·
परिभाषया विलिखशब्दस्य कान्तत्वम्· अपचो दीक्षित इति दीक्षितः शास्त्रविरोधान्न पचति न त्वशक्तत्वेन· ॥ ४ ४ ४ ४ ४ ४ ४ ४ ४ ४

अपचोजाल्मुइति· पक्तुंशक्तोपिपक्तुमयंनशक्नोतीत्यनेनप्रकारेणाक्षिप्यतेतदाह·पक्तुमित्यादि·अदेवदत्तेइति· देवदत्तः सन्यस्तत्कर्मनकरोतिसएवमाक्षि
प्यते·अनागामुकइति· लषपतपदेत्युकञ्· अनलंकरिष्णुरिति· अलंकृञ्नातीष्णुच्·इकारादेर्विधानसामर्थ्यादिति· भवतेरुदात्तत्वात्ततःपरस्यखिष्णुचइ
टैवेकारादित्वेसिद्धेइकारादेर्विधानमिहसामान्यग्रहणार्थमेवेतिभावः अनाढ्यंभविष्णुरिति·भुवःखिष्णुचखुकञावितिखिष्णुच् अचारुरिति·हसतीति।

अपचोजाल्मः पक्तुन्नशक्नोतीत्येवमाक्रोश्यते अविक्षिपः संज्ञायाम् ६।२।१५९ नञःपरमन्तोदात्तंसंज्ञायामाक्रोशे। अदेवदत्तः कृत्या
केष्णुच्चार्वादयश्च ६।२।१६० नञःपरेऽन्तोदात्ताःस्युः अकर्तव्यः उकञ् अनागामुकः इष्णुच् अनलङ्करिष्णुः इष्णुजग्रहणात्खिष्णुचो
प्यनुबन्धकस्यापिग्रहणमिकारादेर्विधानसामर्थ्यात् अनाढ्यम्भविष्णुः चार्वादिः अचारुः असाधुः राजाह्नोश्छन्दसि अराजा अ
नहः भाषायान्नञः स्वरएव विभाषातृन्नन्नतीक्ष्णशुचिषु ६।२।१६१ तृन् अकर्ता २ अन्न अनन्नम् अतीक्ष्णम् अशुचिपा।
क्षेऽव्ययस्वरः बहुव्रीहाविदमेतत्तद्भ्यःप्रथमपूरणयोःक्रियागणने ६।२।१६२ एभ्योऽनयोरन्तउदात्तः इदम्प्रथमंयस्यसइदंप्रथमः
एतद्द्वितीयः तत्पञ्चमः बहुव्रीहौकिं अनेनप्रथमइदंप्रथमः तृतीयेतियोगविभागात्समासः इदमेतत्तद्भ्यःकिम् यत्प्रथमः प्रथमपू
रणयोःकिम् तानिबहून्यस्यतद्बहुः क्रियागणनेकिं अयम्प्रथमःप्रधानंयेषान्तेइदम्प्रथमाः द्रव्यागणनमिदम् गणनेकिं अयंप्रथ
मोयेषान्तेइदम्प्रथमाः इदम्प्रधानाइत्यर्थः उत्तरपदस्यकार्यित्वात्कपिपूर्वमन्तोदात्तं इदम्प्रथमकः बहुव्रीहावित्यधिकारः अनेनसमा

वरेहणः·असाधुरिति·साध्नोतेः कृवापाजीत्युण्· राजाह्नोः·चार्वाद्यंतर्गणसूत्रं·नञःपरयोरेतयोश्छंदसिअनोदात्तत्वम्·अराजेति·नञस्तत्पुरुषादिति
समासांतनिषेधः विभाषातृन् नञउत्तरपदान्येतान्यन्तोदात्तानिस्युस्तत्पुरुषे·बहुव्रीहाविद·एभ्यइत्यादि·इदमेतत्तद्भ्यः·अनयोःप्रथमपूरणयोः इद
प्रथमंयस्येतिनिगमनंभोजनंवा·अनेनप्रथमइदंप्रथमइति· तृतीयापूर्वपदप्रकृतिस्वरएवभवति· यत्प्रथमइति·यत्प्रथमंगमनंयस्यसयत्प्रथमःइदंप्रथ

नाऽऽसुर्यैश्चेति· अनेनप्रधानवचनः प्रथमशब्दोऽन्त्वेकसंख्यावचनइतिदर्शितं· तेनात्र गमकानाभावउक्तः उत्तरपदस्येत्यादि· इहसमासस्येतिप्रकृतं· उत्तरपदा
दिरित्यतः प्रभृतिउत्तरपदस्येतिचतत्र इहोत्तरपदस्यार्थित्वेनाश्रीयतेतेनयदाकवुत्पद्यतेतदाकपिपरतोयत्पूर्वंप्रथमेतितत्ः अन्तोदात्तंभवतिनतुकवंतंक प्र
त्ययोहिसमासस्यैवान्तोनोत्तरपदस्यउत्तरपदस्यवयवाः समासान्ताइतिपक्षेपिप्रथमपूरणयोरितिविशिष्टरूपग्रहणात् कपस्तत्राऽनन्तर्भवादुपात्तयोरेवस्व
रः॥ ॐ ॥संख्यायाः संख्यायाःपरस्तनशब्दोऽन्तोदात्तःस्यात्· दर्शनीयस्तनेति·पूर्वपदप्रकृतिस्वरःदर्शनीयशब्दोऽनीयर्प्रत्ययान्तःरित्स्वरः विभाषा·।
पूर्वस्तनोत्कंदसिवास्यात् द्विस्तनीमिति अन्तोदात्तत्वस्वाङ्गाच्चोपसर्जनादितिङीष्· चतुस्तनामिति·पूर्वपदप्रकृतिस्वरेणाचतेहरनितिचतुर्शब्दस्यनि

संख्यायास्तनः ६।२।१६३ बहुव्रीहावन्तोदात्तः द्विस्तना चतुस्तना संख्यायाः किं दर्शनीयस्तना स्तनः किम् द्विशिराः विभाषाछ
न्दसि ६।२।१६४ द्विस्तनंकरोति संज्ञायांमित्राजिनयोः ६।२।१६५ देवमित्रः कृष्णाजिनम् संज्ञायांकिं प्रियमित्रः ऋषिप्रति
षेधोमित्रे विश्वामित्रऋषिः व्यवायिनोऽन्तरम् ६।२।१६६ व्यवधानवाचकात्परमन्तोदात्तम् वस्त्रमन्तरंव्यवधायिकंयस्य।
सवस्त्रान्तरम् व्यवधायिनःकिम् आत्मान्तरम् स्वभावान्पद्रूसर्थः मुखंस्वाङ्गम् ६।२।१६७ गौरमुखः स्वाङ्गंकिं·म् दीर्घमुखाशा
ला नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ६।२।१६८ उच्चैर्मुखः।प्राङ्मुखः।गोमुखः।महामुखः।स्थूलमुखः॥

तादायुदात्तत्वम्· अत्रांतोदात्तत्वाभावात्स्वांगादितिङीन्न संज्ञायांमित्रा·एतयोरुत्तरपदयोरंतउदात्तःस्याद्बहु व्रीहौसंज्ञायाम्· विश्वामित्रइति· मित्रेचर्षाविति।
दीर्घः अत्रबहुव्रीहौविश्वंसंज्ञायामितिबाधित्वापरत्वादनेनान्तोदात्तत्वंप्राप्तंप्रतिषिध्यतेऽतोबहुव्रीहौविश्वंसंज्ञायामित्यंतोदात्तत्वंभवति· व्यवायि·उदाहरणेव्य
वधानवाचिनोऽन्तरशब्दस्तत्करोतीतिणिचिपचाद्यच्·प्रत्युदाहरणेत्वन्यवाच्यन्तरशब्दः मुखम्· स्वांगंमुखमुत्तरपदमन्तोदात्तंबहुव्रीहौ· दीर्घमुखाशालेति·
मुखशब्देनात्रद्वारप्रदेशःशालायाउच्यते·स्वांगमद्रवादिलक्षणाभिहगृह्यते·ननुस्वांगंस्वांगमितिव्युत्पत्तिलभ्यम् अन्यथाऽत्रापिस्यादितिभावः नाव्यय· एभ्यः॥

स्व·

सि·कौ· परेमुखशब्दोऽन्तोदात्तो न स्यात्· पूर्वपदप्रकृतिस्वरोऽत्रेति· एषूदाहरणेषु बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरेणानोदात्तं पूर्वपदं ·तथाहि· उदीचेर्ङीषि: उ

टी·त· चैः अनिर्गतोंचतीवप्रत्ययइति प्रशब्द उदात्तः ततएकादेशस्वरेण प्राङ् शब्द उदात्तः गमेर्डोः गौः वर्तमाने पृषदित्यादिनामहच्छब्द उदात्तो निपातितः स्थूलश

३८ ब्द इन्द्रे स्यादावन्तोदात्तो निपातितः॥ ❀ ॥मुषेः क्तिच्· मुष्टिः प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्चेति कु पृथुः ऊठवदीत्यादिनास: वत्सः उपमानलक्षणोविकल्प इति·

निष्ठोपमानादिति प्राप्तः वाध्यतइति· अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न भवति गोर्मुखमिव मुखमस्य गोमुखः· वत्सो मुखमिव यस्येति सर्वत्रात्र गवाद्युभयं नोप।

पमानं· उत्तरस्य विकल्पस्यावकाशः यत्र गवादि पूर्वपदं न भवति· सिंहमुखः गवादावुपमाने उभयप्रसंगेऽयमेव भवति पूर्वविप्रतिषेधेन· सिंहमुख इति· पक्षे पूर्वपद

मुष्टिमुखः पृथुमुखः वत्समुखः पूर्वपदप्रकृतिस्वरोऽत्र गोमुष्टिवत्सपूर्वपदस्योपमानलक्षणोऽपि विकल्पोऽनेन वाध्यते निष्ठोपमा।

नादन्यतरस्याम् ६।२।१६९ निष्ठान्तादुपमानवाचिनश्च परस्मुखं स्वाङ्गं वाऽन्तोदात्तं बहुव्रीहौ प्रक्षालितमुखः पक्षे निष्ठोपसर्गेति।

पूर्वपदान्तोदात्तत्वम् पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि भवति उपमानं सिंहमुखः जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृ।

तमितप्रतिपन्नाः ६।२।१७० शारङ्गजग्धः मासजातः सुखजातः दुःखजातः जातिकालेति किम् पुत्रजातः अनाच्छादनात्किम् वस्त्र

छन्नः अकृतेति किं कुण्डकृतः कुण्डमितः कुण्डप्रतिपन्नः अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः वा जातेः ६।२।१७१ जातिकालसु।

प्रकृतिस्वरः हिंसेः पचाद्यचि सिंहः पृषोदरादित्वादाद्यन्तविपर्ययः जातिकाल· जात्यादि खादिभ्यः परो जातशब्दो वान्तोदात्तः दन्तजातः मासजातः॥

भ्यः परं क्तान्तमन्तोदात्तं स्यात् बहुव्रीहौ कृतादीन्वर्जयित्वाऽनाच्छादनवाचकास्वरेन्न· सारंगजग्धइति· सारंगः पक्षिविशेषः सजग्धो भक्षितो येनेति विग्रहः प्र

त्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वरः तत्र पुत्रशब्दोऽन्तोदात्तः वसेष्ट्रन्· वस्त्रशब्द आद्युदात्तः कुंडशब्दो नविषयस्यानिसंतस्येत्याद्युदात्तः ननूदाहरणेषु प्रत्युदाह एम·

रणेषु च निष्ठेति निष्ठा· तस्य पूर्वनिपातः प्राप्नोति तत्राह अस्माज्ज्ञापकादिति· इदमेव मनसि विभाव्योक्तं जातिकालसुखादिभ्यः परा निष्ठा वाच्येति· दंतजात इति·॥ ३८

परेपूर्वं पदम् इति स्वरः रंतशब्दः स्वांगशियमदेतानामित्याद्युदात्तः मासशब्दो ग्रामादीनां चेत्याद्युदात्तः ॥ ॥ नञ्सु· नञ्सुभ्यां परमुत्तरपदमन्तोदात्तं स्यात्· समासान्ता
उत्तरपदावयवाः तेनानृचइत्यत्र ऋक्पूरित्यपिअकारस्योदात्तत्वं भवति· समासावयवाः समासांताइतिपक्षेतु अस्मिन्सूत्रे समासस्यैव कार्यित्वमाश्रीयते नो
त्तरपदस्य कपिपूर्वमिति ज्ञापकात्· यद्यनेनोत्तरपदस्यान्तोदात्तः स्यात् ततोऽकुमारीकइत्यादावनेनैव सिद्धत्वात्कपिपूर्वमित्यवाच्यं स्यात्· कपिपूर्व·
पूर्वं [illegible] पूर्वस्योदात्तत्वं विधीयते· ह्रस्वान्तेंत्यात्पूर्वमितिवचनादिहदीर्घान्ता एवोदाहृताः उदाहरणेन घृतेश्वेतिकप् ह्रस्वान्तेः ह्रस्व अन्तो यस्येत
दिदं ह्रस्वान्तमिति बहुव्रीहेरन्यपदार्थमुत्तरपदं समासो वा एत्युत इत्याशयेनाह· उत्तरपदे समासे वेति· अत्र कपि परइति· सामान्यवचनात्तद्धितमुत्तरपदं समासो वागृ

नञ्सुभ्याम् ६।२।१७२ बहुव्रीहावुत्तरपदमन्तोदात्तं अव्रीहिः सुमाषः कपिपूर्वम् ६।२।१७३ नञ्सुभ्यामुत्तरम्पूर्वमुदात्तं कपिप
रे अब्रह्मबन्धुकः सुकुमारीकः ह्रस्वान्तेऽन्त्यात्पूर्वम् ६।२।१७४ ह्रस्वान्तेउत्तरपदे समासे चान्त्यात्पूर्वमुदात्तं नञ्सुभ्यां बहुव्रीहौ अ
व्रीहिकः सुमाषकः पूर्वमित्यनुवर्तते पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमार्थं ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं न कपि पूर्वमिति अज्ञकः कवन्त
स्यैवान्तोदात्तत्वम् बहोर्नञ्वदुत्तरपदभूम्नि ६।२।१७५ उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यात् बहुव्री
हिकः बहुमित्रकः उत्तरपदेति किं बहुषु मानोऽस्य स बहुमानः ॥ १९ इते· ननु पूर्वग्रहणमनर्थकं· कपिपूर्वमित्यनुवृत्तेरत आह· पूर्वमित्यनुवर्त्तमान इति·

प्र वृत्तिभेदेन वाक्यभेदेन तत्रैकेन वाक्येन ह्रस्वान्तेंऽत्यात्पूर्वस्योदात्तत्वं विधीयते द्वितीयेन तु नियम्यते· ह्रस्वान्ते·ऽत्यादेव पूर्वमुदात्तं भवति न कपि पूर्वमिति
तेन किं सिद्धमत आह· कवंतस्यैवान्तोदात्तत्वमिति· नास्ति ज्ञायस्य अज्ञकः अत्र यद्येष नियमो न स्यात्तर्हि एतस्याभावे कपि पूर्वमित्ययमेव स्वरः स्यात्· अस्मिंस्तु निय
मे सति न भवति· नञ्सुभ्यामिति कवन्तस्यैव भवति· बहोर्नञ्· नञइव नञ्वत्· अस्मादेव निपातनात्संबन्धोऽसमर्थो वृत्तिः बहूनां भावो भूमा· बहो र्लोपो भू च बहोः
उत्तरपद शब्देन तदर्थो गृह्यते· स्वरूपेणोत्तरपदस्य बहुत्वासंभवात् तदाह उत्तरपदार्थबहुत्वे इति बहुव्रीहिकइत्यादि· ह्रस्वान्तेंत्यात्पूर्वमिति स्वरः बहुमान इति·।

पूर्वपदप्रकृतिस्वरः वहुशब्दस्तुलघिवह्योर्नलोपश्चेतिकुप्रत्ययांतोंतोदात्तः॥ ॐ ॥नगुण॥ अवयववाचिनोवहोःपरेऽति· अवयववाचिन इतिगुणादीनां विशेषणं· उपस· स्वांगप्रतिक्रियायोगाभावादुपसर्गग्रहणंप्राद्युपलक्षणं· प्रादेरुत्तरं ध्रुवं स्वांगवाचिपर्शुवर्जितमन्तोदात्तं स्यात्वहुव्रीहौ· प्रत्युदाहरणेपूर्वपदप्रकृतिस्वरः दर्शनीयशब्दोऽनीऽयरप्रत्ययान्तः रित्स्वरः उद्बाहुरिति· क्रोशतीतिशेषः अत्रक्रोशनसमय एवोद्बाहुत्वं नसर्वदेवेत्यध्रुवम्· वनंसमासे· वहुव्रीहिविसस्थानिवृत्त्यर्थंसमासग्रहणं· प्रवणइति· वहुव्रीहौतत्पुरुषेचपूर्वपदप्रकृतिस्वरेप्राप्तेप्रनिरंतइतिणत्वम्· अन्तः अन्तःशब्दात्संचम्याश्छांदसोलुकुन्तदा

नगुणादयोवयवाः ६।२।१७६। अवयववाचिनोवहोःपरेगुणादयोनान्तोदात्ताः वहुव्रीहौ वहुगुणारज्जुः वह्वक्षरंपदं वह्वध्यायः गुणादिराकृतिगणः अवयवाः किं वहुगुणोद्विजः अध्ययनश्रुतसदाचारादयोगुणाः उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ६।२।१७७ प्रपृष्ठः प्रललाटः ध्रुवमेकरूपं उपसर्गात्किम् दर्शनीयपृष्ठः स्वाङ्गङ्किं प्रशाखोवृक्षः ध्रुवङ्किं उद्बाहुः अपर्शुकिं विपर्शुः वनंसमासे ६।२।१७८ समासमात्रेउपसर्गादुत्तरपदंवनमन्तोदात्तं तस्येदिमेप्रवणे अन्तः ६।२।१७९ अस्मात्परम्वनमन्तोदात्तं अन्तर्वणो देशः अनुपसर्गार्थमिदम् अन्तश्च ६।२।१८० उपसर्गादन्तःशब्दोन्तोदात्तः पर्य्यन्तः समन्तः ननिविभ्याम् ६।२।१८१ न्यन्तः। व्यन्तः पूर्वपदप्रकृतिस्वरेयणिचकृतेउदात्तस्वरितयोर्यणइतिस्वरितः परेरभितोभाविमण्डलम् ६।२।१८२ परेःपरमभितउभयतोभावोयस्यास्तितत्कूलादिमण्डलंचान्तोदात्तं परिकूलं परिमण्डलं॥

९९ ह· अस्मात्परमिति· अन्तःशब्दात्परमित्यर्थः अन्तर्वणइति· अत्रापिनैवणत्वम्· अनुपसर्गार्थमिति· उपसर्गेतुपूर्वेणैवसिद्धम्·।ननिविभ्यां·।निविभ्यामुत्तरोऽन्तःशब्दोनान्तोदात्तःस्यात्· पूर्वपदप्रकृतिस्वरइति· वहुव्रीहिसमासेवहुव्रीहौप्रकृत्येतितत्पुरुषेतत्पुरुषेतुल्यार्थेत्यनेन परेरभितः परेरुत्तरेऽभिशब्दोभाववाचिमंडलंचान्तोदात्तंस्यात् अभितोभावीत्यस्यार्थमाह· अभितोभावोऽस्यास्तीतिअयंवाअभितः उभयतोभवतिनद्यादेःकूलादिकमित्यभितोभावीत्युप्यजानाविति णिनिःपरिकूलमिति· वहुव्रीहिःप्रादिसमासोऽव्ययीभावोवा· तत्रवहुव्रीहौतत्पुरुषेच

पूर्वपदप्रकृतिस्वरे प्राप्ते अव्ययीभावे तु परिप्रत्युपापा इति कूलतीरे । इति च प्राप्ते · परितः कूलमस्य परिगतं कूलमिति कूलात्कूलं वर्जयित्वेत्यर्थ इति उदकस्याभाव इव विप्र
दः ॥ ७ ॥ प्राद् · प्रादुत्तरमस्वाङ्गवाचि संज्ञायामन्तोदात्तं स्यात् प्रगृहमिति · प्रादिसमासः बहुव्रीहिर्वा · प्रपदमिति · पूर्वपदप्रकृतिस्वरः निरुदकमित्यादि · निर्गत
मुदकं यस्मादिति बहुव्रीहिः निर्गतमुदकमिति प्रादिसमासो वा · उदकस्याभाव इत्यव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् · अभे · अभेरुत्तरपदं मुखमन्तोदात्तं स्यात्
उपसर्गात्स्वाङ्गमितीति · मुखं स्वाङ्गमिति तु न भवति नाव्ययदिक्शब्देति निषेधात् · अपाच्च · अपादुत्तरमुखमन्तोदात्तं स्यात्समासे · अपमुखमिति · प्रादिसमासे व
[illegible]ीत्येव पूर्वपदप्रकृतिस्वरे प्राप्ते मुखं वर्जयित्वेत्यव्ययीभावेऽपि परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेष्विति प्राप्तेऽयमारम्भः उत्तरार्थ इति · उत्तरत्र अपादित्यस्यैवानुवृत्ति

प्रादः स्वाङ्गं संज्ञायाम् ६।२।१८३ प्रगृहं अस्वाङ्ग · ङ्गं प्रपदं निरुदकादीनि च ६।२।१८४ अन्तोदात्तानि निरुदकम् निरुपलम् अभेर्मु
खम् ६।२।१८५ अभिमुखम् उपसर्गात्स्वाङ्गमिति सिद्धे बहुव्रीह्यर्थम् अध्रुवार्थम् अस्वाङ्गार्थं च अभिमुखा शाला अपाच्च ६।२।१८६
अपमुखं योगविभाग उत्तरार्थः स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनामनाम च ६।२।१८७ अपादिमान्यन्तोदात्तानि अपस्फिगं।
म् अपपूतं अपवीणम् अञ्जस् अपाञ्जः अध्वन् अपाध्वा उपसर्गादध्वन इत्यस्याभावे इदं एतदेव ज्ञापकं समासान्ता नि।
सत्ते अपकुक्षिः सीरनाम अपसीरम् अपहलं अपनाम स्फिगपूतवीणाकुक्षिग्रहणं बहुव्रीह्यर्थम् अस्वाङ्गार्थं च ॥ ४४ ॥

र्थवत्त्वात् · अभेर्मा भूत् · स्फिगपूत · नामग्रहणं सीरेणैव सम्बध्यते न स्फिगादिभिः स्फिगपूतकुक्षीणां पृथग्ग्रहणादि तिहरदत्तः तेन स्फिगपूतकुक्षयः पर्याया इति
निश्चीयते · उपसर्गादध्वन इत्यस्याभाव इति · उपसर्गादध्वन इदं समासान्ताच्प्रत्ययविधायकं तदभावे तस्मिन्सति अच्प्रत्ययस्य चित्त्वादेव सिद्धम् · ननूपसर्गाद
ध्वन इत्यनेन नित्योऽच् विधीयते तत्कथमुक्तमित्यस्याभाव इतीत्यत आह एतदेव च ज्ञापकमिति · यदि हि नित्यः समासान्तः स्यात् · अध्वग्रहणमिहानर्थकं।
स्यात् · अच्प्रत्ययस्य चित्त्वादन्तोदात्तस्य सिद्धत्वात् · कृतं तु अध्वग्रहणं ज्ञापयति · समासान्ता अनित्या इति · स्फिगपूतकुक्षिग्रहणमिति · यद्यप्येतानि स्वाङ्गवाची

निभुवाणिचभवंतिवहुव्रीहिश्चसमासस्तदोपसर्गात्स्वांगमित्सेवसिद्धम्·॥ ॥ अधे· अधेरुत्तरमुपरिस्थन्नाचि अन्तोदात्तंस्यात् उपरितिष्ठतीत्युपरिस्थं·। सुपिस्थइतिकः तदेतद्दर्शयति· दंतस्योपरीति· अधिकरणमिति· अधिक्रियतेऽस्मिन्नित्यधिकरणंनैतदुपरिस्थवाचि किंत्वधःस्थवाची· अत्रकृदुत्तरपदप्रकृ तिस्वरेणाककारउदात्तः अनुजेष्ठइति· उत्तरपदार्थस्याप्राधान्यंदर्शयति· पूर्वपदार्थप्रधानःप्रादिसमासायमिति· प्रधानार्थंचकनीयोग्रहणमिति· अन्य

अधेरुपरिस्थम् ६।२।१८८ अध्यारूढो दन्तोऽधिदन्तः दन्तस्योपरिजातोदन्तः उपरिस्थंकिं अधिकरणं अनोरप्रधानकनीयसी। ६।२।१८९ अनोःपरमप्रधानवाचिकनीयश्चान्तोदात्तं अनुगतोज्येष्ठमनुज्येष्ठं पूर्वपदार्थप्रधानःप्रादिसमासः अनुगतःकनीयान नुकनीयान् उत्तरपदार्थप्रधानः प्रधानार्थंचकनीयोग्रहणं अप्रेतिकिम् अनुगतोज्येष्ठोनुज्येष्ठः पुरुषश्चान्वादिष्टः ६।२।१९० अनोःपरोऽन्वादिष्टवाचीपुरुषोऽन्तोदात्तः अन्वादिष्टःपुरुषोनुपुरुषः अन्वादिष्टःकिं अनुगतःपुरुषोऽनुपुरुषः अतेरकृत्पदे ६।२।१९१ अतेःपरमकृदन्तम्पदशब्दश्चान्तोदात्तः असङ्कुशोनागः अतिपदागायत्री अकृत्पदेकिं अतिकारः अतेर्धातुलोपइतिवाच्यम् इह माभूत् शोभनोगार्ग्योऽतिगार्ग्यः इहचस्यात् अतिक्रान्तःकारकमतिकारकः नेरनिधाने ६।२।१९२ निधानमप्रकाशता ततोन्य दनिधानम्प्रकाशनमित्यर्थः। निमूलं न्यक्षम् अनिधानेकिम् निहितोदण्डोनिदण्डः प्रतेरंश्वादयस्तत्पुरुषे ६।२।१९३ प्रतेःपरेंश्वा दयोऽन्तोदात्ताः प्रतिगतोंऽशुःप्रत्यंशुः प्रतिजनः प्रतिराजा समासान्तस्यानित्यत्वान्नटच् उपाद्द्व्यजजिनमगौरादयः ६।२।१९४ उपा त्परंद्व्यचकमजिनञ्चान्तोदात्तंतत्पुरुषेगौरादीन्वर्ज्जयित्वा उपदेवः। उपेन्द्रः। उपाजिनं। अगौरादयःकिम् उपगौरः उपतैषः तत्पु

चाप्रधानग्रहणेनैवसिद्धत्वात्· अनुगतोज्येष्ठइति· विग्रहविशेषेणप्रधानवाचित्वंज्येष्ठशब्दस्यदर्शयति· पुरुषे ॥ रुषेकिम् उपगतःसोमोस्यसउपसोमः अन्वादिष्टइति· अनुपश्चादादिष्टःकथितः कस्मिंश्चित्कथितेयोन्यःकथ्यतेसअन्वादिष्टइत्यर्थः अतेरकृत्पदे· अकृच्चपदंचअकृत्पदेतदाह· अकृदंतंपदशब्द

श्चेति· असंकुशइति· अंकुशमतिक्रांतइतिविग्रहः अतिकारकइति· शोभनःकारकः पूजार्थोयमतिः अतेर्धातुलोपइति· असंकुशादौवृत्तिविषयेऽतिशब्दोऽतिक्रां
तार्थवृत्तिरिति· क्रमेरप्रयोगएवधातुलोपः अतिगार्ग्यइति· यथान्यासेत्वनापिप्राप्नोतिगार्ग्यशब्दस्याकृदंतत्वात्· तस्माद्व्याप्त्यतिव्याप्तिपरिहारार्थमकृत्यदइत्येत
दपनीयधातुलोपइतिकर्तव्यमित्यर्थः नेरनि· निशब्दादुत्तरपदमन्तोदात्तंस्यादनिधानेर्थे· निमूलमिति· निर्गतंमूलमस्यनिर्गतंवामूलंनिर्मूलं· निदंडइति· निश
ब्दोनिधानार्थेवर्तते· कथंपुनर्निशब्दस्यायमर्थइतिचेच्छृणु· प्रादयोहिवृत्तिविषयेसक्रियंसाधनमाहुः समासांतस्यानित्यत्वादिति· इहराजनूशब्दस्यपाठ

सोरवक्षेपणे ६।२।१९५ सुप्रत्यवसितः सुरत्रपूजायामेव वाक्यार्थस्त्वत्रनिन्दाअसूययातथाभिधानात् सोः किम् कुब्राह्म
णः अवक्षेपणेकिम् सुवृषणाम् विभाषोत्पुच्छे ६।२।१९६ उतक्रान्तः पुच्छात् उत्पुच्छः २ यदातुपुच्छमुदस्यति उत्पुच्छ
यते एरच् उत्पुच्छस्तदाथाथादिस्वरेणनित्यमन्तोदात्तत्वेप्राप्तेविकल्पोऽयम् सेयमुभयत्रविभाषा तत्पुरुषेकिम् उदस्तम्पु
च्छंयेनस उत्पुच्छः द्वित्रिभ्यांपाद्दन्मूर्द्धसुबहुव्रीहौ ६।२।१९७ आभ्यांपरेष्वेष्वन्तोदात्तोवा ङिपाच्चतुष्पाच्चरथाय त्रिपाद्गूर्वः।
द्विदन् त्रिमूर्द्धानंसप्तरश्मिंमूर्द्धन्नित्यकृतसमासान्तएवमूर्द्धशब्दः तस्येतत्प्रयोजनमसत्यपिसमासान्तेअन्तोदात्तत्वंयथास्या
त् एतदेवज्ञापकमनित्यःसमासान्तोभवतीति यद्यपिचसमासान्तःक्रियतेतथापिबहुव्रीहिकार्य्यत्वात्तदेकदेशत्वा त्समासा।
न्तोदात्तत्वंपक्षेभवत्येव द्विमूर्द्धः २। त्रिमूर्द्धः २। द्वित्रिभ्यांकिम् कल्याणमूर्द्धा बहुव्रीहौकिं द्वयोर्मूर्द्धा द्विमूर्द्धा॥ ८ ॥

एवज्ञापयति· समासान्ताअनित्याइति· अन्यथाराजाहःसखिभ्यष्टजितिटच्यश्चित्वादेवसिद्धंस्यात्॥ ※ ॥सोरव· सोरुत्तरपदंनिंदायामन्तोदात्तंस्यात्सुरु
वि· सुप्रत्यवसितइतिसुःपूजायामितिकर्मप्रवचनीयस्तसोःस्वतीपूजायामितिसमासः तेनसुप्रत्यवसितेथाथादिविधिर्नशंकनीयः ननुयदिसुशब्दोऽत्रपूजा
यांवर्ततेकथंतर्हिक्षेपोगम्यतइत्याह· वाक्यार्थस्त्विति· कथमित्याह· असूययेति· यःखल्वनर्थेउपस्थितेसुखायमानआस्तेतंप्रत्येवमुक्तेक्षेपोगम्यते· विभाषोत्

एवमिहैष्टव्यत आह तस्येति यस्य कृतसमासांत ५ तूट॥

स्वसस्वसारः पुत्वशब्दः अन्तोदात्तोभ्यसात्तुरुषे सेयमुभयत्र विभाषेति· आद्यायांतुव्युत्पत्तौ अव्ययपूर्वपदप्रकृतिस्वरेण वाधितत्वात् समासस्यांतोदात्तत्वमप्राप्तम्· द्वितीयायांतुव्युत्पत्तौ थाथादिस्वरेण नित्यमन्तोदात्तत्वं प्राप्तमिति कृत्वोभयत्र विभाषा· द्वित्रिभ्यां· पादिति कृताकारलोपो गृह्यते· ददिति कृतदद्देशोदंतशब्दश्चाभ्यामिति· द्वित्रिभ्यां द्विपादिति· द्वौपादौ यस्येति द्विपात्तस्य स्वासुपूर्वस्येति पादशब्दस्याकारलोपः द्विदन्निति· वयसिदंतस्य दतृ· मूर्द्धन्निसकृतसमासांतएव मूर्द्धन्शब्द इति· एतच्च मूर्द्धस्विति निर्देशादेवावसीयते· अन्यथा मूर्द्धस्विति निर्देश्यं स्यात्· किमर्थं पुनरकृतसमासांतस्योपादानं· तर्हि यदा समासांतः क्रियाते तदानप्राप्नोति तस्य शब्दान्तरत्वादित्यत आह यदापीति· इहहि वहुव्रीहिः कार्यित्वेनोपात्तो नमूर्द्धन् शब्दः तदेकदेशत्वाच्चेति· तस्य वहुव्रीहेरेकदेशः समासांतसभावस्तत्वं तस्मादितिस एवार्थः तदेकदेशित्वादितिपाठेतु स वहुव्रीहिरेकदेशी अवयवी यस्य स तदेकदेशी समासांतस्तद्भावः स्तत्वं तस्मादितिस एवार्थः तदेवं वा

सक्थञ्चाक्रान्तात् ६।२।१९८ गौरसक्थः श्लक्ष्णसक्थः अक्रान्तात्किम् चक्रसक्थः समासान्तस्य षचश्चित्त्वान्नित्यमेवान्तोदात्तत्वम्भवति पराच्छन्दसिवहुलम् ६।२।१९९ छन्दसिपरस्य सक्थशब्दस्यादिरुदात्तो वा अञ्जिसक्थमालभेत अत्र वार्तिकम्॥ परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते पूर्वादयश्च दृश्यन्ते व्यत्ययो वहुलन्ततइति परादिः तुविजाताउरुक्षया परान्तः नियेनमुष्टिहत्यया यत्विचक्रः पूर्वान्तः विश्वायुर्देहि। ॥ इति समासस्वराः॥ ॥ ११ वहुव्रीहेः कार्यत्वात्तदेकदेशत्वाच्च समासांतस्येति यदा समासांतः क्रियते तदाप्ययं विधिर्भवत्येवं· द्विमूर्द्ध इति· द्वित्रिभ्यां षमूर्द्ध इति षः कल्याणमूर्द्धेति· पुर्वपदप्रकृतिस्वर एवात्र भवति· कल्याणशब्दो लघावन्त इत्यादिना मध्योदात्तः॥ ॥

सक्थंचं· वहुव्रीहौ सक्थ्यक्ष्णो रिति षजन्तः सक्थशब्दउत्तरपदमन्तोदात्तं वा स्यात्· स चेत्कशब्दांतात्परो नभवति· चित्त्वान्नित्यमन्तोदात्तत्वे प्राप्ते यौगिकल्यः गौरसक्थ इति· पक्षे पूर्वपदप्रकृतिस्वरः शुक्लगौरयोरादिरिति गौरस्याद्यन्ताद्युदात्तौ तेनाक्रान्तत्वं श्लक्ष्णसक्थ इति· कृत्यल्युभ्यां कृत्त्नः श्लिषेरत्वोपधायाइति श्लक्ष्णशब्दोन्तोदात्तः षचश्चित्त्वादिति एतेन चित्स्वरस्यापवादः प्राप्तविभाषेयमिति दर्शयति· परादिश्छन्दसि· परशब्देनात्र सक्थशब्द एव तस्यैव पूर्वसूत्रे सन्निहितत्वात्तदाह· परस्य सक्थशब्दस्येति· ननु तर्हि परग्रहणमनर्थकं प्रकृतो हि सक्थशब्दो नुवर्त्तते नैतदस्ति· वहुव्रीहेरपि प्रकृतत्वात्तस्याद्युदात्तत्वं शङ्क्येत विभाषा॥

स्पृच्छद् इसन्तो विभाषेति वर्त्तमाने बहुलग्रहणं बह्वर्थप्रदर्शनार्थं · बहुलग्रहणस्यार्थं श्लोकेन दर्शयति · पराविद्धेति · उरुक्षयेति · उरूणां क्षयो निवास इति विग्रहः क्षयो
निवास इति क्षयशब्द आद्युदात्तः समासस्वरे संनिपाते तं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं तस्याथादिस्वरेण बाधितं अतो बाहुलकेनोत्तरपदाद्युदा
त्तत्वं एतच्च क्षि निवासगत्योरिति धातो बाहुलकादधिकरणे एरजिति माधवेनोक्तं वस्तुतस्तु घप्रत्ययान्तः क्षयशब्द

इति हरदत्तोक्तरीत्या थाथादिस्वरस्येहाप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैव सिद्धं पराविद्धे सस्योदाहरणं तु चोदयित्री सूनृतानामिति वोध्यम् ।
कृतपरिहारो · चुरादिष्वदन्तः णिच् क्विप् · सुनरामनुपत्यप्रियमिति सूनृ · तदन्तं च सूनृतं · अयस्मयादीनीति भत्वान्नलोपो न · मुष्टिहत्यस्येति · मुष्ट्याहननं मुष्टिह
त्या · हनस्त चेति सुबन्तेऽउपपदे क्यप् · कृदुत्तरपदप्रकृतिस्वरोऽत्र प्राप्तः त्रिचक्र इति · बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः प्राप्तः ॥
विश्वायुरिति विश्वमायुर्यस्मिन्निति बहुव्रीहिः विश्वशब्दः कन्प्रत्ययान्तः पूर्वपदप्रकृतिस्वरेणाद्युदात्तः प्राप्तः ॥ ॥ इति स्वरसुबोधिन्यां समाप्त ।
स्वरप्रकरणं समाप्तम् ॥ ॥ तिङ · पचति गोत्रमिति · गोत्रं स्वकुलं पीडयतीत्यर्थः एवं हि कुत्सा भवति · आभीक्ष्ण्ये उदाहरणमाह · पचति पचति गोत्र मिति ·

तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ८।१।२७ तिङन्तात्पदाद्गोत्रादीन्यनुदात्तान्येतयोः पचति गोत्रं पचति पचति गोत्रं एवं प्रवचनप्रह
सनप्रकथनप्रत्यायनादयः कुत्सनाभीक्ष्ण्यग्रहणम्पाठविशेषणम् तेनान्यत्रापि गोत्रादिग्रहणे कुत्सनादावेव कार्य्यं ज्ञेयं गोत्रादी
नि किम् पचति पापम् कुत्सेति किम् । खनति गोत्रं समेत्य कूपं ॥ ९९ अनेकार्थत्वात्पचिः करोत्यर्थे वर्त्तते · विवाहादौ गोत्रं पुनः पुनः सुखीकरोति

तीत्यर्थः नित्यवीप्सयोरिति द्वित्वम् · ननु किं कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणमेतयोरर्थयोर्गोत्रादीनि भवन्ति · तानि च तिङः पराण्यनुदात्तानि भ
वंति · आहो स्विदनुदात्तविशेषणं तिङः पराणि गोत्रादीन्यनुदात्तानि भवंत्येतयोरर्थयोरिति अस्मिन्विचारे निर्णयमाह कुत्सनाभीक्ष्ण्यग्रहणमिति · अयं चार्थो यो
गविभागाल्लभ्यते तिङो गोत्रादीनीत्येको योगोऽनुदात्तविधानार्थः कुत्सनाभीक्ष्ण्ययोरिति द्वितीयो योगः गोत्रादीनीत्येव परिभाषेयं · इह शास्त्रे गोत्रादीनि कुत्सनाभी
क्ष्ण्यविषयाण्येव ग्राह्याणि तेन किं सिद्धं भवतीत्यत आह तेनेति · अन्यत्रापीति · चनचिदिव गोत्रादितद्धितान्त्रेडितेष्वगतेरित्यत्र · पचति पापमिति · क्रियाविशे

तिङः अनुदात्तं सर्वमिति वर्त्तते तदाह निहन्यत इति· सर्वानुदात्ततानिघात इति वैयाकरणानां व्यवहारः अतिङ इति किम् पचति भवति· एक कर्तृकापचनक्रिया भवतीत्यर्थः न
न्वतिङ् ग्रहणं व्यर्थं समानवाक्ये निघातयुष्मदस्मदादेशा इत्युक्तत्वात्· एकस्मिंश्च वाक्ये तिङन्तद्वयाभावादिति चेत्सत्यम्· सूत्रकारेण समानवाक्याधिकारो न कृतः इत्य
तिङ्ग्रहणमकारि· भाष्ये तु अतिङ्ग्रहणं प्रत्याख्यातं· नलुडिति· आरभ्य निषेध सूत्राणि· श्वः कर्ता श्वः कर्ताराविति· तासेः परस्य लसार्वधातुकस्यानुदात्त
त्वे कृते तासिरुदात्तः एकवचने टिलोपे कृते उदात्तनिवृत्तिस्वरेणाडा उदात्तः निपातैः यदिसादीनां यत्रैः संतानां द्वन्द्वे कृते तो याया: सौत्रो लुक् ननु युक्तशब्देन समासः
निपातैरिति विशेषणस्यानन्वयापत्तेस्तदाह एतैर्निपातैरिति· यत् यदि हन्त कुविन्नेच्चेत् चण् कच्चित् यत्र एतैरित्यर्थः यद्यदार्थे च हेतौ च विचारे यद्वे च

तिङ्/तिङः ८।१।२८ अतिङन्तात्परं तिङन्तं निहन्यते अग्निमीळे नलुट् ८।१।२९ लुडन्तं न निहन्यते श्वः कर्ता निपातैर्यद्यदि
हन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ८।१।३० एतैर्निपातैर्युक्तं न निहन्यते यदग्ने स्यामहं त्वम् युवां यदिक्रथः कुविदङ्ग आसन्
अविततिभिश्च कमाकच्चित् पुत्रास्येत्यत्र पितरो भवन्ति नहप्रत्यारम्भे ८।१।३१ नहेत्यनेन युक्तं तिङन्तं नानुदात्तम् प्रतिषेधयुक्त आर
म्भः प्रत्यारम्भः नह भोक्ष्यसे प्रत्यारम्भे किं नह वै तस्मिन् लोके दक्षिणामिच्छन्ति सत्यं प्रश्ने ८।१।३२ सत्ययुक्तं तिङन्तं नानुदात्तं प्रश्ने।
सत्यं भोक्ष्यसे प्रश्ने किम् सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम॥ ११ णः हंतहर्षे अनुकंपायां वाक्यारम्भविषादयोः कच्चित्सप्रश्ने नेत् निषेधे प्रशंसायां कुवित्स्म
तं यत्रेत्याधारे· तत्र मूले कुविदुदाहृतः अन्येषूह्याः तत्र ग्रहणं साक्षात्संबंधप्रतिपादनार्थं यदग्ने स्यामिति· अस्तेर्लिङि· अम् चकमाकच्चिदिति· चकमेतिलि
ट्प्रत्ययस्वरेणांतोदात्तः कच्चिदस्य निपातसमुदायः पदकाले कत्चिदि तिविच्छिद्य पाठात्· निपातैः किम्· यत्कूजति शाकटम्· एतीति यत्· इणः शतरि रूप
म्· इणो यणिति यण्· ननु प्रतिपदोक्तत्वात् यदादिभिः साहचर्याच्च निपातस्यैव यच्छब्दस्य ग्रहणं स्यादिति चेत्सत्यम्· एतदेव ज्ञापयति· अस्मिन्प्रकरणे नद्युभय
मव्यवस्थापकमिति· तेनयावयथाभ्यामित्यत्र यत्तदेतेभ्यः परिमाणे वतुबिति क्वत्यादिनस्यापि लाक्षणिकस्य निपातस्यापि ग्रहणं भवति· यावत्तावद्भ्यां योगे॥

नाइति· अत्राददृसट्स्वरेणाद्युदात्तम्· युक्तंग्रहणंकिम्· अन्यान्वितेमाभूत्· यत्रक्वचतेमनोदक्षंदधसउतामिहयत्रेसस्योत्तरमिसनेनसाक्षात्संबंधः दधधातो
अनुदात्तेन· नह्यस्मानहशब्दोनिपातस्समुदायोनिषेधेवर्त्तते· नहभोक्ष्यसइति· अदुपदेशात्परत्वात्तेइत्यस्यनिघातः स्यप्रत्ययस्वरेणमध्योदात्तंपदम्· पूर्वेभुक्त्वे
केपुनःक्रोधेनापहासेनवापुनःपुनःप्रतिषेधउक्तेएवंब्रूतेभोजनंकरिष्यसिसएवमुच्यते· नहवैतस्मिन्निति· तस्मिन्शब्दः फिट्स्वरेणाद्युदात्तः लोकशब्दःप्रत्ययान्त
त्वादन्तोदात्तः दक्षिणाशब्दः स्वांगशिटामदन्तानामितिशिट्त्वादाद्युदात्तः सत्यंभोक्ष्यसइति· मध्योदात्तम्· ॥ ❀ ॥ अंगा· प्रातिलोम्यंप्रतिकूलकारित्वंततोन्यद
भिमतकारित्वमप्रातिलोम्यं· एवंचानुलोम्यइतिवक्तव्यम्· अंगशब्दउदाहरणेनुज्ञायांप्रत्युदाहरणेत्वमर्षे· अङ्ग·कुर्वितिकरोतेर्लोण्मध्यमपुरुषैकवचनंसि

अङ्गाऽप्रातिलोम्ये। ८।१।३३ अङ्गेत्यनेनयुक्तंतिङ् नत्वानुदात्तं अङ्ग·कुरु अप्रातिलोम्येकिं अङ्ग·कूजसिवृषलइदानींज्ञास्यसिजाल्म अनभिप्रेतमसौकुर्व
न्प्रतिलोमोभवति हि च ८।१।३४ हियुक्तंतिङ् नत्वानुदात्तम् आ हि ष्मार्य्यमर्हत् आहिष्मतम् छन्दस्यनेकमपिसाकाङ्क्षम्। ८।१।
३५ हीत्यनेनयुक्तंसाकांक्षमनेकमपिनानुदात्तं अनृतंहिमत्तोवदति पाप्मानंचैनंपुनाति तिङन्तद्वयमपिननिहन्यते यावद्यथाभ्या
म् ८।१।३६ आभ्यांयोगेतिङ्नत्वानुदात्तं यथावित्कएवमावर्त्तं ॥ ९९ पृ· तस्यमेहर्यपिचेति हिरादेशः तनादिकृञ्भ्यउः सार्वधातुकेतिकरोतेर्गुण

अतउत्सार्वधातुके· उतश्चप्रत्ययादसंयोगपूर्वादितिहेर्लुक्· कुर्विसुमप्रत्ययस्वरेणान्तोदा · हि च· अत्राप्यप्रातिलोम्यइतिसंबध्यते· आहिष्मेति· स्मशब्दोनि
पातोपिचादित्वादनुदात्तः दीर्घत्वंषत्वंचछांदसंप्रातिलोम्येतु हि कूजसिवृषल· उदाहरणेहिशब्दोवधारणेहेतौवासत्वप्रत्युदाहरणेत्वमर्षे छंदस्य अनेकमपीति
अपिशब्दादेकं· तत्रानेकमुदाहरति· अनृतंहीति· हियेतइत्यर्थः यस्मादयंमत्तोनृतंवदति ततःपाप्मा· पापमेनंपुनाति· अनृतवदनदोषेणयुज्यतइतितात्प
र्यार्थः एकस्योदाहरणम्· अग्निर्हिपूर्वमुदजयत्तमिन्द्रोनूदयन्· अत्रएकमजयमित्याद्युदात्तम्· परंनिहतम्· अत्रहेतुहेतुमद्भावस्य तत्कोहिस्त्यनेकमपि
तिङ्नोहियुक्तंभवति· अत्रपूर्वेणसर्वस्यनिघातप्रतिषेधेप्राप्तेक्वचिदनेकस्यक्वचिदेकस्ययथास्यादितिवचनं· तत्रछंदसिदृष्टानुविधानात्प्रयोगंव्यवस्था

स
सि·कौ· यावद्यथा· इयं तृतीया पंचमी स्यात् · आभ्यां युक्तमिति · तेन परभूतयोरपि भवति · देवदत्तः पचति यावदिति · यावच्छब्दो निपातश्चानिपातश्च यद्यतेनिपातैर्य।
यै·त· यद्रीसंस्त्रज्ञापितत्वात् · आद्यः साकल्ये द्वितीयः परिमाणोपाधिको वतुप्रत्ययान्तः यथाशब्दो येभ्यतादिषु · आवतमिति · अकोर्लोपश्च प्रथमपुरुषद्विवचनं म·
४३ यावच्छब्दस्योदाहरणं तु · यावद्भुंक्ते देवदत्तः पचति यावदिति · यावतलोतम्योरदोगत्पानाइति · रदविलेखनेत्सडि सिपिच्छ्रद् · अद्गुत्वरेणानुदात्तं · ॥ ॥ पूजायां
नानुदात्तमिति · अनुदात्तएव भवतीत्यर्थः यावद्देवदत्त इति · पूर्वेणात्र निघातप्रतिषेधो व्यवायेपि भवति · उपसर्गव्यपेतमिति नियमाद · ज्ञातिप्रसंगाभावेऽनंतरग्रह
णं शक्यमकर्तुं · उपसर्गं यावद्यथाभ्यां युक्तमनंतरमुपसर्गेणाव्यवहितं तिङंतं पूजायां विषयेनानुदात्तं स्यात् · अनंतरमित्येवेति · तच्चानन्तर्यं सोपसर्गस्य · न।

पूजायान्नानन्तरम् ८।१।३७ यावद्यथाभ्यां युक्तनिङन्तम्पूजायान्नानुदात्तं यावत्पचति शोभनम् यथा पचति शोभनं पूजायां किं यावं।
क्ते · अनन्तरं किं यावद्देवदत्तः पचति शोभनं पूर्वेणात्र निघातः प्रतिषिध्यते उपसर्गव्यपेतञ्च ८।१।३८ पूर्वेणानन्तरमित्युक्तं उप।
सर्गाव्यवधानार्थमिदं वचनम् यावत्प्रपचति शोभनम् अनन्तरमित्येव यावद्देवदत्तः प्रपचति शोभनम् तुपश्यपश्यताऽहैः पूजायाम् ८
।१।३९ ।एभिर्युक्तं तिङन्तन्न निहन्यते पूजायाम् आदह स्वधामनु पुनर्गर्भत्वमेरिरे अहो च ८।१।४० एतद्योगेनानुदात्तं पूजाया
तिङंतमात्रस्य · प्रपचतीति प्रशब्द आद्युदात्तः तु पश्य · तु प्रभृतीनि पूजाविषयाणि · उदाहरणानि तु माणव ॥ म अहो कटं करिष्यति पचति शोभनम् ·
को भुंक्ते · पश्य माणवको भुंक्ते · माणवकस्तु भुंक्त इति · आश्चर्ये तु शब्द इति · भोजनस्य पूजा गम्यते · एवमन्यत्रापि · पूजायां किम् · पश्य मृगो धावति · तत्त्व कथ।
नमेतत् · ननु पूजायां नानन्तरमित्यतः पूजायामिति वर्त्तमाने पूजाग्रहणं व्यर्थमिति चेन्नैवम् · पूजाग्रहणं निघातप्रतिषेधार्थं · तद्धि पूजाग्रहणं प्रतिषेधस्य
प्रतिषेधेन संबद्धम् · ततश्च तदनुवृत्तावि पि न लुडित्यादिके विषये प्रतिषेधस्य प्रतिषेधः स्यात् · माभूदेवं निघातस्यैव यथा स्यादित्येतदर्थं पूजाग्रहणं किं पम·
चानन्तरमित्येवं तदभूत् · इह त्वविशेषेणेष्यते · अहो च · अहो देवदत्तः पचति शोभनमित्युदाहरणम् · पृथग्योगकरणमुत्तरार्थम् · उत्तरेयोग अहो योग एव यथा स्यात् ४३

शृणे· पूर्वेपूजायामित्युक्तत्वात्ततोन्यः शेषः स्वहापूजायामिति· अहो कटंकरिष्यतीति· पक्षेस्यप्रत्ययस्वरः अनाश्चर्यभूतमेववस्तुअसूयया आश्चर्यवत्सतिपाद्यतेन
पूजा· शेषग्रहणंस्पष्टार्थं· योगविभागसामर्थ्यादिति· ———— तत्रयावत्पुरेतिभविष्यतिलट् विद्योतनादावध्ययनंधर्मशास्त्र
स्यप्रतिषिद्धं· अतस्तदुपन्यासेनत्वरितमधीष्वेतिगम्यते· पक्षेद्योततइतिधातुस्वरेणाद्युदात्त· तास्यनुदात्तेतिलसार्वधातुकनिघातः नतेनस्मपुराधीयतइति·।
लट् स्मेइतिभूतेलट्· अत्रभूतस्याध्ययनस्यचिरकालप्रवृत्तत्वंगम्यतेनत्वरा· नन्वि· किंचित्कर्तुंस्वयमेवोद्यतस्य एवंक्रियतामित्यभ्युपगमोनुज्ञोत्स्याः,एषस्म

शेषेविभाषा ८।१।४१ अहोइत्यनेनयुक्तंतिङन्तंवानुदात्तमपूजायाम् अहोकटङ्करिष्यति पुराचपरीप्सायाम् ८।१।४२ पुरेत्यनेनयु
क्तन्वानुदात्तंत्वरायाम् अधीष्वमाणवकपुराविद्योततेविद्युत् निकटगामिन्यत्रपुराशब्दः परीप्सायांकिं नतेनस्मपुराधीयते विद्योतीतेत्रपुराननि
त्यनुज्ञैषणायाम् ८।१।४३ ननुइत्यनेनयुक्तंतिङन्तंनानुदात्तमनुप्रार्थनायां ननुगच्छामिभोः अनुजानीहि मांगच्छन्तमित्यर्थः अ।
न्वितिकिं अकार्षीःकटन्त्वंननुकरोमि पृष्टप्रतिवचनमेतत् किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ८।१।४४ क्रियाप्रश्नेवर्त्तमानेन
किंशब्देनयुक्तंतिङन्तंनानुदात्तम् किंद्विजःपचत्याहोस्विद्गच्छति क्रियेतिकिम् साधनप्रश्नेमाभूत् किंभक्तंपचत्यपूपान्वा प्रश्ने।
किं किमधीतेक्षेपोयम् अनुपसर्गमिति किम् किंप्रपचतिउतप्रकरोति अप्रतिषिद्धमिति किम् किंद्विजोनपचति ॥ : ॥ ४३ ॥ : ॥

प्रार्थनाऽनुज्ञैषणाऽनुज्ञाप्रार्थनेत्यर्थः तदाह· अनुज्ञाप्रार्थनायामिति· उदाहरणेवर्तमानसामीप्येलट्प्रत्युदाहरणेननौपृष्टप्रतिवचनेइतिभूतेलट् अन्विति कि
मिति· अनुज्ञैषणायामितिकिमित्यर्थः अंगाप्रातिलोम्यइत्यादिवदितिकरणंविनापिसिद्धेएकनिपातोयमितिप्रद र्शनार्थमितिशब्दः अन्यथाह्नयोर्निपातयो।
र्ग्रहणंसंभाव्येत· किंक्रिय.· अप्रतिषिद्धमिति· अप्रतिषिद्धार्थमित्यर्थः किंद्विजःपचतिआहोस्विद्गच्छतीति· आहोस्विदेकोनिपातस्त्वाद्युदात्तः अत्रकेचित् पू
र्वंकिंयुक्तंतन्ननिहन्यतेउत्तरंतुनकिंयुक्तमितिनिहन्यतएवेति· अन्येतुयद्यप्येकस्मात्तस्यसमीपेकिंशब्दः श्रूयते तथापि· सर्वस्यसंशयविषयत्वात्तेनयोगइति·।

उभयत्रापिनिषेधेनभाव्यमिति· अत्रहरदत्तःयेत्वाहुःपूर्वंकिंयुक्तमिति·तेमन्यंते· अमुद्वयोःसंशयविषयत्वंकिंशब्देनतुश्रुतक्रियाविषयएवप्रश्नोद्योत्यते·क्रियांतरवि
षयस्तुप्रश्नःआहोस्विदित्यनेनक्रियाप्रश्नइतिचोच्यतेतस्मात्तस्येवनिघातप्रतिषेधइति·प्रश्नेकिम्·किंदेवदत्तःपठति·क्षेपेकिंशब्दःकश्चित्पुत्रकेकिमधीयतइतिप्रत्युदा
हरणंदृश्यतेतत्राहर्त्तव्यंक्षेपसृष्टत्वात्॥ ःः ॥ लोपे· किंक्रियाप्रश्नेति· सूत्रमनुवर्त्तते·तथाचायमर्थःक्रियाप्रश्नेयःकिंशब्दःतस्यलोपेतदर्थेनयुक्तमनुपसर्गम
प्रतिषिद्धंचतिङ·तंवानुदात्तंस्यात्· सूत्रेणकिमोलोपस्याविधानार्थप्रकरणादिनागम्यमानार्थत्वादप्रयोगएवलोपोविवक्षितःदत्तःपचति·आहोस्वित्पठतीति·अ
त्रपक्षेनिघातःपक्षेधातुस्वरेणाद्युदात्तता·किंशब्दाप्रयोगादप्राप्तविभाषेयम्·यद्वातस्याप्रयोगेपिअर्थेनयोगात्प्राप्तविभाषा·पूर्वसूत्रस्थानिप्रत्युदाहरणानिकिंश्च॥

लोपेविभाषा ८।१।४५ किमोऽप्रयोगेउक्तंवा देवदत्तःपचत्याहोस्वित्पठति एहिमन्येप्रहासेलृट् ८।१।४६ एहिमन्येइत्यनेनयुक्तंलृड।
तन्नानुदात्तंक्रीडायाम् एहिमन्येभक्तंभोक्ष्यसेभुक्तंतान्त्वःतिथिभिःप्रहासेकिम् एहिमन्यसेओदनंभोक्ष्येसुष्ठुमन्य।
से गत्यर्थलोटालृडित्यनेनैवसिद्धेनियमार्थोयमारम्भः एहिमन्येयुक्तेप्रहासएवनान्यत्र एहिमन्यसेओदनंभोक्ष्ये जात्वपूर्वं ८
।१।४७ अविद्यमानपूर्वंयज्जात्वितेनयुक्तंतिङ·तन्नानुदात्तं जातुभोक्ष्यसे अपूर्वंकिम् कटंजातुकरिष्यसि॥ ४ ४ ४ ॥

वंसत्वात्रयोजनीयानि·एहि·एहिमन्यइत्यनेनयुक्तमितिसमुदायाभिप्रायमेकवचनं·अन्यथाआख्यातेद्वेआङ्·चापरइतिबहुवचन प्रसंगःएहिमन्येभक्तंभोक्ष्य
सइति·मन्यसेभोक्ष्यइत्यर्थेप्रहासेचमन्योपपदेइत्यादिनामान्येभोक्ष्यसइतिपुरुषव्यत्ययःइदंचवृत्तिकारमतरीत्याप्रत्युदाहरणं·तं·न्मतेउत्तमोपादानस्याभंसत्वात्·
भाष्येतुएहिमन्येरथेनयास्यसीतिप्रत्युदाहृतम्·तत्रायमर्थःत्वंरथेनयास्यसीत्यहंमन्यएहीति·गत्यर्थलो डित्येवसिद्धइति आङ्पूर्वादिणोलोट्सिपोहिःअत्रए
हीत्यस्यगत्यर्थत्वात्गत्यर्थलोटेतिसिद्धमित्यर्थःएहीत्यत्रआङःपरत्वादिहीत्यत्रनिघातःमन्यइति·मनज्ञानेअनुदात्तेतश्यन्नन्तत्वादाद्युदात्तत्वम्·नात्यनुदात्तेदितित्र
दुपदेशात्सत्वादिड नुदात्तःजात्व·अपूर्वमितिजातुशब्दस्यैवविशेषणंनतिङन्तस्य·आहोउताहोइतिसूत्रेअनंतरग्रहणज्ञापकात्अन्यथातत्राप्यपूर्वमित्यनुवृत्ते।

रिंवकेवलतिङन्तस्यानन्तर्यंलभ्यतेइतिकिंतेन· ननुशेषेविभाषांवक्ष्यतितत्रशेषमलक्ष्यार्थंतत्स्यात् शेषेविभाषा· कश्चशेषःसान्तरंशेषइति· अन्तरेणाप्यनन्तरग्रहणे
सलक्षणः शेषः कथम्· अपूर्वमितिप्रकृतंसपूर्वः शेषइतितदेतत्फलमभिप्रेत्याह· अविद्यमानपूर्वंयज्जातिति· जातुभोक्ष्यसइति· अदुपदेशात्सरत्वात्सेड्इसस्येति

किंवृत्तञ्चचिदुत्तरम् ८।१।४८ अविद्यमानपूर्वंचिदुत्तरंयत्किंवृत्तंतेनयुक्तंतिङन्तंनानुदात्तम् विभक्त्यन्तंडतरडतमानञ्च· किंवृ
त्तम् कश्चिद्भुङ्क्ते कतरश्चित् कतमश्चिद्वा चिदुत्तरङ्किम् कोभुङ्क्ते अपूर्वमित्येव रामः किञ्चित्पठति आहोउताहोचाऽनन्तरम्
८।१।४९ आहोउताहोइत्याभ्यामपूर्वाभ्यांयुक्तंतिङन्तंनानुदात्तम् आहोउताहोवाभुङ्क्ते अनन्तरमित्येव शेषेविभाषांवक्ष्यति अ
पूर्वेतिकिम् देवआहोभुङ्क्ते शेषेविभाषा ८।१।५० आभ्यांयुक्तंव्यवहितंतिङन्तंवानुदात्तं आहोदेवःपचति गत्यर्थलोटालृण्न्चेत्कारकं
सर्वान्यत् ८।१।५१ गत्यर्थानांलोटायुक्तंतिङन्तंनानुदात्तं यत्रैवकारकेलोट्तत्रैवलृडपिचेत् आगच्छदेवग्रामंद्रक्ष्यसि उह्यन्तान्देव
दत्तेनशालयोरमेणभोक्ष्यन्ते गत्यर्थेतिकिम् पचदेवओदनंभोक्ष्यसेऽन्नं लोटेतिकिम् आगच्छेर्देवग्रामन्द्रक्ष्यस्येनम् लृट्किम् आगच्छ
देवग्रामम्पश्यस्येनं नचेदितिकिम् आगच्छदेवग्रामंपित्रातेओदनम्भोक्ष्यते सर्वेकिम् आगच्छदेवग्रामंत्वञ्चाहञ्चद्रक्ष्यावएनं।
मित्यत्रापिनिघातनिषेधोयथास्यात् यच्चोऽनास्यकारकेनचान्यच्चलृडन्तेनोच्यते लोड्च ८।१।५२ लोडन्तङ्गत्यर्थलोटायुक्तन्नानुदा
त्तम् आगच्छदेवग्राममपश्य गत्यर्थेतिकिम् पचदेवौदनंभुङ्क्ष्वैनम् लोट्किम् आगच्छदेवग्राममपश्यसि नचेत्कारकंसर्वान्यदि
त्येव आगच्छदेवग्राममपश्यत्वेनंरामः सर्वग्रहणात्त्विहस्यादेव आगच्छदेवग्रामंत्वञ्चाहञ्चपश्यावः योगविभागउत्तरार्थः ॥

त्वान्तःमध्योदात्तंपदं· जातुशब्दोनिपातत्वादाद्युदात्तः कण्ठेजातुकाक्ष्यसीति· कण्ठशब्दःफिट्स्वरेणान्तोदात्तः॥ ॥ किंवृत्तं· वृत्तमित्यधिकरणेक्तः· किमोवृत्तंकिंवृ
त्तं· अधिकरणवाचिनश्चेतिकर्तरिषष्ठी· अधिकरणवाचिनाचेतिसमासनिषेधेप्राप्तेऽस्मादेवनिपातनात्समासः इहजात्वपूर्वमित्यतोऽपूर्वमिति [illegible]

अविद्यमानपूर्वमिति · यद्यपि अत्र किंशब्दो वर्त्तते तत्सर्वं गृह्यते तर्हि किमो यः किंतरामित्यादेरपि प्रसंगः स्यादिति मत्वा परिसंचष्टे · विभक्त्यन्तमित्यादि शेषेवि · अनंतरापेक्षं शे षत्वमित्याह · व्यवहितमिति पचतीति पक्षे धातुस्वरेणाद्युदात्तम् · गत्यर्थ · गतिरर्थो येषामिति विग्रहः गत्यर्थलोटा युक्तमिति योगः पुनरर्थ द्वारको निमित्तनिमित्ती भावः लोडंत वाच्यं हि निमित्तं लङंतवाच्यस्य न चेत्कारकं सर्वान्यदित्यस्य व्याख्यानमाह · यत्रैव कारके लोडित्यादि · कर्त्तरि कर्मणि वा · आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनमिति · आङ्‌ उप सर्गः गच्छ देवदत्तशब्दयोः पदात्परत्वान्निघातः ग्रामशब्दो ग्रसेराचेति मन्नंत आद्युदात्तः द्रक्ष्यसीति · प्रत्ययस्वरेण मध्योदात्तम् · उह्यतां देवदत्तेन शालयो ग्रामे णाभोक्ष्य नइति · वहेः प्रापणार्थत्वेपि गतिर्गम्यत इति गत्यर्थत्वम् उह्यंतामित्यत्र देवदत्तग्रामयोः कर्त्रोर्भेदेपि लकारवाच्यस्य शालेः कर्मणः अभेदात् · आगच्छेरिति · लिङ्‌ यंत लोट्‌ द्रक्ष्यसीति वर्तमान सामीप्ये लट् आगच्छ देव ग्रामं पित्राते ओदनं भोक्ष्यत इति · कारकशब्दो न सूत्रे कारकव्यक्तिरेवाश्रीयते तेन कर्तृत्वाभेदेपि व्यक्तिभेदात्कार

**विभाषितं सोपसर्गमनुत्तमम् ८।१।५३ लोडन्तङ्‌ गत्यर्थलोटा युक्तं तिङन्तं वानुदात्तं आगच्छ देव ग्रामम्प्रविश सोपसर्गं किम् आग च्छ देव ग्राममप्पश्य अनुत्तमं किम् आगच्छानि देव ग्रामम्प्रविशानि ॥ ः ॥** ९९ कभेदः त्वं चाहं द्रक्ष्याव एनमिति · अक्रियमाणे सर्वग्रहणे यत्र वा च्यं न भिद्यते तत्रैव भवितव्यम् इह च भिद्यते वाच्यम् · एकत्रैकमन्यत्र द्वयमिति निघातप्रतिषेधो न स्यात् · क्रियमाणे तु सर्वग्रहणे लोडन्ताच्च कारकापेक्षया लङन्ताच्च कारका धिक्येपि निघातप्रतिषेधः सिद्धः लोड्‌ लड्‌ग्रहणं विहाय गत्यर्थलोटेति संपूर्णं सूत्रमनुवर्त्तते तदाह गत्यर्थेत्यादि · आगच्छेति गत्यर्थलोटा युक्तं पश्येति न निहतं गच्छेति तु निहतमेव योगविभाग उत्तरार्थइ ति · उत्तरे विकल्पो लोट एव यथा स्यात् · लृटो माभूत् इति ॥ ः ॥ विभाषितं · पूर्वसूत्रं सर्वमनुवर्त्तते प्राप्तविभाषा चेयम् · गत्यर्थलोटा युक्तं लोडन्तं सोपसर्गमुत्तमभि न्नं विभाषानुदात्तं स्यात् नचेत्कारकं सर्वान्यत् · सोपसर्गमिति · उपसर्गेण सह · उपसर्गे विद्यमान इत्यर्थः सहशब्दो विद्यमानार्थो न तु तुल्ययोगेन ह्युपसर्गस्य विघा तप्रसंगोस्ति · आगच्छ देव ग्रामं प्रविशेति · अत्र विशेति · पक्षे निहतं पक्षे शप्रत्ययस्वरेणान्तोदात्तं · यदान्तोदात्तं तदा तिङि चोदात्तवतीति गतेर्निघातः पश्य प्रशाधानीति · उभयत्रापि पूर्वेणानित्यमेव निघातः प्रत्युदाहरणानि पूर्वसूत्रोक्तान्येव प्रशब्दपूर्वाणि योज्यानि · ॥

हन्त च । पूर्वसूत्रमनुवर्तते लोडू हृतं चानदाह । हन्तेत्यनेनेत्यादि । प्राप्तविभाषेयं । निपातैर्यद्यदीति निघातनिषेधस्य सिद्धत्वात् । प्रभुनजावहा इति । भुजेर्लोट् । भुजोऽनवने इत्यात्मने
पदं वहिरिटेत्वं ष्टुम् । आडुत्तमस्य पिच्च । एत ऐ । अनुदात्तौ सुप्पितौ इति सार्वधातुकानुदात्तत्वे विकरणस्वरः । आमः । अंतरयतीत्यन्तरं व्यवधायकं । एकमन्तरं यस्य तदेकान्तरम् । उदाह
रणे निघातप्रतिषिद्धे षाष्ठमाद्युदात्तत्वम् । अनन्तिक इति किम् इति । अत्र केचिदन्तिकं दूरं तस्यैव सामर्थ्यादेकश्रुतेर्निघातस्य च प्रतिषेधः यदि निघातमात्रनिषेधोऽयं तदा

हन्त च । ८।१।५४ हन्तेत्यनेन युक्तमनुत्तमं लोडन्तं वानुदात्तम् । हन्त प्रविश २ सोपसर्गमित्येव हन्त कुरु । निपातैर्यद्यदीति निघातप्रतिषेधः ।
अनुत्तमं किम् । हन्त भुनजावहै । आम एकान्तरमामन्त्रितमनन्तिके । ८।१।५५ आमः परमेकपदान्तरितमामन्त्रितं नानुदात्तं । आम् प
चसि देवदत्ता३ । एकान्तरं किम् । आम् प्रपचसि देवदत्ता३ । आमन्त्रितं किम् । आम् पचति देवदत्तः । अनन्तिके किम् । आम् पचसि देवदत्त । यद्धितुपरं छ
न्दसि ८।१।५६ तिङ् नानुदात्तं । उदस्थाः जोषयदङ्गिरः । उशन्ति हि । आख्यास्यामि तु ते । निपातैर्यद्यदीति हि चेति तु पश्येति च सिद्धे नियमार्थमि
दं एतैरेव परभूतैर्योगे नान्यैरिति । जायस्वारोहावेहि एहीति गत्यर्थलोटा युक्तस्य लोडन्तस्य निघातो भवति । चनचिदिवगोत्रादितद्धिता
म्रेडितेष्वगतेः । ८।१।५७ एषु षट्सु परतस्तिङ् नानुदात्तं । देवः पचति चन । देवः पचति चित् । देवः पचतीव । देवः पचति गोत्रम् । देवः प
चति कल्पम् । देवः पचति पचति । अगतेः किं । देवः प्रपचति चन ॥ ९९ घातस्यैकश्रुतेरपि इत्ता भावः प्लुतोदात्तस्यापि प्रतिषिध्यत इत्याहुः । अपरे तु अन
न्तिक इत्यनेन यन्न दूरं न च संनिकृष्टं तदुच्यते न दूरमेव । अन्यथा दूरमित्येव वदेत् तेनास्मिन्नेकश्रुतेः प्राप्तिरेव नास्ति । अदूरत्वात् प्लुतोऽपि नोदाहर्तव्य इति । यद्धितु ।
उदस्थाः इति । तुदादेः ष्ठजेर्लङि सिप्यट् । उशंति हीति वश कान्तौ अदादिः लटि झोऽन्तः ग्रह्यादित्वात् संप्रसारणम् । नान्यैरिति यदि हन्तेत्यादिभिरित्यर्थः । जायस्वारोहावेही
ति । रुहेर्लोट् वस् शप् । आडुत्तमस्य पिच्च । लोपो लङ्वदिति लङ्वद्भावे नित्यं ङितः इति सलोपः । आङ्पूर्वादिणो लोट् सिपो हिः एहि । तेन परभूतेन युक्तस्यारोहावेत्यस्य
लोडन्तस्य प्राप्तो निघातप्रतिषेधो नियमान्निवर्त्यते । तेन स्वशब्दाश्रयो निघातो भवति । स्वाशब्दे रोरीति लोपः ढ्रलोप इति दीर्घः स्वारोहावेति पाठे तु छान्दसत्वादुत्वम् ।
श्रुत्या बाधितत्वादिदं सूत्रं व्यर्थं स्यादिति सामर्थ्यादेव चैतन्निषेधं प्रति एक ५ त्र२ ॥

ऽनपि· एष्विति· चनचिदिवगोत्रादितद्धितः आम्रेडितएष्वित्यर्थः इहापि·गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव ग्राह्याः तत्रैवतिङि गोत्रादीत्यत्रैवोक्तम्· पचतिकल्पमिति· अत्रा
नुवृत्तएवतद्धितोग्राह्यः अन्यत्रतद्धितस्वरेणतिङन्तस्वरोबाध्यते· अग्निपचतिदेश्यं॥ ॥ चादिषुच· नचवाहाहैवयुक्तेइति सूत्रेनिर्दिष्टाश्चादयोत्रगृह्यन्ते संनिकृष्ट
त्वात्· ननुचादयोलक्षणइतिसूत्रनिर्दिष्टाविप्रकृष्टत्वात्तदेतदाह चवाहाहैवेषुपरेष्विति· पचतिचखादतिचेति· उभयत्रखादतौ तस्यनिघातप्रसंगएवनास्तिनाना
वाक्यत्वात्· चवायोगोहिसमुच्चयेविकल्पेवासतिभवति· सचानेकस्यधर्मइतिकृत्वोदाहृतम्· चवा·प्रथमेतिस्त्रीलिंगस्यनिर्वाहमाह· प्रथमातिङ्विभक्तिरिति·प्रथमस्य

चादिषुच ८।१।५८ चवाहाहैवेषुपरेषुतिङन्तन्नानुदात्तं देवःपचतिच खादतिच अगतेरित्येव देवःप्रपचतिच प्रखादतिच प्रथमस्य
चवायोगइतिनिघातः प्रतिषिध्यतेद्वितीयन्तुनिहन्यतएव चवायोगेप्रथमा ८।१।५९ चवेत्याभ्यांयोगेप्रथमातिङ्विभक्तिर्नानुदा
त्ता गाश्चचारयतिवीणांचवादयति इतोवसतिमीमहे उत्तरवाक्ययोरनुषज्जनीयन्तिङन्तापेक्ष्ययेयंप्राथमिकी योगेकिं पूर्वभूतयो
रपियोगोनिघातार्थम्प्रथमाग्रहणाद्द्वितीयादेस्तिङन्तस्यमाभूत् हेतिक्षियायाम् ८।१।६० हयुक्ताप्रथमातिङ्विभक्तिर्नानुदात्ताधा
र्म्मव्यतिक्रमे स्वयंहरथेनयाति ३।उपाध्यायम्पदातिङ्गमयति· क्षियाशीरितिप्लुतः अहेतिविनियोगेच ८।१।६१ अहयुक्ताप्रथमा
तिङ्विभक्तिर्नानुदात्तानानाप्रयोजनेनियोगे त्वंग्रामङ्गच्छत्वमरण्यंगच्छ क्षियायांस्वयमहरथेनयाति ३।

चारिताति ङ्विभक्तिरित्यर्थः अगतेरितिप्रथमसूत्रेचानुकृष्टत्वादिहनानुवर्त्तते· उत्तरवाक्ययोरि ति· देवोवापार्थिवादधि·इदं उपाध्यायम्पदातिन्नयति·
महोदास्सर्गइत्येनयोरित्यर्थः ननुश्रुतस्यैवतिङन्तस्योत्तरत्रानुषङ्गः तत्कथंप्राथम्यमितिचेत्· अनुषक्तस्याप्यौपाधिकंभेदंपुरस्कृत्यप्राथम्याश्रयणेननिघातनि
षेधस्यच्छेदस्यबहुशोदृष्टत्वात्· एतच्चेहैवमंत्रेनियमेनमुष्टिहत्ययेतिचमंत्रेवेदभाष्येस्पष्टम्· हेति· स्वयंहरथेनयातीति·उपाध्यायेपदातौगच्छतिसतिशिष्यस्य
रथेनगमनंप्रतिषिद्धमित्याचारभेदः अहेति· अनेकस्मिन्प्रयोजनेप्रेषणंविनियोगस्तदाहनानाप्रयोजनेनियोगइति· अनेकप्रयोजनोनियोगः प्रेषणमुदाहरणेतु

चाहलोप· अवधारणार्थ एवशब्दप्रयोगे सति प्रथमं तिङ्·न्तं नानुदात्तम्· सूत्रेण चाहलोपस्याविधानात्· अर्थप्रकरणादिना गम्यमानार्थत्वादप्रयोग एव लोपो वि
वक्षितः चशब्दः समुच्चयार्थः हशब्दः केवलार्थः समानकर्तृके चलोपः नानाकर्तृके ऽहलोपः उदाहरणे चलोपं दर्शयति· ग्राममरण्यं चेति· केवमोऽस्यत इति· अनन्वक्षमावयमेवशा
ब्दः एवे चानियोग इति पररूपम्· चादिषाजेष्विति· अवेति तिङ्·न्तस्येह निघातः निघाताभावस्य तूदाहरणान्तरमृग्यम्· ननु पूर्वसूत्रे समानकर्तृके चलोप इत्युक्तम्
इह तु कर्तृभेदात्· कथं चलोप इति चेत्· अवधारणार्थ एवशब्दप्रयोगे समानकर्तृके च लोप इति नियमो न तु सर्वत्रेत्यस्त्यत्र चलोपः व्रीहिभिर्यजेतेति· प्रश्नेनि

चाहलोप एवेत्यवधारणम् ८।१।६२। चअहएतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता देव एव ग्रामङ्गच्छतु देव एवारण्यङ्गच्छतु ग्रा
ममरण्यञ्चागच्छत्वित्यर्थः देव एव ग्रामङ्गच्छतु राम एवारण्यङ्गच्छतु ग्रामङ्केवलमरण्यङ्केवलङ्गच्छत्वित्यर्थः इहाहलोपः सचकेव
लार्थः अवधारणात्किम् देव क्वेव भोक्ष्यसे न क्वचिदित्यर्थः अनवक्लृप्तावेव चादिलोपे विभाषा ८।१।६३ चवाहहैवानां लोपे प्रथमा ति
ङ्विभक्तिर्नानुदात्ता चलोपे शुक्ला व्रीहयो भवन्ति श्वेता गा आज्याय दुहन्ति वा लोपे व्रीहिभिर्यजेत यवैर्यजेत वैवावेति च छन्दसि ८।
१।६४ अहर्वै देवानामासीत् अयं वाव हस्त आसीत् एकान्याभ्यां समर्थाभ्याम् ८।१।६५ आभ्यां युक्तम्प्रथमा तिङ्विभक्तिर्वानुदात्ता।
छन्दसि अजामेका जिन्वति प्रजामेका रक्षति तयोरन्यः पिप्पलं स्वाद्वत्ति समर्थाभ्यां किं एको देवानुपातिष्ठत् एक इति संख्यापरत्वा
न्नार्थे यद्वृत्तान्नित्यम् ८।१।६६ यत्रपदेयच्छब्दस्ततः परन्तिङ्न्तन्नानुदात्तं यो भुङ्क्ते यदधीते यं घ्नन्ति यत्र व्यवहितेकार्य्यमिष्यते ॥ :।

त्तं· पक्षे आद्युदात्तं· द्वितीयं तु निहतमेव· एवं शेषेष्वपि यथादर्शनमुदाहरणम्· वैवाव· आभ्यां युक्तं प्रथमं तिङ्·न्तमनुदात्तं वा स्यात् छंदसि· वै स्फुटार्थे समाप्तं
च वाव प्रसिद्धौ स्फुटार्थे च· एकान्या समौ तुल्यार्थौ ययोस्तौ समर्थौ शकन्ध्वादित्वात्पररूपम्· जिन्वतीति· जिवि· प्रीणनार्थः इदित्वान्नुम् लट्· तिप्· शप्· अजा
मेकां रक्षतीति· अन्यां प्रीणयति· अन्यां रक्षतीत्यर्थः एक इति संख्यापरमिति· एकशब्दस्यानेकार्थत्वात्· तथा चोक्तम्· एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा·

ऽम्पारणेसमाने ऽस्मेसंख्यायां चप्रयुज्यतेइति· ननुसाहचर्यादन्यार्थकएवैकशब्दोग्रहीष्यतइतिचेत्सत्यम्· नसाहचर्यमत्रप्रकरणोव्यवस्थापकमिति· निपातैर्यद्यदिहन्तेत्यत्रैवावोचाम· यद्द· यद्यद्धिति· यदृग्रंचतीतिकिंनविष्वग्देवयोश्चेतिटेरद्यादेशः कथंपुनः पंचमीनिर्देशसतियदग्रइ· वायुर्वा तिइत्यादौव्यवधानेभवत्यत आह· अत्रव्यवहितेकार्यमिष्यतइति· अत्रच ज्ञापकमुत्तरसूत्रेमूलएवस्फुटीभविष्यति·॥ ॥ पूजनात्· काष्ठादिभ्यइतिवार्त्तिकंदृष्टंतदनुरोधेनपूजनादितिवहुवचनस्थानएकवचनमितिव्याचष्टे· पूजनेभ्यः काष्ठादिभ्यइति उत्तरसूत्रेतिङ्ग्रहणाद्दिंसुवन्तविषयकम्· काष्ठाध्यापकइति· काष्ठादयोऽद्भुतपर्यायाः संतःपूजनवचनाभवंति· समासविषयकंसूत्रमिदं उदाहरणेमयूरव्यंसकादित्वात्समासः मलोपश्चवक्तव्यइति· दारुणमध्यापकइतिसमासेकृतेविभक्तेर्लुकिसत्यां

पूजनात्पूजितमनुदात्तंकाष्ठादिभ्यः ८।१।६७ पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तम् काष्ठाध्यापकः मलोपश्चवक्तव्यः दारुणाध्यापकः अनुत्तमाध्यापकः समासान्तोदात्तत्वापवादएतत्समासेइष्यते नेह दारुणमध्यापकइतिवृत्तिमतम् पूजनादित्येवपूजितग्रहणेसिद्धेपूजितग्रहणमनन्तरपूजितलाभार्थं एतदेवज्ञापकमत्रप्रकरणेपञ्चमीनिर्देशेपिनानन्तर्यमाश्रीयतइति सगतिरपितिङ् ।८।१।६८। पूजनेभ्यः काष्ठादिभ्यस्तिङन्तम्पूजितमनुदात्तं यत्काष्ठम्प्रपचति तिङ्ङतिङः इतिनिघातस्यनिपातैर्यदिति निषेधेप्राप्तेविधिरयम् सगतिग्रहणाच्चगतिरपिनिहन्यते गतिग्रहणेउपसर्गग्रहणमिष्यते॥ ०॥ नेह यत्काष्ठांशुक्लीकरोति॥ ११ विकीर्णमेकाद्यवृत्तिरित्यनेनवचनेनान्वाख्यापतेइतिवृत्तिन्यासकारयोर्मतंतदेतदाह· इतिवृत्तिमतमिति· भाष्यवार्त्तिककैयटास्तु· असमासएवक्रियाविशेषणीभूतानांदारुणमित्यादीनामसमासत्वात्सूत्रस्यप्रवृत्तिमिच्छंतिमयूरव्यंसकादित्वेनास्तिप्रमाणं· हरदत्तोप्याह· यदिसमासेएवेदमभिमतमभविष्यत्तदासमासइत्येवावक्ष्यत्· युक्तंचैतत्· नह्यत्रसमासाधिकारोस्तियेनसमासः स्यात्· अस्मिन्पक्षेमलोपवचनंचसार्थकं· पूजनादित्येवपूजितपरिग्रहेसिद्धइति· पूजनस्यपूजितापेक्षत्वादितिभावः अनंतरपूजितलाभार्थमिति· पूजनात्पूजितमितिसूत्रेसामान्यगतमानंतर्यविशेषणंविज्ञायतइतिभावः कथंपुनःपंचमीनिर्देशोव्यवहितस्यप्रसंगइत्याह· एतदेवेति· ज्ञापकफलंतुस्प·

नत्वाक्षिपतीति क्रियावाचित्वमेवोदात्तवत्त्वं भविष्यति· नवक्षदन्तेः इति प्रसंगः तत्र कृत्स्वरे थाथादिस्वरे गतिस्वरे च कृते शेषनिघातेन गतिर्निहन्यत एव तस्मान्नार्थः तिङ्ग्रहण
मित्याशङ्क्याह· तिङ्ग्रहणमिति· परिमाणमियत्ता· परिमाणार्थत्वमेव स्पष्टयति· अनर्थकं हीति· अक्रियमाणे तिङ्ग्रहणे धातुरेव क्रियावाचित्वादितिसंज्ञानिमित्तमिति न
मेवोदात्तवतीति निघातः स्यात् न प्रत्यये तिङ्· ग्रहणे कृते तु पंचधातुं प्रतिगतिस्तत्रेकैकेतिङ्· न उदात्तवति परे इत्यर्थो जायते· तेन यत्प्रकरोतीत्यत्रेदो धातोः शेषनिघातेनानुदात्त
त्वेपि तिङ्· न एवं प्रत्ययस्वरेण मध्योदात्तत्वाद्गतेर्निघातः सिद्ध इत्याहुः प्रपचतीति· तिङ्ङ्तिङ इति निघातः॥ ❁ ॥ इति श्रीमन्मौनिकुलतिलकायमानश्री
गोवर्द्धनभट्टात्मजरघुनाथात्मजेन जयकृष्णेन कृतायां सिद्धान्तकौमुदीव्याख्यायां तिङन्तस्वरप्रकरणं समाप्तम्। ❁ ❁ ❁ ❁ ❁ ❁ ❁ ❁ ❁ ॥

सू·१९॥ दान्त इति माधवः वस्तुतस्तु षष्ठ्यन्ता दित्त्वादन्तो १।

अथ वैदिकवाक्येषु स्वरसञ्चारप्रकारः कथ्यते अग्निमीळे इति प्रथमाऽऽकृक् तत्राग्निशब्दोऽन्तोदात्तः फिषोऽन्त उदात्त इत्यन्तोदात्तः न्युसन्तौ तु निप्रत्य
यस्वरेण अमुद्धादनुदात्तः अग्निपूर्व इत्येकादेशस्त्वेकादेश उदात्तेनोदात्तः ईळे तिङ्ङ्तिङ इति निघातः संहितायां तूदात्तादनुदात्तस्येनी
कारः स्वरितः स्वरितात्संहितायामिति लेईत्येतस्य प्रचयापरपर्याया एकश्रुतिः पुरः शब्दो नोदात्तः पूर्वाधरावराणामिति असिप्रत्ययस्वरात् हित
शब्दोपि धाञो निष्ठायां न धातेर्हिरिति ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः पुरोऽव्ययमिति गतिसंज्ञायां कुगतीति समासे समासान्तोदात्तत्वे तत्पुरुषे
तुल्यार्थेत्यव्ययपूर्वपदप्रकृतिस्वरेण गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरे थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते गतिरनन्तर
इति पूर्वपदप्रकृतिस्वरः पुरःशब्दो कारस्य संहितायां प्रचये प्राप्ते उदात्तस्वरितपरस्य सन्नतर इत्यनुदात्ततरः यज्ञस्य नङः प्रत्ययस्वरः।
विभक्तेः सुप्त्वादनुदात्तत्वेन स्वरितत्वं देवः पचाद्यच् फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण वान्तोदात्तः ऋत्विक् ऋत्विक्छब्दः कृदुत्तरपदप्रकृति
स्वरेणान्तोदात्तः होतृशब्दस्तृन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः रत्नशब्दो नविषयस्येत्याद्युदात्तः रत्नानि दधातीति रत्नधाः समासस्वरे

पाकदुर्न यदि प्रकृतिस्वरो णवान्तोदात्तः तमपः पित्वादनुदात्तत्वे स्वरितप्रचयाविसादियथाशास्त्रमुन्नेयम् इत्थं वैदिकशब्दानां दिङ्मात्रमिह दर्शि-
तम् तदनुप्रीतये श्रीमद्भवानीविश्वनाथयोः ॥ १ ॥ ॥ इति सिद्धान्तकौमुद्यां श्रीभट्टोजिदीक्षितविरचितायां वैदिकप्रक्रिया शुभमस्तु ॥

श्रीगणेशाय नमः ॥ लिङ्गम् ॥ ॥ स्त्री ॥ ॥ अधिकारसूत्रमेतत् ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः
स्वस्रादिकं पञ्चकं ङीब्निषेधेन कर्त्रीत्यादेर्ङीबन्तत्वात् तिसृचतसृ त्रिचतुरोः स्त्रियामादेशतया विधानेऽपि प्रकृत्योः स्त्रीत्वे चतुरोऽनृदन्तत्वाभावात् अन्यु-
प्रत्ययान्तो धातुः अनिप्रत्ययान्त उप्रत्ययान्तश्च धातुः स्त्रियां स्यात् अवनिः चमूः प्रत्ययग्रहणं किम् देवयतेः क्विप् द्यूः विशेष्यलिङ्गः अशनिभ-
रण्योः पुंसि च इत्यमरः अशनिः मिन्यन्तः मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् भूमिः ग्लानिः वह्निवृष्ण्यग्नयः पुंसि पूर्वस्यापवादः श्रोणियोन्यूर्मयः पुंसि
च इत्यमरः [illegible] क्तिन्नन्तः स्त्री स्यात् कृतिरित्यादि ईकारान्तश्च ईप्रत्ययान्तः स्त्री स्यात् लक्ष्मीः ईबन्तश्च ईबन्तं च प्रातिपदिकं स्त्री स्यात् देवी कुरुचरीत्यादि ऊङ-
न्तश्च कुरूः विद्या चैकमेकाक्षरम् श्रीः भूः एकाक्षरं किम् पृथुश्रीः विंशत्यादिरानवतेः इयं विंशतिः त्रिंशत् चत्वारिंशत् पञ्चाशत् ष-
ष्टिः सप्ततिः अशीतिः नवतिः दुन्दुभिरक्षेषु इयं दुन्दुभिः अक्षेषु किम् अयं दुन्दुभिर्वाद्यविशेषोऽसुरो वेत्यर्थः नाभिरक्षत्रिये इयं नाभिः उभा-
वप्यत्र पुंसि दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः नाभिः क्षत्रियः कथं तर्हि समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभि-
रिति भारविः उच्यते [illegible] मित्यादाविव कोमलैरिति सामान्येन पुंसकं बोध्यम् वस्तुतस्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात्सु ।
[illegible] साधुः अतएव नाभिर्मुख्येन पेत्यक्रमध्यक्षत्रिययोः पुमान् द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे इति मेदिनिः रभसोऽप्याह
[illegible] नाभिः पुंसि प्राण्यङ्गे द्वयोः चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे इति एवमेवंविधेऽन्यत्रापि बोध्यं तलन्तः अयं स्त्रियां

सि·कौ· त्वात् शुक्लस्य भावः शुक्लता ब्राह्मणस्य कर्म ब्राह्मणता ग्रामस्य समूहो ग्रामता देव एव देवता भूमिविद्युत्सरिल्लतावनिताभिधानानि भूमिर्भूः विद्यु
मू·लिं· त्सौदामिनी सरिन्निम्नगा लता वल्ली वनिता योषित् यादो नपुंसकम् यादः शब्दः सरिद्वाचकोऽपि क्लीबं स्यात् भाः स्रुक् स्रग् दिग् उष्णिग् उपानहः एते स्त्रि
४९ यां स्युः इयं भाः इत्यादि स्थूणोर्णे नपुंसके च एते स्त्रियां क्लीबे च स्तः स्थूणा स्थूणं ऊर्णा ऊर्णं तत्र स्थूणा काष्ठमयी ढिकर्णिका ऊर्णा मेषादिलोम
गृहशशाभ्यां क्लीबे नियमार्थमिदम् गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्तः गृहस्थूणं शशोर्णं शशलोमनी समरः प्रावृड्विप्रुड्रुट्तृ
ड्विट्त्विषः एते स्त्रियां स्युः दर्विविदिवेदिखनिशान्यश्रिवेश्यृष्ट्योषधिकट्यङ्गुलयः एते स्त्रीयां स्युः पक्षे ङीषु दर्वी दर्विरित्यादि तिथिनाडिरु
चिवीचिनालिधूलिकेकिकेलिछविरात्र्यादयः एते प्राग्वत् इयं तिथिः तिथिरित्यादि अमरस्त्वाह तिथयो द्वयोरिति तथा च भारविः तस्य भुवि बहुतिथा
स्तिथयः इति स्त्रीत्वे हि बहुतिथ्य इति स्यात् श्रीहर्षश्च निखिलान्निशि पौर्णमासी तिथीनिति शष्कुलिराजिकुट्यशनिवर्त्तिभ्रुकुटित्रुटिवलिपङ्क्त
यः एतेऽपि स्त्रियां स्युः इयं शष्कुलिः प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः इयं प्रतिपदित्यादि उषा उच्छन्ती उषाः
प्रातरधिष्ठात्री देवता आशीर्धूःपूर्गीर्द्वारः इयमाशीरित्यादि अप्सुमनस्समासिकतावर्षाणां बहुत्वञ्च अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वञ्च
आप इमाः स्त्रियः सुमनसः पुष्पं सुमनः मालतीजातिः देववाची तु पुंस्येव सुपर्वाणः सुमनसः बहुत्वं प्रायिकम् एका च सिकता तैलदानेऽस
मर्थेति अर्थवत्सूत्रे भाष्यप्रयोगात् समांसमां विजायत इत्यत्र समायां समायामिति भाष्याच्च विभाषा घ्राधेट्शाच्छासः इति सूत्रेऽप्याघ्रासातां सुमनसाविति
वृत्तिव्याख्यायां हरदत्तोऽप्येवम् स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिजः इयं स्रक् त्वक् ज्योक् वाक् यवागूः नौः स्फिक् तटिसीमासम्बध्याः इयं तटिः सी
मा सम्बध्या चुल्लिवेणिखार्य्यश्च स्पष्टम् ताराधाराज्योत्स्नादयश्च शलाका स्त्रियां नित्यम् नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयति ॥ ❀ ॥ एम·
इति स्त्र्यधिकारः ॥ ❀ ॥ पुमान् अधिकारोऽयं घञाघन्तः ॥ पाकः त्यागः करः गरः भावार्थ एवेदं नपुंसकत्वविशिष्टे भावे क्तल्युटौ स्त्रीत्वविशि ४९

हेतुमन्निनादिभिर्बाधेनपरिशेषात् कर्म्मादेतु घञाद्यन्तमपि विशेष्यलिङ्गं तथाच भाष्यं सर्वस्यमनुवर्तिष्यतइति घाजन्तश्च विस्तरः गोचरः चयः।
जपः इत्यादि भयलिङ्ग भगपदानि नपुंसके एतानि नपुंसके स्युः भयं लिङ्गं भगं पदम् नङन्तः नङ्प्रत्ययान्तः पुंसि स्यात् यज्ञः यत्नः याच्ञा स्त्रि।
याम् पूर्वस्यापवादः क्यन्तो घुः किप्रत्ययान्तो घुः पुंसि स्यात् आधिः निधिः उदधिः क्यन्तः किम् दानं घुः किम् जज्ञिर्बीजम् इषुधिः स्त्री च इषु
धिशब्दः स्त्रियां पुंसि च देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि एतानि पुंसि स्युः देवाः सुराः असुराः दै
त्याः २ आत्मा क्षेत्रज्ञः स्वर्गो नाकः २ गिरिः पर्वतः २ समुद्रोऽब्धिः २ नखः कररुहः २ केशः शिरोरुहः २ दन्तो दशनः २ स्तनः कुचः २ भुजः दोः २
कण्ठो गलः २ खड्गः करवालः २ शरो मार्गणः २ पङ्कः कर्दम इत्यादि त्रिविष्टपत्रिभुवने नपुंसके स्पष्टं तृतीयं विष्टपं त्रिविष्टपं स्वर्गाभिधानत्वा
त्पुंस्त्वे प्राप्ते अयमारम्भः द्यौः स्त्रियां द्योरिवोत्तरेणोपादानमिदं इषुबाहू स्त्रियां चात्पुंसि बाणकाण्डौ नपुंसके च चात्पुंसि त्रिविष्टपेत्यादिना तु सूत्रोदेवासुरेत्यस्यापवादः
नान्तः अयं पुंसि स्यात् तस्मान च चर्म वर्म्मादिष्वतिव्याप्तिः मन्द्व्यच्कोकर्त्तरीति नपुंसकप्रकरणे वक्ष्यमाणत्वात् क्रतुपुरुषकपोलगुल्फमेघाभिधानानि क्रतुरध्वरः
२ पुरुषो नरः २ कपोलो गण्डः २ गुल्फः प्रपदः २ मेघो नीरदः २ अभ्रं नपुंसकम् पूर्वस्यापवादः उकारान्तः अयं पुंसि स्यात् प्रभुः इक्षुः हनुः हेट्टविलासिन्यां नृत्यारम्भे ग।
दे स्त्रियां द्वयोः कपोलावयवइति मेदिनी करेणुरिभ्यां स्त्री नेभे इत्यमरः एवं जातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः उक्तञ्च।
लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितइति एवमन्यत्रापि धेनुरज्जुकुहूसरयुतनुकरेणुप्रियङ्गवः स्त्रियाम् समासे रज्जुः पुंसि च कर्कटरज्जुना
कर्कटरज्जुना श्मश्रुजानुवसुस्वादुअश्रुजतुत्रपुतालूनि नपुंसके वसु चार्थवाचि अर्थवाचीति किम् वसुर्मयूखोऽग्निधनाधिपेषु मद्गुमधुशी
धुसानुकमण्डलूनि नपुंसके च चात्पुंसि अयं मद्गुः इदं मद्गु रुत्वन्तः मेरुः सेतुः दारुकसेरुजतुवस्तुमस्तूनि नपुंसके रुत्वन्त इति पुंस्त्वस्यापवादः इदा।
रूढे सक्तुर्नपुंसके च चात्पुंसि सक्तुः सक्तु प्राग्रश्मेरकारान्तः रश्मिदिवसाभिधानमिति वक्ष्यति प्रागेतस्मादकारान्त इत्यधिक्रियते कोपधः कोपधो

सि·कौ· ऽकारान्तः पुंसि स्यात् स्तवकः कल्कः चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके पूर्वसूत्रापवादः कण्टकानीकसरकमोदकचषकमस्तकपुस्तक
मू·लि· तडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकदण्डकपिटकतालकफलकपलाकानि नपुंसके च चात्पुंसि अयं कण्टकः इदं कण्टकमित्यादि।
५० टोपधः टोपधोऽकारान्तः पुंसि स्यात् घटः पटः किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके किरीटमित्यादि कुटकूटकपटकवाटकर्पटनट
निकटकीटकटानि नपुंसके च चात्पुंसि कुटः कुटमित्यादि णोपधः णोपधोऽकारान्तः पुंसि स्यात् गुणः गणः पाषाणः ऋणलवणपर्णतोरणरणो
ष्णानि नपुंसके पूर्वसूत्रापवादः कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च चात्पुंसि थोपधः रथः काष्ठपृष्ठरिक्थो
क्थानि नपुंसके इदं काष्ठमित्यादि काष्ठा दिगर्था स्त्रियां इमाः काष्ठाः तीर्थप्रोथयूथगाथानि नपुंसके च चात्पुंसि अयं तीर्थः इदं तीर्थं नोपधः अदन्तः
पुंसि इनः फेनः जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके पूर्वस्यापवादः मान
यानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसम्मानभवनवसनसम्भावनविभावनविमानानि नपुंसके च चात्पुंसि अयं मानः
इदं मानं पोपधः अदन्तः पुंसि यूपः दीपः सर्पः पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके इदं पापमित्यादि शूर्पकुतपकु
णपद्वीपविटपानि नपुंसके च अयं शूर्पः इदं शूर्पमित्यादि भोपधः स्तम्भः कुम्भः तलभं नपुंसकं पूर्वस्यापवादः जृम्भं नपुंसके च जृम्भं जृम्भः मोपध
सोमः भीमः रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके इदं रुक्ममित्यादि संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च चा
त्पुंसि अयं संग्रामः इदं संग्रामं योपधः समयः हयः किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके स्पष्टं गोमयकषायमलयान्वयाव्ययानि नपुंसके च
गोमयः गोमयं रोपधः क्षुरः अङ्कुरः द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्रान्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदरशा एम·
रीरकन्दरमन्दरपञ्जरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्र ५०

वक्त्रनेत्रगोत्राङ्गुलित्रभलत्रास्त्रशास्त्रवस्त्रपत्रपात्रछत्राणि नपुंसके इदं द्वारमित्यादि शुक्रमदेवतायाम् इदं शुक्रं रेतः चक्रवज्रान्धकारसारावारपार
क्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च वा पुंसि चक्रः चक्रमित्यादि षोपधः वृषः वृक्षः शिरीषर्जीषाम्बरीषपीयूषपुरी
षकिल्बिषकल्माषाणि नपुंसके यूषकरीषमिषविषवर्षाणि नपुंसके च वा पुंसि अयं यूषः इदं यूषमित्यादि सोपधः वत्सः वायसः महानसः प
नसविसबुससाहसानि नपुंसके चमसांसरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च अयं चमसः इत्यादि। कंसं चाप्राणि
नि कंसोऽस्त्री पानभाजनम् प्राणिनि तु कंसो नाम कश्चिद्राजा रश्मिदिवसाभिधानानि एतानि पुंसि स्युः रश्मिर्मयूखः दिवसो घस्रः दीधितिः स्त्रिया
म् पूर्वस्यापवादः दिनाहनी नपुंसके अयमप्यपवादः मानाभिधानानि एतानि पुंसि स्युः कुडवः प्रस्थः द्रोणाढकौ नपुंसके च इदं द्रोणम् अयं द्रोणः
खारीमानिके स्त्रियाम् इयं खारी इयं मानिका दाराक्षतलाजासूनां बहुत्वं च इमे दाराः नाड्यपजनोपपदानि व्रणाङ्गपदानि यथासंख्यं नाड्याद्युपप
दानि व्रणादीनि पुंसि स्युः अयं नाडीव्रणः अपाङ्गः जनपदः व्रणादीनामुभयलिङ्गत्वेपि क्लीबत्वनिरस्यर्थं सूत्रं मरुद्गरुत्तरदृत्विजः अयं मरुत् ऋ
षिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः एते पुंसि स्युः अयं ऋषिः ध्वजगजमुञ्जपुञ्जाः एते पुंसि हस्तकुन्तान्तव्रातवात
दूतधूर्तसूतचूतमुहूर्ताः एते पुंसि अमरस्तु मुहूर्तो स्त्रियामित्याह षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः अयं षण्डः वंशां
शपुरोडाशाः अयं वंशः पुरो दाश्यते पुरोडाशः कर्मणि घञ् भवव्याख्यानयोः प्रकरणे पौरोडाशपुरोडाशान्निति विकारप्रकरणे व्रीहेः पुरोडाश इति च
निपातनात्सकृतसत्वमेवं निपातनाद्दस्य डत्वम् पुरोडाशभुजामिष्टमिति माघः ह्रदकन्दकुन्दबुद्बुदशब्दाः अयं ह्रदः अर्घपथिमथ्यृभुक्षिस्तम्बनितम्ब
पूगाः अयमर्घः पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः अयं पल्लव इत्यादि सारथ्यतिथिकुक्षिब

सि·कौ· लेपाससग्रलयः एते पुंसि अयं सारथिः इति पुल्लिङ्गाधिकारः॥ ॥नपुंसकम् अधिकारोयम् भावे ल्युडन्तः हसनं भावे किम् पचनोग्निः इध्मव्रश्चनः
मू·लिं· कुठारः निष्ठा च भावे या निष्ठा तदन्तं क्लीबं स्यात् हसितं गीतं त्वष्यञौ तद्धितौ शुक्लत्वं शौक्ल्यं ष्यञः षित्त्वसामर्थ्यात् स्त्रीत्वम् चातुर्य्यम् चातुरी साम।
५९ ग्र्यम् सामग्री औचित्यम् औचिती कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ब्राह्मणस्य कर्म ब्राह्मण्यं यद्यढग्यगञ्ञवुञ्छाश्च भावकर्मणि एतद
न्तानि क्लीबानि स्तेनाद्यन्नलोपश्च स्तेयम् सख्युर्यः सख्यम् कपिज्ञात्योर्ढक् कापेयम् पत्यन्तपुरोहितादिभ्यो यक् आधिपत्यं प्राणभृज्जातिवयोवच
नोद्गात्रादिभ्योञ् औष्ट्रं हायनान्तयुवादिभ्योण् द्वैहायनम् द्वंद्वमनोज्ञादिभ्यो वुञ् पितापुत्रकम् होत्राभ्यः छः अच्छावाकीयं अव्ययीभावः अधि।
स्त्रि द्वंद्वैकत्वं पाणिपादम् अभाषायां हेमन्तशिशिरावहोरात्रे च स्पष्टं अनञ्कर्मधारयस्तत्पुरुषः अधिकारोयम् अनल्पे छाया शरच्छायं गज
मनुष्यपूर्वा सभा इनसभमित्यादि सुरासेनाच्छायाशालानिशा स्त्रियां च परवत् अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् रात्राह्नाहाः पुंसि अपथपु
ण्याहे नपुंसके संख्यापूर्वा रात्रिः त्रिरात्रं संख्यापूर्वेति किम् सर्वरात्रः द्विगुस्त्रियां च व्यवस्थया पञ्चपूली त्रिभुवनम् इसुसन्तः हविः धनुः अर्चि
स्त्रियां च इसन्तत्वेपि अर्चिः स्त्रियां नपुंसके च स्यात् इयमिदं वा अर्चिः छदिः स्त्रियामेव इयं छदिः छाद्यतेऽनेनेति छदेरिसुरादिरएत्नादर्चिशुचीसांहि।
नाइस् इस्मन्त्रिन्सीति न्हस्वः पटलञ्छदिः इत्यमरः तत्र पटलसाहचर्य्याच्छदिषः क्लीबताम्व दन्तोऽमरख्याख्यातार उपेक्ष्याः मुखनयनलोहवनमांसरुधि
रकार्मुकविवरजलहलधनान्नाभिधानानि एषामभिधायकानि क्लीबे स्युः मुखमाननम् २ नयनं लोचनं २ लोहं कालं वनं गहनं २ मांसमामिषं २ रुधि
रक्तं २ कार्मुकं शरासनं २ विवरं बिलं २ जलं वारि हलं लाङ्गलं २ धनं द्रविणं २ अन्नमशनं २ अस्यापवादमाह त्रिसूत्र्या सीरार्थौदनाः पुंसि वक्त्रने एम·
त्रारण्यगाण्डीवानि पुंसि च वक्त्रो वक्त्रम् नेत्रो नेत्रम् अरण्यो अरण्यं गाण्डीवो गाण्डीवम् अटवी स्त्रियां लोपधः तूलं कूलं स्थलं तूलोपलतालकुसूल ५९

तरलकम्बलदेवलवृषलाः पुंसि अयं तूलः शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः
पुंसि च चात् क्लीबे शीलं शीलः इत्यादि शतादिः संख्या शतं सहस्रं शतादिरिति किम् एको द्वौ बहवः संख्येति किं शतशृङ्गो नाम पर्वतः शतायुत
प्रयुताः पुंसि च अयं शतः इदं शतमित्यादि लक्षाकोटी स्त्रियां इयं लक्षा इयं कोटिः वा लक्षा नियुतञ्च तदित्यमरात् क्लीबेपि लक्षं सहस्रः क्वपि ॥
सहस्रः इदं सहस्रं मनद्व्यच्कोऽकर्त्तरि मन्प्रत्ययान्तो द्व्यच्कः क्लीबः स्यात् चात् क्लीबे न तु कर्त्तरि वर्मा वर्म द्व्यच्कः किं अणिमा महिमा अकर्त्तरि
किं ददातीति दामा ब्रह्मन् पुंसि च अयं ब्रह्मा इदं ब्रह्म नामरोमणी नपुंसके मनद्व्यच्क इत्यस्यायमपवादः असन्तो द्व्यच्कः यशः मनः तपः
द्व्यच्कः किं चन्द्रमाः अप्सराः स्त्रियां एताः अप्सरसः प्रायेणायं बहुवचनान्तः त्रन्तः पत्रं छत्रं यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव भस्त्रा
मित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्राः पुंसि अयं मित्रः न मित्रं अमित्रः तस्य मित्राण्यमित्रास्ते इति माघः स्यातां अमित्रौ मित्रे चेति च यत्तु द्विषाममित्र इति
सूत्रे हरदत्तेनोक्तम् अमेर्द्विषदिश्यौणादिक इत्रच् अमैरमित्रं मित्रस्य व्यथये दित्सा त्वैसमध्योदात्तस्तु चिन्त्यः नञ्समासेप्येवं परवल्लिङ्ग
तापि स्यादिति तु तत्र दोषानाश्रमिति तत्संकृतसूत्रापर्य्यालोचनमूलकम् स्वरदोषोद्भावनम्पि नञो जरमरमित्रमृता इति षाष्ठसूत्रास्मरणमूलक
मिति दिक् पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च बलकुसुमशुद्बपत्तनरणाभिधानानि बलं वीर्य्यं पद्मकमलोत्पलानि पुंसि च पद्मादयः शब्दाः
कुसुमाभिधायित्वेपि द्विलिङ्गाः स्युः अमरोप्याह वा पुंसि पद्मं नलिनमिति एवञ्च अर्द्धर्चादिसूत्रे तु पद्मं नपुंसकमेवेति तिष्ठति ग्रन्थो मतान्तरे

सि॰कौ॰ सानेयः आहवसंग्रामौ पुंसि आजिः स्त्रियामेव फलजातिः फलजातिवाची शब्दो नपुंसकं स्यात् आमलकम् आम्रम् वृक्षजातिः स्त्रियामेव क
मू॰लिं चिदेवेदम् हरीतकी वियज्जगत्सकृच्छकृत्पृषत् एषत्शकृद्यकृदुदश्वितः एते क्लीबाः स्युः नवनीतावतानृतामृतनिमित्तवित्तपित्तव्रतरजतवृत्त
५२ पलितानि श्राद्धकुलिशदैवपीठकुण्डाङ्कदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि एतानि क्लीबे स्युः दैवं पुंसि च दैवम् दैवः धान्याज्य
सस्यरूप्यपण्यवर्ण्यधृष्ण्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यहर्म्यतूर्यसैन्यानि इदं धान्यमित्यादि द्वन्द्वबर्हदुःखबडिशपिच्छकु
टुम्बवरशरवृन्दारकाणि अक्षमिन्द्रिये इन्द्रिये किम् रथाङ्गादौ माभूत् इति नपुंसकाधिकारः ॥ ❀ ॥ स्त्रीपुंसयोः अधिकारोऽयं गोमणि
यष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः इयमयं वा गौः मन्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः इयमयं वा मन्युः गुणवचनमुकारा
न्तं नपुंसकं च त्रिलिङ्गमित्यर्थः पटु पटुः पट्वी अपत्यार्थतद्धिते औपगवः औपगवी इति स्त्रीपुंसाधिकारः पुन्नपुंसकयोः अधिकारो
ऽयं घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः अयं घृतः इदं घृतम् शृङ्गार्घनिदाघोद्यमशल्यदृढाः अयं शृङ्गः इदं शृङ्गम् व्रजकुञ्जकुथकू
र्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः अयं व्रजः इदं व्रजम् कबन्धौषधायुधान्ताः स्पष्टं दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकुलिशाः
एते पुन्नपुंसकयोः स्युः कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले इति विश्वः शलाकावाची तु स्त्रियां तथा च जनपदादिसूत्रे णायो विकारे ङीषि कु रामः
शी दारु शीता वा कुशा वानस्पत्याः स्थ ता मा पातेति श्रुतिः अतः कृकमीति सूत्रे कुशाकर्णीष्विति प्रयोगश्च व्याससूत्रे च हानौतूपायनशब्दशे ५२

यत्वात्कुशाकन्द इति तत्र शारीरकभाष्येप्येवं एवञ्च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते आच्छन्द इत्याङ्प्रश्लेषादिपरो भाषिणीयग्रन्थः प्रौ-
ढिवादमात्रपर इति विभावनीयं बहुश्रुतैः सूत्रमेहृदेहपदृपटस्वाध्यापदावुदकं कुदाश्च इति पुन्नपुंसकाधिकारः ॥ ॥ अवशिष्टलि-
ङ्गमव्ययम् कतियुष्मदस्मदः ष्णान्ता संख्या शिष्टा परवत् एकः पुरुषः एका स्त्री एकं कुलं गुणवचनञ्च शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्र-
कृत्याश्च करणाधिकरणयोर्ल्युट् सर्वादीनि सर्वनामानि स्पष्टार्थयन्ति सूत्रौ ॥ ॥ इति श्रीभट्टोजिदीक्षितविरचितायां पाणिनीय-
लिङ्गानुशासनसूत्रवृत्तिः समाप्ता ॥ ॥ संवत् १९२९ ॥ आश्विन कृष्ण पञ्चम्यां ५ शनिवासरे शुभम् ॥

सि·कौ·टी· श्रीगणेशायनमः॥ अज्ञाननाशनेदक्षंदीक्षितंभक्तरक्षणे। वटमूलाश्रयंन्यक्षंदक्षिणामूर्त्तिमाश्रये १ ग्रंथमध्येविघ्नविघातायकृतंमंगलंशिष्यशिक्षार्थंनिवध्नाति श्रो
त·ति· त्रेत्यादिना श्रोत्रियस्यभावःश्रोत्रं हायनांतयुवादिभ्योणितिसूत्रेश्रोत्रियस्ययलोपश्चेतिवार्तिकाद्यलोपे अणप्रत्ययेचयस्येतिचेतिइकारलोपः। अर्हतोभावआर्हंतो॥गु
१ णवचनब्राह्मणादिभ्यइतिसूत्रेअर्हतोनुम्चेत्युक्तेनुमष्यञ्च षित्वात्ङीषिहलस्तद्धितस्येतियलोपः ताभ्यांवित्तैःश्रोत्राहंतीचणौ :तेनवित्तइतिचणप् श्रोत्रियत्वयो
र्यताभ्यांप्रसिद्धैरित्यर्थः किंचगुणैरप्यैर्गुणावद्भिःप्रशस्तगुणायुक्तैरितियावत् रूपादाहतप्रशंसयोरितिसूत्रेअन्येभ्योपिदृश्यंतइत्युक्ता॥गुणपाःब्राह्मणाइत्यस्यभा
ष्यादावुदाहृतत्वात् अहर्दिवमिति अहन्यहनि प्रत्यहमित्यर्थः अचतुरेत्यादिनानिपातनात्साधुः तोष्टूयमानइति स्तौतेर्यङंतात्कर्मणिशानच् सार्वधातु
केपृगिनिधातोर्यक् आनेमुगितिमुक् अपिशब्देनआपाततोविरोधंद्योतयति वस्तुतस्तुनविरोधः स्तुतिप्रयोजकीभूतानामनंतकल्याणगुणानांश्रुति
स्मृतिसिद्धत्वेपिविपदादिवद्व्यावहारिकत्वात्तदभावस्यपारमार्थिकत्वादेतच्चोत्तरमीमांसायांस्पष्टमेव विभुर्व्यापकःपरमेश्वरः अतिशयेनविजयतेविजय

**॥श्रीगणेशायनमः श्रोत्राहंतीचणौगुणैरप्यैर्महर्षिभिरहर्दिवम् तोष्टूय्यमानोप्यगुणोविभुर्विजयतेतराम् १ पूर्वार्द्धेकथितास्तुर्ये**

तेतरां सर्वोत्कर्षेणवर्त्ततइतिफलितोर्थः विपराभ्यांजेरितितङ् नदंतात्कृत्वचनविभज्येत्यादिनातरपिकिमेतिङव्ययघाद् **पञ्चमाध्यायवर्त्तिनः**
म्वुत्याम् नन्विहतरपदुर्ल्लभएवविजयतइत्यस्यअप्रातिपदिकत्वात्तिङंतत्वाच्च नचसहसुपेत्यत्रसहेतियोगविभागात्तिङंतेनविशब्दस्यसमासेप्रातिप
दिकत्वंस्यादेवेतिवाच्यं सहछंदसीत्येवेति तत्रत्यग्रंथेनसहविरोधापत्तेः किंचप्रातिपदिकत्वाभ्युपगमेसोरुत्पत्तिःस्यात्लिंगसर्वनामताभ्युपगमेननपुंक
त्वात्तसोर्लुक्यपिहृस्वोनपुंसकइतिहृस्वोदुर्वारःस्यात् समुदायांतर्गतस्यजयतइत्यस्यतिङंतत्वेपिसाकांक्षत्वेनअसामर्थ्यात्ततोपिभवितुंनार्हतीति समर्थः
पदविधिरितिपरिभाषितत्वात् आमःतेनविशब्दोयुज्यतइतिकल्पनापितुअंतरंगत्वात्परस्मैपदप्रवृत्तौविजयतितरामितिस्यादितिचेदत्राहुः॥समुदायां
तर्गताज्जयतइत्यस्मादेवतरप्॥नचतस्यविशब्देनसहसाकांक्षत्वेनासामर्थ्येशंक्यं तिङंतस्यप्रधानत्वेनसापेक्षत्वेपिदोषाभावादुपसर्गस्यद्योतकत्वेनप्र एम·
तेकप्रर्षगनास्तीतिसाकांक्षतायावक्तुमशक्यत्वाच्चेति इत्थंकथंजपूर्वकं वर्त्तिष्यमाणमाह पूर्वार्द्धेइति हलंते षुस्पशोनुदकेक्विन् ऋत्विक्दधृक्स्रग्॥ १

. त्यादिना किंत्वादिव्युत्पादनं प्रासंगिकमिति भावः तुर्यश्चतुर्थः चतुरश्छयतौ आद्यक्षरलोपश्चेत्युक्तत्वात् अर्थेति इहापि कृत्तुणाचः स्त्रियामञ् अणिनुणइत्यजादि
व्युत्पादनं प्रासंगिकं बोध्यं प्रधान्येन तु तृतीयाध्यायस्यैवेहोच्यत इति भावः अनुबन्धभेदेन भेदमाश्रित्याह दश लकारा इति प्रदर्श्यन्त इति यद्यपि पंचम लकारेरूपाणि
अधुनानभ्युत्पाद्यंते तथापि लकारः स्वरूपेण प्रदर्श्यन्ते लः कर्मणि च भावे चाकर्मकेभ्यः लस्येत्यादिसूत्रविषयतां व्युत्पादयितुमिति भावः पंचम इति लेडित्यर्थः ॥
लट् लिडिति स्वोक्तक्रमापेक्षयैव लेटः पंचमत्वं न तु सूत्रोक्तक्रमेणेति बोध्यं वर्त्तमाने लट् इति वर्त्तमान इत्येतत् प्रकृत्यर्थविशेषणमित्याह वर्त्तमानक्रियावृत्तेर्धातो
रिति धातोरिति सूत्रमातृतीयाध्यायांतमधिक्रियत इति भावः लट् स्यादिति तस्य वाच्यत्वं तु पदमेव स्फुटयिष्यति वर्त्तमानकालस्तु न तद्वाच्यः किंतु द्योत्य एव ल
ङादिष्वपि भूतादिकालोपयथायं द्योत्य एवेत्यवगंतव्यं वस्तुतस्तु वाच्यत्वाभ्युपगमोपि सुगम इति विध्यादिसूत्रे वक्ष्यामः अटावितावित्ति अकार उच्चारणार्थः

प्रत्यया अथ कथ्यन्ते तृतीयाध्यायगोचराः २ तत्रादौ दश लकाराः प्रदर्श्यन्ते लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् ॥ः
एषु पञ्चमो लकारश्छन्दोमात्रगोचरः वर्त्तमाने लट् ३।२।१२३ वर्त्तमानक्रियावृत्तेर्धातोर्लट् स्यात् अटावितौ ॥ लः कर्मणि च ।
भावे चाकर्मकेभ्यः ३।४।६९ लकाराः सकर्मकेभ्यः कर्मणि कर्त्तरि च स्युरकर्मकेभ्यो भावे कर्त्तरि च ॥ ९९ इति तु नोक्तं लिङादिवैलक्षण्यसंपादना

त्तस्यावश्यवक्तव्यत्वात् । लः कर्मणि च चकारात्कर्त्तरि कृदित्यतः कर्त्तरि इत्यनुकृष्यते सकर्मकविषयं चेदं अकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात् भावे चेत्यु
त्तरवाक्ये न तत्र विशेषविधानाच्च तदेतदाह सकर्मकेभ्य इति भावे चेति चकारेण कर्त्तैवानुकृष्यते न तु कर्म असंभवात्तदाह भावे कर्त्तरि चेति ननु भावकर्मणोरा
त्मनेपदविधानाच्छेषात्कर्त्तरीति परस्मैपदविधानाच्च ज्ञापकाल्लकाराणां भावकर्मकर्त्तारोर्थो अनुमातुं शक्यते इति किमनेन सूत्रेणेति चेन्मैवं असत्यस्मिन्
सूत्रे सकर्मकेभ्योपि घञादिवद्भावे लकारापत्तौ घटं क्रियते देवदत्तेनेत्यादिप्रयोगः प्रसज्येत तन्मा भूदित्येतदर्थमेतत्सूत्रस्यावश्यकत्वात् । नन्वेवमक
र्मकेभ्यो भावे लडित्येव सूत्र्यतां भवि अकर्मकेभ्य एवेति नियमार्थमिति वाच्यं अकर्मकेभ्यो भाव एवेति विपरीतनियमापत्त्या कर्त्तरि तेभ्यो लकारानापत्तेः तस्माद्भा ।

सि·कौ· चेति चकार आवश्यकः नचैवं भावेचाकर्मकेभ्यइत्येवास्त्विति वाच्यं भावेकर्तरि चाकर्मकेभ्यएवेति नियमापत्तेः सकर्मकेभ्योभावइव कर्तर्यपि लकारानापत्तेः न
टी·न·ति· न्वेवमपि लश्चभावेचाकर्मकेभ्यइत्येवास्तु चकारेण कर्तरीत्यनुकर्षणात् लकाराः सकर्मकेभ्यः कर्तरिस्युः कर्मकेभ्योभावेकर्तरि चस्युरित्यर्थे पर्यवसिते कर्मणिनु
२ कथ्रापकाङ्कविष्यंतीति किमनेन नकर्मणीत्यनेनेति चेन्मैवं अस्मिन्सूत्रे तयोरित्यनेन कर्मणोपि परामर्शार्थं तस्यावश्यकतया ज्ञापकानुसरणक्लेशस्य वैयर्थ्यात्
तस्माद्यथान्यासमेवरमणीयं अत्रनैय्यायिकाः लकाराणांकृताविवशक्तिर्लाघवान्नतुकर्तरि कृतिमतः कर्तृत्वेन तत्रशक्तौगौरवात् देवदत्तइत्यादिप्रथमा
न्तपदेन तस्याभाव देवदत्तः पचतीत्यत्रहि देवदत्तोविशेष्यः यत्नो विशेषणमाश्रयत्वंतुसंसर्गः तथाचपाकानुकूलकृत्याश्रयोदेवदत्तइत्यादिशाब्दबोधो
पिसुष्ठूपपद्यतइति तन्न पचतीत्युक्तेपाककर्ताकः इत्याकांक्षानुरोधेन लकाराणांकर्तरिशक्तिरित्यभ्युपगन्तुमुचितत्वात् पाकानुकूलाकृतिरिति शाब्दबोधाभ्यु
पगमेतुकस्मिन्नित्याकांक्षास्यात्कस्येतिवा नचैककर्तृकापचिक्रियेति शाब्दबोधाभ्युपगमेपिकइत्याकांक्षानोपपद्यतएवेति शंक्यं कर्तृसामान्यबोधमुतिकर्तृ
कर्तृविशेषाकांक्षायांबाधकाभावात् नापिदेवदत्तकर्तृकापचिक्रियेत्युक्तेपिकस्मिन्नस्तिकस्यचेत्याकांक्षादुर्वारैवेति शंक्यं विक्लित्यनुकूलव्यापारस्यैवपचि
क्रियात्वात् तदाश्रयस्यदेवदत्तस्यकर्तृत्वात् क्रियाश्रयत्वेनिश्चितेकस्मिन्नित्याद्याकांक्षाया अप्रवृत्तेः किंच पचं तंदेवदत्तंपश्यपचतेदेवदत्तायदेहिपचमा
नस्यदेवदत्तस्यस्वमित्यादौशतृशानजादीनामपितिबादिवल्लादेशत्वाविशेषेणतेभ्योपिकृतिमात्रबोधापत्तेः नचेष्टापत्तिराश्रयत्वंसंसर्गइत्युक्तत्वेन पाकानु
कूलकृत्याश्रयंदेवदत्तंपश्येत्याद्यर्थस्वीकारेदोषाभावादिति वाच्यं नामार्थयोर्भेदान्वयस्य स्वपरसिद्धान्तविरुद्धत्वात् नचैवंनामार्थयोरभेदसंसर्गव्युत्पत्त्य
नुरोधेनशतृशानजादीनांकर्तरिशक्तिस्तिबादीनांकृताववेति वैषम्यंस्वीक्रियते प्रामाणिकगौरवस्यादोषत्वादिति वाच्यं स्थान्येववाचकोलाघवान्नत्वादे राम
शागौरवादितिस्वसिद्धान्तस्यपरित्यागापत्तेः रामः ज्ञानकत्तरदित्यादौसोर्विसर्गेसोरमिसोरदडिचकृतेलाघवात्सुत्वेनैवशक्तिर्नतुतत्तद्रूपेणेत्यादिभवदीयव्यव २
हारस्यअसंगत्यापत्तेश्च एवंचतिबादीनांशत्रादीनांचस्मारकतया लिपिस्थानीयत्वंबोधकस्तुलकारएवेति स्थितेमवशत्राद्यंतेकर्तरिशक्तइत्यभ्युपगमेतिङन्तेक
यंकृनिबोधयेदन्यायश्चानेकार्थत्वमितिन्यायात् यदितुवैय्याकरणरीतिमाश्रित्यसर्वत्रादेशाएववाचकाइत्याद्यभ्युपगम्यते तर्हिघटंघटेनहरेर्वविष्णोवेत्यादिषुसु

वैसर्वं पदादेशा इति न्यायेन पदस्फोटो वा वाक्यस्फोट एव सिद्ध्येदिति भवतां तन्न महदनिष्टं किंच कर्तरि कृदिति यत् कर्तृग्रहणं तदेवलः कर्मणीति सूत्रे च कारेणानुकृष्यत इति
कथं राबुलादीनां लकारादीनां च शक्तौ वैलक्षण्यं न च नामार्थयोरभेदान्वयसंसर्गाभ्युपगम एव राबुलादेः कर्तुर्वाच्यत्वे बीजमिति वाच्यं पचतिरूपं पचतिकल्पं देवदत्त इत्या
यनुरोधेन तिङ्स्वपि कर्तुर्वाच्यतौचित्यात् तत्समुदायस्य नामत्वेऽपि तिङ्प्रत्ययान्त नामेति चेत् पाचकादत्यन्त्राप्यक इत्येतन्न नामेति तुल्यं अकर्तृनामेति चिन्तकृ
पचाद्यन्तमपि नामेति तुल्यं अनन्यात्र प्रशस्तपाककर्ता देवदत्त इत्याद्यभेदान्वयो भवद्भिरभ्युपगन्तव्य इति तिङ्स्वपि कर्तुर्वाच्यता स्वीकर्तव्यैव किंच कर्तुर्वा
च्यत्वानभ्युपगमे युष्मदि समानाधिकरणे मध्यमः अस्मद्युत्तम इति सामानाधिकरण्यप्रयुक्तपुरुषव्यवस्था अभिहिते कर्तरि प्रथमेत्यादिकं च भवन्मते
कथं संगच्छतां यत्तु अनभिहित इत्यस्यानभिहितसंख्याक इत्यर्थकरणेन देवदत्तः पचत्योदनमोदनः पच्यते देवदत्तेनेत्यादौ प्रथमाद्वितीयादिव्यव
स्थापनमुक्तं तन्न कृत्तद्धितसमासेषु संख्याभिधानस्याप्रसिद्धत्वात् तत्र चाप्रस्तव्यपलाइह सः शरः शातिकः अस्मामीरकोग्राम कृत्यादिषु कर्मणि द्वितीय
त्यस्य प्रवृत्तौ प्रथमा न स्यात् न चाति तत्र त्याध्याहारो बोध्यः संख्याभिधानमिहास्तीति वाच्यं स्थितं इत्याद्यध्याहर्तव्यतद्भावात् आर्द्रिकोऽपि देवदत्तो न तु नैयायिक
इत्यादिषु नीलमिदं न तु रक्तमित्येवं क्रियापदाध्याहारस्यानावश्यकत्वात् आख्यातेन शब्दबुद्धेः करोतीति ठक्प्रत्ययेन वा कर्तृसंख्याया अनुक्तत्वाद्
वदत्ते कर्तरि तृतीयापत्तिप्रसंगाच्च तस्मादनभिहिते कर्तरि इत्यादिव्याख्यानमेवाभ्युपेतव्यं अपि च धातूपात्तव्यापाराश्रयः कर्ता तत्राश्रयमात्रं कर्ता।
लकाराणां चार्थः ननु व्यापारोऽपि तस्य धातुनैव लभ्यन्ते अत एव कर्ताकारक इत्यादौ प्रकृतिप्रत्ययार्थयोर्नान्वयः व्यापाराश्रयस्य प्रत्ययार्थत्वे तु तस्य प्रकृ
त्यर्थेन व्यापारेणान्वयः क्लिष्टः स्यात् यत्तु वदन्ति कृधातोः कृतिरर्थः क्तप्रत्ययस्यापि क्रियावेशशक्तिर्न तु कर्तरि कृदित्यत्रापि कर्तरीति भावप्रधानो निर्देशः
कर्तृत्वं कृतिमत्त्वं तच्च कृतिरेव यत्र तु देवदत्तादिपदसमभिव्याहारस्तत्र तज्जाश्रो कृतिमतिलक्षणेत्यादि तन्मते पूर्वोक्तकर्तेत्यादौ सुतरामनन्वयः क
मेवत् कर्मणीति सूत्रे करोतीति रूपादनार्थः अपि तु मन्वकमत्या यत्नार्थत्वे तु करिष्यते घट इत्यादि न सिद्ध्येदिति वक्ष्यमाणदूषणं च दुरुद्धरं आश्रयमात्र।
स्य प्रत्ययार्थत्वे तु रथो गच्छतीत्यत्र रथस्याचेतनस्य यत्नाभावेऽपि गमनानुकूलचक्रभ्रमणादिव्यापाराश्रयत्वात् न काचिदनुपपत्तिः एवं स्थिते कृतौ शक्ति।

मायीभवन्निरूक्तत्वात् न च भवद्भुक्तरीत्या कर्त्तर्यपि क्तः इत्यनेनैव निर्वाहः भावे कर्मणि च शानचोर्दोलेभ्याप्तेरुक्तत्वात् न च शानज्विधिना स्वहात्मनेपदव्यवस्थापकानामेकवाक्य
तया भावकर्मणोरित्यनेनेष्टसिद्धिः सकर्मकादपि भावे शानजापत्तेः किं च जसन्तत्वे श्रुतेनैव संबंधः षष्ठ्यन्तत्वे त्वादेश इत्यध्याहार्यो ज्ञैः स्वमित्यादि अत्रेदं बोध्यं भावे वा
कर्मकेभ्य इत्यकर्मकग्रहणेनाविवक्षितकर्मणोऽपि गृह्यते अन एव णेरणाविति सूत्रे नेह पच्यते नेह भुज्यते इति भावे लकार इति हरदत्तः अत्यन्ताविद्यमानकर्मका
णामेवं ग्रहणान्नेह पच्यते इत्यादौ तु कर्मण्येव लकारः गम्यमानत्वाच्च कर्म न प्रयुज्यते इति मतान्तरमेतच्च गतिबुद्धीत्यादि सूत्रे हरदत्तग्रन्थे स्पष्टं यत्तु कैश्चिदुक्तं इह अ
विवक्षितकर्मणां भावे लकार इति प्रसादकृतोक्तं भाष्यादिविरुद्धमयुक्तमिति तच्चिन्त्यं पतद्वयस्यापि भाष्यकैयटादिग्रन्थारूढत्वात् प्रत्युताविवक्षितकर्मणोऽप्यकर्म
का इति पक्ष एव प्रबलस्तथा हि समानकर्तृकेषु तुमुन् इति सूत्रे इकृता शिपतइति भावे लङ्क्तो हरदत्तेन रोरधय्यन्तमिति सूत्रे कैयटहरदत्ताद्यैरपि नपुंसके भावे क्त

**लस्य ॥ ३।४।७७ ॥ अधिकारोऽयम् तिप्तस्झि सिप्थस्थ मिप्वस्मस् तातांझ थासाथांध्वम् इड्वहिमहिङ् ॥ ३।४।७८ ॥ ए**
**तेऽष्टादश लस्यादेशाः स्युः लः परस्मैपदम् १।४।९९ ॥ लादेशाः परस्मैपदसंज्ञाः स्युः ॥** ९९ अकर्मकेभ्य एव तयोरेव कृत्यक्तखलर्था इत्यत्र कृत्मात्रस्य
ग्रहणात् तत्र भावे चाकर्मकेभ्य इत्यनुवर्तनादन्यथा च दृष्टकर्मणि निषज्यते ति सिद्धान्तितं एवं स्थिते पद्य विवक्षितकर्मणोऽपीह सूत्रे अकर्मकग्रहणेन न गृह्येरन् ।
न हि पीता गावो भुक्ता ब्राह्मणा इत्यादौ भावे क्तान्तादर्शआद्यजित्यादि कर्मणि क्त इति सूत्रे हरदत्तेन वक्ष्यमाणत्वात् पूर्वोत्य अभावे क्त इति कैयटाद्युक्तं च कथं संगच्छेता
कथं च गमतिस्त्रीनमित्यादि प्रयोगाः संगच्छेरन् गतिबुद्धीति सूत्रे त्वकर्मकग्रहणेनाविवक्षितकर्मणो न गृह्यन्त इत्युक्तं तेनाणौ यः कर्त्ता स ण्यन्ते कर्म न भवतीति
देवदत्तेन पाचयतीति सिद्धं गत्यर्थाकर्मकेति सूत्रेऽपि न गृह्यन्ते तेन हि सूत्रेण कर्त्तर्यपि क्तो विधीयत इति दत्तवान् पक्ववान् इत्यर्थे दत्तः पक्व इत्याद्यापत्तेः इ
ह सूत्रे त्वविवक्षितकर्मणामकर्मकत्वेन ग्रहणेन कोऽपि दोष इत्यास्तां तावत् ॥ ॐ ॥ लस्यवर्णाग्रहणे प्रत्ययग्रहणपरिभाषा अर्थवद्ग्रहणपरिभाषा च न प्रवर्तन्ते इ
ति लुनाति चूडाल इत्यादौ तिबाद्यादेशः कुतो न भवतीति चेत् अत्राहुः लः कर्मणीति सूत्रे निर्दिष्टानां कर्त्राद्यर्थानामनुवृत्तेः कर्त्राद्यर्थे विहितस्य लकारस्य ग्रहणमिति

त्वं कृदिषति गाङ्कुटादिभ्यः इति सन् आतिदेशिकं ङित्वं धातोः किं चङ्‌ इभ्यां माभूत् अदुद्रुवत् अवोचत् ननु लावस्थायामेव तादिभ्यः स्यतासीत्यादिना स्यप्र ॥
त्ययेकृतेव्यवधानादात्मनेपदपरस्मैपदरूप। नियमाप्रवृत्तावपि लकारांशमान्याश्रयत्वेनान्तरङ्गत्वात् स्यप्रत्ययात् पूर्वमेव लस्य तिबादेषु सत्सु पश्चात् परस्मैपदं पश्चाद्वा
त्मनेपदं सिद्धमत्येवेति द्युद्भ्यः स्यसनोरिति सूत्रे स्यग्रहणं व्यर्थं सत् तेनैव स्यग्रहणेन विकरणेभ्यो नियमो बलीयानिति ज्ञापितं तेनानुदात्तत्वाद्विनिष्पत्तेरित्येवं नित्यमात्मनेपदेऽप्रा
प्ते द्युद्भ्यः स्यसनोरिति परस्मैपदमपि पक्षे भवति तथा च विकरणेभ्यो नियमस्य बलीयस्त्वाच्चङ्‌ङनेन दोषः विकरणात् प्रागेव परस्मैपदस्य प्रवृत्तिरिति चेत् सत्यं स्यग्रहणं विक।
रणाव्यवधानेपि नियमप्रवृत्तिं ज्ञापयतीति पक्षे चङ्‌ङो दोषः स्यादेव अयं पक्षः प्रदर्शित इति सूत्रे भाष्यकैयटयोः स्पष्टं [illegible] विधिलाभार्थमपि धात्वनुग्रहसम्भव।
श्यकं धातोरेकाच इत्यादिना यङ्‌ वोभूयते ऋतेरीयङ्‌ ऋतीयते शेतेर्ङ्कु तेइत्यत्र तु व्यपदेशिवद्भावेन ङिदन्तत्वं नेमाव [illegible] इति क्वचिचिन्त्यम् इत्यतन्

**स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२। स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले। शेषात्कर्तरि परस्मैपदम् १।३।७८। आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात्। तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १।४।१०१। तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः॥** ९९ कथमिति चेदत्राहुः अवयवे अचरितार्थो ङकारः कार्यजनकस्य विशेषणं भवति तथा च समु
दायानुबन्धो ङकार इति व्यपदेशिवद्भावेनैव ङिदन्तत्वं बोध्यमिति स्वरितञितः पूर्वे वदिष्वद्रु प्रत्येकं संबध्यते कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायं कर्तृस्वरा
धातोरिति धातोर्लस्येत्यर्थः लकारधात्वोरादेपः पूर्ववद्बोध्यः तिङस्त्रीणि त्रीणि तिङः षट् त्रिकाः संज्ञास्तिस्र इति यथासंख्यं न प्राप्नोतीत्यत आह उभयोरिति परस्मै
पदमात्मनेपदमिति चानुवर्तते तेन पदद्वये प्रत्येकं त्रयस्त्रिका इति यथासंख्यं संज्ञाप्रवर्तत इति भावः ननु प्रथमश्च प्रथमश्च प्रथमौ मध्यमश्च मध्यमश्च मध्यमौ
इत्येवं कृतैकशेषाणां प्रथमादीनां प्रथमौ च मध्यमौ च उत्तमौ च प्रथममध्यमोत्तमा इति द्वन्द्वेऽभ्युपगते त्रिकद्वयस्य त्रिकद्वयस्य यथासंख्यं प्रथममध्यमोत्तमसंज्ञाः
स्युः न त्वेकैकस्येति णलुत्तमो वेति सूत्रं विरुद्धं तेन णलुत्तमसंज्ञकत्वलाभात् ततश्च प्रथममध्यमोत्तमा इत्यत्र कृतद्वन्द्वानां प्रथममध्यमोत्तमाश्च प्रथममध्यमाश्चेत्य

सि·कौ·टी· कश्चेष आश्रीयतां तथाहि सतिसंज्ञा अपिषडितिपरस्मैप दात्मनेवेष्टसिद्धिरितिचेन्नैवं एकशेषाप्रयोगोरवादियर्थ्याचतयापि परस्मैपदात्मनेपदग्रहणामनुवर्त्यमेव ॥

न·ति· अन्यथाशतक्वसोः सावकाशापरस्मैपदसंज्ञा प्रथमादिसंज्ञया बाध्येत तत श्च क्राम्यति क्रामतीत्यादौ क्रमः परस्मैपदेष्विति दीर्घो नस्यात् आक्रममन्नित्यादौ त

५ ससावकाश त्वात् यदि तु परस्मैपदानामिति विहितस्य णलो णलुत्तमोवेति णित्वं विकल्पविधानात् ज्ञापकात् परस्मैपदसंज्ञा प्रथमादिसंज्ञया न बाध्यते तर्हि भूष

तर्हि सुतरां प्रतिपत्तिगौरवं ॥ ॐ ॥ तान्येकवचन तानीत्यस्य व्याख्यानं तु लब्धेत्यादि अन्यथा एकसंज्ञाधिकारात् प्रथमादिसंज्ञानामेकवचनादिसंज्ञानां

च पर्यायः स्यात् इष्टापत्तौ तु अते लोटो मेर्निरिति कृते एकत्वविवक्षायामुत्तमसंज्ञाभावादडुत्तमस्येत्यस्याप्र वृत्त्या अभ्मीत्यादिप्रयोगोपि साधुः स्यादिति भावः प्रत्ये

नान्येकवचनद्विवचनबहुवचनान्येकशः ॥१।४।१०२॥ लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकमे कवचनादिसंज्ञानि स्युः युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १।४।१०५। तिङ्वाच्यकारकवाचिनि युष्म द्यप्रयुज्यमानेप्रयुज्यमाने च मध्यमः स्यात् प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च। १।४।१०६ मन्यधातुरुपपदं य स्यधातोस्तस्मिन्प्रकृतिभूते सति मध्यमः स्यात् परिहासे गम्यमाने मन्यतेरुत्तमः स्यात् स चैकार्थवाचकः। अस्मद्युत्त मः १।४।१०७। तथाभूते ऽस्मद्युत्तमः स्यात् शेषे प्रथमः १।४।१०८। मध्यमोत्तमयोरविषये प्रथमः स्यात् भूसत्तायां। कर्तृविवक्षायां भू तिइति स्थिते ॥ ९९ कमितिपत्तु प्राचा एकैकशइत्युक्तं तदयुक्तम् शसैव वीप्सायाउक्तत्वेन द्विवचनायोगात् येननाप्राप्तिन्या

येन द्विर्वचनापवादः शसिति सिद्धान्तात् तथा सुपइति सूत्रेप्येकैकशइति प्राचोक्तमयुक्तमेव एतच्च मनोरमायां स्पष्टमनुरोधेनोक्तम् अन्ये तु एकैकमेवैकैकशः स्वा

र्थे शसनत्व त्र वीप्सायाम् न च स्वार्थेपः शस् स आकरग्रन्थानावगम्यत इति वाच्यम् एकां कपिलां एकैकशः सहस्रकृत्वो दत्त्वेतिभाष्यात् शसंतस्यप्रत्येक राम·

क्रियार्थकत्वेन कैयटेन व्याख्यानाच्च स्वार्थिकस्यापि शसोवगम्यमानत्वात् ततश्च एकैकशइति प्राचोक्तमयुक्तमिति यदुक्तं तदेवायुक्तमित्याहुः युष्मदि ॥ ५

सि॰कौ॰ उपधायां च। सर्वेपि धातोरित्यनुवर्तते। र्वोरुपधाया इत्यतः र्वोरिक इति। हलि चेत्यतो हलिति चातद्वाह। धातोरित्यादि धातोः किं। उरु ना। कुरुः। कुर्वौ। कुर्वइ

टी॰ त॰ मवेको दीर्घो माभूत्। न चात्र रेफस्य प्रातिपदिकोपधात्वेपि प्रदोपधात्वाभावादेव दीर्घो न भवेदिति धातोरित्यनुवर्तनमिह नावश्यकमिति वाच्यं। पदस्येत्यनुवृत्तौ नुकूर्दतेर

ति॰ उ॰ न्याप्यसिद्धि प्रसंगात्। वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवदिति स्वीकारादचः परस्मिन्निति स्थानिवत्त्वस्य निषेधाभ्युपगमेपि कार्यकालपक्षे असिद्धं बहिरंगमंतरंग इति परिभाषया न

२९ प्रवृत्तेर्बहिरंगस्य यलोपः सिद्धत्वान्नेकुर्वौ कुर्वइत्यत्रोपधायां चेति दीर्घो न भवेदिति धातुग्रहणानुवर्तनस्य नात्यंतावश्यकता पदस्येत्यननुवृत्त्या कुर्दते इत्यादौ तु दीर्घः सि

द्ध्यत्येवेत्याहुः। रेफवकारयोः किं। पुष्यति कसने पुष्यति। हलपरयोः किं। मचिरिणोति। जिरिणोति। इकः किं। अर्चति। नर्दति। ननु हलि चेत्यत्र रेफवकारयोर्हल्परयोरिको दी

र्घः स्यादिति व्याख्यायां कुर्दते गूर्दते इत्यादि सिद्धौ त्येवेति सूत्रमिदं व्यर्थमिति चेन्न। अत्राहुः हलि चेत्यत्र धातुग्रहणमनुवर्तनीयमेव। अन्यथा दिवमिच्छति दिव्यतीत्यत्रा

उपधायां च। ८।२।७८॥ धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्। उर्दते। उर्द माने क्रीडायां ॥ २० ॥ कुर्द खुर्द गुर्द गुद क्रीडाया

मेव। कूर्दते। चुकूर्दे ॥ २१ ॥ खूर्दते ॥ २२ ॥ गूर्दते ॥ २३ ॥ गोदते। जुगुदे ॥ २४ ॥ षूद क्षरणे। सूदते। सुषूदे। सेक सृप स्रम स्र ज स्रृ इत्यादयः दन्त्याजन्तसा

दयः। एकाचः षोपदेशाः। ष्वष्क स्विद स्वद स्वंज स्वप स्मि ३ इत्येते। स्नः केवलदन्त्यः। नतु दन्त्यौष्ठजोपि। ष्वष्कादीनां पृथग्ग्रहणं न्यायसिद्धत्वात् ॥ २५ ॥ ह्राद

अव्यक्ते शब्दे। ह्रादते। जह्रादे ॥ २६ ॥ ॥ १९ दावतिप्रसंगः स्यात्। तथा चोपधायां चेति सूत्राभावे उपधाभूतयोः र्वोः परतो दीर्घो न स्यात्। किंतु रेफ

वकारयोरेव धातोर्हलि चेति सूत्रेण स्यादित्येतत्सूत्रमावश्यकमेवेति। सूदते इति। स्रवतीत्यर्थः। ननु स्वर्दतिवत् स्वदसूदेति दंत्यादय एव धातवः पठ्यंतां षोपदेशत्वात्ता

देश्च विधौ गौरवानामेवं। तथाहि सति प्रत्यनाच्छेः असिष्वदत् असूषुदत् इत्यादौ लिटि सुषूदे सिषेधेत्यादौ च आदेशप्रत्यययोरिति षत्वं न स्यादिणः परस्य सकारस्य

षत्वविधौ तु सुपिसौ सुपिसप्तप्त्या दावपि स्यादिति चेद् धातुपाठं पाणिनिना न लभ्यत इत्यादि पाठवत् षोपदेशा अपि व्यवस्थयैव पठिताः सच पाठ इदानीं परिभ्रष्टः साधारिष्णुसा

दिष्णः स्थैव दृश्यमानत्वादतो लक्षणमुखेन तान्व्यवस्थापयति। सेगिसादि दंत्यश्च अच्च इत्याचौ तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः दन्त्याजन्तश्चासौ सश्चेत्याज

न्तसः स आदिर्येषां धातूनां ते दन्त्याजन्तसादयः। अजंतसादयश्चैकाचः षोपदेशा बोध्याः। तथा च साधारी सांप्रतं पठ्यमानः सकार उपदेशे न स्थित इत्यनुमेयमिति भावः ॥

सस्यषत्वं न स्यादिति शंक्यं। षत्वविधौ नुम्विसर्जनीयशर्व्यवायेऽपीत्यधिकारात्। इणन्तादुपसर्गादिति व्याख्यानेन तु स्यादेवानाभ्यां [illegible] त्वयोरित्युपसर्गात्
प्रतिषेधात् दुःसुनोति दुःसेध [illegible] इत्यादौ तु षत्वेन न भवितव्यमिति दिक्। मूर्ध्न्यादेशे फलितमाह। सस्यषः स्यादिति। स्यादिष्वभ्यासेनादि [illegible]
नेनैव क्रमेण ष तस्मान्नालिभ्यावष्टम्भ। सदिरप्रतेः। अप्रतेः किं। प्रतिसीदति। षष्ठ्यर्थे प्रथमेत्याह। सदेरिति॥ ॐ॥ स्तम्भेः॥ सौत्रस्येति। स्तम्भुस्तुम्भु इति सूत्रे निर्दिष्टस्य।
धात्वर्थस्य ननु ष्टम्भि प्रतिबंध इत्यस्येति भावः। एवं स्तम्भुस्तुम्भु इत्यादि विधायक सूत्रेऽपि सौत्रस्यैव ग्रहणमिति बोध्यं। [illegible] लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। सौत्रे
धातुर्नकारोपध इति प्रतिपदोक्तः। इदित्त्वान्नुमि ष्टभि र्लाक्षणिकस्तेन विस्तभ्नातेरित्यादौ षत्वं न। उदःस्थास्तम्भोरिति सूत्रे मकारोपधग्रहणेन उभयोरपि ग्रहणं [illegible]
नेति द्वयोरपि रूपं तुल्यं मकारस्योभयत्रापि लाक्षणिकत्वात्। उत्तरार्थ इति। उत्तरसूत्रे स्तम्भेरेवानुवृत्त्यर्थमिति भावः। ननु सेदिवस्तम्भोरिति सूत्रितेपि एकदेशस्व[illegible]

स्तम्भेः। ८।३।६७॥ सौत्रस्य स्तम्भेः सस्य षः स्यात्। योगविभाग उत्तरार्थः। किम्बा अप्रतेरित्यनुवर्त्तते। बाहुप्रतिष्टम्भविवृद्धमन्युरिति रघुवंशे। अवाच्चा-
ऽऽलम्बनाऽऽविदूर्ययोः। ८।३।६८॥ अवात्स्तम्भेरेतयोरर्थयोः षत्वं स्यात्। वेश्च स्वनो भोजने॥ ८।३।६९॥ व्यवाभ्यां स्वनतेः सः स्याद्भोजनेऽर्थे। परि-
निविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्। ८।३।७०॥ परिनिविभ्यः परेषामेषां सस्य षः स्यात्। न्यषेधति। प्राक्सितादड्व्यवायेऽपि। ८।३।
६३॥ सेवसितेत्यत्र सितशब्दात् प्राक् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्॥

तत्व प्रतिज्ञानात् कथं चिद्वृत्तिर्भविष्यतीत्यत आह। किं चेति। ननु वर्त्तत इति। तथा च स्तम्भेरित्यत्र ननु तर्हि योगविभाग आवश्यक इति भावः। अवाच्चा। चकार॥
[illegible]स्येत्प्रयोजनं इत्याहुः। आलम्बनमाश्रयणं। यथा यष्टिमवष्टभ्य आस्ते। तामाश्रित्य तिष्ठतीत्यर्थः। आविदूर्यं। सामीप्यं तत्त्वप्रयोगोपाधिः। अवष्टब्धा गौः। निरुद्धा सती
समीप आस्ते इत्यर्थः। एतयोः किं। अवस्तब्धो वृषलः शीतेन। केचिदिह अविदूरशब्दात् स्वार्थे ष्यञ्। आविदूर्यमनतिदूरं ईषद्दूरमित्यर्थः। तथा च अविदूरशब्दाच्चेनन्न
पूर्वात्तत्पुरुषादिति निषेधे प्राप्ते अत एव निपातनाद्भावप्रत्यय इति मनोरमाग्रन्थो [illegible] निर्णीतो वोपयुज्यत इत्याहुः। वेश्च विष्वणति। सशब्दं भुंक्ते इत्यर्थः। अटकु च्चाडि-
तेत्यादौ एवमवष्वणति। व्यष्वणत्। विषष्वाण। स्यादिष्वभ्यासेनेति षत्वं। भोजने किं। विस्वनति वीणा। परिनिविभ्यः। सेवेत्यत्र अकार उच्चारणार्थः। न च यङ्लुग्नि-

सि० कौ० त्वयेशपा निर्देशात् वा स्त्विति शंक्यं। वकारान्तानामूठ्भाविनां यङ्लुकि नास्तीति वक्ष्यमाणत्वात्। षेट्सेवायां। परिषेवते। षिञ् बंधने। क्तान्तः सितशब्दः एरजन्तः पचाद्यजन्तो
टी० त० वा सयशब्दः। विषितः। विषयः। प्रत्ययविशिष्टग्रहणं किं। विसिनोति। षिवु तंतुसंताने। परिषीव्यति। षह मर्षणे। परिषहते। सुडागमः। परिष्करोति। स्तुस्वञ्जोः। उपसर्गात्सुनोती
नि० उ० त्येवसिद्धे परिनिविभ्यः परयोरेतयोः सिवादीनां वाड्व्यवायेपीति विकल्पार्थं पुनर्वचनं। प्राक्सितात्। उपसर्गात्सुनोतीत्यादिना विहितं षत्वं अड्व्यवाय एवेति मम
२२ निवारणार्थमपिशब्दस्योपादानं। तेषामिति। पंचदशानामित्यर्थः। अभ्यषुणोदित्यादीन्युदाहर्तव्यानि॥ ॥ स्थादिषु। इह द्वे वाक्ये। आद्यं षत्वविध्यर्थं द्वितीयं तु निय
मार्थमित्याशयेनाह। व्यवायेपि षत्वमेषामेव चेति। स्थादीनां दशानामेवाभ्यासस्य षत्वमित्यर्थः। तेन फलं तु सूप्रेरणे अभिसुसूषति। अत्रोक्तनियमादभ्याससकारस्य
न षत्वं द्वितीयस्य तु स्तौतिण्योरेवेति नियमान्न भवति। अभिसिषासति इत्यत्र तु षणोऽभावादभ्यासात्परस्य षत्वपूर्वस्य तु उक्तनियमान्नेति बोध्यं। स्यादेतत्। निषि

स्थादिष्वभ्यासेन चाभ्यासस्य। ८।३।६४॥ प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेपि षत्वं स्यात्। एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्॥
निषिषेध। निषिषिधतुः॥ १०॥ सेधतेर्गतौ। ८।३।११३॥ गत्यर्थस्य सेधतेः षत्वं न स्यात्। गङ्गामभिसेधति॥ ११॥ षिधू शास्त्रे माङ्गल्ये च। शास्त्रं श
सनम्। स्वरतिसूतिसूयतिधूञूदितो वा। ७।२।४४॥ स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात्। झषस्तथोर्धोऽधः। ८।२।४०॥ झषः
परयोस्तथोर्धः स्यान्न तु दधातेः। जश्त्वं। सिषेद्ध। सिषेधिथ। सेद्धा। सेधिता। सेत्स्यति। सेधिष्यति। असैत्सीत्॥ ॥ १२ षिधेत्यादौ अभ्यासस्योपसर्गात्सु

नोतीत्यनेन सिद्धं अभ्यासात्परस्य तु आदेशप्रत्यययोरित्यनेनेति किमाद्यवाक्येन। अत्राहुः। फलत्रयार्थमाद्यं वाक्यं। तथाहि। अषोपदेशार्थं सेनया अभियातुमिच्छ
ति अभिषिषेणयिषति। अवर्णान्ताभ्यासार्थं च। अडुसनं गोत्रभिदोऽधितष्ठौ। षणि प्रतिप्रसवार्थं च। अभिषिषिक्षति। षिच क्षरणे। स्तौतिण्योरेवेति नियमात्प्रभू
ति सनि निवर्तितमपि सत्वमुपसर्गमाश्रित्य अत्र भवतीति। सेधतेर्गतौ। श्तिपा निर्देशाद्यङ्लुकि न निषेधः। तेन उपसर्गमाश्रित्य षत्वं भवत्येव। विषेषि
धीति। न च सेधति श्पा निर्देशाद्यङ्लुकि उपसर्गात्सुनोतीति षत्वं न भवेदिति शंक्यं। दैवादिकनिवृत्त्यर्थतया शपा निर्देशस्य चरितार्थत्वात्। अन्यथा सेधतेरिति श्तिपा
निर्देशस्य वैयर्थ्यापत्तेरिति दिक्। षिधू शास्त्रे। माङ्गल्यं मंगलक्रिया। स्वार्थे ष्यञ्। स्वरतिसूति। स्वृ शब्दोपतापयोः। भ्वादिः। ननु स्वरतिसूधूञूदितो वेति सूत्र्यतां

किमनेन सूतिसूयत्योः पृथग्ग्रहणेन। मैवं। तथा हि सति निरनुबंधकपरिभाषया सूङ्प्रेरणे इति तौदादिकस्यैव ग्रहणं स्यान्न त्वादादिकदैवादिकयोरितरयोः। न चैवं षूङ् इत्य
तिर्यक्तामिति वाच्यं। लुग्विकरणालुग्विकरणयोरिति परिभाषया अलुग्विकरणस्य सूयतेरेव ग्रहणप्रसंगात्। अस्याश्च परिभाषायाः सूतिसूयत्योः पृथग्ग्रहणमेव ज्ञा
पकमित्याहुः। धूञ् कंपने स्वादिः क्र्यादिश्च सानुबंधनिर्देशो धूविधूनने इत्यस्य निवृत्त्यर्थः इह स निवृत्यतो वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्विकल्पनिवृत्त्यर्थं॥
ग्रसुभ्रस्थोः। अघ इति किं। घत्तः। असैत्सीदिति। आसीत्सिचयितिरडागमः। वद व्रजेति वृद्धिः। तेन श्रवत्वं॥ ॥ झलो झलि। संयोगांतस्य न तो लोप इति रात्सस्येत्यतः सस्ये
ति चानुवर्तते तदाह। सस्य लोपः स्यादिति। पदस्येत्यधिकारात् प्रत्यासत्ते झलो झलि सस्येति निर्दिष्टानां त्रयाणामेकपदसंबंधित्वे लोपो यं। तेन सोमसुत्स्थानमित्यत्र

झलो झलि। ८।२।२६॥ झलः परस्य सस्य लोपः स्यात् झलि। असैद्धां। असैत्सुः। असैत्सीः। असैद्धं। असैद्ध। असैत्सम्। असैत्स्व। असैत्स्म। पक्षे असेधीत्। असेधिष्टामित्यादि॥ १२॥ खाद भक्षणे। आकार इत्। खादति। चखाद॥ १३॥ खद स्थैर्ये हिंसायां च। चाद्भक्षणे। स्थैर्ये अकर्मकः। खदति। अत उपधायाः। ७।२।११६॥ उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। चखाद। णलुत्तमो वा। ७।१।९१॥ उत्तमो णल्वा णित्स्यात् चखाद। चखद। अतो हलादेर्लघोः। ७।२।७॥ हलादेर्लघोरकारस्य इडादौ परस्मैपदे सिचि वृद्धिर्वा स्यात्। अखादीत्। अखदीत्॥ १४॥ वद स्थैर्ये पवर्गीयादिरयं। वदति। ववाद। ववदतुः। ववदिथ। ववाद। ववद। अवादीत् अवदीत्॥ १५॥ गद व्यक्तायां वाचि। गदति॥ जगाद॥ ॥

न भवति। झलः किं। अनैष्टां झलि किं। असैत्सीत्। असेधीदिति। नेटीति वृद्धिप्रतिषेधः। गुणः। खाद। आकार इदिति। तेन नाग्लोपीति निषेधे अचखादत्। अत उप। अतः
किं। तुतोद। उपधायाः किं। गणपति। इह अतो लोपं बाधित्वा परत्वाद्वृद्धिः स्यात्। अतो हलादेः। इह सिचि वृद्धिरिति सूत्रमनुवर्तते। नेटीति सूत्रादिटि इति तु लुप्तं तेर्विभाषेस
तो विभाषाग्रहणं च तदाह। इडादाविन्यादि। अतः किं। अदेवीत्। हलादेः किं। मा भवानतीत्। अटीत्। लघोः किं। अगर्दीत्। अरक्षीत्। इडादौ किं। अपाक्षीत्। परस्मैपदे
किं। अयतिष्ट। अयतिषातां। अचकासीदित्यत्र चकारादकारस्य वृद्धिवारणाय येन नाव्यवधानमिति न्यायेन यद्येकवर्णव्यवधानमेवाश्रीयते तदा त्वरक्षीदित्यत्रापि
प्रसक्त्यभावात् लघोरिति शक्यमकर्तुमित्याहुः। नपरकरणं स्पष्टार्थं। पवर्गीयादिरिति। दंत्योष्ठ्यादित्वे तु न ग्रस इदेत्वाभ्यासलोपनिषेधाद्वेदतुः वेदिथेत्यादि न सिध्येत्

नेर्गदनद। गदादीनां चतुर्णां ग्रहणान्निर्देशस्य मादीनामेकादशानां क्षिपान्निर्देशश्चयङ्लुक्निरस्यर्थः। तेन प्रनिजागदीति। प्रनिमानदीति प्रनिसांसेति। प्रनिजंघनीति। २।
न्यादेर्णत्वं न। घुशब्देन घुसंज्ञकाः दाधादयः षट् गृह्यन्ते। डुदाञ् प्रणिददाति। दाण्। प्रणियच्छति। दो। प्रणिद्यति। देङ्। प्रणिदयते। धेट्। प्रणिधयति। डुधाञ् प्रणिदधाति।
माशब्देन मेङ् माङोरेव ग्रहणं घुप्रकृतिमाङितिपठित्वा भाष्यादौ तथा व्याख्यानात्। णोनः। धात्विति। प्रात्वादेः षः सः इत्यतो नुवर्तनाह्यत्वादेरिप्येवा नेह। अणति।

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च। ८।४।१७॥ उपसर्गस्थान्निमि
त्तात्परस्य नेर्णत्वं स्यात् गदादिषु। प्रणिगदति १६॥ रद विलेखने। विलेखनं भेदनम्। ररादा। रेदतुः॥ १७॥ णद अव्यक्ते शब्दे। णोनः
६।१।६५॥ धातोरादेर्णस्य नः स्यात्। णोपदेशास्त्वनर्द्नाटिनाथ्नाधृनन्दनक्कनृतः। नाटेर्दीर्घोहस्वपर्युदासो हृदादिर्णोपदेश एव। तवर्गश्चा
तुर्थान्तनाधते नन्दनधौ च के च विज्ञाय देशन्तामाहुः। उपसर्गादसमासेऽपि णोपदेशस्य। ८।४।१४॥ उपसर्गस्थान्निमित्तात्परस्य णोपदेशा
स्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि। प्रणदति। प्रणिनदति॥ १८॥ अर्द गतौ याचने च। अत आदेः तस्मान्नुड्द्विहलः। ७।४।७१। द्विहलो
धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात्। आनर्द। आर्दीत्॥ १९॥ नर्द गर्द शब्दे। णोपदेशत्वाभावान्न णत्वम्। प्रनर्दति॥ २०॥ गर्दति। जगर्द॥ २१॥
तर्द हिंसायाम्। तर्दति॥ २२॥ कर्द कुत्सिते शब्दे। कुत्सिते कौक्षे। कर्दति॥ २३॥ खर्द दन्दशूके। दंशहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः।
खर्दति। चखर्द॥ २४॥ अति अदि बन्धने। अन्तति। आनन्त॥ २५॥ अन्दति। आनन्द॥ २६॥ इदि परमैश्वर्ये। इन्दति। इन्दांचकार॥ २७॥ विदि अव
यवे। पवर्गतृतीयादिः। बिन्दति। अवयवक्रियायामित्यर्थः। भिदीतिपाठान्तरम्॥ २८॥ गडि वदनैकदेशे। गण्डति। अन्नन्तादयः पञ्चैतेन निविद्विपया
इति काश्यपः। अन्ये तु तिङमपीच्छन्ति॥ २९॥ णिदि कुत्सायाम्। निन्दति। प्रणिन्दति॥ ३०॥ टुनदि समृद्धौ॥ ९. णोपदेशानूपर्युदासमुखेनाह २५
णोपदेशास्त्विति। नर्दशब्दे। नट अवस्यंदने। चुरादिः। यत्तु नटनृत्ताविति घटादिः स नेह गृह्यते। नाटीति दीर्घनिर्देशात्। नाथ नाधृ याचादौ। टुनदि समृद्धौ।

नकुनाशने। नृनये। नृती गात्रविक्षेपे। एभ्यः षड्भ्यो भिन्ना इत्यर्थः। नवर्गोति। तेषां मते तु पंचभ्यो भिन्ना णोपदेशाः उपसर्गादसमासेऽपि णोपदेशस्य। गद इत्यतोऽनुवर्तनात्समासग्रहणं
दिसमासग्रहणं कृतं तु तस्मिन्न समास एवस्यादिति येऽग्रहणं कृतं। प्रणिनदतीति। नेर्गदेति णत्वं। धातुनकारस्य तु उपसर्गादसमास इति णत्वं न भवत्यडा व्यव
धानेन व्यवधानात्। तच्छब्देन कृतदीर्घोकारः परामृश्यत इत्याह। दीर्घीभूतादिति। खर्द दंदशूकस्य सर्पत्वात्तद्याचित्वे धातुत्वं न संगच्छत इत्यत आह। दंदशूक
क्रियायामिति। दंदशूककर्तृकायामित्यर्थः। आनंतेति इदित्वान्नुम् तस्मान्नुड्ढि हल इति नुट्। वदनैकदेश इति। तत्क्रियायामित्यर्थः॥ ॥ आदिर्ञिटुडवः
आदिर्ञिटुडवः। १।३।५॥ उपदेशे धातोराद्या एते इतः स्युः नन्दति। इदित्वान्नलोपो न। नन्द्यात॥३१॥ चदि आह्लादे। चचन्द॥३२॥ त्रदि चे
ष्टायाम्। तत्रन्द॥३३॥ कदि क्रदि क्लदि आह्वाने रोदने च। चकन्द॥३४॥ चक्रन्द॥३५॥ चक्लन्द॥३६॥ क्लिदि परिदेवने। चिक्लिन्द॥३७॥ शुन्ध
शुद्धौ। शुशुन्ध। नलोपः। शुध्यात॥३८॥ अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत्। शीकृ सेचने। तालव्यादिः दन्त्यादिरित्येके। शी
कते। शिशीके. १ लोकृ दर्शने। लोकते। लुलोके॥ २॥ श्लोकृ सङ्घाते। सङ्घातो ग्रन्थः। स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा। आद्ये अक
र्मको द्वितीये सकर्मकः। श्लोकते॥ ३॥ द्रेकृ ध्रेकृ शब्दोत्साहयोः। उत्साहो वृद्धिरौद्धत्यं च। दिद्रेके॥ ४॥ दिध्रेके॥ ५॥ रेकृ शङ्कायाम्। रेकते ६
सेकृ स्रेकृ स्रकि श्रकि श्लकि गतौ। त्रयोदन्त्यादयः। द्वौ तालव्यादी। अषोपदेशत्वान्न षः। सिसेके॥ ११॥ शकि शङ्कायाम्। शङ्कते। शशङ्के॥ १२॥ अकि
लक्षणे। अङ्कते। आनङ्के॥ १३॥ वकि कौटिल्ये। वङ्कते॥ १४॥ मकि मण्डने। मङ्कते॥ १५॥ कक लौल्ये। लौल्यं गर्वश्चापल्यं च। ककते। चकके॥ १६॥ कुक
वृक आदाने। कोकते। चुकुके॥ १७॥ वर्कते। ववृके॥ १८॥ ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन। चकतृ तौ प्रतिघाते च। चकते। चेके।
॥ १९॥ ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि गत्यर्थाः। कङ्कते। डुढौके। तुत्रौके॥ ॥
उपदेशेऽजनुनासिक इत्यतोऽनुवर्तनादाह। उपदेश इति। उपदेशे किं। त्रिकारीयति। त्रिष्वपाक्षीतः कृतः सुप्रमाद्धि तोष्टु चानेदष्टुः ड्वितक्रिः। कृत्रिमं॥ क्लिदि परिदेवने। अ
नुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः। क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थं स्वरितेत्सु अयं न पठितः। शुध शुद्धौ। अयं शोचकर्मणि पुजादौ। मांगलि

कण्ठ्यानि लवर्गीयान्तास्तदनुरोधेन कतिचित्तवर्गीयान्ताः पठिताः। इदानीं लोकप्रसिद्धक्रमेणाह। अथेत्यादि। चुक्कके इति। परमपि गुणं बाधित्वा नित्यत्वाद्
संयोगादिति किल्त्वं॥ ❁ ॥ सुब्धात्वित्यादि। सुब्धातोरुदाहरणानि। षट्टं ता। अस्य षोऽनन्तमाचष्टे णिचि टिलोपः षोडयति एवं षंडं करोत्याचष्टे वा षंडयति। षंडी
यतीत्यत्र तु षंडशब्दात् क्यचि इत्वं बोध्यं। एतच्च वार्तिकं भाष्ये प्रत्याख्यातं। तथाहि। धात्वादेरिति सूत्रे उपदेश इति वर्तते। न च सुब्धातूनामुपदेशोऽस्ति। ष्ठिवुष्वष्कती
सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः॥ ष्वष्कते। षष्वष्के। अत्र तृतीयस्य न्यादिमे कः। लघि भोजननिवृत्तावपि। ३४॥ अघि
वघि मघि गत्याक्षेपे। आक्षेपो निन्दा। गतौ गत्यारम्भे चेत्यन्ये। अङ्घते। आनङ्घे। वङ्घते। मङ्घते। मघि कैतवे च॥ ३८॥ राघृ लाघृ द्राघृ सामर्थ्ये। द्रा
घृ आयामे च। आयामो दैर्घ्यं। द्राघते॥ ४१॥ श्लाघृ कत्थने। श्लाघते॥ ४२॥ अथ परस्मैपदि
नः। फक्क नीचैर्गतौ। नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च। फक्कति। पफक्क॥ १॥ तक हसने। तकति॥ २॥ तकि कृच्छ्रजीव
नेन। तङ्कति॥ ३॥ बुक्क भषणे। भषणं श्वरवः। बुक्कति॥ ४॥ कख हसने। प्रनिकखति॥ ५॥ ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः। ओख
ति। ओखांचकार॥ ९॥ शाखृ श्लाखृ व्याप्तौ। शाखति॥ ११॥ उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख इखि ईखि वल्ग
रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः। कवर्गद्वितीयान्ताः पञ्चदश। तृतीयान्ताः त्रयोदश। इह खान्तेषु
रिख त्रख त्रिखि शिखि इत्यपि चतुरः केचित्पठन्ति॥ अभ्यासस्याऽसवर्णे। ६।४।७८॥ अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि।
तुपकारादौ। लोपोव्योरिति यलोपः। प्रनिकखतीति। शेषविभाषेत्यत्र अकखादावि विनिपर्युदासान्नेर्णत्वं नेति भावः। असवर्णे चेति। असवर्णे किं। ऊखतुः। अचि
किं। इयाज उवाप। उवोखेति। द्विर्वचनेचीति निषेधात् पूर्वं वृद्धित्वं पश्चादुकारस्य लघूपधगुणे कृते अभ्यासस्योवङ्। एवं इयेषेत्यत्रेयङ्। असवर्णग्रहणसामर्थ्या
र्थ्यादियङादौ कर्तव्ये गुणोऽत्र न स्थानिवदिति बोध्यं॥

सन्निपातपरिभाषयेति। आमि सति लिट्परत्वं धातोर्न सिध्येदिति भावः। अन्ये तु इजादेरिति सूत्रे गुरुमानिति नित्ययोगे मतुप् ततश्च नित्ययोगगुरुमान् लघवृद्धावित्यादिस्तत्रै-
वस्यादिति नात्र आमः प्रसक्तिरित्याहुः। ऊर्णुतुरित्यत्र। कित्वाद्गुणाभावे अभ्यासस्यासवर्णे इति उवङ् न भवति। ननु इयेष उवोषेत्यत्रापि अंतरंगत्वात् सवर्णदीर्घे कृ-
ते चपरत्वाभावादियङुवङौ न स्त इति इष्टरूपासिद्धेः किं तत्रासवर्णग्रहणेनेति चेत्। अत्राहुः। वार्णादांगं बलीय इति परिभाषाज्ञापनार्थमेवासवर्णग्रहणं कृ-
तं। तेन भवतीत्यत्रांतरंगमपि यणं बाधित्वा गुणो भवति। तथा करोतेर्घञि कार इत्यत्र यणं बाधित्वा वृद्धिर्भवति। न चैवं सिवेर्णादिकेन प्रत्यये स्योन इत्यत्रोवः शू-

सन्निपातपरिभाषया इजादेरित्याम्न। ऊर्णुतुः। ऊर्णुवुः इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न भवति। संकृत्प्रवृत्तत्वात्
आङ्त्वाद्धि पक्षेऽप्यवर्णहलत्वप्रवृत्त्या ह्रस्वे कृते तन्नो दीर्घः। वार्णादाङ्गं बलीय इति न्यायात्परत्वाच्च। उङ्खति। ववङ्खतुः वङ्खति। मेखतुः त्वगिक-
म्पने च॥४४॥ युगि जुगि बुगि वर्जने। युङ्गति॥४७॥ घघ हसने। घघति। जघाघ॥४८॥ मघि मण्डने। मङ्घति॥४९॥ शिघि आघ्राणे। शिङ्घति
॥५०॥ अथ चवर्गीयान्ताः। तत्रानुदात्तेत एकविंशतिः वर्च दीप्तौ। वर्चते १ षच सेचने सेवने च। सचते। सेचे। सचिता॥२॥ लोचृ दर्शने। लो-
चते। लुलोचे॥३॥ शच व्यक्तायां वाचि। शेचे॥४॥ श्वच श्वचि गतौ। श्वचते। श्वञ्चते॥६॥ कच बन्धने। कचते ७ कचि काचि दीप्तिबन्धनयोः।
चकञ्चे। चकाञ्चे ९ मच मुचि कल्कने। कल्कनं दम्भः शाठ्यं च। कथनमित्यन्ये। मेचे। मुमुञ्चे॥११॥ मचि धारणोच्छ्रायपूजनेषु। ममञ्चे
॥१२॥ पचि व्यक्तीकरणे। पञ्चते॥१३॥ ष्टुच प्रसादे। स्तोचते। तुष्टुचे॥१४॥ ऋज गतिस्थानार्जनोपार्जनेषु। अर्जते॥ ॥

डित्युठि कृते लघूपधगुणं बाधित्वा यण् न स्यात् इति वाच्यं। समानाश्रय एव वार्णादांगस्य बलीयस्त्वात् इह तु निमित्तभेदेन व्याश्रयत्वमिति। अभ्यासग्रहणेनेतीं पू-
र्वस्यात वत्वेनेत्यर्थः। पर्जन्यवल्लक्षणेति। उपयोगानुपयोगाविचारेण प्रवर्तमानं शास्त्रं ह्रस्वस्थानेपि ह्रस्वं प्रवर्तयतीत्यर्थः। तथा चैकस्मिन् लक्ष्ये लक्षणं सकृदे-
व प्रवर्तत इति न तस्य पुनः प्रवृत्तिरिति भावः। आंगं बलीय इति। न च ह्रस्वसवर्णदीर्घयोर्निमित्तभेदात् समानाश्रयत्वाभावे कथमांगस्य बलीयस्त्वमिति चे-
त्। सत्यं। इष्टानुरोधेन स्थानिनमादाय क्वचित् समानाश्रयत्वाभ्युपगमात्। अत एवोङ्शब्दे इत्यस्मात् क्विपि टि ऊवे। उवा तेरुत्यादीष्टं सिध्यति। उवङः प्राक् सवर्ण

सि॰ कौ॰ दीर्घप्रवृत्तौ तन्न सिध्येदिति दिक्। परत्वाच्चेति। आपाततोऽयं हेतुः ह्रस्वस्यांगत्वेन बहिरंगत्वादंतरंगं सवर्णदीर्घं प्रति परत्वोपन्यासस्यायुक्तत्वात्। उंखतीति। इदित्वान्नुम्।
टी॰ त॰ लिटि। उंखांचकार। आशिषि उंख्यात्। ववखतुरिति। वादित्वादेत्वाभ्यासलोपौ न। एखति। इंखति। इंखांचकार। ईंखति। ईंखांचकार। इंगति। इंगांचकार। वृगि कैः
ति॰ उ॰ पन इति। अयं उख उखीति दंडके गतौ पठितस्य गतिविशेषवृत्तिं बोधयितुं पठ्यते। अत एवानतिप्रयोजनत्वात् क्वचित्पुस्तकेषु न पठितः। सेवने चेति। यद्यपूर्वो
२६ वृत्त्व हलं सचं ते इत्यादौ सवं ते इत्यभियुक्तैर्व्याख्यातत्वात्। खरि तेन्नुष च समवाय इति वक्ष्यते। लोचृ। ऋदित्वान्नाग्लोपीति ह्रस्वनिषेधः। अलुलोचत्। पचि व्यक्ती
करणे। पचि विस्तारवचन इति चुरादौ। ऋज गतौ। अर्जने प्राधान्येन उपार्जनं तु प्रासंगिकं॥ ः॥ नुड्विधावित्यादि नुड्विधिलादेशविनामेषु प्रतिविधेयमिति

नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते। तेन द्विहल्त्वान्नुट्। आनृजे॥१५॥ ऋजि भृजी भर्जने। ऋञ्जते। उपसर्गादृतीति वृद्धिः। प्रार्ञ्जते
ऋञ्जांचक्रे। आर्ञ्जिष्ट॥१६॥ भर्ज्जते। बभृजे। अभर्ज्जिष्ट॥१७॥ एजृ भेजृ भ्राजृ दीप्तौ। एजांचक्रे॥२०॥ ईज गतिकुत्सनयोः। ईजांचक्रे॥२१॥
अथ द्विसप्ततिर्व्वञ्चन्ताः परस्मैपदिनः। शुच शोके। शोचति॥१॥ कुच शब्दे तारे। कोचति॥२॥ कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः। अनिदिता
मिति नलोपः। कुच्यात्॥३॥ क्रुच्यात्॥४॥ लुञ्च अपनयने। लुच्यात्॥५॥ अञ्चु गतिपूजनयोः। अच्यात्। गतौ नलोपः। पूजायां तु। अञ्च्या
त्॥६॥ वञ्चु चञ्चु तञ्चु त्वञ्चु म्रुञ्चु म्लुञ्चु म्रुचु म्लुचु गत्यर्थाः। वच्यात्। चच्यात्। तच्यात्। त्वच्यात्। अम्रुञ्चीत्। अम्लुञ्चीत्॥ ॥

वचनान्नुडादिविधिषु वर्णैकदेशस्य वर्णत्वेन ग्रहणादिति भावः। यद्यपि द्विहल्ग्रहणं भाष्यादौ प्रत्याख्यायते न च। आट आटतुरित्यत्रातिप्रसंगः अश्नोतेश्च
नेनं अवर्णोपधस्य यदि भवति तर्ह्यश्नोतेरेवेति नियमात्सिद्धमिष्टमित्यन्यत्र विस्तरः। ऋजि भृजी। भर्जनं जलं विना तंडुलादेः संतापविशेषः। ईदित्वात् श्वीदितो नि
ष्ठायामिति नेट्। भृक्तः। भृक्तवान्। एजृ भेजृ भ्राजृ। भ्राजेर्ऋदित्करणमनुदात्तेत्त्वमात्रफलं। भ्राजभासेत्यादिना चङ्परे णौ उपधाह्रस्वस्य विकल्पितत्वात्। अ
बिभ्रजत्। अबभ्राजत्। परस्मैपदिन इति। चवर्गीयांतपरस्मैपदिनः। पूजायांत्विति। नांचेः पूजायामिति निषेधादिति भावः॥ ॥

जृस्तम्भु। स्तम्भुः सौत्रः। अजरत्। अजारीत्। अस्तभत्। अस्तम्भीत्। अश्वत्। अश्वत्। अश्वन्। अश्वयीत्। विभाषा धेट्श्व्योरिति चङि अशिश्वियत्। अर्च पूजायां।
दीर्घस्वरितेत्। इह पाठस्तु कर्तृगे फले परस्मैपदार्थः। दीर्घाभावादिति। स्वाभाविकह्रस्वस्थानिकदीर्घाभावादित्यर्थः। मुख्यमुख्यार्थमिति। कृतह्रस्वस्थानिकदीर्घ

जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च। ३।१।५८॥ एभ्यश्च्लेरङ् वा स्यात्। अम्रुचत्। अम्रोचीत्। अम्लुचत्। अम्लोचीत्॥ ग्रुचु ग्लुचु स्तेयकरणे। जुग्रोच। अग्रुचत्। अग्रोचीत्। जुग्लोच। अग्लुचत्। अग्लोचीत्। अकोजीत्। अखोजीत्॥ १९॥ ग्लुञ्चु षस्ज [illegible] अङ्। अग्लुचत्। अग्लुञ्चीत्॥ १९॥ सस्य श्चुत्वेन शः जश्त्वेन जः। सज्जति। अयमात्मनेपद्यपि। सज्जते॥ २०॥ गुजि अव्यक्ते शब्दे। गुञ्जति। गुञ्जांत॥ अर्च पूजायाम्। आनर्च॥ २२॥ म्लेच्छ अव्यक्ते शब्दे। अस्फुटे ऽपशब्दे चेत्यर्थः। म्लेच्छति। मिम्लेच्छ॥ २३॥ लछ लाछि लक्षणे। ललच्छ॥ २४॥ ललाञ्छ॥ २५॥ वाछि इच्छायाम्। वाञ्छति॥ २६॥ आछि आयामे। आञ्छति। अत आदेरित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम्। तेन दीर्घाभावान्न नुट्। आञ्छ। तपरकरणं मुख्यमुख्यार्थमिति मते तु नुट्। आनाञ्छ॥ २७॥ ह्रीछ लज्जायाम्। जिह्रीच्छ॥ २८॥ हुर्छा कौटिल्ये। कौटिल्यमपसरणमिति मैत्रेयः। उपधायां चेति दीर्घः। हूर्छति॥ २९॥ मुर्छा मोहसमुच्छ्राययोः। मूर्छति॥ ३०॥ स्फुर्छा विस्तृतौ। स्फूर्छति॥ ३१॥ युछ प्रमादे। युच्छति॥ ३२॥ उछि उञ्छे। उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः। उञ्छति। उञ्छाञ्चकार॥ ३३॥ उछी विवासे। विवासः समाप्तिः। प्रायेणायं विपूर्वः। व्युच्छति॥ ३४॥ ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ। ध्रजति। ध्रञ्जति। धर्जति। धृञ्जति। ध्वजति। ध्वञ्जति॥ ४०॥ कूज अव्यक्ते शब्दे। चुकूज॥ ४१॥ अर्ज षर्ज अर्जने। अर्जति। आनर्ज॥ ४२॥ सर्जति। ससर्ज॥ ४३॥ गर्ज शब्दे। गर्जति॥ ४४॥ तर्ज भर्त्सने। तर्जति। ततर्ज॥ ४५॥ कर्ज व्यथने। चकर्ज॥ ४६॥ खर्ज पूजने च। चखर्ज। अज गतिक्षेपणयोः। अजति। ऋकारात् परस्यापि नुट् भवत्येवेत्यभावः। युच्छ प्रमादे युच्छती

ति। अनर्छ त्वाच्छे चेति तु किल घुपधत्वाभावान्न गुणः। न च वार्णादाङ्गं बलीय इति वाच्यं। आङ्गवार्णयोर्युगपत्प्रवृत्तावेव आङ्गस्य बलीयस्त्वात्। न च पुच्छेति चकारछकारावुभावेतौ किमनेन तुग्विधिनेति शंक्यं। बहुषु धातुरूपेषु चकारछकारयोरुच्चारणे गौरवात्। छे चेत्यस्य शिवच्छायेत्यादावावश्यकत्वाच्च॥

सि. कौ. अजेर्व्या वीइतिच्छेदः। तेनसंवीतः संवीतिरित्यादि सिध्यति। आर्धधातुकविषयइति। तेनवीभावोत्तरं यङि वेवीयते इत्यादि सिध्यति परस्मम्यां तु हलादित्वाभावाद्य
टी. त. ङ्नस्यादि निभावः। यङ्लुक्तु अस्मान्नभवति। लुकायङोपहारे आर्द्धधातुकविषयत्वाभावान्नार्द्धधातुकमभिव्यक्तिरिति वीभावस्यैवाप्रसक्तेः। एतच्च नलुमतेति
ऊ. ति. सूत्रेकैयटेस्पष्टं। अघञपोः किं। समाजः। समुदोरजः पशुष्विष्यप्। समजः। विव्यतुरिति। एरनेकाच इति यण्। लोपाजादेशएवेति। एतच्च नपदान्तेतिसूत्रएवाभ
२७ ष्योभिरुपपादितं। एकाचइतीति। अजेरुदात्तत्वेपिवीभावोऽनुदात्तः ऊदृदंतादिभिन्नाएकाचोऽजंताः सर्वेप्यनुदात्ता इत्यभ्युपगमात्। कृसृभृ। डुकृञ्करणे॥
कृञ्हिंसायां। इहनिरनुबंधग्रहणात्सैकानुबंधस्यचतु बंधयोरुभयोर्ग्रहणं। एवमग्रेपि। भृञ्भरणे। डुभृञ्धारणपोषणयोरित्युभयोर्ग्रहणं। सृगतौ। वृङ्सं

अजेर्व्यघञपोः। २।४।५६॥ अजेर्वीत्ययमादेशः स्यादार्द्धधातुकविषये घञमपञ्च वर्जयित्वा॥ वलादावार्द्धधातुके वेष्यते॥ विवाय। विव्यतुः
विव्युः। अत्र पक्षे स्य हलपरत्वात् इयङ्घायास्वेति दीर्घप्राप्तेः चः परस्मिन्निति स्थानिवद्भावेनाचपरत्वं। नचनपदान्तेति निषेधः। स्वरदीर्घय
लोपेषु लोपाजादेश एव नस्थानिवदिति मुक्तेः। थलि एकाच इति निषेधे प्राप्ते॥ कसृभृवृस्तुद्रुस्रुश्रुवो लिटि॥ ७।२।१३॥ एभ्योलिटि इण्नस्यात्
क्रादीनां चतुर्णां ग्रहणं नियमार्थं। प्रकृत्याश्रयः प्रत्ययाश्रयो वा प्राप्तानिटनिषेधः सलिटिचेन्नहि क्रादिभ्य एव नान्येभ्य इति। ततश्चतुर्णां न्यलि
भारद्वाजनियमप्रापितस्य थमादिक्रादिनियमप्रापितस्य चेटो निषेधार्थं॥ ॥ ९९ मङ्गौ। वृञ्वरणे। इहनिरनुबंधग्रहणाद्विन्नानुबंध

योरप्युभयोर्ग्रहणं। कसृभृएषामनुदात्तत्वादेकाच उपदेश इति प्रकृत्याश्रयेनिषेधे प्राप्ते वृङ्वृञोस्तु दात्तत्वात् श्रुकःक्किती इति प्रत्ययाश्रयेनिषेधे प्राप्ते नियमोऽ
यमित्याह। क्रादीनां चतुर्णामिति। इहहि स्रुद्रादीनां चतुर्णां ग्रहणस्य भारद्वाजनियमप्रापितेऽपि निषेधोपि प्रयोजनमिति बोधयितुमष्टानां ग्रहणमिति नोक्तं
इण्निषेधइति। नेड्वशीति प्रकृतमान्तमाप्राप्तस्यैवाभावस्य नियमो न तु विभाषावल लभ्यस्यापि अनंतरस्येति न्यायादपि संनिहितस्यैव नियम उचितः। तेनसिषेधि २७
था सिषेद्ध। सिषिधिथ। सिषिध्व। इत्यादौ धुमयं भवति। नान्येभ्य इति। तेनपेचिव। बभूविवेत्यादि सिद्धं। नचैवं क्रादिनियमेनैवनेड्वशि कृतीति निषेधस्याप्रवृत्तौ सेदिवान्
जक्षिवानित्यादि सिध्यसे वेति वस्वेकाजाद्घसामिति इड्विधानं किमर्थमिति शंक्यं। तस्य नियमार्थत्वेन व्याख्यास्यमानत्वात्। अन्यथा बभूवानित्यत्रापि इडा[illegible]

दित्वान्न विहन्त्यादिभ्यश्चेडिति न स्यान्नहि लिट्येवेति विपरीतनियमः किं न स्यात्। तथा च कृते। अकार्षीदित्यादाविडागमः स्यादिति चेन्न। मैवं। कृते ग्रंथे। तमधीष्टे भूते भूतेनो थ इत्यादिनिर्देशविरोधापत्तेः। बभूविथेति। आदिशब्देन सेध्वे वहिमहीनां ग्रहणं। तुष्टुषे। तुष्टुध्वे। तुष्टुवहे तुष्टुमहे इत्यादि। स्यादेतत्। असुप्रकृत्याश्रयनिषेधस्य नियमः प्रत्ययाश्रयस्य तु न संभवति। इड्ग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वात्। नेत्यत्र प्रत्ययाश्रयो निषेधः प्राप्नोति। थलो अकित्वात्। नापि प्रकृत्याश्रयः कृञ उदात्तत्वात्। न चैवमपि इडो नियमार्थत्वमस्त्विति वाच्यं। तस्य विशिष्याग्रहणे तत्पश्चापि विशिष्य ग्रहणं कृञोपि नासित थाप्यप्राप्तनिषेधप्रापि फलकत्वान्न इति कृञ एव ग्रहणं भवेत्। विधिनियमयोर्विधिरेव ज्यायानिति न्यायात्। एवं च बभूविवेत्यादौ श्र्युकः किनीति इण्निषेधो दुर्वार इति चेन्न। अत्राहुः। बभूथ ततंथ आजगृभ्म ववर्थेति निगमे इति सूत्रेणछंदसि ववर्थेति निपातनाद्भाषायां कृञस्थल इटः स्वीकृतेत्यनया इड्ग्रहणस्य थलविषयत्वायोगात् हुमादीनां च कित्वेन नियमस्य सुस्थत्वादिति ॥ ॐ ॥ अचस्तास्वत्। उत्तरसूत्रादुपदेश इत्यपकृष्यते तच्चाजंतस्य विशेषणमित्याह। उपदेशेऽजंत इति। धातुरित्याक्षेपाल्लभ्यते। नत्वधातोस्थलसंभव

अचस्तास्वत्थल्यनिटो नित्यम्। ७।२।६१॥ उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात्॥ उपदेशेऽत्वतः। ७।२।६२॥ उपदेशेऽकारवतस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात्॥

॥ ऐ ति। नित्यग्रहणमनिटो विशेषणं। क्वचनित्यमनिडित्यपेक्षायां सन्निधानात्तासावेव विज्ञायते नासिचक्कृ इति संनिहितं वाऽनुवर्तते। न इडित्यस्मान्नेत्यनुवर्तते तदाह। तासौ नित्यानिटस्ततः परस्येति। तासावित्यनास्वत् इति सप्तम्यंताद्वतिः यथा तासौ न भवति एवं थल्यपीत्यर्थः। अच इति किं। बिभेदिथ। रुरोधिथ। उपदेशे इति किं। जहर्थ। इह परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृते अजंतत्वाभावादेतस्याप्रवृत्ताविट्प्रसज्येतेत्युपदेश इत्युक्तं। थलीति किं। पपिव। पपिम। नित्यमनिटः किं। सस्वरिथ सस्वर्थ। नायं तासौ नित्यमनिट्। स्वरतिसूती विकल्पितेड्त्वात्। इहतासीति नेति चानुवृत्त्यैवेष्टसिद्धेस्तास्वदित्येतन्नातीवोपयुज्यत इति केचित्। अन्ये तु यस्य तासौ विद्यमानत्वं तस्मादेव परस्य थल इण्निषेध इत्येतल्लाभार्थं तं तेन उवयिथ। अजग्रसिथेत्यत्र न निषेध इत्याहुः। उपदेशेऽत्वतः। पपक्थ। इयष्ठ। उपदेशे किं। कृष्टा। चकर्षिथ। अकारवदिति किं। भेत्ता। बिभेदिथ। तपरकरणं किं। राद्धा। रराधिथ। तासौ किं। जिघृक्षति। जग्रहिथ। सनि ग्रहगुहोश्चेति सनि नित्यमनिट्। क्रांतः। चक्रमिथ। उदित्वेन क्त्वायां वेट्त्वात् यस्य विभाषेति निष्ठायां नेट्। नित्यानिट् किं। अङ्क्ता। अंजिता। आनंजिथ। किं चानित्यग्रहणानुवर्तनाच्चक्रमिथेत्यपि सिध्यति। नहि क्रमिस्तासौ नित्यानिट्। स्नुक्रमोरनात्मनेपदनिमित्त इति परस्मैपदे सेट्त्वात् ॥

पदित्वात् तृजः सुन्दंदंसिववव्थेतिनिपातनादुवरिथेतिभाषायामिटा भाव्यं तस्मान्नेय
तेषु सस्‌ज्मसृज्मादिषु अचस्तास्वदित्येव सिद्धं तत्र तृज्येव यद्यपि सेटौ तथापि दरिद्रा लेवनान्तिभाल्मनेयं
ऋतो भारद्वाजस्य तस्य करणे क्रुगृप्रभृतिषु दीर्घितिषु नायं निषेधः प्रवर्तते हृस्वान्तेषु सृज्मादिषु अचस्तास्वदित्येव सिद्धं तत्र तृज्येव यद्यपि सेटौ तथापि दरिद्रा ... फलितः। पपिथ। पपाथ। ... पपक्थ। इयजिथ। इयष्ठ। अ
मीयमित्याह। ऋदन्तादेवेति। जहर्थ। दधर्थ। अन्यस्य स्यादेवेति। एवं च भारद्वाजमते स्यादन्यमते न स्यादिति विकल्पः फलितः। पपिथ। पपाथ। ... इयजिथ। इयष्ठ। अ
मीयमित्याह। ऋदन्तादेवेति। जहर्थ। दधर्थ। अन्यस्य स्यादेवेति। एवं च भारद्वाजमते स्यादन्यमते न स्यादिति विकल्पः
कारवानिति। हृस्वाकारवानित्यर्थः। ईयिगिति। यस्तासनिट् स ऋदन्तः थलि नित्यानिट् भवतीत्यर्थः। ननु सु दु स्रु श्रु वामपि थलि भारद्वाजनियमादिट् स्यात्। न चैवं क्रादिसू
त्रेनेषां पठनं निरर्थकं स्यादिति वाच्यं। तत्पठनस्य वमादिष्विडिनिवृत्त्यर्थतया सफलत्वात्। अन्यथा क्रादिनियमात्तत्र इडागमो दुर्वारः स्यादित्याशंक्याह। न चेति।
अनेनेषां पठनं निरर्थकं स्यादिति वाच्यं। तत्पठनस्य वमादिष्विडिनिवृत्त्यर्थतया सफलत्वात्। अन्यथा क्रादिनियमात्तत्र इडागमो दुर्वारः स्यादित्याशंक्याह। न चेति। अत्वन्तधातु
योग इत्येति। क्रादियोगप्राप्तितस्य तु न निवर्तक इति भावः। कुत इत्याकांक्षायामाह। अनंतरस्येति। न चैवमुपदेशेऽत्वत इत्यस्यैव बाधः स्यादिति वाच्यं। अत्वन्तधातु

ऋतो भारद्वाजस्य। ७।२।६३॥ तासौ नित्यानिट् ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन। तेनान्यस्य स्यादेव। अयमत्र संग्रहः। अजन्तोऽकारवा
न्वा यस्तास्यनिट् थलि वेडयं। ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत्। न च सृजिदृशीनामपि थलि विकल्पः शंक्यः। अचस्तास्वदिति। उपदे
शेऽत्वत इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः। अनन्तरस्येति न्यायात्। विवयिथ। विवेथ। आजिथ। विव्यथुः
विव्य। विवाय। विवय। विव्यिव। विव्यिम। वेता। अजिता। वेष्यति। अजिष्यति। अजतु। आजत्। अजेत्। वीयात्। सिचि वृद्धिः परस्मैपदेषु। ७।२।१।
इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदे परे सिचि। अवैषीत्। आजीत्। अवेष्यत्। आजिष्यत्॥ ४७॥ तेज पालने। तेजति॥ ४८॥ खज मन्थे। खजति॥ ४९॥
खजि गतिवैकल्ये। खञ्जति॥ ५०॥ एजृ कम्पने। एजांचकार॥ ५१॥ टुओस्फूर्जा वज्रनिर्घोषे। स्फूर्जति। पुस्फूर्ज॥ ५२॥ क्षि क्षये। अकर्म
कः। अन्तर्भावितण्यर्थस्तु सकर्मकः। क्षयति। चिक्षाय। चिक्षियतुः। चिक्षियुः। चिक्षयिथ। चिक्षेथ। चिक्षियिव। चिक्षियिम। क्षेता॥ ॥

गुरुकरन्तत्वाद्दर्शनेन यवत्वतः थलि इण्निषेधस्तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात्। ननु तर्हि अचस्तास्वदित्यस्यैव बाधोऽस्तु न तु कथं योगद्वयप्रापितस्येत्युक्तं। अ
त्राहुः उपदेशेऽचस्तास्वदित्येवं सूत्रे कृतेऽपि तास्वत् थलीत्यादिपदानामिवोपदेशपदस्याप्यनुवृत्तिसंभवे अत्वत इति सूत्रे उपदेशपदस्य च इति पूर्वसूत्रे तु तास्वत् थ
लीत्यादेश्च करणादुभयोः समानयोगक्षेमः इति ज्ञायते। तस्मादिष्टानुरोधाच्च योगद्वयमपि भारद्वाजनियमेन बाध्यते। यदि तु उपदेशेऽत्वत अचस्तास्वत्यस्य नि ...

एकोऽयागः स्त्री क्रियते तदा अत्र नास्त्येव शंकालेशोऽपीति बोध्यमिति। अन्ये तु व्याचक्षते। अचस्तास्वदिति सूत्रानंतरमेव क्राद्यो भारद्वाजस्येति पठनीयं द्वयोरनंतरं मस्यारंभादिहत्तास्व
त्यंस्यानिमेवनियंतासीत्यनुवर्त्यते अयं तासि नित्यानिट् स्थलिट् प्रतिषेधः भारद्वाजमते क्रकारांतस्यैवेति व्याख्यायते तेन सर्वेष्टसिद्धिः यद्वा। क्रादिसूत्रे सृप्रभृतीनां ग्रहणम्
वृङ्वृञ्‌स्यापि बाधकमस्तु। पुरस्तात्प्रतिषेध कांडारंभसामर्थ्यात्। अनाश्रितविधानविशेषमिलमात्रमनारभ्यार्थितेन प्रतिषेधेन यथा बाधेनेत्येतदर्थौ हि स आरंभः। अ
नुमेवार्थे सिद्धवत्कृत्य ततश्च तुल्ये थलि भारद्वाजनियमप्रापितस्यैव मादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थमिति मूलेऽप्युपनिबद्धमिति। विव्यिव। विव्यिम। इति।
क्रादिनियमान्नित्यमिट्। सिचि वृद्धिः। इको गुणवृद्धी इति परिभाषोपस्थानादाह। इगंतेति। परस्मैपदेष्विति किं। अघविष्ट। अघोष्ट। सिचि किं। एति। विभर्ति। गुणं बाधित्वा वृद्धि
स्यात्। रिं। ... नमूच्यो। कंजेति केचित्पठंति॥ एजृ कंपने॥ दीप्तौ त्वात्मनेपदी गतः। टुओस्फूर्जा॥ द्वितोऽथुच्। स्फूर्जथुः। ओदितश्चेति निष्ठानत्वार्थमोकारः। स्फूर्गूणः। स्फूर्गणवान्

अकृत्सार्वधातुकयोर्दीर्घः। ७।४।२५। अजंतस्यांगस्य दीर्घः स्याद्यादौ प्रत्यये परे न तु कृत्सार्वधातुकयोः। क्षीयात्। अक्षैषीत्॥ ५३॥
क्षीज अव्यक्ते शब्दे। कूजि नाः सहायमप्यठि तु युक्तः। चिक्षीज॥ ५५॥ लज लजि भर्जने॥ ५७॥ लाज लांजि भर्त्सने च॥ ५८॥ जज जजि युद्धे॥ ६१॥
तुज हिंसायाम्। तोजति। तुतोज॥ ६२॥ तुजि पालने॥ ६३॥ ॥ ८८ आकारस्तु आदितश्चेति निष्ठायामिटो निषेधार्थो विभाषाभावादिक

र्मणोरिति विकल्पार्थश्च। स्फूर्गूणां स्फूर्जितमनेनेत्यादि। उपधायां चेति दीर्घस्यानित्यत्वज्ञापनार्थं इह दीर्घोपदेशः। तेन हुर्छतिमुर्छतिरप्यपि भवतीति केचित्। क्षि
क्षये। अजंते पाठस्य पाठो युक्तः। क्षि निवासगत्यो रिति तु दादौ। अकृत्सार्व॥ दीर्घग्रहणे नाचश्चेति परिभाषोपस्थानादाह। अजंतेति। यादौ प्रत्यय इति। अयङ् यि क्ङिति इत्य
तो यीत्यनुवर्त्य अंगादि प्रत्ययस्तेन विशेष्यते। विशेषणेन तदादिविधिः यस्मिन्विधिरिति परिभाषोपस्थानादिति भावः। न्वितिकत्वकारे प्रकृत्या प्रदर्सा उच्चैः कृत्य
तु कं बाधित्वा परत्वान्न दीर्घः स्यात् तु ग्विधिस्तु अग्निचित्सोमसुतइत्यादौ चरितार्थः। त्यपः पित्वमपि अनुदात्तार्थं तयाचरितार्थमित्याहुः। सार्वधातुकयकारे तु चिनु
यात्। सुनुयात्। कूजिनेति। अर्थे कादेकत्वपाठ उचित इति भावः। लज लजि लज्यात् लंज्यात्। लज प्रकाशने इति कथादौ। भर्त्सने चेति। चात् भर्जने। तुजि पालने। भाषार्थो

सि॰ कौ॰ गजगजि। गंजा तु मदिरागृहं। गजमदनं चा मदनं मदः चित्तविकारः। वजव्रजा वादित्वादेत्वाभ्यासलोपौ न। ववजतुः वव्रजतुः। शाड्‌न्ता इति। शाडृ श्लाघायामित्यन्ता इत्य

टी॰ त॰ गजगजिगृजगृजिमुजमुजि शब्दार्थाः॥ ९९॥ गज मदने च॥ १००॥ वज व्रज गतौ। वव्राजेति वृद्धिः। अव्राजीत्॥ १०१॥ अथ टवर्गीयान्ताः शाड्‌

उ॰ ति॰ न्ताः। अनुदात्तेतः षट्त्रिंशत्। अट्ट अतिक्रमहिंसयोः। दोपधोऽयम्। नोपध इत्येके। अट्टते। आनट्टे॥ १॥ वेष्ट वेष्टने। विवेष्टे॥ २॥ चेष्ट चेष्टायाम्। च

२९ चेष्टे॥ ३॥ गोष्ट लोष्ट सङ्घाते। जुगोष्टे॥ ४॥ लुलोष्टे॥ ५॥ घट्ट चलने। जघट्टे॥ ६॥ स्फुट विकसने। स्फोटते। पुस्फुटे॥ ७॥ अठि गतौ। अण्ठते।

आनण्ठे॥ ८॥ वठि एकचर्यायाम्। ववण्ठे॥ ९॥ मठि कठि शोके। शोक इह आध्यानम्। मण्ठते॥ १०॥ कण्ठते॥ ११॥ मुठि पालने। मुण्ठते॥ १२॥

हेठ विबाधायाम्। विबाधा प्राक्तनम्। जिहेठे॥ १३॥ एठ च। एठाञ्चक्रे॥ १४॥ हिडि गत्यनादरयोः। हिण्डते। जिहिण्डे॥ १५॥ हुडि सङ्घाते। जुहुण्डे

॥ १६॥ कुडि दाहे। चुकुण्डे॥ १७॥ वडि विभाजने। मडि च। ववण्डे॥ १९॥ भडि परिभाषणे। परिहासः सनिन्दोपालम्भश्च परिभाषणम्। बभण्डे

॥ २०॥ पिडि सङ्घाते। पिपिण्डे॥ २१॥ मुडि मार्जने। मार्जनं शुद्धिर्न्यग्भावश्च। मुण्डते॥ २२॥ तुडि तोडने। तोडनं दारणं हिंसनं च। तुण्डते॥ २३॥ हु

ण्डि वरणे। वरणं स्वीकारः। हरण इत्येके। हुण्डते॥ २४॥ चडि कोपे। चण्डते॥ २५॥ शडि रुजायां सङ्घाते च। शण्डते॥ २६॥ तडि ताडने। तण्डते २७

पडि गतौ। पण्डते॥ २८॥ कडि मदे। कण्डते॥ २९॥ खडि मन्थे॥ ३०॥ हेडृ होडृ अनादरे। जिहेडे॥ ३१॥ जुहोडे॥ ३२॥ वाडृ आप्लाव्ये। वशादिः॥

आप्लाव्यमाप्लवनम्। वाडते॥ ३३॥ द्राडृ ध्राडृ विशरणे। द्राडते॥ ३४॥ ध्राडते॥ ३५॥ शाडृ श्लाघायाम्। शाडते॥ ३६॥ अथ आटवर्गीयान्तसमाप्तेः

परस्मैपदिनः। शौटृ गर्वे। शौटति। शुशौट॥ १॥ यौटृ बन्धे। यौटति॥ २॥ म्लेटृ म्रेडृ उन्मादे। द्वितीयो डान्तः। टान्तमध्ये पाठस्तु रूपसाम्यान्नाथतिव

त्। म्लेटति॥ ३॥ म्रेडति॥ ४॥ कटे वर्षावरणयोः। चटे इत्येके। चकाट। सिचि। अतो हलादेर्लघोः इति वृद्धौ प्राप्तायाम्॥ ॥

र्थः। दोपधोऽयमिति। तथा च ष्टुत्वस्यासिद्धत्वान्नन्द्राः संयोगादय इति द्वित्वनिषेधे नकारं विहाय टिशब्दस्य द्वित्वे पश्चान्नकारस्य ष्टुत्वे चर्त्वे च अटिट्टिषते। आदितश्चेति सिध्यति॥

टोपधत्वेनु। आसदृषत्। आसट्टादान्स्य॥ दानमाकानापषमता आलतुप दजान॥ ट षते आतिदृदित्यादिवोध्यं। हलादिः शेषे एत्वकारानिर्दिष्टत्वेन निमित्तस्यापि दृष्टत्वस्य नि-
हृत्तत्वादिति नव्याः। मनोरमायां तु पूर्वत्रासिद्धीयमद्विर्वचन इति दृष्टत्वस्यासिद्धत्वाभावात् टकारद्वयसहितस्य द्वित्वे हलादिः शेषे अटिट्टिषते। आदिट्टिरित्यादि सिध्यतीत्युक्तं नि-
मित्तापाये नैमित्तिकस्याप्यपाय इति त्वनित्यमिति तदाशयः। आनट्टे इति। इह नन्द्रा इति निषेधो नान्तत्र द्वितीयस्यैवानुवर्तनात्। द्वितीये काच एव नद्राणां निषेधात्। घट्टस्व-
नो। अयं चुरादावपि। स्फुट। अयं कुटादावपि। आनट्ठे इति। नत्वस्मान्तु ड्डिहलइतितु ट्टावंठ ते इति। सहायं विना चरतीत्यर्थः। मंडिचाएथककृपानद्रयंवेष्टनेपीत्याहुः मडिभूषा-

इस्पन्नसूलणश्वसजागृणिश्व्येदिताम्। ७।२।५॥ हमयान्तस्यक्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नस्यादिडादौ सिचि। अकटीत्॥ ६॥
टपृट गतौ। आट। आटतुः। आटुः। ७॥ पपाट। पेटतुः। पेटुः॥ ८॥ रट परिभाषणे। रराट॥ ९॥ लट बाल्ये। ललाट॥ १०॥ शट रुजाविश-
रणगत्यवसादनेषु। शशाट॥ ११॥ वट वेष्टने। ववाट। ववटतुः। ववटुः। ववटिथ॥ १२॥ किट खिट त्रासे। केटति॥ १३॥ खेटति॥ १४॥ शि-
ट षिट अनादरे। शेटति। शिशेट॥ १५॥ सेटति। सिषेट॥ १६॥ जट झट संघाते॥ १७॥ भट भृतौ॥ १८॥ तट उच्छ्राये॥ १९॥ खट कांक्षायां॥ २०॥ ण-
ट नृत्तौ॥ २१॥ पिट शब्दसंघातयोः॥ २२॥ हठ दीप्तौ॥ २३॥ षट अवयवे॥ २४॥ लुट विलोडने। डान्तोयमित्येके॥ २७॥ चिट परप्रेष्ये॥ २८॥
विट शब्दे॥ २९॥ विट आक्रोशे। वष्टादिः। हिट इत्येके॥ ३०॥ इट किट कटी गतौ। एटति॥ ३१॥ केटति॥ ३३॥ कटति॥ ३४॥ ईकारः श्वीदितो निष्ठा-
यामिति नेनिषेधार्थः। केचित्तु इदितं मत्वा नुमि कृते कण्टतीत्यादि वदन्ति। अन्ये च कटई इति प्रश्लिष्य। अयति। इयाय॥ ॥

पामित्यग्रे परस्मैपदिषु भडि। पः सनिंद उपालंभस्तत्रस्यात्परिभाषणमित्यमरः। रडि। षंडोऽसुरपुरोहितः। दाडूक्त विशरणमवयवविभागः। शाडू इ। डलयोरैक्यात् शालतेरति
कास्यपः। भौद्रश्रगर्वे। अस्योणादिषु इरन्वक्ष्यते। तदे तदति भौटीर्यमौडुत्योमेर्नमृष्यतीतिकस्यत्रहः। कटे॥ ॥ स्मंतसृणा। अग्रहीत्। दुवम्। अवमीत्। हयगतौ। अहयीत्।
स्सणहिंसायां। असणीत्। श्वस प्राणने। अश्वसीत्। जागृ निद्राक्षये। अजागरीत्। एयंतेति। ...नयति ध्वनयत्। मादिना चडि निषिद्धे ओनयीदिति उदाहरणं। टुओश्वि। अश्व-
यीत्। इडादौ सिचीति। इडादौ किं। दह भस्मीकरणे। अधाक्षीत्। किट खिट। इट किटेति किटि गतौ पठिष्यते॥ इह पाठस्त्वर्थभेदात्। जटझट। जेटतुः। झेटतुः। इह त्वादेशादि-

 त्वादित्वाभ्यासलोपौ न। खट अप्रपूर्विलटिखटिकणिविषिभ्यः कन्। खट्वा। लटनृत्तौ। प्रणटति। लोपदेशपर्युदासेनाटीति सवृद्धिकनिर्देशेन नन्ट अवस्यन्दने इति चौरादिक
 स्येव ग्रहणात् इयं लोपदेश एव। हठदीप्तौ। हाटकं सुवर्णं। संज्ञायां चेति ण्वुल् बाहुलकाद् ह्रिस्वो हस्वो मर्पि। बट्टा। पचाद्यजन्तात् टाप्। सटा जटा केसरयोः। चिट सर्वधातुभ्य इति औणादि
 करन्। चेटिः। स्त्रादिकारादिति ङीष्। चेटी। विट्। इगुपधलक्षणः कः। विटः। इत्यादयौ निविष्टे ते कृत्ते णलि वृद्धौ सत्यामायादेशः। अभ्यासस्यासवर्णे इतीयङ्॥ ॥ इयत
 इयतुः इयुः इयविथ। इयेथ। इयाय। इयय। दीर्घस्य त्विजादेरित्याम् मिश्र याञ्चकारेत्यादि उदाहरन्ति॥ ३५॥ मडि भूषायाम्॥ ३६॥ कुडि
वैकल्ये। कुण्डति। कुण्डतइति तु दाहे गतं॥ ३७॥ मुट पुट मर्दने॥ ३८॥ चुडि अल्पीभावे॥ ३९॥ मुडि खण्डने। मुण्डति॥ ४०॥ पुडि चेत्येके।
पुण्डति॥ ४१॥ रुटि लुटि स्तेये। रुण्टति॥ ४२॥ लुण्टति॥ ४३॥ रुठि लुठि इत्येके॥ ४५॥ रुडि लुडीत्यपरे॥ ४७॥ स्फुटिर् विशरणे। इरित्वाद्वा
अस्फुटत्। अस्फोटीत्॥ ४८॥ स्फुटीत्यपि केचित्। इदित्वान्नुम्॥ स्फुण्टति॥ ४९॥ पठ व्यक्तायां वाचि। पेठतुः। पेठिथ। अपठीत्। अपाठीत्
॥ ५०॥ वठ स्थौल्ये। ववठतुः ववठिथ॥ ५१॥ मठ मदनिवासयोः॥ ५२॥ कठ कृच्छ्रजीवने॥ ५३॥ रट परिभाषणे॥ ५४॥ रठेत्येके॥ ५५॥ हठ प्लु
ति शठत्वयोः। बलात्कार इत्येके। जहाठ॥ ५६॥ रुठ लुठ उठ उपघाते। ओठति॥ ५८॥ ऊठेत्येके। ऊठति। ऊठाञ्चकार॥ ६०॥ पिठ हिंसासंक्लेशन
योः॥ ६२॥ शठ कैतवे च॥ ६३॥ शुठ प्रतिघाते। शोठति॥ ६३॥ शुठीति स्वामी। शुण्ठति॥ ६४॥ कुठि च। कुण्ठति॥ ६५॥ लुठि आलस्ये प्रतिघाते च॥ ६६॥
शुठि शोषणे॥ ६७॥ रुठि लुठि गतौ॥ ६९॥ चुड्ड भावकरणे। भावकरणमभिप्रायसूचनं। चुड्डति। चुचुड्ड॥ ७०॥ अड्ड अभियोगे। अड्डति। आनड्ड ७१॥
कड्ड कार्कश्ये। कड्डति ७२ चुड्डादयस्त्रयो दोपधाः तेन क्विपि चुत्। अत्। कत्। इत्यादि। क्रीडृ विहारे। चिक्रीड ७३ तुडृ तोडने। तोडति। तुतोड ७४॥
तुड्ड इत्येके ७५ हुडृ हूडृ होडृ गतौ। हुड्यात्। हूड्यात्। होड्यात्॥ ७८॥ रोडृ अनादरे ७९ रोडृ लोडृ उन्मादे ८० अड उद्यमे। अडति। आड। आडतुः आ
डुः ८२ लड विलासे। लडति ८३ लडयोरैक्यं श्लेषकत्वस्मरणे ललतीति स्वाम्यादयः। कड मदे। कडति ८४॥ कडि इत्येके। कण्डति॥ ८५॥
रिति। हिल्वेकृते णलि एकाचइति यणं बाधित्वा अन्तरंगत्वात् सवर्णदीर्घः। ततो अचि श्नु धात्विति इयङ् एकादेशस्य पूर्वान्तत्वेन अभ्यासग्रहणेन ग्रहणात्। अभ्यासस्यासवर्णे इत्य

नेनत्येके। केचित्तु वार्णादांगं बलीय इति दीर्घं बाधित्वा यण्। न चेह समानाश्रयत्वं नेति वाच्यं। अभ्यासोत्तरस्येकारस्य सवर्णदीर्घयणोः प्रतिस्थानित्वेन तयोः समानाश्रयत्वात्। अ
तएव इयतुरित्यत्र इणोयणिति यणि ततो दीर्घ इणः किती त्यभ्यासदीर्घो विधीयते। अन्यथा सूत्रमिदं निर्विषयं स्यात्। अभ्यासाभावादित्याहुः स्यादेतत्। णलथलोस्त्वभ्या
सस्य यङ् दुर्लभः। तस्मिन् कर्तव्ये अचः परस्मिन्निति वृद्धिगुणयोः स्थानिवद्भावेन असवर्णे इति प्रतिषेधादिति चेत्। मैवं। असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वस्याप्र
सक्तावसिसामर्थ्यं इयर्ति इयृत इत्यादौ सावकाशत्वादिति चेत् अत्राहुः॥ न ह्येकमुदाहरणं योगारंभं प्रयोजयति। अन्यथा ह्यभ्यासस्यानीविति ब्रूयात्। एवं चांतरंगत्वात्सवर्ण
दीर्घे कृते ततो वृद्धिगुणयोः सतोः णलि आय थलि एथ इइपसेतु अयिथेति स्यादित्यायुर्यं कापि न कार्या। अभ्यासस्यासवर्णे इत्यस्यवैयर्थ्यापत्तेरिति। एता। एष्यति। अकृत्स

गाडिवदनैकदेशो गणइति॥ ८६॥ इति टवर्गीयान्ताः॥ अथ पवर्गीयान्ताः। तत्रानुदात्तेतः। स्तोभन्यन्ताश्चतुस्त्रिंशत्। तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः
आद्यौ तुदात्तः क्षीरस्वामी त्वयं सेडिति वभ्राम। तेपते। तितिपे। क्षादिनियमादिट्। तितिपिषे। तेप्ता। तेप्स्यते। लिङ्सिचावात्मनेपदेषु॥ १।२।११॥
इक्समीपाद्धलः परौ झलादी लिङ्सिचावात्मनेपदपरौ कितौ स्तः। कित्वान्न गुणः। तिप्सीष्ट। तिप्सीयास्तां। तिप्सीरन्। लुङि। झलो झलीति सलो
पः। अतिप्त। अतिप्सातां। अतिप्सत। तेपते। तितेपे। तिष्टिपे। तिष्टिपाते। तिष्टिपिरे। तिष्टेपे। तिष्टेपाते। तिष्टेपिरे। तेपृ कम्पने च॥ ४॥ ग्लेपृ दैन्ये। ग्ले
पते॥ ५॥ टुवेपृ कम्पने। वेपते॥ ६॥ केपृ गेपृ ग्लेपृ च। चात्कम्पने गतौ च॥ ८॥ सूत्रविभागादिति स्वामी। मैत्रेयस्तु चकारमन्तरेण पठित्वा
कम्पने इत्यपेक्षतरस्माह। ग्लेपेरर्थभेदात्पुनः पाठः। मेपृ रेपृ लेपृ गतौ॥ ११॥ त्रपूष् लज्जायां। त्रपते॥ ॥ ११ वैति दीर्घः। ईयात्। ऐषीत्। कुडिवै
कल्यम विवेकः। तुडृ ऋ। तोडनं दारणं हिंसनं च। राडृ लाडृ ऋ। उन्मादश्चित्तविभ्रमः॥ ॥ गाडिवदनैकदेशो टवर्गीय प्रकरणादिह पाठस्तु उचितः। अंतस्थादिस्तु पंचैते
नेति इङ् विषया इति मतान्तरं बोधयितुं प्रसंगादुपन्यस्ताः। तिपृ तेपृ। लिङ्सिचावात्मनेपदेषु। इको झल् हलन्ताच्चेति वर्तते। असंयोगाल्लिट् कित् इत्यतः किदिति च तदाह। इक्समीप
दित्यादि। इकः किं। यक्षीष्ट। सति कित्वे संप्रसारणं स्यात्। आत्मनेपदे इति किं। अद्राक्षीत्। कित्वे तु सृजिदृशोर्झल्यमकिति इत्यमूर्न स्यात्। आत्मनेपदपरत्वं सिच एव विशेष
णं न तु लिङः। लिङः स्थानिकस्यात्मनेपदस्य लिङः परत्वासंभवात्। तेपृ कंपने च। चकारः क्षरणार्थस्य लाभादस्य पूर्वत्र पाठस्सुकुं शक्यः। केचित्तु तिपृ देपृ इति पठंति। टुवेपृ

सि.कौ. वेपथुः। के ए गे ए ग्लेप्र चा योगविभागात्पूर्वोत्तरार्थो चकारेणानुकृष्येते तदाह। चात्वं यत्वेन्नमौ चेति। योगविभागसामर्थ्यादेव अर्थद्वयलाभे चकारो व्यर्थ इत्यन्यो पुनः पाठइ

टी.त. ति दिन्योपपठितस्य कंपनाद्यर्थलाभार्थमिति भावः॥ ॥ तृफलभजत्रपश्च॥ ननु तृफलभजां अनेकहल्मध्यस्थत्वाभावाद्

उ.ति. माप्तेविधिरयं तेरतुः। तेरुः। फेलतुः। फेलुः। भेजतुः। भेजुः। अविशब्दो। अस्मात्पुरो श्व हल इति अम्प्रत्यये अंबा शब्दः। निरुक्तः अंबाः अकारोकारमकारात्मकाः शब्दा यस्य इति

३९ तृफलभजत्रपश्च॥ ६।४।१२२॥ एषामत एकारोऽभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च। त्रेपे। त्रेपाते। त्रेपिरे। तुदित्वाहिद्वा॥ त्रपिना त्रसा

त्रपिषीष्ट। त्रप्सीष्ट॥ १३॥ कपि चलने। कम्पते। चकम्पे॥ १७॥ रवि लवि अवि शब्दे। रम्बे। लम्बे। आनम्बे। लवि अवस्रंसने न॥ १९॥ कबृ व

र्णे। चकबे॥ २०॥ क्लीवृ अधार्ष्ट्ये। चिक्लीवे॥ २१॥ क्षीवृ मदे। क्षीवते॥ २२॥ शीभृ कत्थने। शीभते॥ २३॥ चीभृ च॥ २४॥ रेभृ शब्दे। रिरेभे॥ २५॥

अभि रभि क्वचित्पठ्येते। अम्भते॥ २६॥ रम्भते॥ २७॥ ष्टभि स्कभि प्रतिबन्धे। स्तम्भते। उत्तम्भते। उदःस्थास्तम्भोः इति पूर्वसवर्णः। विष्टम्भते।

स्तम्भेः इति षत्वं नु न भवति। सुविषेनिर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात्। तङ्कीम नुस्थास्तम्भोः इति पवर्गीयोपधपाठः। स्तन्भेः इति तवर्गीयो

पधपाठश्चेति माधवः। केचित्तु स्पटकारं औपदेशिकं इत्याहुः। तन्मते। ष्टम्भते। टष्टम्भे॥ २८॥ जभि जृभि गात्रविनामे॥ रधिजभोरचि॥ ७।१।

६१॥ एतयोर्नुमागमः स्यादचि। जम्भते। जज म्भे। जम्भिता। अजम्भिष्ट। जृम्भते। जजृम्भे॥ ३०॥ शल्भ कत्थने। शशल्भे॥ ३१॥ वल्भ भोजने

॥ त्वो ह्वादिः। ववल्भे॥ ३२॥ गल्भ धार्ष्ट्ये। गल्भते॥ ३३॥ श्रम्भु प्रमादे। तालव्यादिर्दन्त्यादिश्च। श्रम्भते। स्रम्भते॥ ३४॥ ष्टुभु स्तम्भे। स्तोभते॥

विष्टोभते। तुष्टुभे। व्यष्टोभिष्ट॥ ३५॥ अथ परस्मैपदिनः। गुपू रक्षणे। गुपूधूपविच्छिपणिपनिभ्य आयः॥ ३।१।२८॥ एभ्यः आयप्रत्ययः स्यात्स्वा

र्थे। ... वहुव्रीहौ ... भावेत्तिकप्रत्यये अंवक इत्येके। केचित्तु त्रीणि अंवकानि नेत्राणि यस्येति विगृह्णन्ति। अभि रभी इति। सर्वधातुभ्योऽसुन् इत्यधिकारे उदकेनुन

भौ ... जिव ... मा ... त्वात् धात्वंतरेणापि अंभः शब्दः सिध्यतीति बोध्यं। अंभस्तोयं। तस्यापसमाभिः भीष्मः। अंभसा लोपश्चेति वा हुरादिपाठादिज्ञिसलोपः। तङ्कीमं नु इति पूर्वसव

र्णप्रवृत्तेः षत्वाप्रवृत्ते श्च वीजमित्यर्थः। रधिजमोरचि। रंधयति। परापि इद्विनित्येन नुमा वाध्यते। अचीति किम्। रद्धा जब्धा॥

सनाद्यंता। सनादय इति। सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप्णिज्यङौ तथा। यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः। धातुत्वादिति। प्रत्ययविशिष्टस्य धातुत्वादित्यर्थः।
[illegible] अनेन संज्ञाविधौ प्रत्ययग्रहणे तदंतग्रहणं नास्तीति ज्ञापितत्वाद्विशिष्टस्य धातुसंज्ञालाभाय अस्मिन्सूत्रे अंतग्रहणं कृतं। भूवादयो धातव इत्यस्यानंतरं सनाद्यंता इत्येव
[illegible] सनादयो द्वादशैवेति निर्धारणलाभापत्तेः सनाद्यंता धातव इत्यस्यानंतरं तु भूवादयश्चेति पठित्वा धातव इत्येतत्तत्र न्यस्तुं शक्यं। आयादयः। आयेयङ् णिङ् इत्यर्थः। वि-
[illegible]मिति। परस्मैपदेषु आर्द्धधातुकोपदेशकाले यदिदं तमित्यनुपदं वक्ष्यमाणं न संगच्छेतेति भावः। अन्ये तु गुपूधूपविच्छिपणिपनिभ्य आय इत्यस्मात् निपश्चायति प्रत्यये गोपायति इ-
त्यनिष्टं प्रसज्येत विवक्षायामित्युक्तेः तु आयप्रत्यये कृते क्तिनं बाधित्वा अप्रत्ययादित्यकारप्रत्यये टापि च गोपाया धूपायेति सिध्यतीत्याहुः। कास्प्रत्ययात्। अमंत्रे इति किं। [illegible]
[illegible]वा अच्छांदसीति तु नोक्तं। मंत्रभिन्ने छंदसि आमदृष्टत्वात्। यथा पुत्रमामंत्रयामास। प्रत्ययांतत्वादाम्। अथाह शुनःशेप ईक्षांचक्रे। इजादेश्चेत्याम्। इह चुलुंपचका

सनाद्यन्ता धातवः। ३।१।३२॥ सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः। धातुत्वाल्लडादयः। गोपायति। आयादय आर्द्धधा-
तुके वा। ३।१।३१॥ आर्द्धधातुकविवक्षायामायादयो वा स्युः। कास्प्रत्ययादाममन्त्रे लिटि। ३।१।३५॥ कास्धातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि न
तु मन्त्रे। कास्यनेकाज्ग्रहणं कर्तव्यम्। सूत्रे प्रत्ययग्रहणमपनीयतत्स्थाने अनेकाच इति वाच्यमित्यर्थः। अतो लोपः। ६।४।४८॥ आर्द्धधातुकोप-
देशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्द्धधातुके परे।

स्तरिद्रादिभ्य आमो अप्राप्तौ कास्यनेकाजिति वार्तिकमारभ्यते। प्रत्ययग्रहणमपनीयेति। अन्यथा अटुवआचरति अतिअत्यलिटि ओअतुरित्यादिवक्ष्यमाणं न सिध्येदिति भा-
वः। अन्ये तु भाष्यवार्तिकयोः प्रत्ययग्रहणमपनीयेत्यनुक्तत्वात् इकाचोऽप्याम भवत्येव। अटवाचरति इत्याचारक्विपि लिटि ओचकार ओचकतुरित्यादीन्याहुः। अतो लो-
पः। अनुदात्तोपदेशेति सूत्रादुपदेश इत्यनुवर्तते तदाह। आर्द्धधातुकोपदेशे इत्यादि उपदेशेति किं। अयययगता। भाभ्यां क्विपि वेरपृक्तलोपाद्धल्लोपः पूर्वविप्रतिषेधेनेति
वार्तिकाल्लोपो व्योरिति यलोपे अतो लो। इति लोपो मा भूत्। अतयना इह ह्रस्वस्य पितीति तुक्। आर्द्धधातुके परे इति किं। कथयति। दृढीकर्तव्यायां अचः परस्मिन्निति स्था

स्तुनावेवेति। भट्टिस्तु व्यवहारेऽपि प्रायुंक्त। न चोपलेभे वणिजां पणायामिति। वणिजां व्यवहारमित्यर्थः। अप्रत्यया इति आयप्रत्ययान्तात् इकारप्रत्यये टाप्। चकंसे स्त्रिया २६
अनुनासिकस्य क्विझलोः क्ङितीति उपधादीर्घो न कृतः संज्ञापूर्वकविधेरनित्यत्वादिति स्थितस्य गतिर्नुत्रस्य यन्ति॥ कमु कान्तौ॥ अस्य णिङ्भावे उदित्त्वाद्वेति क्त्वायामिड्विक
ल्पः। कमित्वा। कान्त्वा। निष्ठायां तु यस्य विभाषेति निषेधात् कान्तः। अयामन्त॥ नामन्तेति सूत्रेण णेरनिटीति वक्ष्यमाणलोपस्य निषेधे गुणायादेशयोः सतोः कामयं
स्तुनावित्येव सम्बध्यते एवञ्च इह शात्। पनिसाहचर्यात् लोरपि स्तुनावेवायप्रत्ययः। व्यवहारे तु। पणते। पेणे। पणितेत्यादि। स्तुनावनु
बन्धस्य केवलेऽचरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदं। पणायति। पणायाञ्चकार। पेणे। पणायितासि। पणितासे। पणाय्या ताऽपणि
षीष्ट। पनायति। पनायाञ्चकार। पेने। ७ भाम क्रोधे। भामते। बभामे॥ ८॥ क्षमूष् सहने। क्षमते। चक्षमे। चक्षमिषे। चक्षंसे। चक्षमिध्वे॥ च
क्षमिवहे। म्वोश्च। ८।२।६५॥ मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे। णत्वं। चक्षण्वहे। चक्षमिमहे। चक्षण्महे। क्षमि
ष्यते। क्षंस्यते। क्षमेत। आशिषि। क्षमिषीष्ट। क्षंसीष्ट। अक्षमिष्ट। अक्षंस्त॥ ९॥ कमु कान्तौ। कान्तिरिच्छा। कमेर्णिङ्। ३।१।३०॥ स्वार्थे॥
ङित्वात्तङ्। कामयते। अयामन्ताल्वाय्येत्न्विष्णुषु॥ ६।४।५५॥ आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात्। वक्ष्यमाणणिलोपा
पवादः। कामयाञ्चक्रे। आयादय आर्द्धधातुके वा। चकमे। कामयिता। कमिता। कामयिष्यते। कमिष्यते। णिश्रिद्रुस्रुभ्यः कर्तरि चङ्
।३।१।४८॥ ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे। काम् इ अ ते इति स्थिते। णेरनिटि। ६।४।५१॥ अनिडादावार्द्धधातु
के परे णेर्लोपः स्यात्। परत्वादेरनेकाच इति यणि प्राप्ते। एयच्लोपादियङ्। यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति वार्त्तिकम्। णिलोप
स्य तु पाचयतेः पाक्तिरित्यादिः क्तिजन्तमवकाश इति भावः। वस्तुतस्तु विदीतिवचनसामर्थ्यादार्द्धधातुकमात्रमस्य विषयः। तथा चेयङ
देरपवाद एवायमियङ्। अतनस्त। णि। आरि टता। गुणः कारणं। वृद्धिः कारकः। दीर्घः कण्यते॥

१८ चक्रे इत्यादिरूपाणि सिध्यन्त्येव तथा
पि ल्यपि लघुपूर्वादित्येवमर्थमयादेशवचनं। प्रशमय्य। संगमय्य। न त्वत्र गुणायादेशौ लभ्येते। आम। कारयामास। गण्डयन्तो मण्डयन्तः। मृ भूवहिवसिसाधिगडिमंडि

जिनं दिभ्यश्चेत्यौणादिको यच् । य्योऽन्तः । स्पृहिगृहीत्यालुच् । स्पृहयालुः । श्रुदक्षिस्पृहिगृहिभ्य इत्यौणादिक आय्यः । स्पृहयाय्यः । स्तनित्नुविपुषी त्यौणादिक एव इत्नुच् । स्तनयि
त्नुः । णेश्छन्दसीति इष्णुच् । वीरुधः । पारयिष्णवः । णिश्रिद्रुस्रुभ्यः इति चोपवादः । णेरनिटि । णेरिति निर्लिङ्गग्रहणम् । एवमन्यत्रापि बोध्यं । अनिटीत्यनेनाधिकृतमार्धधातुकमि
त्येतद्विशेष्यते । यस्मिन्विधिरिति तदादिविधिः । अतो लोप इत्यस्माल्लोप इति चानुवर्तते तदाह । अनिडादावित्यादि । यणो मा भूदिति । ननु परत्वादियङ्यणादिविषये यथा
संभवमसंज्ञानामसेवुस्थानिवद्भावाण्णिग्रहणेन ग्रहणाण्णेर्लोपो भविष्यतीति चेत् नैवं शंक्यं । इयङादेशे सत्यलोपः प्रसज्येतेति दोषः स्यात् । एतच्च अतो लोप इति सूत्रे भा
ष्ये स्थितं । न चात्र कारणोकारकरणे दीर्घगुणवृद्ध्योः कृतयोरन्तरंगत्वाद् याऽऽयादेशयोः कृतयोरन्तस्य लोपः प्राप्नोतीति कथमियङादेश एव दोष उक्त इति शंक्यं । वा
र्णादांगं बलीय इत्ययाऽऽयौ बाधित्वा णिलोपो भविष्यतीति भाष्यप्राशयात् । एयल्लोपाविति । णिलोप इयङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन । अल्लोपस्तु

णौ चङ्युपधाया ह्रस्वः । ७।४।१ ॥ चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् । चङि । ६।१।११ ॥ चङि परे अनभ्यासस्य धात्ववयवस्यैका
चः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य । सन्वल्लघुनि चङ्परेऽनग्लोपे । ७।४।९३ ॥ चङ्परे इति बहुव्रीहिः । स चाङ्गस्येति चद्वयमप्यावर्तते
अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् तत्परं यल्लघु तत्परो योऽङ्गस्याऽभ्यासस्तस्य सनीव कार्यं स्यात् । णावग्लोपेऽसति । अथवा ।
ङ्गस्येति नावर्तते । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्याद्यागवत् ॥ ॥ (( वृद्धिदीर्घाभ्यामिति विवेकः । णिलोपस्य निष

ध्यत्वेन वार्तिकस्योक्तिसंभव एव नास्तीत्यत आह । पाक्तिरित्यादि । क्तिजन्तमिति । तत्रेति तु त्रैतीऽप्रिषेधादिति भावः । वचनसामर्थ्यादिति ॥ अयं भावः । णेरनिटी
त्यं सूत्रेऽनेनार्धधातुक इत्यनुवृत्त्या आर्धधातुके परतः प्रवर्तमानो णिलोपः इयङ्यणादिभिर्बाधितः सन् परिशेषात् क्तिच्येव स्यादित्यनिटीत्यस्य वैयर्थ्यं प्रसज्येत
चानिडार्धधातुकं सर्वमप्यस्य विषयो न तु क्तिजन्तमेवेति । अयमिति । णिलोप इत्यर्थः । अल्लोपांशे तु वचनमपेक्षितमेव । तेन चिकीर्षक इत्यत्र वृद्धिः चिकीर्ष्या ३३
दित्यत्र अकृत्सार्वेति दीर्घं बाधित्वा पूर्वविप्रतिषेधेनातो लोप इति लोपो भवतीत्याहुः ॥ ॥ णौ चङ्युपधाया ह्रस्वः । उपधायाः किं । अचकाङ्क्षत् । सन्वल्लघुनि । चङ्प
र इत्येतावतैव णिरिति न लभ्यते । श्विदुद्रुवामपि चङ्परत्वादत आह । अंगसंज्ञानिमित्तमिति । अंगस्याभ्यास इति । अंगस्य यद्द्वे विहिते तयोः पूर्वोऽभ्यास इत्यर्थः । अंगसे

तिनानुवर्तत इति। अस्मिंस्तु व्याख्याने चङ्परस्तेनाव नैव णिरिति लभ्यते श्विदुस्तुपरे णुअंगत्वासंभवादतो व्याचष्टे॥ चङ्परे णौ यदंगमिति। चङ्परत्वस्यैव व्याख्यानं लघ्वविति
तेयं। अनग्लोपे किं। अचकथत्॥ ॥ सन्यतः। अत्र लोपोऽभ्यासस्येत्यतोऽभ्यासस्येति मृगामिरित्यत इद्ग्रहणं चानुवर्तततदाह। अभ्यासस्येत्यादि। तपरकरणं किं। पाप
ठिसन्। पापचिषते। नन्च सनि योऽभ्यासः सन्निमित्त इति विज्ञानात्तपरकरणाभावेपि नोक्तातिप्रसंगः। अभ्यासस्येहयङ्निमित्तत्वादिति वाच्यं। तादृशविवक्षायां मधीषिष
तीत्यादावव्याप्तेः नहि कार्यनिमित्तत्वेनाश्रीयते यद्याश्रीयेत तर्हि द्विर्वचनेचीति निषेधेनारिसुश्वस्य द्वित्वाप्रवृत्तावरिरिषतीत्यादि न सिध्येत्। नन्वेवं पिपक्षतीत्यास
वव्याप्तिः अभ्यासस्य सन्परत्वाभावात्। नच येन नाव्यवधानन्यायेन सन्परत्वमस्त्यव्यवहितेऽप्यभ्यासस्येत्वं स्यादेवेति वाच्यं। प्रतीषिषतीत्यादावभ्यासस्याव्यवहितसन्परत्वसंभवादु
क्तन्यायस्याप्रवृत्तिरिति चेदत्राहुः सनो धातुमाक्षिप्य सनि सति यो धातुः सन्नन्तस्तदीयाभ्यासस्येति व्याख्यानेनोक्तदोषः क्व सनि परे अभ्यासस्येति यथाश्रुतं परित्यज्योक्तव्याख्या

सन्यतः। ७।४।७९॥ अभ्यासस्यात इकारः स्यात्सनि। दीर्घो लघोः। ७।४।९४॥ लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये। अचीकमत। णि
ङभावपक्षे कामेश्च द्वे स्वङ् क्तव्यः॥ णेरभावान्न दीर्घसन्वद्भावौ। अचकमत। संज्ञायाः कार्यकालत्वादङ् यत्र द्विरुच्यते तत्रैव दीर्घः सन्व
द्वचनानेकाल्त्वित् माधवः। चकास्त्यर्थोपयत्नूर्गोत्यादौ नाङ् द्विरुच्यते। किन्त्वस्यावयवः कश्चित्तस्मादेकाज्द्विरुच्यम्॥ ॥

ने किं मानमिति वाच्यं। तपरकरणस्यैव तत्र मानत्वात्। किंच अकारग्रहणमपि तत्र मानं। अन्यथा सनीत्येव ब्रूयात्। तावता च धीषिषतीत्यादावित्वप्रवृत्तिसिद्धेरिति। दीर्घो ल
घोः लघोरभ्यासस्येति। ननु अज्झलसमुदायस्याभ्यासस्य लघुसंज्ञा दुर्लभा ह्रस्वं लघ्विति निर्दिष्ट त्वात्। नैष दोषः। इहहि न समानाधिकरणे षष्ठ्यौ॥ किंतु व्यधिकरणे तथा
चाभ्यासावयवस्य लघोर्दीर्घ इत्यर्थः॥ लघुनि चङ्परे णौ नग्लोप इति सर्वमिहानुवर्तते। तच्च प्रागिवदेवहेधा व्याख्येयं तदाह। सन्वद्भावविषय इति। हलादेरिति प्राचोक्तमि
होपेक्षितं निष्प्रमाणत्वात्। नहि मुनित्रयोक्तिं विना हलादेरिति व्याख्यातुमुचितं। नचैवं औणिदत् आटिटदित्यादौ दीर्घः स्यादिति शंक्यं। अंगलघ्वोरुभयोरपि णि
चं प्रति विशेष्यत्वे दीर्घस्य तत्राप्राप्तेः। चङ्परे हि यदंगं उ इति न तदीयोऽभ्यासो न वा चङ्परणिच्यरं यल्लघु तत्परः। एतेन आटिटदित्यादिभाष्योदाहरणमेव हलादेरि
ति व्याख्याने प्रमाणमिति केषांचिदुक्तिरपास्ता। दीर्घप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात्। लघोः किं गुहिंसायां॥ अचिक्षणत्। शास्त्रे अस्मिन्कार्यकाले संज्ञापरिभा

वेनं निषेधेन वानुशब्दस्य द्वित्वे सति अभ्यासे अवर्णभावादिति भावः। अर्थापयताविति। अर्थमाचष्टे इत्यर्थात्णिच्यापुगागमे च तत अश्वेन श्व डि दीर्घस्य सन्वदित्त्वस्य च प्रवृत्तौ आ
दीर्घयदित्संव भवतीति भावः। अर्थ उपधा ह्रस्वायामित्यस्य तु चङ्परे णौ आर्तिथपने तिभवति न तु तत्र दीर्घसन्वद्भावयोः प्रवृत्तिरिति चुरादौ स्फुटीभविष्यति। उभयमिति। दीर्घः सन्व
दित्त्वं तद्द्वयमित्यर्थः। नस्यात्स्याच्च व्यवस्थयेति। चङ्परे णौ यद्व्यवस्थितिव्याख्यानेन स्यात् चङ्परे णौ यदंगमिति व्याख्यानेन तं स्यात्। एवं च अचचकासत्। अचीचकासदिति
व्याख्याभेदेन रूपद्वयमित्यर्थः। ननु यथा चङ्परे णौ यद्व्यवस्थितिव्याख्याने येन नाव्यवधानन्यायेन अपीपचदित्यादावेव उभयं भवति न त्वनेकव्यवाये अचचकासदित्यादिन
स्तान्यायसाम्येन लघुनि यो अभ्यास इत्यत्राप्येकेनैव व्यवायस्य स्वीकार्यत्वादचिकसणदित्यादौ सन्वदित्त्वं न स्यादिति चेदत्राहुः अत्स्मृदृत्वर त्वरत्वायवादेन अत्ववचनेन तुल्या
ग्लौ यापे सोपणसंयोगस्य व्यवधानेऽपि ह्रस्वस्य ज्ञापितत्वान्नोक्तदोषः। अत एव दीर्घो लघोरिति सूत्रे लघोरिति सार्थकं माधवोऽपि जागृधातावित्थमेवाह। एवं च वरन्यथोद्देश्यपक्षमे
वाश्रित्य श्रियतां। तथा च ऊर्णुधातौ प्रोक्ते नोक्तं और्णुनवदित्यत्र दीर्घो लघोरित्यभ्यासस्य दीर्घो न भवति चङ्परे णौ यदंगं तस्य योऽभ्यास इति सूत्रार्थात्। अत्र तु अंगावयवाभ्यासो न
त्वंगस्येत्यादि। तत्र तस्यापि आग्रहो नास्तीति गम्यते अत एव चकासावचीचकासदित्युदाजहार। तथा च मतभेदाभिप्रायेण पूर्वापरग्रन्थविरोधः समाधेय इति। कातंत्रप
रिशिष्टेत्वित्वदीर्घयोः अजीजागरदित्युदाहृतं। तन्मतद्वयेऽप्यसंभवादुपेक्ष्यं। व्यवस्थामेव विवृणोति। णेरिति। सन्निहितमिति हेतुगर्भं विशेषणं लघुनीत्येतत्लोर्विशे
ष्यं भवति सन्निहितत्वादित्यर्थः। अंगमेवेति। अस्य चङ्परे इत्यत्र आदेशरूपचङः श्रौ आकांक्षाभावेऽपि णिविति मन्ययांशे उपस्थितान्वासत्वादिति हेतुः स्पष्ट एवेति भावः। कै
यटेनैवेति। तथा च एकं हरदत्तमतं अपरं तु कैयटमतमिति विषयविभागेन व्याचक्षाणा उपेक्ष्या इति भावः। चङ्परन्यावर्त्यं अग्लोपविशेषणं तथापि योजितं तस्य फलमा
ह णेरिति। शिद्वस्तु परतो अग्लोपित्वासंभवादिहापि चङ्पर इत्येतावतैव णाविति लभ्यत इति बोध्यं। अगितामपीति। पचिकमिशाकिप्रभृतीनामित्यर्थः। न हीत्वं ह्रस्वानां लो
पोणिचं प्रतीक्ष्यत इति भावः। नोपदेशफलमिति। अनुस्वार इत्यर्थः॥

दं भ्रंनीति। नुगतोनुनासिकांतस्येत्यभ्यासस्यनुक्। गत्यादिष्विति गतिशब्दसंभक्तिष्वित्यर्थः। मीमृ। ऋदित्फलं तु नाग्लोपीति निषेधः। अमिमीमत्। ष्टिवुक्लमु। ष्ठीवति। क्लाम्यति। आङि चमइति। ष्टिवुक्लमुआचमामितिहृन्निकारोक्तपाठोऽयुक्तइतिभावः। जिमिं केचिदिति। तथा च जेमनं मिलि भुञ्जनेप्रयुंजते। वाभ्राश। उभयत्रविभाषेयं। अनवस्थामात्रो भ्रमिः क्लमित्रसी च दिवादयस्तेभ्यो नित्यं प्राप्तेइतरेषाम प्राप्ते चारंभात् भ्राशृभ्लाशृ दीप्तौ। फणादयवितौ। भ्रमु चलने भ्रमादिः। चलादिः। फणादिरपि मनोरमायां पठ्यतेतद्र

दंप्रतिा॥१६॥ वलोत्यपि केचित्। वेणतुः। वेलिथ। कनीदीप्तिकान्तिगतिषु। चकान॥१७॥ ष्टनवनशब्दे। स्तनति। वनति॥१८॥ वनषणसंभक्तौ। वनेस्त्वर्थभेदात्पुनः पाठः। सनति। ससान। सेनतुः। येविभाषा। ६।४।४३॥ जनसनखनामात्वंवास्याद्यादौक्ङिति। सायात्। सन्यात्॥१९॥ अमगत्यादिषु। कनीदीप्तिकान्तिगतीत्यत्रगतेःपरयोःशब्दसंभक्त्योरादिशब्देनसंग्रहः। अमति। आम॥२०॥ द्रमहम्ममीमृगतौ। द्रमति। दद्राम। ह्म्यन्तेतिनवृद्धिः। अद्रमीत्। हम्मति। जहम्म। मीमति। मिमीम॥२१॥ अयंशब्देच। चमुछमुजमुझमुअदने। ष्टिवुक्लमुचमां शितिा ७।३।७५। एषामचोदीर्घःस्याच्छिति। आङिचमइतिवक्तव्यम्॥ आचामति। आङिकिं। चमति। विचमति। अचमीत्॥२२॥ जिमि केचित्पठन्ति। जेमति। क्रमुपादविक्षेपे। वाभ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः। ३।१।७०॥ एभ्यःश्यन्वास्यात्कर्त्रर्थेसार्वधातुकेपरे। क्रमः परस्मैपदेषु। ७।३।७६॥ क्रमेर्दीर्घःस्यात्परस्मैपदेपरेशिति। क्राम्यति। क्रामति। चक्राम। क्राम्यतु। क्रामतु॥ ॥

मादितिनव्याः। भ्रमुअनवस्थाने। दिवादिःपुषादिः। शमादिस्तत्रभ्वादेःभ्रम्यति। भ्रमति। शमादेस्तुश्यनिदीर्घेभ्राम्यतीतित्रैरूप्यं। क्लमुग्लानौ। त्रसीउद्वेगे। त्रुटच्छेदने। लष कान्तौ। क्रमः। ष्टिवुक्लमुचमामित्यतोऽनुवर्तनादाह। परस्मैपदेशितीति। परस्मैपदेकिं। उपक्रमते। पराक्रमते॥

स्नुक्रमो। अनात्मनेपदनिमित्ते इति। आत्मनेपदानिमित्ताभाव इत्यर्थः। अन्ये तु द्विवचनस्थाने व्यत्ययेन एकवचनं अनात्मनेपदनिमित्तयोरित्यर्थ इत्याहुः। उभयोरपि भावे कर्मकी
र्ष्यति हा। रालङ् निमित्तं क्रमेस्तु इति सर्गादयो पीति वोध्यं। स्नुक्रमोः इडात्वादिति सिद्धे नियमार्थोयमित्याह। अत्रैवेडिति। अनात्मनेपदे इति किं। उपस्नोष्यते जलेन। अप्रक्रं
स्य... आक्रंस्यते। निमित्त इति किं। स्नोनीति स्नविता। स इवाचरति स्नविश्रीयते इहक्यङ् आत्मनेपदनिमित्तं न तु स्नौ निरित्याहुः। लुङ्लिटोर्घस्येति। लिटि। लिलिहिढ्वे। लि

स्नुक्रमोरनात्मनेपदनिमित्ते। ७।२।३६॥ अत्रैवेट्। अक्रमीत्॥ ३॥ अथ रेवत्यन्ता अनुदात्तेतः। अय वय पय मय चय तय णय गतौ अयते॥
दयायासश्च। ३।१।३७॥ दय अय आस एभ्य आम् स्याल्लिटि। अयांचक्रे। अयेत। अयिषीष्ट। विभाषेटः। ८।३।७९॥ इणः परो य इट् ततः
परेषां षीध्वंलुङ्लिटां धस्य वा मूर्द्धन्यादेशः स्यात्। अयिषीढ्वम्। अयिषीध्वम्। आयिष्ट। आयिढ्वम्। आयिध्वम्। उपसर्गस्यायतौ। ८।२।१९॥ अयति
परस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते। पलायते। निस्दुसोरुत्वस्यासिद्धत्वान्न लत्वम्। निरयते। दुरयते। निर्दुरोस्तु निलयते।
दुलयते। प्रत्यय इति त्विलोरूपम्। अथ कथमुदयति विततोर्ध्वरश्मिरज्जाविति माघः। इटकिटकटी इत्यत्र प्रश्लिष्टस्य भविष्यति। यद्वा
अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम्। चक्षिङो ङित्करणात् ज्ञापकात्। वादित्वात्। ववये। पेये। मेये। चेये। तेये। प्रणयते। नेयो॥ दय
दानगतिरक्षणहिंसादानेषु। आदानं ग्रहणं। दयांचक्रे॥८॥ रय गतौ॥९॥ ऊयी तन्तुसन्ताने। ऊयांचक्रे॥१०॥ पूयी विशरणे दुर्गन्धे च
चा पूयते। पुपूये॥११॥ क्नूयी शब्दे उन्दे च। चुक्नूये॥१२॥ क्ष्मायी विधूनने च। चक्ष्माये॥१३॥ स्फायी ओप्यायी वृद्धौ। स्फायते। पस्फाये। प्याय
ते। लिड्यङोश्च। ६।१।२९॥ लिटि यङि च प्यायः पीभावः स्यात्। पुनः प्रसङ्गविज्ञानात् द्वित्वं। एरनेकाच इति यण्। पिप्ये। पिप्याते।
पिप्यिरे। दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्। ३।१।६१॥ एभ्यश्च्लेश्चिण्वा स्यात् एकवचने तशब्दे परे॥

लिलिहिढ्वे। अथ कथमिति। शानचाभाव्यमिति शंकितुराशयः। क्नूयी शब्दे उन्दे च। उन्दः क्लेदनं। लिड्यङोश्च। याङि पेपीयते। दीपजना। दीपी दीप्तौ। जनी प्रादुर्भावे। बुध अवगम
ने। पूरी आप्यायने। एते दिवादयः॥ ॥

चिणोलुक्। परस्य लुक्स्यादिति। तशब्दस्येति केश्चित्पठ्यते। तदार्थिकार्थकथनाय। तशब्दे परतः चिणि विहिते चिणः परस्य जायमानो लुक्प्रत्ययस्य लुक्श्लुलुप इति वचनात्तशब्दस्यैवेति स्पष्टत्वात्। अयमिति। षेट्धातुः। भाष्यविरुद्धमिति। यदि सोपदेशः स्यात्तर्हि शस्यायतिरिवायमपि षोपदेशलक्षणोपर्युदस्येत तदकरणान्नायं सोपदेश इति भावः। प्रवगताविति। केचित्तु ष्ठिवेति धात्वंतरमित्याहुः। तद्धि मनोरमायां दूषितं। ष्ठिवेति धात्वंतरत्वे विभाषाष्ठिवुसिवोरित्यत्र ष्ठिवः पक्षे घञ्विधानं व्यर्थं स्यात्। ष्ठिवेत्येतस्माद्घञि आष्ठाव शब्दस्य सिद्धत्वात्। तथा स्रवतिशृणोतीति सूत्रे ष्ठिवतेरभ्यासोकारस्य इत्वविधानमपि व्यर्थं स्यात्। तद्धि पक्षे अपि ष्ठिवदिति रूपसिध्यर्थं क्रियते।

चिणोलुक्। ६।४।१०४॥ चिणः परस्य लुक् स्यात्। अप्यायि। अप्यायिष्ट॥ १५॥ तायृ सन्तानपालनयोः। सन्तानः प्रबन्धः। तायते। नतायि। अतायि। अतायिष्ट॥ १६॥ शल चलनसंवरणयोः॥ १७॥ वल वल्ल संवरणे सञ्चरणे च। ववले। ववल्ले॥ १८॥ मल मल्ल धारणे। मेले। ममल्ले॥ २०॥ भल भल्ल परिभाषणहिंसादानेषु। बभले। बभल्ले॥ २३॥ कल शब्दसंख्यानयोः। कलते। चकले॥ २४॥ कल्ल अव्यक्ते शब्दे। कल्लते॥ २५॥ अशब्द इति स्वामी। अशब्दस्तूष्णींभाव इति च। तेवृ देवृ देवने। तितेवे। दिदेवे॥ २७॥ षेवृ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ सेवने। परिनिविभ्य इति षत्वम्। परिषेवते। सिषेवे। अयं सोपदेश एवेति न्यासकारादयः। तद्भाष्यविरुद्धं। गेवते। जिगेवे। जिग्लेवे। पिपेवे। मेवते। म्लेवते॥ ३३॥ शेवृ खेवृ केवृ इत्यप्येके। ३६॥ रेवृ प्लवगतौ। प्लवगतिः प्लुतगतिः। रेवते॥ ३७॥ अथावसन्ताः परस्मैपदिनः। मव्य बन्धने। ममव्य॥ १॥ सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः॥ ४॥ हय गतौ। अहयीत्। यान्तत्वान्न वृद्धिः॥ ५॥ शुच्य अभिषवे। अवयवानां शिथिलीकरणं सुरायाः सन्धानं वा। अभिषवः स्नानं वा। शुशुच्य॥ ६॥ चुच्य इत्येके॥ ७॥ हर्य गतिकान्त्योः। जहर्य॥ ८॥ अलभूषणपर्याप्तिवारणेषु। अलति। आल॥

१९ तच्च रूपं ष्ठिवधातोः सन्यतरस्यनेनसिद्धमिति चिन्त्यं तदुपादानेनेति। ममव्येति। यस्य हल इति लोपस्तु न भवति यस्येति संघातग्रहणमिति सिद्धांतितत्वात्। वर्णग्रहणे त्वर्थग्रहणपरिभाषया अप्रवृत्त्या पुत्रकाम्यत्यादावपि लोपः स्यादिति दिक्। लुङि। मामव्यीत्। आशिषि। मव्यात्। हलोयमामिति धातुयकारस्य लोपः। सूर्क्ष्ये ईर्क्ष्यां णलि। सुसूर्क्ष्य॥ ईर्क्ष्यांचकार। ईर्ष्यांचकार। एभ्यः क्विपि लोपोव्योरिति लोपे स्कोरिति कलोपे जश्त्वचर्त्वयोः। सूर्ट्। ईर्ट्। संयोगांतलोपस्त्विह न भवति। रात्सस्येति नियमात्। सूर्क्ष्य आदर इति वक्ष्यते। तस्यापि सूर्ट् इत्येव रूपं। हय गतौ।

जहायाहय्याना। शिथिलीकरणमिति। सोममभिषुणोनीत्यादौ दर्शनात। सुराया इति। तत्करणे संधा स्यादभिषवस्य मरोक्तः॥ ॥ अतो लरान्तस्य। यघवयव वचनेनातस्

अतो ल्रान्तस्य॥ ७।२।२॥ लेति लुप्तषष्ठीकम्। अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात्परस्मैपदपरे सिचि। नेटीति निषेधस्या
तो हलादेरिति विकल्पस्य चापवादः। मा भवानालीत्। अयं स्वरितेदित्येके। तन्मते अलत इत्याद्यपि॥ ८॥ त्रिफला विशरणे। तृफले सत्वम्॥
फेलतुः फेलुः। अफालीत्॥ १०॥ मील स्मील क्ष्मील श्मील निमेषणे। निमेषणं संकोचः। द्वितीयस्तालव्यादिः। तृतीयो दन्त्यादिः॥ १४॥ पील प्रति
ष्टम्भे। प्रतिष्टम्भो रोधनम्॥ १५॥ नील वर्णे। निनील॥ १६॥ शील समाधौ। शीलति॥ १७॥ कील बन्धने॥ १८॥ कूल आवरणे॥ १९॥ शूल रुजायां सङ्घो
षे च॥ २०॥ तूल निष्कर्षे। निष्कर्षो निष्कोषणं। तच्चान्तर्गतस्य बहिर्निःसारणं। तुतूल॥ २१॥ पूल सङ्घाते॥ २२॥ मूल प्रतिष्ठायाम्॥ २३॥ फल नि
ष्पत्तौ। फेलतुः। फेलुः॥ २४॥ चुल्ल भावकरणे। भावकरणमभिप्रायाविष्कारः॥ २५॥ फुल्ल विकसने॥ २६॥ चिल्ल शैथिल्ये। भावकरणे च॥ २७॥
तिल गतौ। तेलति॥ २८॥ तिल्लेत्येके। तिल्लति॥ २९॥ वेलृ चेलृ केलृ खेलृ क्ष्वेलृ वेल्ल चलने। पञ्चम ऋदितः षष्ठो लोपधः॥ ३५॥ पेलृ फेलृ शेलृ गतौ
३८॥ षेलृ इत्येके॥ ३९॥ स्खल सञ्चलने। चस्खाल। अस्खालीत्॥ ४०॥ खल सञ्चये॥ ४१॥ गल अदने। गलति। अगालीत्॥ ४२॥ षल गतौ। सलति
४३॥ दल विशरणे॥ ४४॥ श्वल श्वल्ल आशुगमने। शश्वाल। अश्वालीत्। शश्वल्ल। अश्वल्लीत्॥ ४६॥ खोलृ खोरृ गतिप्रतिघाते। खोलति।
खोरति॥ ४८॥ धोरृ गतिचातुर्ये। धोरति॥ ४९॥ त्सर छद्मगतौ। तत्सार। अत्सारीत्॥ ५०॥ क्मर हूर्छने। चक्मार॥ ५१॥ अभ्र वभ्र मभ्र चर गत्यर्थाः
चरतिर्भक्षणेऽपि। अभ्रति। आनभ्र। मा भवानभ्रीत्। अङ्गान्तरे कस्यातः समीपत्वाभावान्न वृद्धिः॥ ५५॥ ष्ठिवु निरसने। ष्ठिवुक्लमु चेति दीर्घः। ष्ठीवति
अस्य द्वितीयस्य थकारष्ठकारो वेति वृत्तिः। तिष्ठेव। तिष्ठिवतुः। तिष्ठिवुः। टिष्ठेव। टिष्ठिवतुः। टिष्ठिवुः। हलि चेति दीर्घः। ष्ठीव्यात्॥ ५६॥ जि जये। अयम
जन्ते सुपठितुं युक्तः। जय उत्कर्षप्राप्तिः। अकर्मकोऽयम्। जयति। ॥ ११ व्देनबहुव्रीहिरिणं चान्यपदार्थस्तस्य विशेषणेन तदन्तविधेः सिद्धत्वाद

तद्ग्रहणमनर्थकं। अश्वल्लीदित्यत्रातिव्याप्तिश्च। समीपवाचिनाऽन्तशब्देन षष्ठीसमासपक्षे परिलिशष्ठप्रभृतिष्वतिव्याप्तिः॥

अंगस्यातः लरोः समीपत्वात् तत्वं च तदंतश्चेति समीपवाचिनांतशब्देन कर्मधारयपक्षे त्वंतशब्दस्य विशेषणत्वात् पूर्वनिपातः स्यादत आह। लुप्तषष्ठीकमिति अंतः
सि·कौ· शब्दः समीपवाची त्वभिप्रेत्याह अतः समीपाविति अतो वृद्धिः स्यादिति इह अवद्रन्यस्यतेत्राद्यन्यादिकं स्वीकर्तव्यं। अन्यथा मयो॥ ॥ ॥
टी·म· जनाभावादिकपरिभाषानुपस्थानेप्यल्लोंत्यपरिभाषया अंत्यस्य स्यादिति भावः। यद्यपि अतो लरस्येत्युक्तेपि लरांतस्यांगस्य अतः सिचि परे वृद्धिरित्यर्थे स्वीकृते येन नाव्य
ति·उ· वधानन्यायेनेष्टं सिध्यति तथाप्यंगस्य सिचि परे अतो वृद्धिरित्यर्थोपि प्रतीयेतात तश्चाश्ववल्गीदित्यत्रातिप्रसंगः स्यात् तद्वारणाय सूत्रे अंतग्रहणं कृतमिति। तदनुरोधेनां
३७ तशब्दस्य समीपवाचित्वमतरस्य चानुवृत्तिः स्वीकृतेति बोध्यं। अतः समीपाविति किं। अखोरीत्। अमीलीत्। लांतस्यांगस्य किं। ष्वल्क आशुगमने। अष्वल्कीत्। अत्र।
अकारसमीपो यो लकारः स नांगस्यांतः पत्स्वंगस्यांतः सतु नाकारसमीपः। ननु लेत्यस्य लुप्तषष्ठीकत्वाभ्युपगमेप्यंतशब्दस्यावयववाचित्वं स्वीकृत्य अंगस्यांतेपल्लांत
स्यातः तत्समीपस्यातो वृद्धिरिति व्याख्यानेन तरस्यावृत्तिर्नापेक्षितेति चेत्। अत्राहुः। हलंत्यमिति सूत्रे मनोरमायां सामीप्यं वा कार्यमितिपक्षस्य निराकरणात्तदनुरोधेना।
ङीत इत्यस्यावृत्तिराश्रितेति। अत्र केचित्। अतो लांतेत्येवाति लुप्तसप्तमीकं। अथ वा अतो लांत इति व्यस्तमेव सूत्रयितुं शक्यं। तथा च अंगस्यांते यत्लं तस्मिन्परे व्यवहितस्या
तो वृद्धिरिति व्याख्यानसंभवान्न तत्रान्त्याश्रयणक्लेशः न चांगस्य विशेष्यत्वेनैवान्वयो युज्यते न तु विशेषणत्वेन पदांगाधिकारे तस्य च तदंतस्येति परिभाषायाः परमंगच
विशेष्यं भवतीत्यभिप्रायवर्णनादिति वाच्यं अह्लोपो न इति सूत्रे गावयवोः सर्वनामस्थानेत्येवं भाष्यकारादिभिर्विशेषणतया व्याख्यानात् क्वचिद्विशेषणत्वेप्यंगस्य
नक्षतिरित्याहुः नेटीत्यादि। यद्यपि पुरस्तादपवादन्यायेन नेटीत्यस्यापवादो न तु विकल्पस्यापि तथापि बाध्यसामान्यचिंतायां स्वविषये प्राप्तं सर्वं बाध्यत इति पुरस्तादपु
वादन्यायोत्र न प्रवर्तत इति भावः। मील संकोचे इति। नेत्रसंकोचे तु प्रचुरप्रयोगः। तिल गतौ। तिल स्नेहन इति चुरादौ। दल विशरणे। विशरणमवयवानां विभागः। घोर्व
घोरितक्रमश्वानां गमनविशेषः। निष्ठांतात्संज्ञायां कन्। त्सरः। छद्मना कपटेन गतिः छद्मगतिः। कमर हूर्छने। हूर्छनं कौटिल्यं। ष्टिवु निरसने। अस्य लघुटिष्ठेवनं। ष्ठीवनात् स। ३९
कृशाक्रन्मृत्रेरतांस्य प्युननिक्षिपेदित्यत्र एवादराद्विलायस्ये दीर्घ [illegible]॥

सन्लिटोर्जेः। सन्लिण्निमित्त इति। यदि तु सनि लिटि च परे योऽभ्यास इति प्राचो व्याख्यानमाद्रियेत तदा येन नाव्यवधानन्यायेन प्रकृतिव्यवधानं सोढव्यमेव। परं तु यङ्लुगन्ता

सन्लिटोर्जेः। ७।३।५७॥ जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात्। जिगाय। जिग्यतुः। जिग्युः। जिगयिथ। जिगेथ। जिगा
य। जिगय। जिग्यिव। जिग्यिम। जेता। जीयात्। अजैषीत्॥ ५७॥ जीव प्राणधारणे। जिजीव॥ ५८॥ पीव मीव तीव नीव स्थौल्ये। पिपीव। मिमीव।
तितीव। निनीव॥ ६२॥ क्षीवु क्षेवु निरसने॥ ६४॥ उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः। उर्वी ऋकारः। उपधायां चेति दीर्घः। तूतूर्व॥ ६९॥ गुर्वी उ
द्यमने। गूर्वति। जुगूर्व॥ ७०॥ मुर्वी बन्धने॥ ७१॥ पूर्व पर्व मर्व पूरणे॥ ७४॥ चर्व अदने॥ ७५॥ भर्व हिंसायाम्॥ ७६॥ कर्व खर्व गर्व दर्पे॥ ७९॥ अ
र्व शर्व षर्व हिंसायाम्। आनर्व। शर्वति। सर्वति॥ ८२॥ इवि व्याप्तौ। इन्वति। इवि इकारः॥ ८३॥ पिवि मिवि णिवि सेचने। तृतीयो मूर्धन्योष्मादिरित्ये
के। सेवन इति तरङ्गिण्याम्। पिन्वति। पिपिन्व॥ ८६॥ हिवि दिवि धिवि जिवि प्रीणनार्थाः। हिन्वति। दिन्वति। धिन्विकृण्व्योर च। ३।१।८०॥ अन
योरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये। अतो लोपः। तस्य स्थानिवद्भावाल्लघूपधगुणो न। उप्रत्ययस्य पित्सु गुणः। धिनोति। धिनुतः।
धिन्वन्ति। लोपश्चास्यान्यतरस्यां म्वोः। ६।४।१०७॥ असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यान्म्वोः परयोः। धिन्वः। धिनुवः।
धिनुमः। धिन्मः। मिपि तु परत्वाद्गुणः। धिनोमि। उतश्च प्रत्ययादसंयोगपूर्वात्। ६।४।१०६॥ असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य
हेर्लुक् स्यात्। धिनु। नित्यत्वादकारलोपात्पूर्वमाट्। धिनवानि। धिनवाम। जिन्वति। इत्यादि॥ ९०॥ रिवि रवि धवि गत्यर्थाः। रिण्वति। रण्वति। धन्व
ति॥ ९३॥ कृवि हिंसाकरणयोश्च। चकाराद्गतौ। कृणोति। इत्यादि धिनोतिवत्। अयं स्वादौ च॥ ९४॥ मव बन्धने। मवति। मेवतुः। मेवुः। अम

त्सनि जेजयिषतीत्यत्र कुत्वं स्यात्। न त्वतन्मा धवयंयषसंमतमिति भावः। धिन्विकृण्व्योर च। अलोन्त्यस्येति वकारस्याकारादेशः। अकारेण तु उप्रत्ययो न रुध्यते। वोपदेवेन।
त्वनयोरुकारादित्वं स्वीकृतं। तन्मते तु चकारं विनाप्युप्रत्ययलाभः। अतो लोप इति। यद्यपि उपदेशे इदन्तत्वं नास्ति तथाप्यार्धधातुकोपदेशे तदस्त्येव। धिन्विकृण्व्योर चेति श्

सि·कौ· नत्वात् अकारादेश इत्येवानुकृष्टस्य पश्चाज्जायमानत्वादिति भावः। लोपश्चा[...]तः प्रत्ययोकार असंयोगपूर्वोयः प्रत्यय इति। प्रत्ययविशेषणं तु न कृतं। अक्ष्णुवः। अक्ष्णुम इत्यादावव
टी·त· निषेधाभावेपि अक्ष्णुवहे इत्यादावतिप्रसंगात्। एवमुतश्चेति। सूत्रेपि अक्ष्णुहीत्यत्र [...]भावेपि अक्ष्णुहीत्यत्रातिप्रसंगः स्यादित्यसंयोगपूर्वेति प्रत्ययविशेषणं न कृतमित्याहुः। अ
ति·उ क्ष्णुहीति परस्मैपदं यद्यपि लोके दुर्लभं तथापि वेदाभिप्रायेण तत्प्रयोगस्य साधुत्वं बोध्यं। अक्ष्णुहीति पाठः सूचितः। कृवि। अयमिति। कृणोतीत्यादिरित्यर्थः। स्वादौ हिंकृवीत्यंधा
३८ तु नेष्यते किंतु कृञ् हिंसायामिति। तस्य च परस्मैपदेषु सार्वधातुके कृणोतीत्यादीनि रूपाणि तुल्यानीति फलितोर्थः॥ अव रक्षण। एकोनविंशतिरर्थाः। कान्तिः शोभा॥ दी-

अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु। अवति। आव। मा भवानवी
त्॥ ६६॥ धावु गतिशुद्ध्योः। स्वरितेत्। धावति। धावते। दधाव। दधावे॥ ६७॥ अथोष्मान्ता आत्मनेपदिनः। धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु। धुक्ष
ते। दुधुक्षे। धिक्षते। दिधिक्षे॥ २॥ वृक्ष वरणे। वृक्षते। ववृक्षे॥ ३॥ शिक्ष विद्योपादाने। शिक्षते॥ ४॥ भिक्ष भिक्षायामलाभे लाभे च। भिक्षते॥ ५॥ क्लेश अ
व्यक्तायां वाचि। बाधन इत्यन्ये। क्लेशते। चिक्लेशे॥ ६॥ दक्ष वृद्धौ शीघ्रार्थे च। दक्षते। ददक्षे॥ ७॥ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु। दीक्षते। दिदी
क्षे॥ ८॥ ईक्ष दर्शने। ईक्षांचक्रे॥ ९॥ ईष गतिहिंसादर्शनेषु। ईषांचक्रे॥ १०॥ भाष व्यक्तायां वाचि। भाषते॥ ११॥ वर्ष स्नेहने। दन्त्योष्ठ्यादिः। ववर्षे॥ १२
गेषृ अन्विच्छायाम्। ग्लेषृ इत्येके। अन्विच्छा अन्वेषणं। जिगेषे॥ १३॥ पेषृ प्रयत्ने। पेषते॥ १४॥ जेषृ णेषृ एषृ प्रेषृ गतौ। जेषते। नेषते। एषांचक्रे॥
पिप्रेषे॥ १५॥ रेषृ हेषृ ह्रेषृ अव्यक्ते शब्दे। आद्यो वृकशब्दे। ततो द्वौ अश्वशब्दे। रेषते। हेषते। ह्रेषते॥ १६॥ कासृ शब्दकुत्सायाम्॥ ॥

मिति। एजेरस्याहः॥ तृप्तिरिच्छानाशः। स्वाम्यर्थः स्वामित्वं। हिंसा हननं। आदानं ग्रहणं। न चात्र दानमेवार्थोस्त्विति वाच्यं। भागो वृद्धौ ग्रहेष्वेवेत्येवमर्थानां क्रियाप्यवापदेवेन ग्रहणत ३
त्वात्॥ भिक्षा याञ्चा। अलाभो लाभश्च द्वयोः अर्थाः। स्वामी तु क्लेश अव्यक्तायां वाचि चेति पठित्वा इमावपि भिक्षधातोरर्थाविति मन्यते। क्लिश उपतापे इति दिवादौ। क्लिश विबाधने इति क्या
दौ। दीक्ष पंचार्थाः। ईष गतौ। गुरोश्च हल इत्यप्रत्यये टापि ईषा। मनस ईषा मनीषा। शकन्ध्वादिः। मनीषामभिनिविष्टः। मनीषितं। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति णिचि
न टेरनात्क्तः। ईष उञ्छे इति तु परस्मैपदिषु। ह्रस्वादयस्त्रयः। इष गतौ दिवादिः। इष इच्छायां तुदादिः। इष आभीक्ष्ण्ये क्र्यादिः॥

कासांचक्रे इति। कासप्रत्ययेत्याम्। भासृ दीप्तौ। अस्य ऋदित्वं भ्राजनेरिवत ॐमात्र फलकम। भ्राजभासेत्यादिनोपधाहूस्वस्य विकल्पितत्वात्। णस कौटिल्ये॥ लिट्यनिमित्तादेशादिका
भावांदेत्वं नेसे। आङः शासिशंसु स्तुनाविति तुपरस्मैपदि भुवस्य ते। ग्रसुग्लसु। उदितो वेति क्त्वायां वेट्। ग्रसित्वा। ग्रस्त्वा। यस्य विभाषेति नेट्। ग्रस्तः वेह्नजेत्। आबइति वेह
तेरति प्रत्यये वेहत ग्रावेणोनिपातितः। पोटायुवतीति सूत्रे इति भावः। वेहतु गर्भोपघातिनी। अंस इति। वाहुशब्दस्य भुजपर्यायस्य सुब्धस्तात ध्वोतेति निपातितस्य वाढशब्दस्य च
निर्विवादत्वादिति भावः। दंत्योष्ठ्यादी इति। उभावपीत्यनुवज्यते अनुदात्तेत्त्वकृतमात्मनेपदमनित्यं। तेन व्वाहरतं पुरुषास्तनोजाताः सहस्रशः इति सिद्धं। न चात्रार्थो संगतिः

कासाश्चक्रे॥ २५॥ भासृ दीप्तौ। बभासे॥ २३॥ णास रासृ शब्दे। नासते। प्रणासते॥ २५॥ णस कौटिल्ये। नसते॥ २६॥ भ्यस भये। भ्यसते। बभ्यसे॥ २७॥
आङः शासि इच्छायाम्। आशंसते। आशशंसे॥ २८॥ ग्रसु ग्लसु अदने। जग्रसे। जग्लसे॥ ३०॥ ईह चेष्टायाम्। ईहाञ्चक्रे॥ ३१॥ बहि महि वृद्धौ। वं
हते। बवंहे। मंहते॥ ३३॥ अहि गतौ। अंहते। आनंहे॥ ३४॥ गर्ह गल्ह कुत्सायाम्। जगर्हे। जगल्हे॥ ३६॥ वर्ह वल्ह प्राधान्ये। ओष्ठ्यादी॥ ३८॥ वर्ह
वल्ह परिभाषणहिंसाच्छादनेषु। दन्त्योष्ठ्यादी। केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः॥ ४०॥ प्लिह गतौ। पिप्लिहे॥ ४१॥ वेहृ जेहृ बा
हृ प्रयत्ने। आद्यो दन्त्योष्ठ्यादिः। अन्त्यः केवलोष्ठ्यादिः। उभावप्योष्ठ्यादी इत्येके। दन्त्योष्ठ्यादी इत्यपरे। जेहतिर्गत्यर्थोऽपि वबाहे॥ ४४॥ द्राहृ नि
द्राक्षये। निक्षेपे इत्येके॥ ४५॥ काशृ दीप्तौ। चकाशे॥ ४६॥ ऊह वितर्के। ऊहाञ्चक्रे॥ ४७॥ गाहू विलोडने॥ गाहते। जगाहे। जगाहिषे। जघाक्षे। ज
गाहिढ्वे। जगाढ्वे। गाहिता। ढो ढे लोपः। ८।३।१३। ढस्य लोपः स्याड्ढे परे। गाहिता। गाढा। गाहिष्यते। घाक्ष्यते। गाहिषीष्ट। घाक्षीष्ट। अगा
हिष्ट। अगाढ। अघाक्षाताम्। अघाक्षत। अगाढाः। अघाढ्वम्। अघाक्षि॥ ४८॥ गृहू गर्हणे। गर्हते॥ ॥ ९ धातूनामनेकार्थत्वात्स्कन्दणार्थकत्वबाधका

भावादित्याहुः। ऊह। कथं तर्हि अनुक्तमप्यूहन्ति पंडितो जनः इति। अत्राहुः। अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वान्न दोष इति। गाहू। ऊदित्वादिड्वा। इडभावे ढत्वं एकाच इति भष्भा
वः। षढोः कः सीति कः। कासरस्य षत्वं। जघाक्षे। विभाषेट इति वा मूर्धन्यः। जगाहिढ्वे। जगाहिध्वे। इडभावे तु भष्भावः। ढो ढे लोपः। जघाढ्वे। ढकिं। ऊढः। इह पूर्वढलोपो मा भूत्। कृते
तु ढग्रहणेऽपि नाप्तुरित्यस्य आश्रयात् सिद्धत्वं भवतीति सिद्धमिष्टमित्याहुः। अगाढ इति। झलो झलीति सलोपः। ढत्वधत्वष्टुत्वढलोपाः। सिचो लोपात्पूर्वं भष्भावस्तु न असिद्धत्वात्।

सि·कौ· न च कृतेऽपि सलोपे प्रत्ययलक्षणेन सिच्परत्वाद्वृद्ध्यभावो दुर्वार इति शंक्यं। वर्णाश्रये प्रत्ययलक्षणाभावात्। अन्यथा प्रवेहितं गोहितमित्यत्रापि वा ऽऽदेशः स्यादिति दिक्॥ ॐ ॥ जगृहे इति

टि·त· जगृहे। ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन। जगृहिषे। जघृक्षे। जगृढ्वे। गर्हिता। गर्ढा। गर्हिष्यते। घर्क्ष्यते। गर्हिषीष्ट। घृक्षीष्ट। लुङि

ति·उ· अगर्हिष्ट। इडभावे। शल इगुपधादनिटः क्सः ३।१।४५॥ इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात्। अघृक्षत। क्सस्याचि ७।३।७२

३९ अजादौ तङि क्सस्य लोपः स्यात्। अलोऽन्त्यस्य। अघृक्षातां। अघृक्षन्त॥४९॥ ग्लह च। ग्लहते॥५०॥ घुषि कान्तिकरणे। घुङ्षते। जुघुङ्षे। केचि

द्घुषेत्यदुपधं पठन्ति॥५१॥ अथार्हन्ताः परस्मैपदिनः। घुषिर् अविशब्दने। विशब्दनं प्रतिज्ञानं ततोऽन्यस्मिन्नर्थ इत्येके। शब्द इत्यन्ये पेठुः।

घोषति। जुघोष। घोषिता। इरित्वादङ्वा। अघुषत्। अघोषीत्॥१॥ अक्षू व्याप्तौ। अक्षोऽन्यतरस्याम् ३।१।७५॥ अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्व

धातुके परे। पक्षे शप्। अक्ष्णोति। अक्ष्णुतः। अक्ष्णुवन्ति। अक्षति। अक्षतः। अक्षन्ति। आनक्ष। आनक्षिथ। आनष्ठ। अक्षिता। अष्टा। अक्षिष्य

ति। स्कोरिति कलोपः। षढोः कः सि। अक्ष्यति। अक्ष्णोतु। अक्ष्णुहि। अक्ष्णवानि। आक्ष्णोत्। आक्ष्णवं। अक्ष्णुयात्। अक्ष्यात्। उदित्वादिड्वा। नेटि

माभवानक्षीत्। अक्षिष्टां। अक्षिषुः। इडभावे तु माभवानाक्षीत्। आष्टां। आक्षुः॥२॥ तक्षू त्वक्षू तनूकरणे। तनूकरणे तक्षः ३।१।७६॥ श्नुः स्याद्वा

शब्विषये। तक्ष्णोति। तक्षति काष्ठं। ततक्षिथ। ततष्ठ। अतक्षीत्। अतक्षिष्टां। अताक्षीत्। अताष्टां। तनूकरणे किम्। वाग्भिः संतक्षति। भर्त्सयती

त्यर्थः॥४॥ उक्ष सेचने। उक्षांचकार॥५॥ रक्ष पालने॥६॥ णिक्ष चुम्बने। प्रणिक्षति॥७॥ तृक्ष स्तृक्ष णक्ष गतौ। तृक्षति। स्तृक्षति। नक्षति॥१०॥ व

क्ष रोषे। संघात इत्येके॥११॥ मृक्ष संघाते। म्रक्ष इत्येके॥१३॥ तक्ष त्वचने। त्वचनं संवरणं। त्वचो ग्रहणं त्वचपक्षपरिग्रह इत्येके॥१४॥ सूर्क्ष आ ३९

दरे। सुसूर्क्ष। अनादर इति तु क्वाचित्कोऽपपाठः। अवज्ञावहेलनमसूर्क्षणमित्यमरः॥१५॥ काक्षि वाक्षि माक्षि कांक्षायाम्॥१८॥ ॥

कित्त्वात्परत्वात् गुणे प्राप्ते ऋदुपधेभ्य इति वार्तिकात्कित्त्वे गुणाभावः। शल इगुपधा। शल इति धातोर्विशेषणान्नेह तलाभः शल इति किं। अतिस। इगिति किं॥

अगाढ। अनिटः किं। औहिष्ट। क्सस्याचि। अजादावित्ति। अंगाक्षिप्तप्रत्ययोत्र विशेष्यः। तङीति तु केषांचित्पक्षेपलक्ष्यकाशिकासवनुक्त त्वादित्याहुः। अन्ये तु लुग्वादुहेत्यत्र आ
त्मनेपद इत्यपकर्षणेन तङीति लभ्यते। तेन दृशेः क्स इति वार्तिकेन क्सप्रत्ययस्य लोपो न भवति। सदृक्षः। अन्यादृक्षः। इत्यत्रेत्याहुः। घुषिकांतिकरणे। लुङि। अघुषिष्ट। अघुषि
षाताम्। अदुपघपाठे तु। अघाषीत्। अघषीत्। अतक्षीदिति। नेटीति वृद्धिनिषेधः। इडभावे तु अनाक्षीत्। प्रणिक्षतीति। उपसर्गादसमासेपीति निंसेर्णत्वं। वानिंसनिक्षनिंदामिति
तु कृत्विषयं एवुल्तृचौ। प्रणिक्षकः। प्रनिक्षकः। प्रणिक्षिता। प्रनिक्षिता। अवचेत्यादि। सूक्ष्मेणमादर इत्यतोऽन्यदसूक्ष्मणमित्यमरग्रंथार्थः। यदि तु सूक्ष्मेणमनादर इति
उच्येत तर्हि असूक्ष्मणमवज्ञापर्यायो न स्यादिति भावः। काक्षि। कांक्षा इच्छा॥ ः ॥द्राक्षि ध्राक्षि ध्वाक्षि। घोरवासितं घोरशब्दः। वासृ शब्दे। ध्वांक्षतीति ध्वांक्षः काकः

द्राक्षि ध्राक्षि ध्वाक्षि घोरवासिते च॥२९॥ चूष पाने। चुचूष॥२२॥ तूष तुष्टौ॥२३॥ पूष वृद्धौ॥२४॥ मूष स्तेये॥२५॥ लूष रूष भूषायाम्॥२७॥ शू
ष प्रसवे। तालव्यो प्यादिः॥२८॥ यूष हिंसायाम्। जूष च॥३०॥ भूष अलङ्कारे। भूषति॥३१॥ ऊष रुजायाम्। ऊषाञ्चकार॥३२॥ ईष उञ्छे॥३३॥ कष
खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः। तृतीयषष्ठौ तालव्योष्मादी। सप्तमो दन्त्योष्म्यादिः। चकाष। चखाष। शिशेष। शिशेषिथ। शेष्टा। स्य:
अशिक्षत्। अशेक्ष्यत्। जेषतुः। जझषतुः। शेषतुः। ववषतुः। मेषतुः। तीषसहलुभरुषरिषः ७।२।४८॥ इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात्।
रोषिता। रोष्टा। रोषिष्यते। रेषिता। रेष्टा। रेषिष्यति॥ भष भर्त्सने। इह भर्त्सनं श्वरवः। भषति। वेभाष॥४४॥ उष दाहे। ओषति। उषविदजागृभ्यो
ऽन्यतरस्याम्। ३।१।३८॥ एभ्यो लिट्याम्वा स्यात्। ओषाञ्चकार॥ ॥ २१॥ द्राक्षि धाक्षि गुरोश्च हल इति अप्रत्यये द्राक्षा। प्वादिगणे वृण

तनान्नलोपः। द्राक्षामान। इह मतोर्वत्वं तु न भवति। अयवादिभ्य इत्युक्तेः। तूष तुष्टौ इत्यादिसेन तु ह्रस्वोपधः। मूष स्तेये। संज्ञायां कनि मूषकः। क्वाचित्तु ह्रस्वोपधोयं। भूष अलंका
रे। अयं चुरादावपि। ईष उञ्छे। गुरोश्च हल इत्यप्रत्यये ईषा। हलदंडः। कष शिष। शिषत्ययमप्यनिङ्कः। न तु रौधादिक एव। संकोचेमानाभावादित्यभिप्रेत्योदाहरति शे
ष्टा। अशिक्षदित्यादि। तीषसह। इषइच्छायां। षहमर्षणे। लुभ गार्ध्ये। रुषरिष हिंसायां। एषिता। एष्टा। सहिता। सोढा। लोभिता। लोब्धा॥ ॥

॥ण्यन्विकरणेपुषादेरिति। केचित्तुदिवाद्यंतर्गणएवपुषादिर्गृह्यतेन्यास्यानादित्याहुः चुरादीनांसर्वेषांणिज्विकल्पइतिपक्षेचौरादिकपुषादेरपिपरस्मैःसंभवतीतितेषामाशयः
नंदिग्रहिपचादिभ्यइतिवत्पुषधुतास्रुदितइतिसूत्रेपितुमुचितं। ननुपुषादयोद्युतादयश्चलृदितएवकुतोनकृताःइतिचेदत्राहुः। निरनुबंधेषुसानुबंधेषुचप्रत्येकंलृकारपाठे

पुषाद्यन्विकरणेपुषादेर्द्युतादेर्लृदितश्चपरस्मैपदेष्विङस्मात्परस्मैपदेषु। अघसत्॥६७॥ जर्जचर्चझर्झपरिभाषणहिंसातर्जनेषु॥६८॥ पिसृपेसृग
तौ। पिपिसतुः। पिपेसतुः॥६९॥ हसेहसने। एदित्वान्नवृद्धिः। अहसीत्॥७०॥ णिशसमाधौ। तालव्योष्मान्तः। प्रणेशति॥७१॥ मिशमशशब्दे
रोषकृतेच। तालव्योष्मान्तौ॥७२॥ शवगतौ॥ दन्त्योष्मान्तः। तालव्योष्मादिः। शवति। अशावीत्। अशवीत्॥७४॥ शशप्लुतगतौ। तालव्योष्माद्य
न्तः। शशाश। शेशतुः। शेशुः। शेशिथ॥७५॥ शसुहिंसायाम्। दन्त्योष्मान्तः। नशसददेत्यत्र। शशसतुः। शशसुः। शशसिथ॥७६॥ शंसुस्तुतौ
अयंदुर्गतावपीतिदुर्गः। नृशंसोघातुकः क्रूरइत्यमरः। शशंस। आशिषिनलोपः। शस्यात्॥७७॥ चहपरिकल्कने। कल्कनंशाठ्यम्। अच
हीत्॥७८॥ महपूजायाम्। अमहीत्॥७९॥ रहत्यागे॥८०॥ रहिगतौ। रंहति। रंह्यात्॥८१॥ दृहदृहिवृहवृहिवृद्धौ। दर्हति। ददर्ह। दद
हतुः। दृंहति। वर्हति। वृंहति। वृहिशब्देच। वृंहितंकरिगर्जितम्॥८५॥ वृहिरित्येके। अवृहत्। अवर्हीत्॥८६॥ तुहिरदुहिरउहिरअर्द
ने। तोहति। तुतोह। अतुहत्। अतोहीत्। दोहति। अदुहत्। अदोहीत्। अनिदिद्वरिकास्वस्यदुहेर्ग्रहणेनेच्छन्ति। ओहति। उवोह। उहतुः। औ
हित्। माभवानुहत्। औहीत्॥८९॥ अर्हपूजायाम्। आनर्ह॥९०॥ अथकृपूपर्य्यन्ता अनुदात्तेतः। द्युतदीप्तौ। द्योतते॥ ॥

विपरीतगौरवंस्यात्। नचअनुबंधांतरस्यप्रयोजनमात्मनेपदंतत्लृदित्करणेपिसिध्यतीतिअनेकानुबंधासंगगौरवंचेत्रभावातीत्यपिशंक्यं। आदितामीदितामुदितांचैते
षुसत्वात्लृकारेणतत्तत्कार्याणामनिर्वाहादनेकानुबंधासंगगौरवस्यदुर्निवारत्वात्। जर्जचर्च। एषांपरिभाषणादिभिःसहयथासंख्यंनास्तियास्यानादित्याहुः। परिभाष
णंसनिंदोपालंभः। त्रयाणामदिचवर्गीयांतेषुपाठउचितोनत्विहोष्मांतेषु। णिशसमाधौ। समाधिरंतःकरणनिरोधः। प्रणेशति। उपसर्गादसमासेपीतिणत्वं। रोषकृतेचेति॥

चकारात्समाधौ। शशप्लुतगतौ। न शसददेति प्रतिषेधसूत्रे सांतस्य ग्रहणमित्यभिप्रायेणाचष्टे। शश तु रिति। प्राचां तु शश शसुरित्युक्तं तदयुक्तमिति भावः। अच ह्रीदिति। ह्रयं तेनेति नर
ङिःरहस्याम्। अयं कथादावपि। त्रुप मिच्चेति मित्त्वकरणेऽप्ययमेकीयमतेन पठितः। रिङ्खं नीति। व्याख्यानमेवात्रावलम्बनं। मामेवानुहरिति। नमाङ्योगे स्मादभावः। इरि तोवे
पङ्। अथ द्युतादिः। द्युतदीप्तौ॥ ॥ द्युतिस्वाप्योः। स्वापीति णिजंतग्रहणं। दिद्युते इति। संप्रसारणे कृते संप्रसारणाच्चेति पूर्वरूपं। स्वापेरुदाहरणं तु सुष्वापयिषति। इह

द्युतिस्वाप्योः सम्प्रसारणम् ।७।४।६७। अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते । दिद्युताते । द्योतिता । द्युद्भ्यो लुङि ।१।३।९१। द्युतादि-
भ्यो लुङः परस्मैपदं वा स्यात् । पुषादीति सूत्रेण परस्मैपदे ङः । अद्युतत् । अद्योतिष्ट ॥१॥ श्विता वर्णे । श्वेतते । शिश्विते । अश्वितत् । अश्वेति-
ष्ट ॥२॥ ञिमिदा स्नेहने । मेदते । मिमिदे । गुणः ।७।३।८२। मिदेरिको गुणः स्यादित्संज्ञकशकारादौ । एश् आदिशित्त्वाभावान्नानेन गुणः । मिमिदे । अ-
मिदत् । अमेदिष्ट ॥३॥ ञिष्विदा स्नेहनमोचनयोः । मोहनयोरित्येके । स्वेदते । सिष्विदे । अस्विदत् । अस्वेदिष्ट ॥४॥ ञिक्ष्विदा चेत्येके । अक्ष्विद-
त् । अक्ष्वेदिष्ट ५ रुच दीप्तावभिप्रीतौ च । रोचते सूर्य्यः । हरये रोचते भक्तिः । अरुचत् । अरोचिष्ट ॥६॥ घुट परिवर्त्तने । घोटते । जुघुटे । अघुटत् ।
अघोटिष्ट ॥७॥ रुट लुट लुठ प्रतिघाते । अरुटत् । अरोटिष्ट ॥१०॥ शुभ दीप्तौ ॥११॥ क्षुभ संचलने ॥१२॥ णभ तुभ हिंसायाम् । आद्योऽभावेऽपि न-
भ्राम् मन्यके समे । माभूवन्नन्यके समे ॥ इति निरुक्तम् । अनभत् । अनभिष्ट । अतुभत् । अतोभिष्ट । इमौ दिवादौ क्र्यादौ च ॥१४॥ स्रंसु ध्वंसु भ्रंसु अ-
वस्रंसने । ध्वंसु गतौ च । अनिदितां नलोपः । अस्रसत् । अस्रंसिष्ट । नास्रसत्करिणां ग्रैवमिति रघुकाव्ये ॥१७॥ भ्रंशु इत्यपि केचित्पेठुः । अत्र तृतीय
एव तालव्यान्त इत्यन्ये । भ्रंशु भ्रंशु अधःपतने इति दिवादौ । स्रम्भु विश्वासे । अस्रभत् अस्रम्भिष्ट । दन्त्यादिरयम् । तालव्यादिस्तु प्रमादे गतः ॥२०॥ वृतु व-

स्वापेर्णिजंतस्याभ्यासनिमित्तप्रत्ययेनानंतर्ये सति संप्रसारणमिष्यते। तेनेह न। स्वापेर्ण्वुल्। स्वापकः। तमिच्छति स्वापकीयति। ततः सन्। सिस्वापकियीषति। द्युद्भ्यो लुङि बहुवचन
निर्देशात्तद्यौ डेरित्यत्रेव तदादिग्रहणं तदाह। द्युतादिभ्य इति। द्युतादय इत्यो घट चेष्टायामित्यवधिकाः। ङः सीत्यत्रेव लुङीति सप्तम्याः षष्ठ्यर्थतेत्यभिप्रेत्याह। लुङः परस्मैपदमि
ति। ञिमिदा। मिदेर्गुणः। इह्विक्ऌ मुचमामित्यतः श्तीत्यनुवर्तते तत्र शब्दाश्रीसौर च्चेति कर्मधारयात्सप्तमी अंगाक्षिप्तप्रत्ययस्तु विशेष्यः। तेन यस्मिन्विधिरिति तदादिवि-

धिः प्रवर्तते न यङ् । इत्संज्ञकप्राक्कारादाविति । आदिश्वित्त्वाभावादिति । मेद्यतिमेद्यत इत्यादौ दिवादिभ्य इति श्यन् । आदिश्वित्वान्न गुणोऽभवत्येवामिमिदेइति । श्वितीति बहुव्रीहौ
त्विहस्यादेव गुणः तथापपेतस्येर इत्यादौपि वादयोपि स्युरिति भावः । ञिष्विदा । अनिद्वारिकार्यां स्विद्यतिरिति श्यन् । निर्देशादयं सेट् । स्विदिता स्वेदिष्यते । ञिक्ष्विदा चेत्ति पूर्वो
क्तयोरेवार्थयोरयमिति बोध्यं । हरये इति । रुच्यर्थानामिति संप्रदानसंज्ञायां चतुर्थी । घुट परिवर्तने । परिवर्तनमित ततो भ्रमणं । जुघुटे इति । असंयोगादिति किलात्गुणभावः ।
क्षुभ । संचलनं प्रकृतिविपर्यासो मंथनं च । क्षोभते । क्षुभ्यतीति दिवादौ । क्षुभ्नातीति क्र्यादौ । नाभ्रसदिति । नासंसदिति पपाठ एव । न चेदं लङ्भोरूपं तत्र परस्मैपदासंभवादिति भा
वः ॥ ॥ वृद्भ्यः । वृतादयः पंच ॥ न वृद्भ्यः । गणकार्यत्वादुभयोर्यङ्लु क्यप्रवृत्तिः । वर्वर्तिष्यति । वर्वर्तिषति । चतुर्ग्रहणफलं तु स्फुटीभविष्यति । सेसिचीतिसूत्रात्से इत्यनुवर्तते तम
दाह । सकारादेरिति । इणनस्यादिति । स्य इरूदित्वाद्विकल्पे प्राप्ते इतरेषां नित्यमिट्प्राप्ते निषेधोऽयं । तङानयोरिति । जिगमिषिता । जिगमिषितारो । इत्यादौ तु चिपरत्वः सनइडा

वृद्भ्यः स्यसनोः । १ । ३ । ९२ ॥ वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च । न वृद्भ्यश्चतुर्भ्यः । ७ । २ । ५९ ॥ एभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयो
रभावे । वर्त्स्यति । वर्तिष्यते । अवृतत् । अवर्तिष्ट । अवर्त्स्यत् । अवर्तिष्यत ॥ २१ ॥ वृधु वृद्धौ ॥ २२ ॥ शृधु शब्दकुत्सायाम् ॥ इमौ वृत्तिवत् ॥ २३ ॥ स्यन्दू
प्रस्रवणे । स्यन्दते । सस्यन्दे । सस्यन्दिषे । सस्यन्त्से । सस्यन्दिध्वे । सस्यन्ध्वे । स्यन्दिता । स्यन्ता । वृद्भ्यः स्यसनोरिति परस्मैपदे कृते ऊदित्त्वलक्षणमन्तरङ्गमपि
विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः । स्यन्त्स्यति । स्यन्दिष्यते । स्यन्त्स्यते । स्यन्दिषीष्ट । स्यन्त्सीष्ट । द्युद्भ्यो लुङीति परस्मैपदपक्षे
अङ् । नलोपः । अस्यदत् । अस्यन्दिष्ट । अस्यन्त । अस्यन्त्साताम् । अस्यन्त्स्यत् । अस्यन्दिष्यत । अस्यन्त्स्यत ॥ ॥ ९ गमसिद्धये गमेरिट्परस्मैपदेष्विति सूत्र

परस्मैपदग्रहणं तङानयोरभावं लक्षयतीत्यभ्युपगम्यते । तच्चात्रापि तथैवानुवर्तते । अर्थाधिकाराश्रयणात् । तेन परस्मैपदाभावेऽपि । वृत्तिविवृत्सिता । विवृत्सितारा
वित्यत्रानेडिति हेत्तु किंत्वं विवृत्सेत्यत्र च सन इण्निषेधः सिध्यतीति भावः । अत्र भाष्यवार्तिकयोर्वृतादीनामात्मनेपदेन समानपदस्थस्येट्वचनादन्यत्र निषेध इति स्थितं तेन
विवर्तिषते विवर्धिषते इत्यादाविड्भवति । विवृत्सितेवाचरति विवृत्सित्रायते इत्यत्र त्वात्मनेपदोत्पत्तेः पूर्वं तत्समानपदस्थत्वाभावादन्तरंगोऽयं निषेधः प्रवर्तते । स च पश्चात्त
ङि कृतेऽपि न निवर्तते । चतुर्ग्रहणसामर्थ्यादिति । अत्र व्याचख्युः । पंचमः इति वक्तुमुचितं तासि चेत्येव सूत्रं कर्तव्यं । न च वृतादिभ्य इति व्याप्तिस्तङानयोः सत्त्वादिति । अस्यंतेति ।

अत्रानिदितामिति न लोपो न भवति। सिज्लोपस्यासिद्धत्वेनानुपधात्वात्॥ ॥ अनुविपर्यभिनिभ्य इति। पंचभ्य इत्यर्थः। षत्वं भवत्येवेति। प्राण्यप्राणिकर्तृकस्याप्यप्राणिकर्तृकत्वानपायादिति भावः। असमर्थसमासवाक्यभेदापत्तिदोषाभ्यां प्रसज्यप्रतिषेधो न सूत्रे अभिप्रेत इत्याशयेनाह। प्राणिषु नेत्युक्ताविति। कृपूसामर्थ्ये। भाष्यकृतां

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु। ८।३।७२॥ एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। अनुष्यन्दते। अनुस्यन्दते वा जलम्। अप्राणिषु किम्। अनुस्यन्दते हस्ती। अप्राणिष्विति पर्युदासान्मत्स्योदके अनुष्यन्दते इत्यत्रापि पक्षे षत्वं भवत्येव। प्राणिषु नेत्युक्तौ तु न स्यात्। १८८१। कृपू सामर्थ्ये। कृपो रो लः। ८।२।१८॥ कृप उ इति छेदः। कृपेति लुप्तषष्ठीकमपरं तच्चावर्तते॥ कृपो यो रेफस्तस्य लः स्यात्। कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लकारसदृशः स्यात्। कल्पते। चक्लृपे। चक्लृपिषे। चक्लृप्से। इत्यादि स्पर्द्धिवत्। लुटि च क्लृपः। १।३।९३॥ लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात्। तासि च क्लृपः। ७।२।६०॥ क्लृपेः परस्य तासेः सकारादेरार्द्धधातुकस्य चेण् न स्यात्। तङानयोरभावे। कल्प्तासि। कल्प्तास्थः। कल्पितासे। कल्प्तासे। कल्प्स्यति। कल्पिष्यते। कल्प्स्यते। कल्पिषीष्ट। क्लृप्सीष्ट। अक्लृपत्। अकल्पिष्ट। अक्लृप्त। अकल्प्स्यत्। अकल्पिष्यत। अकल्प्स्यत। वृत् वृत्तः सम्पूर्णो द्युतादिः। वृतादिश्चेत्यर्थः॥ २४॥ अथ त्वरत्यन्ताः त्रयोदशानुदात्तेतः षितश्च। घट चेष्टायाम्। घटते। जघटे। घटादयः षित इति वक्ष्यमाणेन मित्संज्ञा। तत्फलं तु मितां ह्रस्वः इति चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति च वक्ष्यते। घटयति। विघटयति। कथन्तर्हि कमलवनोद्घाटनं कुर्वते ये। प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिवेत्यादि। शृणु घटसङ्घाते इति चौरादिकस्येदम्। न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यम्। नान्ये मितोऽहेताविति निषेधात्। अहेतौ स्वार्थे णिचि तु पादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः। १ व्यथ भयसञ्चलनयोः। व्यथते॥

(( ख्यामाह। कृप उ इति। कृपो रो ल इति अर्वाचीन ४२
पाठभ्रमाद्दर्तव्य इति ध्वनयति। कृपेर्ऋकारस्येत्यादिना। वर्णैकदेशस्य वर्णग्रहणेनाग्रहणादाह। रेफसदृश इति। एवं चात्र कृपेत्यस्यावृत्तिरवश्यं स्वीकर्तव्या। तथा च

लुटि चङ्क्रमपरस्मादिसौत्रनिर्देशोपपद्यत इति भावः। नास्ति चङ्क्रमः। चकारात्सार्वधातुकं गृह्यते। ञ्लुषसीष्टेनि लिङ्क्ष्विचावात्मनेपदेष्विति किं त्वात्मगुणः। वृद्धिति। वृतु वर्तने
इत्यस्मानन्तरं ञित्वरा संभ्रम इत्यस्मानन्तरं घटादयः षित इत्युक्तं त्वरत्यन्तास्त्रयोदश षितो न तु फणान्ताः सर्वेपीति सिद्धं। तथापि स्पष्टप्रतिपत्त्यर्थमाह। षितश्चेति। स्फायी जनेतु
बिदृदादिभ्य इत्यङि टाप्। घटा। व्यथेत्यादिरूपसिद्धिः। घट चेष्टायां। ये धातवोऽन्यत्राऽधीतास्तेषामिह पाठोऽर्थनियमार्थः। येत्विहैव पठ्यन्ते तेषामुपसर्गादिनाऽर्थान्तरेऽ
त्वेपि मित्त्वमस्त्येवेति धातुवृत्त्यादिषु स्थितं तन्नरेव ध्वनयन्नुदाहरति। विघटयतीति॥ ॐ ॥ व्यथो लिटि। हलादिःशेषापवाद इति। हलादिःशेषप्रक्रमणादिति भावः। एवं
चोत्सर्गसदेशाश्चापवादा इति परस्यैव संप्रसारणं भवितुमर्हति न पूर्वस्येति कैयटाद्युक्त्या न संप्रसारणमिति निषेधोऽत्रनापेक्षितः। केचित्तु हलादिःशेषेण यकारनिवृत्तावपि व

व्यथो लिटि।७।४।६८॥ व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि। हलादिःशेषापवादः। यस्य हलादिःशेषेण निवृत्तिः। विव्यथे॥२॥ प्रथ प्रख्या
ने। पप्रथे॥३॥ प्रस विस्तारे। पप्रसे॥४॥ म्रद मर्दने॥५॥ स्खद स्खदने। स्खदनं विद्रावणम्॥६॥ क्षजि गतिदानयोः। मित्त्वसामर्थ्यादनुपधा
लोपि। क्षञ्जमुल्लोरिति दीर्घविकल्पः। अक्षञ्जि। अक्षाञ्जि। क्षञ्जंक्षञ्जं। क्षाञ्जंक्षाञ्जं॥७॥ दक्ष गतिहिंसनयोः। योयं वृद्धौ शीघ्रार्थे चानुदात्तेत्सु
पठितस्तस्येहार्थविशेषे मित्त्वार्थोनुवादः॥८॥ क्रप कृपायां गतौ॥९॥ कदि क्रदि क्लदि वैक्लव्ये। वैकल्य इत्येके। त्रयोप्यनिदित इति नन्दी इ
दित इति स्वामी। कदि क्रदी इदितौ। क्लद इति चानिदिताविति मैत्रेयः। कदि क्रदि क्लदि नामाह्वाने रोदने च योः। परस्मैपदिषूक्ता नाम्पुनरिह
पाठो मित्त्वार्थ आत्मनेपदार्थश्च॥१२॥ ञित्वरा संभ्रमे। घटादयः षितः। षिद्भ्योऽङ् वक्ष्यते॥१३॥ अथ फणान्ताः परस्मैपदिनः॥

कारस्य सत्वात्सूत्रमिदं सावकाशमिति अपवादत्वं न संभवतीति मत्वा संप्रसारणं तदाश्रयं च कार्यं बलवदिति वचनाद्धलादिःशेषं बाधित्वा परस्य संप्रसारणे पूर्वस्य निषे
धः संप्रसारणं तदाश्रयं चेति वचनाभावे तु व्यथो लिटीति संप्रसारणस्य धातुविशेषप्रत्ययविशेषाश्रयत्वेन इग्यण इति संज्ञाविशेषद्वयाश्रयत्वेन बह्वपेक्षस्य बहिरङ्गत्वा
त्संप्रसारणं बाधित्वा हलादिःशेषे जाते वकारस्य संप्रसारणं स्यादित्याहुः। यस्येति। संप्रसारणस्याभ्यासान्तर्गतयकारनिवृत्तेरपवादत्वेन तु यकारनिवृत्तेरिति भावः। लि
टीति किं। विव्यथिषते॥ इह सन्यत इतीत्त्वं बाध्यते। बाव्यथ्यते। बाव्यथीति। कृप कृपायां गतौ। चकाराभावेपीहार्थद्वयमित्येव बोध्यमित्याहुः। कदि क्रदि। कन्दयति। अक्रदीत्॥

वाक्यार्थाभिनयो नाट्यं घटादौ तु नृत्यं नृत्तं चार्थः यत्कारिषु नर्तकव्यपदेशः त्रु· मू· ५

सि·कौ· अक्कांखिकं रुक्कं रां क्कां रुक्कां रां । अजित्वरा आदित्वमिहव्यर्थो ह्रस्वोच्चारणेनापि आत्मनेपदसिद्धेः । न च निष्ठायामादितश्चेतीट्प्रतिषेधार्थमिति शंक्यं । रुष्यमत्वरेति निष्ठायामिट्विकल्पे

टी·त· ज्वर रोगे । ज्वरति । जज्वार ॥ १ ॥ गड सेचने । गडति । जगाड ॥ २ ॥ हेड वेष्टने । हेडृ अनादरे इत्यात्मनेपदिषु गतः स एवोत्सृष्टानुबन्धोऽनूद्यते । अर्थ

ति·उ· विशेषमित्यर्थमपरस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादः सामर्थ्यात्परस्मैपदमाह हेडति । जिहेड । हिडयति । अहिहिडत्

४३ हीडि । अनादरे तु हेडयति ॥ ३ ॥ वट भट परिभाषणे । वट वेष्टने भट भृताविति पठितयोः परिभाषणेऽमित्यर्थोऽनुवादः ॥ ५ ॥ नट नृत्तौ । इत्थ

मेव पूर्वमपि पठितम् । तत्रायं विवेकः । पूर्वपठितस्य नाट्यमर्थः । यत्कारिषु नटव्यपदेशः । पदार्थाभिनयो नृत्यम् । गात्रविक्षेपमात्रं नृत्तम् । केचि

त्तु घटादौ नट नताविति पठन्ति । गत्ताविति अन्ये । णोपदेशपर्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठात् घटादिर्णोपदेश एव ॥ ६ ॥ ष्टक प्रतिघा

ते । स्तकति ॥ ७ ॥ चक तृप्तौ । तृप्तिप्रतिघातयोः पूर्वपठितस्य तृप्तिमात्रमित्यर्थोऽनुवादः । आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मै

पदम् ॥ ८ ॥ कखे हसने । एदित्वान्न वृद्धिः अकखीत् ॥ ९ ॥ रगे शङ्कायाम् ॥ १० ॥ लगे सङ्गे ॥ ११ ॥ ह्रगे ह्लगे षगे ष्टगे संवरणे । कगे नोच्यते । अस्या

यमर्थ इति विशिष्य नोच्यते । क्रियासामान्यार्थत्वात् । अनेकार्थत्वादित्यन्ये ॥ १५ ॥ अक अग कुटिलायां गतौ ॥ १७ ॥ कण रण गतौ । चकाण

रराण ॥ १९ ॥ चण शण श्रण दाने च । शण गतावित्यन्ये ॥ २२ ॥ श्रथ क्नथ क्रथ क्लथ हिंसार्थाः । जासिनिप्रहणेति सूत्रे क्राथेति मित्त्वेऽपि वृद्धिर्निपा

त्यते । क्राथयति । मित्त्वं तु निपातनास्वरत्वात् चिण्णमुलोरिति दीर्घविकल्पार्थम् । अक्रथि । अक्राथि । क्रथंक्रथं क्राथंक्राथम् ॥ २६ ॥ चन च हिंसा

यामिति शेषः ॥ २७ ॥ वनु च नोच्यते । वनु इत्यस्य पूर्वं एकापञ्चात् तनादिकस्यानुवादः । उदित्करणसामर्थ्यात् । तेन क्रियासामान्ये वर्तते । अस्यां

दिग्प्रवनयति । अनुपसृष्टस्य तु मित्त्वविकल्पो वक्ष्यते ॥ २८ ॥ ज्वल दीप्तौ ॥ ॥ २९ त्वात् तूर्णः त्वरितः ॥ ॥ ज्वर रोगे । णौ । ज्वरकृते । अ

ज्वरि । अज्वारि । ज्वरंज्वरं । ज्वारंज्वारं । गड सेचने । णौ । गडयति । अगडि । अगाडि । गंडंगडं । गांडंगाडं । एवमन्यत्रापि सूत्रे हेड वेष्टने । उत्सृष्टानुबंध इति । तेन वेष्टनेनाम्ले

घ्नीति निषेधपक्षे वनासीति भावः। णोपदेशा एवेति। प्रणटति। प्रणाटयति। नाटीत्यस्य तु प्रनाटयति। वृद्धिर्निपात्यत इति। तेन मितां ह्रस्व इति न प्रवर्तत इति भावः। निपातनात्परत्वाच
ति। निपातनविषयीभूतमितां ह्रस्व इत्यस्मात्परत्वान्मितां ह्रस्व इत्येतदेव निपातेन बाध्येत न तु ततः परं चिण्णमुलोरित्येतदित्यर्थः। वन च। असंमतौ पठितस्य हिंसायामित्यर्थः। नु
वादः। वनति। णौ। वनयति। अवानि। वनंवनं। वानंवानं। नानादिकस्येति। वनु याचन इत्यस्येत्यर्थः। सामर्थ्यादिति। अनुवादे तु तत्र कृते मोऽदित्वे न कृताया मितो विकल्पस्य निषेधाभि
द्धप्रतिषेधस्य च सिद्धेः पुनरुदित्करणं व्यर्थं स्यादिति भावः। वनतीत्यादीति। णौ। वनयति। नानादिकस्य तु वनुते। वानयति। मित्वविकल्प इति। ग्ला स्ना वनु वमां चेति गणसूत्रेण॥
॥ णमन्यत्रार्थमिति॥ ज्वलति कसन्तेभ्यो ण इति ज्वलादिभ्यो णमन्यत्रार्थो॥ दृ भये। धातोरनेकार्थत्वाद्भयार्थकत्वाद् दृणाति। दरयति। तन्नेतीति। माधवस्यायमाशयः। सू

णमन्यत्रार्थम्पठिष्यमाण एवायं मित्वार्थमनूद्यते। प्रज्वलयति॥ ३०॥ ह्वल ह्मल संचलने प्रह्वलयति। प्रह्मलयति॥ ३१॥ स्मृ आध्याने चि-
न्तायाम्पठिष्यमाणस्य आध्याने मित्वार्थोऽनुवादः। आध्यानमुत्कण्ठापूर्वकं स्मरणं॥ ३२॥ दृ भये। दृ विदारणे इति क्र्यादेरयं मित्वार्थोऽनुवादः॥
दृणन्तं च दरयति। दरयति। भयादन्यत्र दारयति। धात्वन्तरमेवेदमिति मते तु दरतीत्यादि। केचित्तु दादौ अन्त्ये दृ त्वरेति सूत्रे च दृ इति दीर्घस्थाने
ह्रस्वम्पठन्ति। तन्नेति माधवः॥ ३३॥ नॄ नये। क्र्यादिषु पठिष्यमाणस्यानुवादः। नयादन्यत्र नारयति॥ ३४॥ श्रा पाके। श्रै इति कृतात्वस्य श्रा इत्याद
दिकस्य च सामान्येनानुकरणं। लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभा
षाभ्याम्। श्रपयति। विक्लेदयतीत्यर्थः। पाकादन्यत्र। श्रापयति। स्वेदयतीत्यर्थः॥ ३५॥ ॥ १९ त्रे दीर्घान्त एव पाठः सर्वसंमतः। घटादावपि दीर्घान्तत्वस

र्वैः पठ्यते। यद्ययं ह्रस्वान्तो भवेत्तर्हि श्रा दृ नॄ ह्रस्वो वेति ह्रस्वविकल्पविधायके सूत्रे दृग्रहणमनर्थकं स्यात्। धातुद्वयेन दृदॄ इत्यस्य दरतीति रूपद्वयसिद्धेः। न च विदारणे रूपद्वयलु
भार्थं दृग्रहणमावश्यकमिति वाच्यं। धातूनामनेकार्थत्वात्समीहितसिद्धेरिति। नॄ नये। नृणाति। नरयति। अनरि। अनारि। नरंनरं। नारंनारं। श्रै इति। अयं हि वक्ष्यमाणो भौवा
दिकः। लुग्विकरणेति। अत्र व्याचक्षते। स्वरतिसूतिसूयतिधूञूदितो वेति सूत्रे सूङ् इति पठितेऽपि द्वयोर्ग्रहणे सिद्धे सूतिसूयत्योः पृथग्ग्रहणं व्यर्थं सदिमां परिभाषां ज्ञापयति। न च लुग्विकरणं क्व
परति वैपरीत्यं किं न स्यादिति शंक्यं। इष्टानुरोधात्। सूङ् इति पठिते स्वरतिसाहचर्यादलुग्विकरणस्यैव ग्रहणं स्यान्न तूभयोरित्यपि न शंक्यं। साहचर्यस्यानित्यत्वात्

सि. कौ.
टि. त
नि. क.
४७

तस्मान्न पृथक् ग्रहणं व्यर्थं सत् ज्ञापकमेवेति। लक्षणप्रतिपदोक्तपरिभाषा तु न्यायसिद्धा। लाक्षणिकं हि विलम्बितोपस्थितिकं प्रतिपदोक्तं तु शीघ्रोपस्थितिकमिति। परिभ
षाभ्यामिति। यद्यपि उक्तपरिभाषयोः परस्परविरोधेनाप्रवृत्तावपीष्टं सिध्यति तथाप्यविशेषादुभयोः प्रवृत्तिरप्यनयुक्तैवेति भावः॥ ॥ मारणतोषणनिशा
मनेष्विति। ज्ञस्य शाम आलोचनं तस्मान्निष्पन्नत्वादाह। चाक्षुषं ज्ञानमिति। एष्वर्थेष्विति। पशुं संज्ञपयति। मारयतीत्यर्थः। विष्णुं विज्ञपयति। संतोषयतीत्यर्थः। संज्ञपयति स्वं
माधवमते दर्शयतीत्यर्थः। मतान्तरे तु बोधयतीत्यर्थः। प्रज्ञपयति शरं। तीक्ष्णीकरोतीत्यर्थः। स्यादेतत्। निशामनं ज्ञापनमात्रमिति वदतां मते श्लाघह्नुङ् स्थेति सूत्रे

मारणतोषणनिशामनेषु ज्ञा निशामनं चाक्षुषं ज्ञानमिति माधवः। ज्ञापनमात्रमित्यन्ये। निशाने ष्विति पाठान्तरे मा निशानं तीक्ष्णीकरणम्
एष्वेवार्थेषु जानातिर्मित्। ज्ञपमिच्चेति चुरादौ। ज्ञापनं मारणादिकञ्च तस्यार्थः। कथञ्चिज्ज्ञापनामर्त्थं वा सिद्धिमेतीति तज्ज्ञापयत्याचार्य्य इ
ति वा। शृणु। माधवमते चाक्षुषज्ञाने मित्त्वाभावात्। ज्ञापनमात्रे मित्त्वमिति मते तु ज्ञा नियोग इति चौरादिकस्य धातूनामनेकार्थत्वात् तानि
शाने ष्विति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिः। ३६। कम्पने चलिः। चलकम्पने इति ज्वलादिः। चलयति शाखाम्। कम्पनादन्यत्र
तु शीलं चालयति। अन्यथा करोतीत्यर्थः। हरतीत्यर्थ इति स्वामी। सूत्रं चालयति। क्षिपतीत्यर्थः॥ ३७॥ छदिरूर्जने। छद अपवारणे
इति घटादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः। अनेकार्थत्वादूर्जनेऽर्थे वृत्तिः। छदनामप्रयुङ्क्ते छदयति। बलवन्तं प्राणवन्तं वा करोती
त्यर्थः। अन्यत्र छादयति। अपवारयन्तं प्रयुङ्क्ते इत्यर्थः। स्वार्थे णिचि तु। छादयति। बलीभवति। प्राणीभवति। अपवारयति वेत्यर्थः॥ ३८॥ जिह्वोन्मथने लडिः। लड विलास इति पठितस्य मित्त्वार्थोऽनुवादः। उन्मथनं ज्ञा
स्यमानो बोधयितुमभिप्रेत इति वृत्तिग्रन्थः संगच्छतां नाम। माधवमते तु न
हेतुः यस्य काशातिरिक्ततया आह। ज्ञपमिच्चेति। ज्ञापनमिति। एवं च वृत्तिग्रन्थो माधवमतेऽपि संगच्छत इति भावः। मारणादिकं चेति। एतच्च मतान्तराभिप्रायेणोक्तं
चुरादिषु तु ज्ञपमिच्च जयं ज्ञाने ज्ञापने च वर्तत इति वक्ष्यमाणत्वात्। कथमिति। ज्ञाधातोर्ज्ञपधातोश्च णौ मित्त्वात् ह्रस्वेन भवितव्यमिति भावः। मित्त्वाभावादि
ति। एवं च बोधने ज्ञाधातोः ज्ञापयति ज्ञपधातोस्तु ज्ञपयतीति रूपद्वयं माधवमते बोध्यं। छदिरूर्जने। ऊर्ज बलप्राणनयोः। अत्र छदिर्मित्। चुराद्यन्तर्गणो घटादि

लडयति जिह्वामिति। जिह्वां ज्ञापयतीत्यर्थः। जिह्वायेति। जिह्वापदार्थान्तरं ज्ञापयतीत्यर्थः। जिह्वाव्यापारे उदाहरणमाह। लडयति शत्रुमिति। शत्रुमुद्दिश्य गालनादि
करोतीत्यर्थः। लडयति दधीति। उन्मथ्नाति। विलोडयतीत्यर्थः। केचित्तु जिह्वाव्यापारे लडयति दधि उन्मथने तु लडयति शत्रुमिति व्याप्तासेनयोजयं
ति। लोडयति पुत्रमिति। शर्करादिदानेन अनुकूलयतीत्यर्थः। ध्वनिरणोदाहृतावितिः ध्वनिरव्यक्तध्वाने नोदाहृतः इति लुकणरणगतावित्यत्रेत्यर्थः। स्वन
लडयति जिह्वां तृतीया न तु रूपो वा लडयति जिह्वया अन्यत्र जिह्वाशब्देन तद्व्यापारो लक्ष्यते समाहारद्वन्द्वोऽयं ॥ ॥ ॥

लडयति शत्रुम्। लडयति दधि। अन्यत्र लाडयति पुत्रम्॥ ४६॥ मदी हर्षग्लेपनयोः। ग्लेपनं दैन्यं। दैवादिकस्य मित्वार्थोऽयमनुवादः। म
दयति। हर्षयति। ग्लेपयति वेत्यर्थः। अन्यत्र मादयति। चित्तविकारमुन्मादयतीत्यर्थः॥ ४७॥ ध्वन शब्दे। भौवादिकस्य मित्वार्थमनुवादः। ध्वनय
ति घण्टाम्। अन्यत्र ध्वानयति। अस्पष्टाक्षरमुच्चारयतीत्यर्थः॥ ४८॥ अत्र भोजः। दलि वलि स्खलि रणि ध्वनि त्रपि क्षपयश्चेति पेठात्। तन्ना
ध्वनिरणोदाहृतौ। दल विशरणे। वल संवरणे। स्खल संचलने। त्रपूष् लज्जायामिति गणान्तरे पाठो। दलयति। वलयति। स्खलयति
त्रपयति। क्षै क्षये इति वक्ष्यमाणस्य कृतात्वस्य पुकानिर्देशः। क्षपयति॥ ४८॥ स्वन अवतंसने। शब्द इति पठ्यमाणस्यानुवादः। स्व
नयति। अन्यत्र स्वानयति॥ ४९॥ घटादयो मितः। मित्संज्ञा इत्यर्थः॥ ५०॥ जनी जृष् क्नसु रञ्जोऽमन्ताश्च। मित इत्यनुवर्तते। जृषिति ष्वित
निर्देशात् जीर्यतेर्ग्रहणम्। जृणातेस्तु जारयति। केचित्तु जनीजृष्क्नसु इति पठित्वा क्नसु निरसने इति दैवादिकमुदाहरन्ति॥ ५१॥ ज्वल
ह्वल ह्मल नमामनुपसर्गाद्वा। एषां मित्त्वं वा। प्राप्तविभाषेयम्। ज्वलयति। ज्वालयति। उपसृष्टे तु नित्यं मित्त्वम्। प्रज्वलयति। कथन्तर्हि प्र
ज्वालयति। उत्क्रामयतीति। यत्नात्तत्करोतीति णौ। कथं संक्रामयतीति। मितां ह्रस्व इति सूत्रे वा चित्तविराग इत्यतो वेत्यनुवर्त्य व्यवस्थि
तविभाषाश्रयणादिति वृत्तिकृता। एतेन रञ्जो विश्रामयन्नराज्ञाम्। घूर्ण्यां विश्रामयति इत्यादि व्याख्यातम्॥ ५२॥ एअवतंसने॥

अवतंसनं भूषणं। स्वनयतीति। भूषयतीत्यर्थः। अस्वानीत्। अस्वनीत्। अस्वनि। अस्वानि। स्वनं स्वनं। स्वानं स्वानं। घटादयो मित्संज्ञा इत्यर्थ इति। अन्येतु म
कारानुबन्धा इति व्याचक्षते। घटेम् चेष्टायामिति प्रत्येकं पाठे गौरवादेकत्रैव सर्वेषां मित्संज्ञा मकारानुबन्धकत्ववाऽनेन सूत्रेण विधीयत इति भावः ॥

सि·कौ जनीजृष्। जनी प्रादुर्भावे। जृष् वयोहानौ। क्नसु ह्वरणदीप्त्योः। रञ्जो रागे। दैवादिको भौवादिकश्च। अमन्ताः। कमिगमीत्यादयः। जनयति। जरयति। क्नसय-
टी·त ति। रञ्जयति मृगान्। रञ्जयति पक्षिणः। कमयति। गमयति। रमयति। ज्वल ह्वल। एषां मित्त्वमिति। मित इत्यनुवृत्तस्येह भावप्रधानता। अनुपसर्गादिति तु पक्षद्वयेऽपि पुंस्त्वमि-
ति·उ त्येवं ज्ञो णो न व्याख्येयमिति भावः। नमोऽनुपसर्गाद्वेति यावत्। तत्र न कश्चित् ज्ञो णः। प्राप्तविभाषेति। ज्वल दीप्तौ। ह्वल ह्मल चलने इति त्रयाणां पूर्वं पठितत्वान्नमेस्तु अ-
४५ मन्तत्वादिति भावः। कथं संक्रामयतीति। क्रमेर्णौ दाणोपदेशस्येति वृद्धिप्रतिषेधात् घञि क्रम इत्येव भवति। न तु काम इति पूर्वोक्तसमाधानस्यात्रासंभवात् एष्य कृ-

ग्लास्नावनुवमां च। अनुपसर्गादेषां मित्त्वं वा स्यात्। आद्ययोः प्राप्ते इतरयोः प्राप्ते विभाषा॥ ६३॥ न कम्यमिचमाम्। अमन्तत्वात् प्राप्तं
मित्त्वमेषां न स्यात्। कामयते। आमयति। चामयति॥ ६४॥ शमो दर्शने। शाम्यतेर्दर्शने मित्त्वं न स्यात्। निशामयति रूपम्। अन्यत्र तु प्रशम-
यति नो निशमय्य वधूः कथाः। कथं तर्हि निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति। शम आलोचने इति चौरादिकस्य। धातूनामनेकार्थत्वा-
द्वा वलेर्वृत्तिः शाम्यविवरणा॥ ६६॥ यमोऽपरिवेषणे। यच्छतिर्भोजनात् अन्यत्र मित्त्वं न स्यात्। आयामयति। दापयति। व्यापारयति वेत्यर्थः। परि-
वेषणे तु। यमयति चन्द्रलान्। भोजयतीत्यर्थः। पर्यवसितं नियमयन्नित्यादि तु नियमवच्छब्दान्तत्करोतीति णौ बोध्यम्॥ ६७॥ स्खदिर-
वपरिभ्यां च। आभ्यां मित्त्वं वा। अवस्खादयति। परिस्खादयति। अपावपरिभ्य इति न्यासकारः। स्वामी तु न कमीति नञ् प्रश्लिष्य सूत्रमननुव-
र्त्य शमोऽदर्शने इति विच्छेदः। यमस्त्वपरिवेषणे मित्त्वमाह। तन्मते पर्यवसितं नियमयन्नित्यादि सम्यगेव। उपसृष्टस्य स्खदेश्चैवं रवादिपूर्व-
स्यैवेति नियमात् प्रस्खादयतीत्याह। तस्मात् सूत्र इवे उदाहरणे प्रत्युदाहरणयोर्व्यत्यासः फलितः। इदं च मतं वृत्तिन्यासादिविरोधादुपे-

क्ष्यः। व्यवस्थितविभाषेत्यादि। क्वचित् णौ मितां ह्रस्वो न प्रवर्तत इति भावः। वृत्तिकृदिति। केचित्तु घञन्तात् क्रमशब्दात् प्रज्ञाद्यणि कामशब्दं स्वीकृत्य तस्मात् तत् न-
करोतीति णौ संक्रामयतीति समादधत इति भावः। इतरयोः प्राप्त इति। वनोः पूर्वं पाठाद् वमेरमन्तत्वाच्चेति भावः॥ ·:· ॥ ग्लापयति। ग्लपयति। स्नापयति। स्न-
पयति। वनयति। वानयति। वमयति। वामयति। शाम्यतिवदिति। यथा शाम्यतिर्निशामयतीत्यादौ दर्शने प्रयुज्यते तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीत्य-

यमोः परिविषणे। यच्छतिरिति। यमउपरमे इत्ययं धातुः। भोजनाशब्दः। एष्यासम्श्रयो युजिति युजंतो न यः। परिवेषणमिह भोजनानुकूलव्यापारस्तनोः न्यस्मिन्नर्थे मिन्निषे
धः। नियमयन्निति नियमवच्छक्याणिणिचिविन्मनोजुकिश नरि शप्रत्यये गुणेच क्षेयां व्यस्यासः फलितइति। स्वामिमनेत्व परिवेषणे आयमयति। परिवेषणे तु यामयतिम

फणगतौ। नेति निवृत्तमसम्भवात्। निषेधानुवृत्तमसौ न पठितः। फणादिकार्य्यानुरोधात्। फणान्च सप्तानाम्॥६।४।१२५॥ एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। फेणतुः पफणतुः फेणुः पफणुः फेणिथ पफणिथ फणायति। वृत्। घटादिः समाप्तः। फणेः प्रागेव वृद्दित्येके। तन्मते फाणयतीत्येव॥ ६०॥ राजृ दीप्तौ। स्वरितेत्। राजति। राजते। रराज। रेजतुः। रराजतुः। रेजे। रराजे। अत इत्यनुवृत्त्या वपि विधानसामर्थ्यादात एत्वं॥ ६१॥ टुभ्राजृ टुभ्लाशृ टुम्लाशृ दीप्तौ। अनुदात्तेतः। भ्राजते इति पाठः फणादिकार्य्यार्थः। पूर्वम्पाठस्तु वश्चादिषत्वाभावार्थः। नवहि जिसाहचर्य्यात् फणादेः वग्रहणम्। भ्रेजे। बभ्राजे। बभ्राशे। तिघ्यपन्त्वा। भ्राश्यते। भ्राशते। भ्रेशे। बभ्राशे॥ [illegible] तालव्यान्तौ॥ ६४॥ स्यमु स्वन ध्वन शब्दे। स्यमादयः स्वारसन्ताः परस्मैपदिनः। स्यमतुः। सस्यमतुः। अस्यमीत्। स्वेनतुः। सस्वनतुः। सस्वनुः। अस्वानीत्। अस्वनीत्। विष्वणति। अवष्वणति। सशब्दं भुङ्क्ते इत्यर्थः। वेश्च स्वन इति षत्वं। फणादय योगताप इ ष्वनतुः॥३॥ षम ष्टम अवैकल्ये ससाम। तस्ताम। ५। ज्वल दीप्तौ। अज्वालीत्। ६। चल कम्पने। ७। जल घातने। घातनं तैक्ष्ण्यं॥ ८। टल ट्वल वैक्लव्ये। ९। ष्ठल स्थाने॥ १०॥ हल विलेखने॥ ११॥ णल गन्धे। बन्धन इत्येके॥ १२॥ पल गतौ। पलति॥ १४॥ बल प्राणने धान्यावरोधे च। बलति। बेलतुः। बेलुः॥ १५॥ पुल महत्त्वे। पोलति॥ १६॥ कुल संस्त्याने बन्धुषु च। संस्त्यानं संहतः। बन्धुशब्देन तद्व्यापारो गृह्यते। कोलति। चुकोल॥ १७॥ शल हुल पत्लृ गतौ। शशा

सलणान अवादिपूर्वस्य स्वदेरवस्वदयति दपरि स्ववयति अपूर्वस्य तु अस्वादयतीत्येवं न्यासो ज्ञेयः। उपेत्यमिति। नयादम्येति सूत्रे आयामयतइत्युदाहृत्य इ न्याः डुकौ
यमाः परिवेषणे इत्यनेन मित्त्वं प्रतिषिध्यत इति। न्यासे पि तत्र नकम्यमीत्यतो नेत्यनुवर्त्तत इत्युक्तं। एवं हि निषेधानन्तरं पाठ उपपद्यते। अन्यथा नकमीत्यतः [illegible]
॥ त्रीं पठेदिति भावः॥ ॥ फणगतौ। फणति। लुङि। अफाणीत्॥ अफणीत्॥

सि·कौ· नानुविल्लमुल्लोरिति वा दीर्घः। अफणि। अफाणि। फणंफणं। फाणंफाणं। असंभवादिति। मित्त्वप्राप्तिं विना निषेधासंभवादिह नेत्येतन्न संबध्यते। किंतु मित्संज्ञैव न तदा
टि·त· हा फणयतीति। सामर्थ्यादिति। फणादिषु पाठसामर्थ्यादित्यर्थः। तत्र हीति षत्वविधौ हीत्यर्थः तथा च विभाषा विभाषाभ्यां पूर्वं पठितस्य तु विभाषया [illegible] मित्त्वादि
ति·उ· सिध्यतीति भावः। अस्यमीदिति। मांतत्वान्न वृद्धिः॥ अथ ज्वलादि। अज्वालीदिति। अतो ल्लांतस्येति वृद्धिः। वेल्लक्ष्य इति। वेल्लक्ष्यं भयादिजनितो हृदयतानं [illegible]
४६ इति। बंधुतानुकूलो व्यापारः॥ ॐ॥ यतः पुमामित्यादं सादृचः परः। अक्वथीदिति। एदित्वान्न वृद्धिः। एवं अपथीत्। अमथीदित्यत्रापि। टुवम्। केचिद मुमुदि
तेपठित्वा वांत्वा वमित्वेत्युदाहरंति। तत्तु वामनेन विरुध्यते। तेन हि आदितश्चेति चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य वांत इत्यत्र इडभावः साधितः। अदितेः
तु यस्य विभाषेत्यनेनैव वांत इति सिद्धे लदसंगतं स्यात्। एवं च स्याप्रत्यये वमित्वमेव साधु निपातनादिति। अन्यथा गुणे सति उद्गरण इति स्यात्। [illegible] अपि

पतः पुम्। ७।४।१९॥ अङि परे। अपप्तत्। नेर्गदेति णत्वं। प्रण्यपप्तत्॥ २०॥ क्वथे निष्पाके। क्वथति। चक्वाथ। अक्वथीत्॥ २१॥ पथे गतौ। अप
थीत्॥ २२॥ मथे विलोडने। मेथतुः। अमथीत्॥ २३॥ टुवम् उद्गिरणे। इहैव निपातनात् ह्रस्वत्वमिति सुधाकरः। ववाम। ववमतुः। वमित्वा। वांत्वा
भ्यासलोपौ न। आगच्छतेत्तु वमतुरित्याद्युदाहृतम्। तज्ज्ञाप्यादौ न दृष्टम्॥ २४॥ भ्रमु चलने। वा भ्राशेति श्यन्वा। भ्राम्यति। भ्रमति। भ्राम्यतीति
॥ गुर्दिवादेर्वृस्यते॥

निर्देश आधुनिकस्यापि प्रयोगादरादित्वात् इत्वमित्यत्रैव तात्पर्यं बोध्यं रत्नाप्यप्रदात्तनमिति। वेमुश्चके चिकुर्धिरमित्यादिप्रयोगात्
सेधेन तथोदाहृतमित्याहुः। ननु क्रादित्वेन निषेधादेत्वाभ्यासलोपौ कथमिह स्यातामिति चेद् आहुः नस्य प्रसरद्वारादि गुणानामिति सूत्रेणैव नकारांतसंघा
तग्रहणेन इष्टसिद्धेरादिग्रहणमौपदेशिकप्रतिपत्त्यर्थमेकां त्ता अनुबंधा इति च स्वीक्रियते। तथा च नायं क्रादिः। किंतु कृदिरिति अन्ये तु वमेराद्युक्ते व्योरिति
लोपेन थकारः प्रश्लिष्यते। ततश्चोपदेशो वादित्वाभावान्निषेधो नेत्याहुः। भ्रमु चलने। मंडलाकारेण चलनमेव धात्वर्थो न तु चलनमात्रं तद्भावेऽप्यबहिर्भूष्य
कृतनु प्रकारकज्ञानं च धात्वर्थः। शुक्तिं पश्यन् रजतमिति भ्रमतीति प्रयोगात्। उदितो वेति क्त्वायां वेट्। भ्रमित्वा। भ्रांत्वा। यस्य विभाषेति निष्ठायां नेट्। भ्रांतः।
नन्वस्य ज्वलादिगणे पाठः किमर्थः। न चात्र णप्रत्ययार्थमेव पाठ इति वाच्यं। पचाद्याकृतिगणत्वादच् प्रत्ययेनापि भ्रम इति रूपसिद्धेः। नोदात्तोपदेशा।

स्यातिवृद्धिनिषेधात् णप्रत्यये अच्प्रत्यये च रूपस्य तुल्यत्वादिति चेत्। अत्राहुः। यदि पचादित्वादच्प्रत्ययः स्यात्तर्हि अभ्रम इत्यत्र अच्कावशङ्काविति नञः परमन्तो
दात्तं स्यात् णप्रत्यये त्विह तत्पुरुषे तुल्यार्थ इत्याद्युदात्तमेव भवतीत्यपि॥ ःः ॥ वाजॄभ्रमुत्रसां। अम्रासत विभाषेयं। अभ्रमीदिति। मान्तत्वान्न वृद्धिः। अक्षारीदिति। हलं
तलक्षणायाद्वृद्धेर्नेटीति निषेधप्यतो ल्लान्तस्येति वृद्धिः। षह। अपराधे सत्यपि कोपानाविष्करणं मर्षणं। सहिवहो। इह रेफलोपस्यासंभवात् ढ्लोपे पूर्वस्य
तो ढ्लोप एवानुवर्तते तदाह। ढ्लोप इति ढ्लोपे किं। सहते। वहते। सोढः। षत्वं नेति। नरपरेति सूत्रान्नेत्यनुवर्तत इति भावः। सिवादीनां। सिवु सह सुट् स्तु स्व
ञ्जः सिवादयः। पर्यषीव्यत्। पर्यसीव्यत्। पर्यष्करोत्। पर्यस्करोत्। न्यष्टौत्। न्यस्तौत्। न्यष्वजत्। न्यस्वजत्। रमु क्रीडायां। अमुमुदितं मत्वा रंत्वा रमित्वेति केचिदुदाज

वाजॄभ्रमुत्रसाम्। ६।४।१२४॥ एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च। भ्रेमतुः अभ्रमीत्। १५॥ क्षर संचलने। अक्षारीत्
॥१६॥ अथ ह्यावनुदात्तेतौ। षह मर्षणे। परिनिविभ्य इति षत्वं। परिषहते। सेहे। सहिता। तीषसहेति वा इट्। इडभावे ढत्वधत्वष्टुत्वढलोपाः
सहिवहोरोदवर्णस्य। ६।३।११२॥ अनयोरवर्णस्य ओत्स्यात् ढ्लोपे सति। सोढा। ८।३।११५॥ सोढरूपस्य सहेः सस्य षत्वं न स्यात्। परिसो
ढा। सिवादीनां वाड्व्यवायेपि। ८।३।७१॥ परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेपि। पर्यषहत। पर्यसहत। १। रमु क्रीडायां। रेमे
रेमिषे। रन्ता। रंस्यते। रंसीष्ट। अरंस्त॥ २॥ अथ कसन्ताः परस्मैपदिनः। षद्लृ विशरणगत्यवसादनेषु। पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिश
दसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः। ७।३।७८॥ पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। सीदति। स

हुलन्मा घकारयोन सहंते। तथा च क्त्वायां रंत्वेत्येव साधु रेमिषे इति। क्रादिनियमादिट्। पचाद्यच्। दापारमा। घञि तु रामः। अमन्तत्वेन मित्वात् णौ ह्रस्वः। रमय
ति। षद्लृ। विशरणमवयवानां विश्लेषः। अवसादनं नाशः। पाघ्राध्मा। पा पाने। पा रक्षणे इति तु न गृह्यते। लुग्विकरणत्वात्। दृशीति केषांचित्पाठस्तत्र
शोरित्यम् अर्तीत्यादि ऋच्छादेशाद्यभावश्च सौत्रत्वात् पश्याद्यादेशाभाव इति बोध्यं। दृश्यर्तीति पाठस्तु न दुष्ट एव। पादीनामिति। एकादशानामेषां यथासंख्यं एका
दशापि वा द्यादेशाः स्युरित्यर्थः। ष्ठिवुक्लमुचमामित्यतः शितीत्यनुवर्तते स च कर्मधारय इत्यभिप्रेत्याह। इत्संज्ञकशकारादाविति। शकारादाविति किं। पपौ। जघ्रौ।

ट्
रध्ये। शिशीति बहुव्रीहिरित्यभ्युपगमे त्विह विवादादेशाः स्युरेव॥ ॐ ॥ सेदिथेति। उपदेशेऽत्वत इति क्रादिनियमप्राप्तस्य वेनिषेधेपि भारद्वाजनियमादिट् स
दः परस्य। सदेरिति षष्ठी। फलितमाह। अभ्यासात्परस्येति। स्यादिष्वभ्यासेन चेति प्राप्तिः। लिटीति किं। निषिषत्स्यति। सदिस्वंज्योरिति वृत्त्या रेढोपि [illegible]
पक्षितः। भाष्यानानुगुणत्वात्। निषसादेति। सदिरप्रतेरित्यत्राप्रतेरिति पर्युदासान्न्यतिससादेत्यत्राभ्यासस्यापि षत्वं नेति बोध्यं। शद्लृ विशीर्णतायामिति व
क्तव्ये शातनेरस्तु क्रिसंगतेत्याशंक्य कथंचित्समाधत्ते। शातनं त्विति। शदेरेव हि लिचि शदेरगतौ त इति तत्वे लुटि च शातनमिति रूपं। तथा चास्य धातोरि
दं रूपं प्रसिद्धं चेत्यभिप्रेत्य तन्निर्देशः कृतः। यथा गम्लृ गतौ। डुपचष् पाक इत्यादाविति भावः। कुच संपर्चनादौ। कुच शब्दे तारे इति च वर्गीयान्तेषु पठितस्य

सेदिथ। ससत्थ। सत्ता। सत्स्यति। लृदित्वादङ्। असदत्। सदिरप्रतेः। निषीदति। न्यषीदत्। सदेः परस्य लिटि॥८।३।११८॥ सदेरभ्या
सात्परस्य षत्वं न स्यात् लिटि। निषसाद। निषेदतुः॥ १ शद्लृ शातने। विशीर्णतायामयं शातनन्तु विषयतया निर्दिश्यते। शदेः शितः॥१।
३।६०॥ शिद्भाविनोऽस्मादात्मनेपदं स्यात्। शीयते। शशाद। शेदतुः। शेदिथ। शशत्थ। शत्ता। अशदत्॥२॥ क्रुश आह्वाने रोदने च। क्रोश
ति। क्रोष्टा। क्रुक्षः। अक्रुक्षत्॥३॥ कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। कोचति। चुकोच॥४॥ बुध अवगमने। बोधति। बोधिता। बो
धिष्यति॥५॥ रुह बीजजन्मनि प्रादुर्भावे च। रोहति। रुरोह। रुरोहिथ। रोढा। रोक्ष्यति। अरुक्षत्॥६॥ कस गतौ। अकासीत्। अकसीत्॥७॥
॥ वृत्। ज्वलादिगणः समाप्तः॥ ॥ अथ गूहत्यन्ताः स्वरितेतः॥ हिक्क अव्यक्ते शब्दे। हिक्कति। हिक्कते॥ १॥ ॥ ॐ ॥

पुनरिह पाठः संपर्चनादावेव ज्वलादित्वप्रयुक्तो णप्रत्ययो यथा स्यादिति मनोरमादौ स्थितं अत्र नव्याः। अनेनैव ग्रंथेन पाणिनिनापि क्वचित् क्वचित् अर्थनिर्दे
शः कृत इत्यनुमीयते। अन्यथाऽत्रस्य ग्रंथस्वारस्यभंगापत्तेरित्याहुः। बोधितेति। बुध्यतेर्वा निट्कारिकासु पठितत्वादयं सेडिति भावः। अकासीदिति। हलं
तलक्षणा या वृद्धिर्नेटीति निषेधे प्राप्ते हलादेरिति वैकल्पिकी वृद्धिः। वृदिति। अत्र नव्याः। ज्वलितिकसन्तेभ्य इति निर्देशाद्वृत्करणमिहानार्थमित्यनुमी
यते। अन्यथा ज्वलादिभ्यो ण इत्येव सूत्रयेदित्याहुः॥

अंचुगतौ। अनिदितामितिन लोपः। अच्यात्। अचीत्येकीयमते तु इदित्वादंच्यात्। मेधृ संगमे च। चानपूर्वोक्तेर्थे। प्रजायै गृहमेधिनामित्यत्र गृहैर्दारैर्मेधन्ते

अञ्चु गतौ याचने च। अञ्चति। अञ्चते॥ २॥ अचु इत्येके॥ ३॥ अचि इत्यपरे॥ ४॥ डुयाचृ याच्ञायाम्। याचति। याचते॥ ५॥ रेटृ परिभाषणे। रेटति। रेटते॥ ६॥ चते चदे याचने। चतति। चतते। अचतीत्। चचाद। चेदे। अचदीत्॥ ८॥ प्रोथृ पर्याप्तौ। प्रोथति। प्रोथते॥ ९॥ मिदृ मेदृ मेधाहिंसनयोः। मिमेद। मिमेदे। मेधा। विमा। वितिस्वामी। नमा। मिमेथ। धांना। वितिन्यासः॥ ११॥ मेधृ सङ्गमे च। मेधति। मिमेधे॥ १२॥ णिदृ णेदृ कुत्सासन्निकर्षयोः। निनेद। निनिदतुः। निनिदे॥ १४॥ शृधु मृधु उन्दने। उन्दनं क्लेदनम्। शर्धति। शर्धते। शर्धिता। मर्धति। मर्धते॥ १६॥ बुधिर् बोधने। बोधति। बोधते। इरित्वादङ्वा। अबुधत्। अबोधीत्। अबोधिष्ट। दीपजनेति चिण् तु न भवति। पूर्वोत्तरसाहचर्य्येण दैवादिकस्यैव तत्र ग्रहणात्॥ १७॥ उबुन्दिर् निशामने। बुबुन्द। अबुदत्। अबुन्दीत्॥ १८॥ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु। वेणति। वेणते। नान्तोऽप्ययम्॥ १९॥ खनु अवदारणे। खनति। खनते। गमहनजनखनघसां लोपः क्ङित्यनङि। ६। ४। ९८॥ एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि। चख्नतुः। ये विभाषा। ६। ४। ४३। खायात्। खन्यात्॥ २०॥ चीवृ आदानसंवरणयोः। चिचीव। चिचीवे॥ २१॥ चायृ पूजानिशामनयोः॥ २२॥ व्यय गतौ। अव्ययीत्॥ २३॥ दाशृ दाने। ददाश। ददाशे॥ २४॥ भेषृ भये। गतावित्येके। भेषति। भेषते॥ २५॥ भ्रेषृ भ्लेषृ गतौ॥ २६॥ असगतिदीप्त्यादानेषु। असति। असते। आस। आसे। अयं षान्तोऽपि॥ २७॥ स्पश बाधनस्पर्शनयोः। स्पर्शनं ग्रन्थनम्। स्पशति। स्पशते॥ २८॥ लष कान्तौ। वा भ्राशेति श्यन्वा। लष्यति। लषति। लेषे॥ २९॥ चष भक्षणे॥ ३०॥ छष हिंसायाम्। चच्छषतुः। चच्छषे॥ ३१॥ झष आदानसंवरणयोः॥ ३२॥ भ्लक्ष भक्ष अदने॥ ३४॥ भक्ष इति मैत्रेयः॥ ३५॥ दासृ दाने॥ ३६॥ माहृ माने॥ ३७॥ गुहू संवरणे॥ ॥ ९९ संगच्छन्ते इति विग्रहः। सुप्यमानात्षिन्तितितिलं...

...धमधक्लेदनमिति। आर्द्रीभाव इत्यर्थः। उदित्वात्क्त्वायां वेट्। शर्धित्वा। शृद्ध्वा। उबुन्दिर्। बुंदित्वा। बुत्त्वा। निष्ठायां बुन्नम्। निशामने। चाक्षुषं ज्ञानमिति ज्ञानं गत्या।

सि·कौ· टि·त· ति·उ· ४८

दृषः पंचार्थाः। वाद्यभांडस्य वादनार्थग्रहणं वादित्रग्रहणं। वेलिः वेणी। वेणुरित्यादिरूपाण्यस्यैव धातोः। नांतोपीति। उत माता महिषमन्ववेनदित्यत्र त्वात् दृर्षी
नाश्चितिभावः। खनु। खनित्वा। खात्वा निष्ठायां। खातः। गमहन। अचिश्नुधातुभ्रुवामित्यतो अचीत्यनुवर्तते। उदुपधाया गोहः इत्यत उपधाग्रहणं च। तदा होत्यमुम्
पधाया इत्यादि। जग्मतुः। जग्मुः। जघ्नतुः। जघ्नुः। जघ्ने। जघ्नाते। जक्षतुः। घसः अनङीति किं। अगमत। चीवृ चीवरं वस्त्रं चीवरपीवरमीवरेत्युणादिषु निपातितौ। ये
यगतौ। विज्ञ त्यागे तु नित्यमात्मनेपदी गत इति मनोरमा। नकुत्रापि गत इति चिंत्येवसा। अभ्युपीदिति। यांतत्वान्न वृद्धिः। स्पश बाधनस्पर्शनयोः। लिः श्रोति। भ
श्चङि। अपस्पशत। अत्स्मृदृत्वरप्रथेत्यादिना अभ्यासस्यात्वं सन्वदित्वापवादः। पस्पशायङ् नादचियङ्नौ चिचेति लुक्। अजाघत इति टापादौ घौकि स्पश्या

ऊदुपधाया गोहः। ६।४।८९॥ गुह उपधाया ऊत्स्याद्गुणहेतावजादौ प्रत्यये। गूहति गूहते। ऊदित्वाद्वेट्। गूहिता। गोढा। गूहिष्यति। घोक्ष्यति। गूहेना। गूढ्वा
ता। अगूहीत। इडभावे क्सः। अघुक्षत। लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये। ७।३।७३॥ एषां क्सस्य लुग्वा दन्त्ये तङि। ढत्वधत्वष्टुत्वढलोपदीर्घाः।
अगूढ। अघुक्षत। क्सस्याचीत्यन्तलोपः। अघुक्षाताम्। अघुक्षन्त। अगुह्वहि। अघुक्षावहि। अघुक्षामहि॥ ३९॥ अथाजन्ता उभयपदिनः। श्रिञ्
सेवायाम्। श्रयति। श्रयते। शिश्रियतुः। श्रयिता। णिश्रीति चङ्। अशिश्रियत्॥ १॥ भृञ् भरणे। भरति। बभार। बभ्रतुः। बभर्थ। बभृव। बभृम। भर्त्ता
ऋद्धनोः स्ये। ७।२।७०॥ ऋतो हन्तेश्च स्यस्य इट् स्यात्। भरिष्यति। रिङ् शयग्लिङ्क्षु। ७।४।२८॥ शे यकि यादावार्धधातुके लिङि च ऋतो रिङ् रे
घ्नः स्यात्। रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न। भ्रियात्॥ ॥ ८८ संस्यदीर्घलुन भवति। संज्ञापूर्वकविधेरनित्यत्वादित्याहुः। जपजभदहदशभंजपसां चे

त्यत्र पसेति सौत्रो धातुः। पसतीत्यादि। यङ्लुकोः जपजभेत्यनेनैवाभ्यासस्य नुक्। यङि। पंपस्यते। लुकि। पंपसीति। पंपस् इति। कंड्वादिः पंपस्यति॥ ॥ ऊदुपधाया गुण
हेताविति। एतच्च गोह इति विकृतनिर्देशाल्लब्धं। अचिश्नुधातुरित्यतोऽनुवृत्तेनाचीत्यनेनांगाक्षिप्तप्रत्ययो विशेष्यते विशेषणेन तदादिविधिलसाह। अजादौ विति
दन्त्ये तङीति। दन्त्यादौ तङीत्यर्थः। अदुग्ध। अधुक्षत। अदिग्ध। अधिक्षत। अलीढ। अलिक्षतेत्यादि। रिङ् शयग्लिङ्क्षु। अयङ्यि क्ङितीत्यतोऽनुवृत्तं यीत्येतल्लिङ
एवं विशेषणं शेऽसंभवाद्यकि तु वैयर्थ्यात्। तथा अकृत्सार्वधातुकयोरित्यनुवृत्तमपि लिङ एव विशेषणमित्यभिप्रेत्याह यादावित्यादि। शे। भ्रियते। तुदादिभ्यः

उश्च। ऋको झल इत्यतो झलग्रहणं लिङ्सिचाविति पूर्वसूत्रं चानुवर्तते न तु हलः। ऋवर्णादित्यादि। अभार्षीदिति। सिचि वृद्धिरिति वृद्धिः। ह्रस्वादंगात्। ह्रस्वात् किं। अच्यो
ष्ट। अच्योष्ट। अंगग्रह णादिह न। लस्येत्यतः लस्येत्यनुवृत्तावपि प्रत्ययस्यैव तत्रापि ग्रहणात् सिच एव लोपो भवति तेनेह न। अलाविष्टाम्। केचित्त्विह अंग ग्रह
णाभावे अपाविष्टाम्। अलाविष्टामित्यादावपि अतिप्रसंगः स्यादित्याहुः। ह्रस्वादपरे न क्षमंते। संन्निपातपरिभाषयापि परिहारसंभवादिति। झलीति किं। अभृषाताम्। अ
भृषत। हृञ् हरणे। चत्वारः इहार्थाः। भारं हरति। प्रापयतीत्यर्थः। अंशं हरति। स्वीकरोतीत्यर्थः। स्वर्णं हर ति। चोरयति। पापं हरति। नाशयति। धृञ् धारणे। धारणं ध
तुः इत्यर्थः। दधो दधाते धत्ते। म्रियमाणं लीञ्। निनयिथेति भारद्वाजनियमादिट्कल्पः। आदेच उपदेशेऽशिति। लिटि धातोरित्यतो धातोरित्यनुवृत्तं एचा विशेष्यते। तदा
हा। एजंतस्य धातोरिति। उपदेशे किं। चेता। स्तोता। अनुलासूलिकत्वादेवात्र न भविष्यतीति चेत्। अत्राहुः वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इति स

उश्च।१।२।१२। ऋवर्णान्परौ झलादी लिङ्तङ्परः सिच्चेत्येतौ कितौ स्तः। भृषीष्ट। भृषीयास्तां। अभार्षीत्। अभार्ष्टाम्। अभार्षुः। ह्रस्वादङ्गात्। ८।
।२।२७॥ सिचो लोपः स्यात् झलि। अभृत। अभृषाताम्। अभरिष्यत्।२॥ हृञ् हरणे। हरणम् प्रापणं स्वीकारः स्तेयं नाशनं च। जहर्थ। जह्रिव
जह्रिम। हर्ता। हरिष्यति॥ ३॥ धृञ् धारणे। धरति। अधार्षीत्। अधृत॥४॥ णीञ् प्रापणे। निनयिथ। निनेथ॥५॥ अथाजन्ताः परस्मैपदि
नः। धेट् पाने। धयति। आदेच उपदेशेऽशिति॥६।१।४५॥ उपदेशे एजन्तस्य धातोरात्वं स्यान्न तु शिति॥

९ पनार्थमुपदेशग्रहणं। नेक्रीङ्
जीनां णौ वितिकृतात्वे क्रापयतीत्यादौ पुक् सिध्यतीति मनोरमा कृता। धातोः किं। गोभ्याम्। नौभ्याम्। अस्ति त्वत्रापि गमेर्डो ग्लानुदिभ्यां डाविन्युपदेशे एच्। अ
प्रसज्यप्रतिषेध इत्याह। न तु शितीति। पर्युदासे तु जग्लेमम्लेरित्यादौ द्विर्वचनेचीति निषेधादात्वं न स्यादभ्यासे इकारश्रवणापत्तेः। किंच। सुग्ल इत्यत्र आतश्चोपसर्गे
इति कः सुग्लेत्यत्र आतश्चोपसर्ग इति क्रियामाह सुग्लान इत्यत्र आतो युजिति युच् न स्यात्। अन्यनिमित्तत्वात्। तमादं ताच्छ प्रत्यय इत्यन्योन्याश्रयात्। प्रसज्यप्रतिषेधे तु न कोऽपि दोषः।
व्हा वामश्चेति सूत्रे णकबाधनार्थं पुनरात्वविधानं च प्रतिषेधपक्षे ज्ञापकं। तदाहुः। अनैमित्तिकमात्वं शिति तु प्रतिषेध इति। नन्वेवमपि एशः शित्वात् म्लेः त्
शिसिध्यतीति चेत्। अत्राहुः यदि तु शितीति बहुव्रीहिः स्यात्तदा त्रस्यादेव दोषः। किंतु कर्मधारयोऽयं। तथा चाशितीत्यनेनेत्संज्ञकशकारादौ प्रत्यये परे नैषः ॥

सि·कौ· धातुग्रहणात्क्तिस्तस्य प्रत्ययस्यापि ग्रहणमिति कर्मधारयेण विशेषणाद्विषयसप्तम्यां तु इत्संज्ञकशकारादिभिन्नप्रत्ययविषये आत्वमित्यर्थान्न पर्युदासेपि न क्षतिरिति ॥
ति·त· आत औ णलः। इह अंगस्येत्यनुवर्तते धातोरिति तु फलितार्थकथनं आदंताद्अंगादित्यर्थः। आतो लोप इटि च। आर्द्धधातुक इत्यनुवर्तते दीङो युडचि क्ङितीत्यतोऽधि
ति·उ· क्ङितीति च तदेतत्फलितमाह। अजाद्योरार्द्धधातुकयोरिति। अजाद्योः किं। ग्लायते। यक्। जाग्लायते। यङ्। दासीय। डु दाञो लिङ्क्तमेकवचनमिदं। आर्द्धधातुके किं।
४८ किं। यांति। वांति। व्यत्यरा। रा दाने। कर्मव्यतिहारे धातोर्लङुत्तमैकवचनमिदं। दधिथेति। एवं च अजाद्यार्द्धधातुकक्ङित्वेन दधिव दधिम इत्यादिषु आतो लोपसिद्धावपि दधिथ
पपिथ इत्यादिरूपसिद्धये सूत्रेऽस्मिन्निटीति ग्रहणमावश्यकमिति ज्ञेयं। यदि तु इडागमं एकात्र गृह्यते व्याख्यानात्तदा चिक्ङितीत्येतदार्द्धधातुकस्यैव विशेषणं तूभयोः
। दाधाघ्वदाप्। इह दारूपाश्चत्वारः। डु दाञ् दाने। दाण् दाने। दो अवखंडने। देङ् रक्षणे। धारूपौ तु द्वौ। डु धाञ् धारणपोषणयोः। धेट् पाने। अनुबंधानामनेकांतत्वाद्दा

आत औ णलः। ७।१।३४॥ आदन्ताद्धातोर्णल औकारादेशः स्यात्। दधौ। आतो लोप इटि च। ६।४।६४॥ अजाद्योरार्द्धधातुकयोः क्ङिदिटोः पर
योरातो लोपः स्यात्। द्वित्वात्पूर्वत्वाल्लोपे प्राप्ते द्विर्वचनेचीति निषेधः। द्वित्वे कृते आलोपः। दधतुः। दधुः। दधिथ। दधाथ। दधिव। दधिम। धाता
दाधाघ्वदाप्। १।१।२०॥ दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। एर्लिङि। ६।४।६७॥ घुसंज्ञानां मास्थादीनां च एत्वं स्यादार्द्धधा
तुके किति लिङि। धेयात्। धेयास्तां। धेयासुः॥ ॥ ११ देच उपदेशे इत्यात्वे दो देङ् धेटामनुकरणे दाधारूपत्वमस्ति। एवं च दाश्च दाश्च दाः। धाश्च

धाश्च धौ। दाश्च धौ च दाधाः इति विग्रहः। दाप्दैपौ विनेति। दाप् लवने। दैप् शोधने। एतन्नाभिन्ना इत्यर्थः। दैपः पित्वमिह प्रतिषेधार्थं न त्वनुदात्तार्थं। अनुदात्तौ सुप्पितौ
इति प्रत्ययस्यैव पितोऽनुदात्तत्वात्। न च दैपो लाक्षणिकत्वान्नास्य प्रतिषेध इति शंक्यं। पित्करणस्य आनर्थक्यप्रसंगात्। इदमेव दैपः पित्वं गामादाग्रहणे
ष्वविशेष इति परिभाषाया ज्ञापकमित्याहुः। अदाविति किं। दातं बर्हिः लूनमित्यर्थः। इह दो दद्घोरिति दद्भावो न। अवदातं मुखं। शुद्धमित्यर्थः। इह त्वच उपस
र्गादिति तादेशो न। एर्लिङि। मास्थादीनामिति। मास्थागापाजहातिसामित्यर्थः। मा माने। गा मा दा ग्रहणेष्वविशेऽपि माङ्मेङौ नेह गृह्येते। लिङि कित्वासंभवा
न्। ष्ठा गतिनिवृत्तौ। गै शब्दे। गाङ् गताविति तु न गृह्यते लिङि कित्वासंभवादेव। पा पाने। ओहाक् त्यागे। षोऽन्तकर्मणि देयात्। धेयात्। मेयात्। स्थेयात्। गेयात्।

पेयात्। हेयात्। अवसेयात्। आर्द्धधातुके किं। मायात्। मायातां। मायुः। किताीति किं। दासीष्ट। इह दोङोयुङ्चीत्यतः क्ङितीत्यनुवर्तमानेपि प्रकृतोपयोगितया किती त्यस्ये

विभाषा घेट्धोः। ३। १। ४९॥ आभ्यां च्लेश्चङ्स्यात्कर्तृवाचिनि लुङि परे। चङीति ह्रस्वं। अदधत्। अदधतां॥ विभाषा घ्राधेट्शाच्छासः। २। ४। ७८।

एभ्यः सिचो लुग्वास्यात्परस्मैपदेषु परे। अधात्। अधातां। अधुः। यमरमनमातां सक् च। ७। २। ७३॥ एषां सक्स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु।

अधासीत्। अधासिष्टां। अधासिषुः॥ १॥ ग्लै म्लै हर्षक्षये। हर्षक्षयो धातुक्षयः। ग्लायति। जग्लौ। जग्लिथ। वान्यस्य संयोगादेः। ६। ४। ६८॥

घुमास्थादेरन्यस्य संयोगादेर्द्धातोरात एत्वं वा स्यादार्द्धधातुके किति लिङि। ग्लायात्। ग्लेयात्। अग्लासीत्। म्लायति॥ ३॥ धैन्य कारणे। न्यकरणेनि

रस्कारः॥ ४॥ द्रै स्वप्ने॥ ५॥ ध्रै तृप्तौ॥ ६॥ ध्यै चिन्तायाम्॥ ७॥ रै शब्दे॥ ८॥ स्त्यै ष्ट्यै शब्दसङ्घातयोः। स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्यं। प्रयो

जनं तु निष्ट्यायति। अतिष्ट्य पदिस्तत्र षत्वं॥ ९॥ खै खदने॥ १०॥ क्षै जै षै क्षये। क्षायति। जजौ। ससौ। साता। घुमास्थेत्यत्र विभाषा घ्राधे

ड्इत्यत्र च सस्य तेरेव ग्रहणं न त्वस्य। तेन एत्वसिजलुकौ न। सायात्। असासीत्॥ १५॥ कै गै शब्दे। गेयात्। अगासीत्॥ १६॥ शै श्रै पाके॥ १७॥ पै ओ

वै शोषणे। पायात्। अपात्। अपासीत्। घुमास्थेतीत्वं न दैप्। दाधाघ्वदाबिति लिङीत्येत्वं नातिस्थेति सिजलुक् न। पा इत्यस्य लाक्षणिकत्वात्॥ २०॥ ष्टै वेष्टने। स्ताय

ति॥ २१॥ स्नै वेष्टने। शोभायां चेत्येके। स्नायति॥ २२॥ दैप् शोधने। दायति। अघुत्वादेत्वसिजलुकौ न। दायात्। अदासीत्॥ २३॥ पा पाने। पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः

बादेशः। तस्यादन्तत्वान्नोपधागुणः। पिबति। पेयात्। अपात्॥ २४॥ घ्रा गन्धोपादाने॥ जिघ्रति। घ्रायात्। घ्रेयात्। अघ्रासीत्। अघ्रात्॥ २५॥ ध्मा श

ब्दाग्निसंयोगयोः। धमति॥ २६॥ ष्ठा गतिनिवृत्तौ॥ तिष्ठति। स्थादिष्वभ्यासेनेति षत्वं। अधितष्ठौ। उपसर्गादिति षत्वं। अधिष्ठाता। स्थेयात्॥ २७

॥ म्ना अभ्यासे। मनति॥ २८॥ दाण् दाने। प्रणियच्छति। देयात्। अदात्॥ २९॥ ह्वृ कौटिल्ये। ह्वरति॥ (( वानुवृत्तिः कृता॥ ◌ ॥ विभाषा धे

ट्श्व्योर्लुङीत्यनुवर्तते। णिश्रीत्यस्मान्नकर्तरीति च न दाह। च्लेश्चङ्वेत्यादि। अदधदिति। चङि आतो लोपः। श्वयतेरुदाहरणमशिश्वियत्। विभाषा घ्रा। इहं त्यस्ति

सि·कौ· यार्थेत्यतो लुगनुवर्तते गातिस्थेत्यतः सिचः परस्मैपदेष्विति च न दाहा सिचो लुग्वेत्यादि। अधुरिति। आत इति झेर्जुस्। परस्मैपदे किं। व्यस घ्रासत्यपमरमनमा। इह आईधा
टि· त· तुकस्येड्वलादेरितीडनुवर्तते अंजेः सिचीत्यतस्सिच्यहणं सुसुधून्भ्य इत्यतः परस्मैपदग्रहणं च न दाहा एभ्यः सिच इडित्यादि। अयंसीत्। अयंसिष्टां। व्यरंसीत्। व्यरंसि
ति· उ· ष्टां। अनंसीत्। अनंसिष्टां। परस्मैपदेषु किं। उदयंस्त भारं। अरंस्त। अरंसातां। वान्यस्य। अन्यस्य किं। स्थेयात्। धेत्यकरणे। धायति। इधौ अधासीत्। घुमास्थेत्यत्रेति व्याख्या
५० नात्तत्रांतरे जहातिस्यतीनामिति श्यना निर्देशाच्छेति भावः। विभाषा घ्रेति श्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः। एवं शाच्छासेति पुग्विधावपि स्यते
रेवग्रहणमिति बोध्यं। तेनास्य अर्तिह्रीति पुगेव। सापयति। पै। ओवै। पायति। वायति। शुष्यतीत्यर्थः। ओदितश्चेति निष्ठानत्वं। वानः। शुष्के वान मुभे विद्विषि समरः। अद
तत्वादिति। केचित्तु अंगवृत्तपरिभाषयापि गुणाभावं समर्थयंति। घ्रागंधोपादाने। गंधोपादानं गंधग्रहणं। नन्वेवं कर्मणो धात्वर्थेनोपसंग्रहादकर्मकत्वे न जिघ्रति
कुसुममित्यादिप्रयोगो न सिध्येदिति चेत्। अत्राहुः। यद्धात्वर्थेन कर्तृनिष्ठकर्मण उपसंग्रहणं तस्यैव धातोरकर्मकत्वं नान्यस्य भवति हि जीवति नृत्यतीत्यादेरकर्मक

ऋतश्च संयोगादेर्गुणः। ७।४।१०॥ ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि। किदर्थमपीदम्परत्वाल्लित्यपि ॥ ॥
भवति। रपरत्वं। उपधावृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। ह्वर्ता। ऋद्धनोः स्ये। ह्वरिष्यति॥

त्वं। तदर्थोपसंगृहीतकर्मणः कर्तृनिष्ठत्वात्। घ्राधातोः कर्मणस्त्वतथात्वान्नाकर्मतेति। ध्माशब्दाग्निसंयोगयोः। शब्दशब्देन तदनुकूलो वायुरिह गृह्यते तेन शंखं
धमतीतिवत् मृदंगं धमतीति प्रयोगो नेत्याहुः। अग्निसंयोगे सुवर्णं धमति। अग्निना संयुनक्तीत्यर्थः। स्थेयादिति एर्लिङीति नित्यमेत्वं। लुङि अस्थात्। म्ना अभ्यासे मन
तीति विग्रहः। अभ्यस्यतीत्यर्थः। मम्नौ। अम्नासीत्। अदादिति। गातिस्थेति सिचो लुक्॥ ॥ ऋतश्च संयोगादेः। किं। चक्रतुः। चक्रुः। तपरकरणं स्पष्टार्थं। ऋ ॠ इत्या
दौ लिटि। तत्र ऋतुरित्यादौ ऋच्छत्यॄतामिति गुणस्य जायमानत्वात्। चकारो मन्दप्रयोजनः। दयतेर्दिगि लिटीत्यतो लिटीत्यनुवर्तनादाह। गुणः स्याल्लिटीति। अवृद्धिनिमित्ते
लिटीति प्राचो व्याख्यानं तु नादर्तव्यं। न च स्वविषये वृद्धिर्बाधिकेति फलितार्थकथनपरतया तदुक्तिः संगच्छत इति वाच्यं। परत्वेन गुणस्यैव न्याय्यत्वादिति भावः॥

गुणोऽर्ति। अर्तीति भ्वादिह्वादयोर्ग्रहणं। लुका निर्देशस्तु सौत्रः। ऋग्रहणे कर्तव्ये श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः। रीङ् ऋत इत्यस्मादृत इति वर्तते न च संयोगादिरित्येन विशेष्यते।
न दाहा। संयोगादेरिति। अर्तिसंयोगाद्योः इत्यकारे विधेये गुणग्रहणं चिंत्यप्रयोजनं। अयङ्यि क्ङितीति सूत्रात् यीत्यनुवर्तते तच्च लिङो विशेषणं। रिङ्शयग्लिङ्क्ष्विति

गुणोऽर्तिसंयोगाद्योः।७।४।२९॥ अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्द्धधातुके लिङि च। ह्वर्य्यात्। अह्वार्षीत्। अह्वार्ष्टाम्॥ ३०॥ स्वृ श
ब्दोपतापयोः। स्वरति। स्वृतीति वेट्। सस्वरिथ। सस्वर्थ। वमयोस्तु। श्र्युकः किति।७।२।११। श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिण्न स्यात्। परम
पि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सस्वरिव। सस्वरिम। परत्वादृद्ध
नोरिति नित्यमिट्। स्वरिष्यति। स्वर्य्यात्। अस्वारीत्। अस्वारिष्टाम्। अस्वार्षीत्। अस्वार्ष्टाम्॥ ३१॥ स्मृ चिन्तायाम्॥ ३२॥ ह्वृ संवरणे॥ ३३॥ सृ गतौ।
क्रादित्वान्नेट्। ससर्थ। ससृव। रिङ्। स्रियात्। असार्षीत्। असार्ष्टाम्। सर्तिशास्त्यर्तिभ्यश्च।३।१।५६। एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि। इह लुप्तश
पा शासिना साहचर्यात्सर्त्यर्ती जौहोत्यादिकावेव गृह्येते। तेन भ्वाद्योर्नाङ्। शीघ्रगतौ तु पाघ्रेति शिति धौ आदेशः। धावति॥ ३४॥ ऋ गतिप्रापण
योः। ऋच्छति। ऋच्छत्यृताम्।७।४।११। तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणः स्याल्लिटि। णलि प्राग्वदुपधावृद्धिः। आर। आरतुः। आरुः। इडत्य
र्तिव्ययतीनाम्।७।२।६६। अदर्तिव्येञ्भ्यस्थलो नित्यमिट् स्यात्। आरिथ। अर्त्ता। अरिष्यति। अर्य्यात्। आर्षीत्। आर्ष्टाम्॥ ३५॥ गृ घृ सेचने। गरति।
जगर्थ। जगृव। रिङ्। ग्रियात्। अगार्षीत्॥ ३७॥ ध्वृ हूर्छने॥ ३८॥ स्रु गतौ। सुस्रोथ। सुस्रुव। स्रूयात्। णिश्रीति चङ्। लघूपधगुणादन्तरङ्गत्वादुवङ्। अ
सुस्रुवत्॥ ३९॥ षु प्रसवैश्वर्ययोः। प्रसवोऽभ्यनुज्ञानम्। सुषोथ। सुषविथ। सुषुविव। सोता। स्तुसुधूञ्भ्यः परस्मैपदेषु।७।२।७२। एभ्यः सि
च इट् स्यात्परस्मैपदेषु। असावीत्। पूर्वोत्तराभ्यां निर्द्यासाहचर्यात्सुनोतेरेव ग्रहणमिति पक्षे। असौषीत्॥ ४०॥ श्रु श्रवणे॥

सूत्राद्यग्ग्रहणस्य लिङ्ग्रहणस्य चानुवर्तनादित्यभिप्रेत्याह। यकि यादाविति। आर्द्धधातुक इत्येतदकृत्सार्वधातुकयोरित्यनुवृत्तिपर्यालोचनया फलितार्थकथनमिति ज्ञे
यं। संयोगादेरिति किं। क्रियात्। यादाविति किं। संस्कृषीष्ट। आर्द्धधातुके किं। [illegible]यात्। स्व। उपतापो रोगः। श्र्युकः किति। एकाच उपदेशे इत्यतः एकाच इत्यनुवर्तनेन त्व

सि·कौ उक्तो विशेषणमित्याह। एकाच उगन्तादिति। श्रितः। श्रितवान्। श्रित्वा। भूतः। भूत्वा। भूतिः। गित्युदाहरणं। भूष्णुः। ग्लाजिस्थश्चेति ग्स्नुः स च गिन्न भवति न कित्। स्थास्नुरित्यत्र गुणमास्थे
टि·त· निरूत्वप्रसंगात्। एकाच इति किं। जागरितः। जागरितवान्। ऊर्णोतेस्तु नुवद्भावेन ऊर्णुतः। ऊर्णुतवान्। इति सिध्यति। उगन्तात् किं। शयितः। शयितवान्। पुरस्तादित्याद्यार्द्ध
ति·उ· धातुकस्येड्वलादेरित्यादिविधिकांडात् प्रागेव नेड्वशि कृतीत्यादि प्रतिषेधकांडारंभसामर्थ्यादित्यर्थः। निषेधप्राप्तेरिति। स्मृतः। सृतः। धृत इत्यादौ यथेति भावः। सृ गतौ।
५१ सरति। सरिष्यति। सर्तिशास्त्यर्ति। परस्मैपदेष्विति न संबध्यते। पुषादियोगादस्य पृथक्करणात्। आङः शासु इच्छायामित्यस्यात्र न ग्रहणं किंतु सर्त्यर्तिभ्यां साहचर्यात्
परस्मैपदिनः शासेरेवाहुः असरत् अशिषत् आरत् प्राग्वदिति। किरर्थमाख्योपि गुणः परत्वात् णल्यपि भवति। रपरत्वात् उपधावृद्धिरित्यर्थः। नित्यमिट् स्यादिति। विभा

श्रुवः शृ च।३।१।७४॥ श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च। शपोपवादः। श्नोर्ङित्वाद्गुणो न। शृणोति। शृणुतः। हुश्नुवोः सार्वधातुके।
।६।४।८७॥ जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके। उवङोपवादः। शृण्वन्ति। शृणोमि। शृ
ण्वः। शृणुवः। शृण्मः। शृणुमः। शुश्रोथ। शुश्रुव। शृणु। शृणवानि। शृणुयात्। श्रूयात्। अश्रौषीत्॥५१॥ ध्रु स्थैर्ये। ध्रवति। अयं कुटादौ
गत्यर्थोपि॥५२॥ दुद्रु गतौ। दुद्रोथ। दुद्रविथ। दुद्रुविव। दुद्रुथ। दुद्रुव। णिश्रीति चङ्। अदुद्रुवत्॥५३॥ जि जि अभिभवे। अभिभवो न्यूनी
करणं न्यूनीभवनं च। आद्ये सकर्मकः। शत्रून् जयति। द्वितीये त्वकर्मकः। अध्ययनात् पराजयते। अध्येतुं ग्लायतीत्यर्थः। विपराभ्यां जेरि
ति तङ्। पराजेरसोढ इत्यपादानत्वं॥५४॥ अथ डीङन्ता ङितः। ष्मिङ् ईषद्धसने। स्मयते। सिष्मिये। सिष्मियिढ्वे॥५५॥ गुङ् अव्यक्ते श

वासुजिदृशोरित्यतो विभाषा नानुवर्तत इति भावः। घ्· हूर्छनं कौटिल्यं। स्रु गतौ। यद्यपि सामान्येन गतिरुक्ता तथापि द्रवद्रव्यस्यैव गतिरिह ज्ञेया स्रवति घृतं। अस्य वोऽभ्यनु
ज्ञानमिति। इवस्य त्वा सवितुः प्रसवे इत्यादावभ्यनुज्ञानार्थदर्शनात्। स्रुसुधूञ्भ्यः। परस्मैपदेषु किं। असोष्ट। अधोष्ट॥ ॐ ॥ श्रुवः शृ च। यद्यपि श्रुधातुः स्वादौ पठ्यते
नहि च कारो न कर्तव्य इति लाघवमित्याहुः। हुश्नुवोः। जुह्वति। सुन्वन्ति। हुश्नुवोः किं। यायुवति। नोनुवति। सार्वधातुके किं। जुहुवतुः। जुहुवुः। असंयोगपूर्वेति किं।
अक्ष्णुवंति। असंयोगपूर्वग्रहणमोर्विशेषणं न तु श्नुप्रत्ययस्य। तेन आप्नुवंति इत्यत्रापि यण्निषेधः सिध्यति। प्रत्ययविशेषणत्वे तु अक्ष्णुवंतीत्यत्रैव निषेधः स्या

दितिभावः। स्यादेतत्। यङ्लुकश्छांदसत्वाद्योयुवतीत्यादौ प्रत्ययस्य छंदस्युभयथेत्यनेन आर्द्धधातुकत्वाश्रयणे यणादेशो न भवेदिति किमनेन हुश्नुग्रहणेनान
चयुवंति नुवंतीत्यत्रातिप्रसंगवारणार्थं तत्तु ग्रहणमिति वाच्यं। अनेकाच इत्यस्यानुवर्त्तनेनोक्तदोषाभावादिति चेन्न। अत्राहुः। दाधर्त्तिदर्धर्षिबोभूत्विति छंद
सि निपातनाद्भाषायां यङ्लुकि बोभवीतीत्यादौ भूसुवोरिति गुणनिषेधो न प्रवर्त्तते। अत एव भाषायामपि यङ्लुक् सिद्ध इति वक्ष्यमाणत्वात्। योयुवतीत्या
दावतिप्रसंगवारणाय हुश्नुग्रहणं कर्त्तव्यमेवेति। हुश्नुग्रहणज्ञापकात् भाषायामपि क्वचिद्यङ्लुक् भवतीति भाष्यकाराः। एवं च सार्वधातुके परयोर्हुश्नुवो
रनेकाच्त्वाव्यभिचारादनेकाच इत्यस्यानुवृत्तिरिह किमर्थं सार्थकायाः निरवकाशा एव। तदनुवृत्त्यभावे हुश्नुग्रहणस्य ज्ञापकत्वासंभवादिति दिक्। इति

गाङ् गतौ। गाते। गाते। गाते। इवर्णलोपे कृते वृद्धिः। गै। लङ् इटि। अगे। गेता। गेयातां। गेरन्। गासीष्ट। गाङ्कुटादिसूत्रे इङादेशस्यैव गा
ङो ग्रहणं न त्वस्य। तेनाङित्त्वाद्घुमास्थेतीत्वं न। अगास्त। आदादिकोयमिति हरदत्तादयः। फलं तु न भेदः॥ ३॥ कुङ् घुङ् उङ् ङुङ् शब्दे
अन्ये तु उङ् कुङ् खुङ् गुङ् घुङ् ङुङ् इत्याहुः। कवते। चुकुवे। घवते। अवते। ऊवे। वार्णादांगं बलीय इत्युवङ्। ततः सवर्णदीर्घः। ओ
ता। ओष्यते। ओषीष्ट। औष्ट। ङवते। जुङुवे। ङोता॥ ७॥ च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ॥ ११॥ क्लुङ् इत्येके॥ १२॥ रुङ् गतिरेषणयोः। रे
षणं हिंसा। रुरुवे। रवितासे॥ १३॥ धृङ् अवध्वंसने। धरते। दध्रे॥ १४॥ मेङ् प्रणिदाने। प्रणिदानं विनिमयः प्रत्यर्पणं च॥ ॥

येति। भारद्वाजनियमादिट्। दुद्रोथ। दुद्रुवेति। क्रादित्वाल्लिटि नेट्॥ ॥ गाङ् गतौ। गाते गात इति। पूर्वं शपा सह सवर्णदीर्घे कृते आतो ङित इति न प्रव
र्त्तते। आत्मनेपदेष्वनत इति तु प्रवर्त्तत इति न आतां झेषु तुल्यरूपमिति भावः। गे गावहे। गामहे। अगे। अगाते। गातां। गातां। गातां। गास्व। उत्तमे तु गै गावहै।
गामहै। अगात। अगाता। अगात। न त्वस्येति। गात इत्यादौ तङ्प्रवर्त्यङकारस्य चरितार्थत्वात्। आदेशङकारस्तु न चरितार्थः। स्थानिवद्भावेन ङित्त्वादेव
तङः सिद्धत्वात् इति भावः। आदादिकोयमिति। एवं च गाते। गाथे इत्यादावाताम् आथाम् इत्योः परतः आतो ङित इत्यस्य प्रवृत्तिशंकैव नास्ति इति भावः। फलं तु
न भेद इति। न च गाते गाथे इत्यादौ शपा सह सवर्णदीर्घे कृतेपि पूर्वस्मात् परस्य विधौ कर्त्तव्ये स्थानिवत्त्वादतः परत्वेन ङितामाकारस्य इय् स्यादिति शंक्यं

पंचमीसमासपक्षस्यानित्यत्वाभ्युपगमादिति भावः। ञुङ् वेट् इति। कुहोश्चुरिति ङस्य ञः। ञुङ् इति। अस्मात्पचाद्यचि विकल्पकवयोरभेदाद्धिलत्वमित्यन्ये। मेङ्॥ ॥ ❀ ॥ प्रणिमयत इति। ननु नेर्गदेति कथमिह णत्वं स्यात् शिद्विषये आत्वाभावेन मेङ्रूपाभावात् शिद्विषये कृतात्वेप्यस्मिन् णत्वं दुर्लभमेव। प्रतिपदोक्तस्यैव माधातोर्ग्रहणौचित्यात् न त्वस्य लाक्षणिकस्य। गामादाग्रहणेष्वविशेष इत्यभ्युपगमे तु मीनातिमिनोतिदीङां ल्यपि चेत्यात्वे कृते प्रनिमाना। प्रनिमास्यतीत्यादावतिप्रसंगः स्यादित्यत आह। तत्रेति। इष्टत्वादिति। अयं भावः। घुसंज्ञासूत्रे प्रणिदयते प्रणिधयतीत्यादौ णत्वसिद्धये भाष्यकारैरिष्टं सिद्धांतितं। नेर्गदनदेति णत्वविधौ घुमेत्यस्य स्थाने घुप्रकृतिमाङिति पठनीयं। घुश्च प्रकृतिश्च माङ् चेति द्वंद्वः। प्रकृतिश्च कस्येत्याकांक्षायां सन्निधानात् पूर्वोक्तयोरेवातेनन क्वाप्यव्याप्तिः। नापि मामाने इत्यत्र मीनातिमिनोतीश्वात्यतिव्याप्तिः। माङ् इति ङकारानुबंधकस्यैव पठितत्वादिति॥ दिग्यादेशेनेति। दयतेर्लिटि परे द्वित्वं प्राप्तं दिग्यादेशश्च तत्र वि

प्रणिमयते। नेर्गदेति णत्वं। तत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात्॥१५॥ देङ् रक्षणे। दयते। दयतेर्दिगि लिटि। ७।४।९॥ दिग्यादेशेन द्वित्वबाधनमिष्यत इति वृत्तिः। दिग्ये। स्थाघ्वोरिच्च। १।२।१७॥ अनयोरिदादेशः स्यात् सिच्च कित्स्यात्। अदित अदिथाः। अदिषि॥१६॥ श्यैङ् गतौ। श्यायते। शश्ये॥१७॥ प्यैङ् वृद्धौ। प्यायते। पप्ये। प्याता॥१८॥ त्रैङ् पालने। त्रायते। तत्रे॥१९॥ पूङ् पवने पवते। पुपुवे। पविता॥२०॥ मूङ् बन्धने। मवते॥२१॥ डीङ् विहायसा गतौ। डयते। डिड्ये। डयिता॥२२॥ तॄ प्लवनतरणयोः॥ ॥

शेषविहितेन दिग्यादेशेन द्वित्वशास्त्रस्य बाधः। न चैवं प्यायः पी चेति लिङ्यङोरिति पीरव्यादेशोऽपि विशेषविहितत्वात्ताभ्यां द्वित्वबाधः स्यादिति वाच्यं विषयसप्तमीमाश्रित्य लिङ्यङोः प्रागेव तयोः प्रवृत्तत्वात्। दिग्यादेशविधौ तु लिटीति परसप्तम्येव न तु विषयसप्तमी लक्ष्यानुरोधात्तदेतत्सूचयति। इष्यत इति। दयतेर्लिटि द्वित्वप्राप्ते तत् बाधित्वा परत्वाद्दिग्यादेश इति तु नोक्तं। परस्परलब्धावकाशयोरेव परस्य बलीयस्त्वात्। दिग्यादेशं विना द्वित्वस्य सावकाशत्वेपि द्वित्वं विना दिग्यादेशस्य तदभावादिति दिक्। स्थाघ्वोरिच्च। इह लिङ्सिचावात्मनेपदेष्विति नानुवर्तितं। परस्मैपदेषु गातिस्थेति लुकः प्रवृत्तेर्व्यावर्त्यालाभात्। अस्थित। अस्थिषातां। भाव्यमानोऽण्क्वचित्सवर्णान्न गृह्णातीत्यत्र इदमपि तपरकरणं लिंगमित्याहुः। अत्र वदंति विधीयमानस्य सवर्णग्राहकत्वेपि त

परत्वाल्लोपमिहत्यर्थः। न चात्र दीर्घः स्यादिति वाच्यं। घुमास्थेत्यनेनैव तत्सिद्धौ विधिवैयर्थ्यापत्तेः। न चैवमपि प्लुतः स्यादिति वाच्यं। प्लुताः प्लुतप्रसंगे प्लुतश्च विषये स्मृत इति सिद्धत्वादिति। डीङ् विहायसा आकाशेन। विहायसामिति पाठस्त्वनाकर इत्याहुः॥ ॐ ॥ ऋत इद्धातोः। किरति। गिरति। कीर्णः। गीर्णः। स्तीर्णः। धातोः किं। मातृणां। इत्वोत्वाभ्यामिति। परत्वात् गुणवृद्धी भवत इति वक्तव्ये किमिदं वार्तिकमिति चेदत्राहुः परादप्येतदंतरंगं प्रबलमिति ख्यापनार्थं वार्तिकमिदमारब्धमिति। इत्वोवा इहार्द्धधातुकस्येडित्यत इडित्यनुवर्तते ग्रहोलिटीत्यतो लिटि दीर्घ इति च तदाह। इटो दीर्घो वेत्यादि। सिचि चानलिङीत्यतो नेत्यनुवर्तनादाह। इटो दीर्घो

ऋत इद्धातोः। ७।१।१००॥ ऋदन्तस्य धातोरङ्गस्य इत्स्यात्। इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन। तरति। ऋच्छत्यृतामिति गुणः। तृफलेत्येत्वमा तेरतुः। तेरुः। वृतो वा। ७।२।३८॥ वृङ्वृञ्भ्यामृदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। तरीता। तरिता। अलिटीति किं। तेरिथ। हलि चेति दीर्घः तीर्यात्। सिचि च परस्मैपदेषु। ७।२।४०॥ अत्र वृत इटो दीर्घो न। अतारिष्टाम्॥ ३॥ अथाष्टावनुदात्तेतः। गुप गोपने॥ १॥ तिज निशाने २ मान पूजायां॥ ३॥ बध बन्धने॥ ४॥ गुप्तिज्किद्भ्यः सन्। ३।१।५॥ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य। ३।१।६॥ सूत्रद्वयोक्तेभ्यः सन् स्यात्। मानादीनामभ्यासस्येकारस्य दीर्घश्च। गुपेर्निन्दायां। तिजेः क्षमायां। कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च। मानेर्जिज्ञासायां। बधेश्चित्तविकारे। दानेरार्जवे। शानेर्निशाने। सनाद्यन्ता इति धातुत्वं। सन्यङोः। ६।१।९॥ सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। अभ्यासकार्यम्। गुपिप्रभृतयः किद्भिन्नाः निन्दाद्यर्थकोऽनुदात्तेतो दानशानौ च स्वरितेतौ। एते नित्यं सन्नन्ताः। अर्थान्तरे त्वननुबन्धकाश्चुरादयः। अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्तङ्। धातोरित्यविहितत्वात् सनोऽत्र नार्द्धधातुकत्वम्। तेनेडुनेन। जुगुप्सते। जुगुप्सांचक्रे। तितिक्षते। मीमांसते। भष्भावः। चर्त्वम्। बीभत्सते॥ ४॥

॥ ९ नेति। मान्बधा आभ्यासस्येति च्छेदः। अभ्यासस्य विकार आभ्यासः स चात्र सन्यत इतीत्वमेव। यदि तु ह्रस्व इत्येव गृह्येत तर्हि तद्धितनिर्देशो व्यर्थः स्यात्तदेतदाह। अभ्यासेकारस्येति। वृत्तिकारादयस्तु पनिवर्थान न दर्शयति। गुपेर्निन्दायामित्यादिना सन्यङोः। सप्तमीमाश्रित्य सनि यङि च परे इति व्याख्यायां प्रतीषिषति अटाट्यते इत्यादि न सिध्येत्। सन्यङोः प्रकृति

सि॰कौ॰
हा॰त॰
ति॰उ॰
४३

भागस्यैववृद्धित्वप्रसक्तेरतआह। सन्नन्तस्येति। ननुसप्तमीपक्षेपिसन्यङोरेववृद्धित्वंस्यान्ननुप्रकृतिभागस्य। शपोः कारेलोपेवजुगुप्सतेत्यादि स्थानेइत्यादिरूपसिद्धेस्तथा
रकारोच्चारणस्यअजादेर्द्वितीयस्येतिद्वित्वार्थत्वात्। यद्यपिनिमित्तस्यकार्यित्वस्वीकारेआट। आटतुरित्यादौ लिटिपरतः पूर्वभागमात्रस्यद्वित्वंनसिध्येत्तथापिक्का
रोच्चारणसामर्थ्यात् सन्यङोःकार्यित्वमभ्युपगन्तुंशक्यमितिचेत्। मैवं। अकारस्यस्थानेवहूनांसत्वात्। तथाहिसिसंधिस्वमित्यत्राचोयतिकृतेयणेनानावइत्याघुसाते
सिध्यतिअकाराभावेतुअहलोरितिण्यन्तादिष्टस्वरोनसिध्येत्। किंचपिपठिषिप्रासलाकुलानीत्यत्रालोपस्यस्थानिवत्त्वात्स्थूलंतलसलोनुमूलभवसकारा
भावेतुस्यादेवनुम्। अपिच। पापचकइत्यादावल्लोपस्यस्थानिवत्त्वादतउपधाया इतिवृद्धिर्नप्रवर्तते। अपिच। यस्यहलइत्यत्रयस्येतिसङ्घातग्रहणमहे
रभरामस्य। आरभते। आरेभे। आरब्धा। आरप्स्यते॥५॥डुलभष्प्राप्तौ। लभते॥६॥ष्वञ्जपरिष्वङ्गे॥ दंशसञ्जस्वञ्जांशपि। ६।४।२५॥ रञ्जेश्च
।६।४।२६॥ एषांशपिनलोपःस्वजते। परिष्वजते। श्रन्थिग्रन्थिदम्भिस्वञ्जीनांलिटःकित्त्वंवेतिव्याकरणान्तरम्। देभतुः। सस्वजइतिभाष्यात्
इत्यादेरेकदेशानुमत्या इत्याप्याश्रीयते। सदेःपरस्यलिटीतिसूत्रेस्वञ्जेरुपसंख्यानम्॥ अतोभ्यासात्परस्यषत्वम्। परिषस्वजे। परिषस्वञ्जे समस
जिषे। सस्वञ्जिषे। स्वङ्क्ता। स्वङ्क्ष्यते। स्वजेत। स्वङ्क्षीष्ट। अस्वङ्क्त। प्राक्सितादितिषत्वम्। परिनिविभ्यःसेवसितसिवादीनामितिविकल्पः। स्तेर
र्थमेवोपसर्गात्सुनोतीत्येवसिद्धेःसुस्वञ्ज्योःपरिनिवीत्यत्रपुनरुपादानम्। पर्यष्वङ्क्त। पर्यस्वङ्क्त॥७॥हदपुरीषोत्सर्गे। हदते। जहदे। हत्ता।
हत्स्यते। हदेत। हत्सीष्ट। अहत्त॥८॥अथपरस्मैपदिनः। ञिक्ष्विदाअव्यक्तेशब्दे॥९॥स्कन्दिर्गतिशोषणयोः चस्कन्दिथ। चस्कन्थ। स्कन्ता। स्कन्
त्स्यति। नलोपः। स्कद्यात्। इरितो वा। अस्कदत्। अस्कान्त्सीत्। अस्कान्ताम्। अस्कान्त्सुः॥ ११ यौधिष्यादौयलोपव्याकृत्यर्थमितिसर्वसंमतं। तथाच।
अपवयविष्टत्यादौयलोपोप्यकारफलमितिसन्यङोरितिषष्ठ्यैवयुक्ता। एवंहियङ्लुकिमध्यलक्षणेनयङंतत्वात्द्वित्वंसिध्यति। परसप्तम्यांतुद्वित्वस्यांगकार्यत्वान्नलु
मतेतिनिषेधःप्रवर्ततेतितिद्विकारादानशानौचेति। आर्जवनिशानार्थाविति भावः। अर्थान्तरेत्विति। धातुपाठपाठेगोपनादिरूपेऽर्थे इत्यर्थः। अननुबंधकारइति। सानुबंधक
त्वेनुकेवले चरितार्थत्वात्अनुबंधस्य सन्नन्तादिवअकर्तृगफलान्एवंनादपितङ्स्यादितिभावः। एवंचाऽऽनुपूर्वीमात्रसाम्येपिभ्वादयश्चुरादिभ्योभिन्नाएवेतिफलितं
इहगुणोनेति। यद्यपिहलन्ताच्चेतिसनःकित्त्वेनापिगुणाभावःसुसाधुस्तथापिइडभावार्थमुक्तं हेतुरेवाश्रयणीयइतिकिंहेत्वन्तराश्रयणेनेतिभावः। केचित्तुअथैवहलप

रिभाषयाबाधितमसनएवहलन्ताच्चेतिसूत्रेग्रहणमितिनास्य
स्वार्थसनःकित्त्वमित्याहुः॥ ॥रभराभस्ये। रभस्यंउपक्रमः।

लिलिङ्गिमे।रेभाते।लुङि।अरब्ध।अरप्स्यत्।डुलभष्प्राप्तौ।तिङ्।लप्स्यते।सविभिदादिभ्यः।रेभे॥लिटि।लेभे।लुङि।अलब्ध॥ ॥वेःस्कन्देरनिष्ठायाम्।सिवा
दीनामित्यनो वर्ततिप्रवर्तते।अबोपदेशत्वात्।अपाम्विभाषेयं।माधवादिग्रन्थानुरोधेनाह।क्रत्येवेदमिति।माचातुविष्कन्दतीसुदात्तदत्तन्त्रमूलंमृग्यमितिभावः।
वेःस्कन्देरनिष्ठायाम्।८।३।७३॥षत्वम्वास्यात्।कृत्येवेदम्।अनिष्ठायामितिपर्युदासात्।विष्कन्ता।विस्कन्ता।निष्ठायान्तु।विस्कन्नः॥परेश्च
।८।३।७४॥अस्मात्परस्यस्कन्देःसस्यषोवा।योगविभागादनिष्ठायामितिनसम्बध्यते।परिष्कन्दति।परिस्कन्दति।परिस्कन्नः।परिष्कन्नः।
षत्वपक्षेणत्वम्।नचपदद्वयाश्रयत्तयाबहिरङ्गत्वात्षत्वस्यासिद्धत्वम्।धातूपसर्गयोःकार्य्यमन्तरङ्गमित्यभ्युपगमात्।पूर्व्वंधातुरुपस
र्गेणयुज्यते।ततःसाधनेनेतिभाष्यं।पूर्व्वंसाधनेनेतिमतान्तरेतुनणत्वं॥ २॥ यभमैथुने।येभिथ।ययब्ध।यब्धा।यप्स्यति।अयाप्सीत्॥३॥
णमप्रह्वत्वेशब्देच।नेमिथ।ननन्थ।नन्ता।अनंसीत्।अनंसिष्टाम्॥४॥गम्लृसृप्लृगतौ।इषुगमियमांछः।७।३।७७॥एषाञ्छःस्याच्छितिप
रे।गच्छति।जगाम।जग्मतुः।जग्मुः।जगमिथ।जगन्थ।गन्ता॥गमेरिट्परस्मैपदेषु।७।२।५८॥गमेःपरस्यसकारादेरिट्स्यात्।गमिष्यति।लृदि
त्वादङ्।अनङीतिपर्युदासान्नोपधालोपः।अगमत्।सर्पति।ससर्प।अनुदात्तस्यचर्दुपधस्यान्यतरस्याम्।६।१।५९॥उपदेशेऽनुदात्तो
यऋदुपधस्तस्याम्वास्याज्झलादावकितिपरे।स्रप्ता।सर्प्ता।स्रप्स्यति।सर्प्स्यति।असृपत्॥६॥यमउपरमे।यच्छति।येमिथ।ययन्थ।यन्ता
अयंसीत्।अयंसिष्टाम्॥७॥तपसन्तापे।तप्ता।अताप्सीत्।निसस्तपतावनासेवने।८।३।१०२॥षःस्यात्।आसेवनम्पौनःपुन्यन्ततोऽन्य
त्र।निष्टपति॥८॥त्यजहानौ।तत्यजिथ।तत्यक्थ।त्यक्ता।अत्याक्षीत्॥९॥षञ्जसङ्गे।दंशसञ्जस्वञ्जाम्शपीतिनलोपः।स
जति।सङ्क्ता॥१०॥दृशिर्प्रेक्षणे।पश्यति॥ ॥ ((नसंवध्यतइति।अतएवतिङन्तेपिषत्वमुदाहरन्ति।परिष्कन्दतीति।जग्मतुरित्यादि।गमहनेत्युपधालोपः।णमप्रह्वत्वे।केचिदमुमुदित्तंपठन्तितत्प्रामादिकमित्याहुः।अनुदात्तस्य।आदेचउपदेशेऽशितीत्यतउपदेशइत्यनुवर्तते।उपदेशे

किं।स्कन्धेर्मुनिउदाहृतः ऋ दृ प धः किं कर्मणि लिलिकं
सस्प अर्कितानिकिं॥

स्मृतः । अद्राक्षीदिति । ल्यदित्वाद्दङ् । स्पृशमृशेति सिज्विकल्पवार्तिके सृपं प्रक्षिप्य असाप्सीदिति केचिदुदाहरन्ति । तत्प्रामादिकमित्याहुः । अर्पसीदिति पमरमेतिरद्दस कौ

विभाषा सृजिदृशोः । ७ । २ । ६५ ॥ आभ्यां थल इड्वा । सृजिदृशोर्झल्यमकिति । ६ । १ । ५८ ॥ अनयोरमागमः स्याज्झलादावकिति । दद्रष्ठ । ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरित्वाद्दङ् वा । ऋदृशोऽङि गुणः । ७ । ४ । १६ ॥ ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । अदर्शत् । अङभावे । न दृशः । ३ । १ । ४७ ॥ दृशः क्सो न । अद्राक्षीत् ॥ ११ ॥ दंश दशने । दशनं दंष्ट्राव्यापारः । एषो दशादित्वादनुनासिकलोपः । अत एव निपातनाद्दिस्येको । नस्याप्यत्रैव तासर्प्पम् । अर्थनिर्देशस्याधुनिकत्वात् । दंशसञ्जेति नलोपः । दशति । ददंशिथ । ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात् । अदाङ्क्षीत् ॥ १२ ॥ कृष विलेखने । विलेखनमाकर्षणम् । क्रष्टा । कर्ष्टा । क्रक्ष्यति । कर्क्ष्यति । स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः । अक्राक्षीत् । अक्राष्टाम् । अकार्क्षीत् । आकार्ष्टाम् । अकार्क्षुः । पक्षे क्सः । अकृक्षत् । अकृक्षताम् । अकृक्षन् ॥ १३ ॥ दह भस्मीकरणे । देहिथ । ददग्ध । दग्धा । धक्ष्यति । अधाक्षीत् । अदाग्धाम् । अधाक्षुः ॥ १४ ॥ मिह सेचने । मिमेह । मिमेहिथ । मेढा । मेक्ष्यति । अमिक्षत् ॥ १५ ॥ कित निवासे रोगापनयने च ॥ चिकित्सति । संशये प्रायेण विपूर्वः । विचिकित्सा तु संशय इत्यमरः । अस्मादनुदात्तेत्त्वमाश्रित्य चिकित्सते इत्यादि कश्चिदुदाजहार । निवासे तु । केतयति ॥ १६ ॥ दान खण्डने । शान तेजने । इतो वहङ्गन्ताः स्वरितेतः । दीदांसति । दीदांसते । शीशांसति । शीशांसते । अर्थविशेषे सन् । अन्यत्र दानयति । शानयति ॥ २ ॥ डुपचष् पाके । पचति । पचते । पेचिथ । पपक्थ । पेचे । पक्ता । पक्षीष्ट ॥ ३ ॥ षच समवाये । सचति । सचते ॥ ४ ॥ भज सेवायाम् । बभाज । भेजतुः । भेजुः । भेजिथ । बभक्थ । भक्ता । भक्ष्यति । भक्ष्यते । अभाक्षीत् । अभक्त ॥ ५ ॥ रञ्ज रागे । नलोपः । रजति । रजते । अराङ्क्षीत् । अरङ्क्त ॥ ६ ॥ शप आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । शशाप । शेपे । अशाप्सीत् । अशप्त ॥ ७ ॥ त्विष दीप्तौ । त्वेषति । त्वेषते । तित्वेष । त्वेक्ष्यति । त्विक्षे

निसल्लपना । मूर्द्धस्य इत्यनुवर्तमाने फलितमाह । षः स्यादिति । आसेवने त्रु निलपति । पुनः पुनर्लपतीत्यर्थः ॥ ❀ ॥ विभाषा सृजिदृशोः क्रादिनियमान्नित्ये प्राप्ते विभाषेयम् । सृजिदृशोः झलि किं । ससर्ज ददर्श । अकिति किं । सृष्टः । सृष्टवान् । दृष्टः । दृष्टवान् । अद्राक्षीदिति । वदव्रजेति वृद्धिः अद्राक्ष्टाम् । अद्राक्षुः । क्रष्टा कर्ष्टेति

अनुदात्तस्य चेत्यम्वा। घस्यतीति। घत्वषत्वमष्भावाः। अघासीदिति। अस्तिसिचइतीट्। वृद्धिः। घत्वादि प्राग्वत्। मिहसेचने। सेचनमिह मूत्रकरणं कं विवक्षितंनतु
सेचनमात्रं। मेढुं मेहनं शेफसी त्यमरः। कित निवासे। किते र्व्याधिप्रतीकारादावेव। स निरुक्त तदुदाहरति। चिकित्सतीति। रोगमपनयतीत्यर्थः। शत्रुं चिकित्सति।
निगृह्णातीत्यर्थः। क्षेत्रे तृणं चिकित्सति। अपनयति नाशयति वेत्यर्थः। अर्थान्तरे चुरादिरित्युक्तं तदुदाहरति। केतयतीति। षच समवाये। समवायः संबंधः। भे
जतु रितिवत् फलमजेत्वं। भक्ष्यतीति। कुत्वषत्वे। विषदी सौ। अविक्षादिति। शल इति क्सः। कत्वषत्वे। अविक्षातामिति। क्सस्याचीतिलोपः। यज देवादेवपूजा
त्विह देवो द्देशेन विधिवोधितो द्रव्यत्यागः॥ ॐ ॥ लिट्यभ्यासस्यो। वच्यादयो वचिस्वपियजादयः ग्रह्यादयस्तु ग्रहिज्यावयीत्यादयः। यद्यपि ग्रहि पृच्छतिभृ

लिट्यभ्यासस्योभयेषाम्। ६। १। १७॥ वच्यादीनां ग्रह्यादीनाञ्चाभ्यासस्य सम्प्रसारणं स्याल्लिटि। इयाज। वचिस्वपियजादीनां किति। ६। १
१५॥ वचिस्वप्यो र्यजादीनाञ्च सम्प्रसारणं स्यात्किति। पुनःप्रसङ्ग विज्ञानाद्द्वित्वम्। ईजतुः ईजुः इयजिथ। इयष्ठ। ईजे। यष्टा। यक्ष्यति। इ
ज्यात्। यक्षीष्ट। अयाक्षीत्। अयष्ट॥ ८॥ टुवप वीजसन्ताने। वीजसन्तानं क्षेत्रे विकरणं गर्भाधानञ्च। अयं छेदनेपि। केशान्वपति। उवाप।
ऊपे। वप्ता। उप्यात्। वप्सीष्ट। प्रव्यवाप्सीत्। अवप्त॥ ९॥ वह प्रापणे। उवाह। उवहिथ। सहिवहोरोदवर्णस्य। उवोढ। वोढा। वक्ष्यति। अवा
क्षीत्। अवोढाम्। अवाक्षुः। अवोढ। अवक्षाताम्। अवोढ्वम्॥ १०॥ वस निवासे। परस्मैपदी। वसति। उवास। शासिवसिघसीनाञ्च। ८। ३।
६०॥ इण्कुभ्यां परस्यैषां सस्य षः स्यात्। ऊषतुः। ऊषुः। उवसिथ। उवस्थ। वस्ता। सः स्यार्धधातुके। वत्स्यति। उष्यात्॥ ।वत्स्यति

ज्ञतीनामभ्यासस्य संप्रसारणोक्तेः कृतेच विशेषो नास्ति तथापि पर्जन्यवल्लक्षणं प्रवर्तते। जग्राह। पप्रच्छ। वभ्रज्ज। वृश्च्वतेस्तु विशेषोस्ति। संप्रसारणस्याकर
णे व व्रश्च्येत्यत्र वकारस्य संप्रसारणं स्यात्। कृतेतु संप्रसारणे न संप्रसारणे इति निषेधप्रवृत्तिरिति। लिटीति किं। विवक्षति। पिपक्षति। वविस्वपि। आगमेनात्
यजादयः। यजिर्वपिर्वहिश्चैव वसिर्वेञ्व्येञ्ह्वञपि। ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव॥ १॥ कितीति किं। इयष्ठ। इवथ। ङित क्तिः। उपत्रिमं॥ शासिव
सिघसीनां च। धातुसकारस्य प्राप्ते विधिरयं न तु सुपिसौ सुपिसरित्यादावतिप्रसंगवारणाय धातोः सकारस्य चेदेषामेवेति नियमार्थं तोस्वीकृत्स आदेशप्रत्यययोरि

सि॰कौ॰ तिसूत्रं त्यज्यतामिति चेन्न। अत्राहुः। आदेशावयवस्य षत्ववारणाय आदेशस्य त्वं शास्त्रावश्यकः। न ह्यहलो कृते धातुभिन्नसकारस्य चेद्भवति आदेशरूपस्यैवेति नियमः प्रसं-
टि॰ त॰ गवारणाय प्रत्ययग्रहणमपि कर्तव्यमेवेति॥ ॥ अवात्सीदिति॥ वदव्रजेति वृद्धिः। सः सीति तः। अस्तिसिचः इतीट्। उच्चारणार्थ इति। इत्संज्ञायां हि इदित इति नुम्स्यादि-
ति॰ उ॰ तिभावः। उवायेति। ग्रहिज्येति सूत्रे वयिग्रहणं हेतुः इति निषेधोऽत्र न प्रवर्तते इत्याहुः। ग्रहिज्यावयि। गृह्णातीत्यादिना जिनातेर्जीनः। ङितीति वयेरुदाहरणं नास्ति कि-
७५ अवात्सीत्। अवात्ताम्॥ १५॥ वेञ् तन्तुसन्ताने। वयति। वयते। वेञो वयिः २।४।४१॥ वा स्याल्लिटि। इकार उच्चारणार्थः। उवाय। ग्रहिज्यावयि-
व्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६।१।१६॥ एषां किति ङिति च सम्प्रसारणं स्यात्। यकारस्य प्राप्ते। लिटि वयो यः ६।१।
३८। वयो यस्य सम्प्रसारणं न स्याल्लिटि। उयतुः। उयुः। वश्चास्यान्यतरस्यां किति ६।१।३९॥ वयो यस्य वो वा स्यात्किति लिटि। ऊवतुः। ऊवुः।
वयत्यासावभावात्थलि नित्यमिट्। उवयिथ। स्थानिवद्भावेन कित्त्वान्न ङः। ऊये। ऊवे। वयादेशाभावे वेञः ६।१।४०॥ वेञो न सम्प्रसारणं स्या-
ल्लिटि। ववौ। ववतुः। ववुः। वविथ। ववाथ। ववे। वाता। ऊयात्। वासीष्ट। अवासीत्॥ १६॥ व्येञ् संवरणे। व्ययति। न व्यो लिटि ६।१।४६॥ व्ये-
ञ आत्वं न स्याल्लिटि। वृद्धिं परमपि हलादिःशेषं बाधित्वा यस्य सम्प्रसारणम्। उभयेषांग्रहणसामर्थ्यात्। अन्यथा व्यादीनां ग्रहणं स्यात्।
दीनां चानुकृत्येव सिद्धे किं तेन। विव्याय। विव्यतुः। विव्युः। इडत्त्यर्तीति नित्यमिट्। विव्ययिथ। विव्याय। विव्ये। व्याता। वीयात्। व्यासीष्ट।
अव्यासीत्। अव्यासताम्॥ १७॥ ह्वेञ् स्पर्धायां शब्दे च। अभ्यस्तस्य च ६।१।३३॥ अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात्। ततो द्वित्वम्। जु-
हाव। जुहुवतुः। जुहुवुः। जुहोथ। जुहविथ। जुहुवे। ह्वाता। हूयात्। ह्वासीष्ट॥ ॥ ‹‹ ननु वचिस्वपियजादीनामिति सिद्धं। यजादिषु
वेञः पाठात्। अत एवाभ्यासस्य सम्प्रसारणमपि सिद्धम्। वेञ इति सम्प्रसारणनिषेधस्तु लिटि वयो यः इति निषेधारम्भान्न प्रवर्तते। तस्माद्ग्रहिज्यादिषु वयिग्रहणं स्पष्ट-
र्थमेवेति बोध्यम्। वश्चास्य। असत्यस्मिन्ननेन वयो य इति परामृश्यते। तदाह। वयो यस्येति। वो वा किति। सेव सु वचः। लिटि वयो य इति प्रकृतत्वात्। उपदेशेऽत इति नि-
षेधमाशंक्याह। वयत्यासावभावादिति। ननु स्थानिनस्तासोऽविद्यमानत्वात्स्थानिवद्भावेन सोऽविद्यमानत्वं सुलभमिति चेत्। अत्राहुः। शास्त्रीयकार्ये हि स्था-

संप्रसारणेनेति। अन्यथा शुश्वायेत्यादि स्यादिति भावः। श्वयतेरः। अलोन्त्यपरिभाषालभ्यमाह। इकारस्येति। पररूपमिति। अतो लोपस्तु न भवति। आर्द्धधातुकोपदेशे यदकारान्तमिति व्याख्यातत्वात्। इयङिति। लघूपधगुणापेक्षया अन्तरङ्गत्वादिति भावः। अश्वयीदिति। नन्विह अन्तरङ्गत्वाद्गुणः यादेशयोः कृतयोर्यान्तत्वाद्वृद्धिनिषेधो भवेत् इति किमनेन न णिश्विग्रहणेनेति चेत्। अत्राहुः। न सिच्यन्तरङ्गमस्तीति ज्ञापनार्थं णिश्विग्रहणं। तेन चिरिणोति जिरिणोत्योर्यङ्लुगन्तानां विनिप्रभृतीनां च सिचि बहिरङ्गा वृद्धिरेव भवति। अचिरायीत्। अजिरायीत्। अचेचायीत्। अनेनायीत् इति। नेनेति। उक्तं च वार्तिककृता। कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति। चुलुम्पतीति। लुम्पतीत्यर्थः। चुलुम्पलोपे इति कविकल्पद्रुमे उक्तत्वात्। इति भ्वादयः॥ ❀ ॥ ऋतेरीयङ्। नानोऽयं धातुरिकान्निर्दिष्टो न त्विका

ऋतेरीयङ्। ३।१।२९॥ ऋतिः सौत्रो धातुस्तस्मादीयङ् स्यात्स्वार्थे जुगुप्सायामयं धातुरिति बहवः। कृपायां चेत्येके। सनाद्यन्ता इति धातुत्वं। ऋतीयते। ऋतीयांचक्रे। आयादय आर्द्धधातुके वेतीयङभावे शेषात्कर्तरि परस्मैपदं। आनर्त। अर्तिता। आर्तीत्। अदभक्षणे। अदिप्रभृतिभ्यः शपः। २।४।७२॥ लुक् स्यात्। अत्ति। अत्तः। अदन्ति। लिट्यन्यतरस्याम्। २।४।४०॥ अदो घस्लृ वा स्यात् लिटि। जघास। गमहनेत्युपधालोपः। तस्य च विधिं प्रति स्थानिवद्भावनिषेधात् घकारस्य चर्त्वं। शासिवसीति षत्वं। जक्षतुः जक्षुः। घसत्वाभावे भावात्थलि नित्यमिट्॥ जघसिथ। आद। आदतुः। इडत्त्यर्तीति नित्यमिट्। आदिथ। अत्ता। अत्स्यति। हुझल्भ्यो हेर्धिः। ६।४।१०१॥ होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। अत्तात्। अदानि॥

॥ ऋतेः। वृतिलुच्यृतश्चेति निर्देशात्। केचित्तु ईयङ् इति दीर्घोच्चारणान्नान्तत्वमिति ज्ञापयते इदं तत्त्वे हि सवर्णदीर्घेणैव सिद्धे इयङमेव कुर्यादित्याहुस्तच्चिन्त्यं। इदं तत्त्वे त्वनेकाच इति यणा सवर्णदीर्घस्य बाधात्। न च ऋतेरियङ् विधावकृत्सार्वेति दीर्घोपपत्तेरीयङ्विधानं नान्तत्वे लिङ्गं भवत्येवेति वाच्यं। यङ्विधौ सन्यङोरिति द्वित्वापत्तेः। कृपायां चेति। अनेनैव ऋतीया च घृणी या च घृणार्थे कार इति जुगुप्साकृपयोः घृणेति चामरः। हुझल्भ्यो हेर्धिः। जुहुधि घसिभसोर्हलि चेत्यतो हलीत्यनुवर्त्य हलादेरिति व्याख्यानात् रुदिहि स्वपिहि इत्यादौ विडादेर्हेर्धिर्न भवति। अत्तादित्यत्र तु धित्वात्परत्वात्तातङि कृते स्थानिवद्भावेन पुनर्धित्वं तु सकृद्गताविति न्यायान्नेत्याहुः। अन्ये तु हेर्धिरित्यत्र स्थान्यादेशयोरुभयोरपि हकार उच्चारणार्थ इति हकारस्य धकार आदेशः। तेन हलीत्यनुवृत्तिर्न कर्तव्या। नापि तातङोऽधित्वप्रसंग इति सकृद्गतिन्यायाश्रयणमपि मास्त्वित्याहुः॥

अड्सर्वेषां। अड्गार्ग्यगालवयोरित्यत अडित्यनुवर्तते। गार्ग्यगालवयोरित्यस्यत्वनुवृत्तिशंकां निवारयितुं सर्वेषांग्रहणं। लुङ्सनोः। जिघत्सति। प्रणिहन्तीति। ने
र्गदेति णत्वं। अनुदात्तोपदेश। यद्यत्र एतेषां अनुनासिकलोप इति व्याख्यायेत तदा मन्यते र्नेम न इमिह मुचमस्त्रा दीनां च अनंत्यस्यापि लोपः स्यात् यच्च

अड्सर्वेषां। ७।३।९०॥ अदः परस्य एक्तः स्य सार्वधातुकस्याडागमः स्यात् सर्वेषां मतेन। आदत्। आत्तां। आदन्। आदः। आत्तं। आत्त। आदं।
आद्व। आद्म। अघात्। अघात्तां। अघुः अघास्तां। अघा सुः। लुङ्सनोर्घस्लृ। २।४।३७॥ अदो घस्लृ स्यात् लुङि सनि च। लृदित्वादङ्। अघसत्। ह
न हिंसागत्योः। प्रणिहन्ति। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। ६।४।३७। अनुनासिकेति लुप्तषष्ठीकं। वन
तीतरेषां विशेषणं। अनुनासिकांतानामेषां वनतेश्च लोपः स्यात् झलादौ क्ङिति परे। यमिरमिनमिगमिहनिमन्यतयोः नुदात्तोपदेशाः तनु
क्षणुक्षिणुऋणुतृणुघृणुवनुमनुतनोत्यादयः। हतः। घ्नंति। वमोर्वा। ८।४।२३॥ उपसर्गस्थान्निमित्तात्परस्य हंतेर्नस्य णो वास्यात् वमयोः
परतः। प्रहण्मि। प्रहन्मि। जघ्नतुः। जघ्नुः। अभ्यासाच्च। ७।३।५५॥ अभ्यासात्परस्य हंतेर्हस्य कुत्वं स्यात्। जघनिथ। जघंथ। हंता। ऋद्धनोः स्ये। ७।२।७०।
हनिष्यति। हंतु। हतात्। घ्नंतु। हंते जः। ६।४।३६॥ हौ परे। आभीयतया जस्यासिद्धत्वान्न हेर्लुक्। जहि। हनानि। हनाव। हनाम। अहन्। अहे
तां। अघ्नन्। अहनं। आर्द्धधातुके। २।४।३५॥ इत्यधिकृत्य॥ हनो वध लिङि। २।४।४२॥ लुङि च। २।४।४३॥ वधादेशोऽदंतः। आर्द्धधातु
के इति विषयसप्तमी। तेनार्द्धधातुकोपदेशे अकारांतत्वादतो लोपः। वध्यात्। वध्यास्तां। आर्द्धधातुके किं। विध्यादौ हन्यात्। हंतेरि
त्त्वात्प्रहण्यात्। अवधीत्। अथ चत्वारः स्वरितेतः॥ द्विष अप्रीतौ। द्वेष्टि। द्विष्टे। द्वेष्टा। द्वेक्ष्यति। द्वेष्टु। द्विष्टात्। द्विड्ढि। द्वेषाणि।
द्वेषै। द्वेषावहै। अद्वेट्। द्विषश्च। ३।४।११२॥ लङो झेर्जुस् वा स्यात्। अद्विषुः। अद्विषन्। अद्वेषं। द्विषीत। द्विक्षीष्ट। अद्विक्षत्॥
मतः नतः नद्धः मीढः मुक्तः मग्न इत्यादि न सिध्येत् अत आह। लुप्तषष्ठीकमिति। वनतीतरेषामिति। वनतेरव्यभिचाराद्विशेषणं व्यर्थमिति भावः। वति इह

सि·कौ· क्ङितितु त्रेति प्रतिषेधात् झलि क्ङिति न लोपः। लोपः स्यादिति। अलोन्त्यस्येत्यंतस्येतिभावः। अनुनासिकानां नाऽनुदात्तोपदेशान्दर्शयति। यमिरमीति। तनोत्यादीभ्यश्चानु

टी·त· नासिकांतान्दर्शयति। ननु क्षणु क्षिण्वित्ति। करोतिवर्जितास्तनोत्यादयो नव तन्मध्ये सनोतेर्जनसनखनामित्यात्वं वक्ष्यतीति न स परिगणितः। ततः। क्षतः क्षि

ति·उ· तः इत्यादिषूदाहरणानि। तनोत्यादीनामुदित्वात्। क्त्वायामिड्विकल्पनान्निष्ठायां नेट्। अनुनासिकांतानामिति किं। शक्तः। रुग्णः। हलीति किं। गम्यते नम्यते। किंतु

तिकिं गतां मतां जघान जघ्नतुरिति। यद्यप्यत्राभ्यासाच्चेत्यस्यापि प्रवृत्तिरस्ति तथाप्यंतरंगत्वान् होढं तेरित्युपन्यस्तं। आभीयत्वेति। संनिपातपरिभाषयापि हेर्लु

५७ दुह प्रपूरणे। दोग्धि। दुग्धः। धोक्षि। दुग्धे। धुक्षे। धुग्ध्वे। दोग्धा। दुग्धि। दोहानि। धुक्ष्व। धुग्ध्वं। दोहै। अधोक्। अदोहं। अदुग्ध। अधुग्ध्वं।

अधुक्षत। अधुक्षत। लुग्वा दुहेति लुक्पक्षे तथासध्वंवहिषु लङ्वदपि। दिह उपचये। देग्धि। देग्धि। दिग्धे। लिह आस्वादने। लेढि। ली

ढः। लिहंति। लेक्षि। लीढः। लिक्षे। लीढ्वे। लेढा। लीढि। लेहानि। अलेट्। अलिक्षत। अलीढ। अलिक्षावहि। अलिह्वहि। चक्षिङ् व्यक्तायां वाचि।

अयं दर्शनेऽपि। इकारोऽनुदात्तो युजेर्थः। विचक्षणः प्रथयन्। नुम तु न। अंते "इत इति व्याख्यानात्। ङकारस्तु अनुदात्तत्वप्रयुक्त।

आत्मनेपदमनित्यमिति ज्ञापनार्थः। तेन स्फायन्निर्मोकसंधीन् इत्यादि सिध्यति। चष्टे। चक्षाते। आर्धधातुके। चक्षिङः ख्याञ् ।२।४।५४॥ वा

लिटि ।२।४।५५॥ अत्र भाष्ये ख्शादिरयमादेशः। असिद्धकाण्डे शस्य यो वेति स्थितं। जित्वात्फलवद्द्वये। चख्यौ। चख्ये। चक्शौ। चक्शे। च

योद्वितीया इति तु न चर्त्वस्यासिद्धत्वात्। चचक्षे। ख्याता। क्शाता। ख्यास्यति। ख्यास्यते। क्शास्यति। क्शास्यते। अचष्ट। चक्षीत। ख्यायात्। ख्येयात्। क्शायात्। क्शेयात् ॥

ङ् नेति वक्तुं शक्यमिति केचित् तन्नमंदं। अतो हेरित्यारंभसामर्थ्यात्तस्या अप्रवृत्तेरिति नव्याः। वधेर्दशो अरंत इति

नेन आदेशोपदेशेऽनेकाच्त्वात् अवधीदित्यत्रैकाच इति निषेधाप्रवृत्ता विडादौ सिच्यतो हलादेरिति मा भूद्वृद्धिर्हेर्लोपस्यास्यानित्यत्वान्नेति भावः॥ ॐ ॥

दुह प्रपूरणे। प्रपूरणं प्याजनं। लङ्वदपीति। अदुग्ध। अदुग्धाः। अधुग्ध्वं। अदुह्वहि। दिह। उपचयो वृद्धिः। प्रणिदेग्धीति। नेर्गदेति णत्वं। अलिक्षु नेति। शल इ

गुपधेति क्सः। अलिक्षातां। अलिक्षंत। अलीढेति। लुग्वा दुहेति वा लुक्। अलीढाः। अलीढ्वं। चक्षिङ् दर्शनेऽपीति। विश्वाहरूपा अभिचष्टे। शचीभिरित्यत्र दर्शनात्

र्यंत्वेरव्यास्यानत्वादितिभावः। युजर्थ इति। अनुदात्तेतश्च हलादेरिति युच्। अंतेदित इति। इदित इति नुम्विधौ गोःपादांत इत्यस्मादंत इत्यनुवर्तत इति भावः। एवं च नु
मागमशंकानुत्थानाय चक्षिङ् इकारस्थाने अकार एव आसंक्तुमुचितः। अनुदात्तत्वेनैव तत्सिद्धेर् ङकारो व्यर्थ इत्याशंक्याह। ङकारस्त्विति। स्यार्थ इति। स्क
अस्यतिवक्तिख्यातिभ्योऽङ्। ३।१।५२। एभ्यश्च्लेरङ् स्यात्। अख्यत्। अख्येताम्। अक्शासीत्। अक्शास्त। वर्जने क्शात्रनेष्टः समं च क्षिंशेत्यादि। अ
थ पृच्यंत। अनुदात्तेतः। ईर गतौ कंपने च। ईर्ते। ईरांचक्रे। ईरिता। ईर्ष्व। ईर्ध्वे। ऐरत्। ऐरिष्ट। ईड स्तुतौ। ईट्टे। ईशः से। ७।२।७७। ईडजनोर्ध्वे च। ७।२।
७८। ईशीडजनां से ध्वे शब्द्योः सार्वधातुकयोरिट् स्यात्। योगविभागो वैचित्र्यार्थः। ईडिषे। ईडिध्वे। एकदेशविकृतस्यानन्यत्वादीडिष्व
ईडिध्वम्। विकृतिग्रहणेन प्रकृतेरग्रहणात् एडड्ढ्वं। ईश ऐश्वर्ये। ईष्टे। ईशिषे। ईशिध्वे। आस उपवेशने। आस्ते। दयायासश्च। आसांचक्रे।
आस्स्व। आध्वं। आसिष्ट। आङः शासु इच्छायाम्। आशास्ते। आशासाते। आङ्पूर्वत्वं प्रायिकं। तेन नमोवाकं प्रशास्महे इति सिद्धं। वस
आच्छादने। वस्ते। वस्से। वध्वे। ववसे। वसिता। कसि गतिशासनयोः। कंस्ते। कंसाते। कंसने। अयमनिदित्। कस्ते। तालव्यांतोप्यनि
दित्। कष्टे। कशाते। कक्षे। कड्ढ्वे। णिसि चुंबने। निंस्ते। दंत्योष्ठ्यः। आभरणकारस्तु तालव्यांत इति बभाम। णिक्षि शुद्धौ। निंक्ते। निंक्षे।
षीडस्तु दंत्योष्ठ्यः। अनुदात्तेतो लटः। शात्रादेशः। चष्ट इति। स्कोरिति कलोपः। ष्टुत्वं। ख्शादिरिति। तेन पुंख्यानमित्यत्र पुमः खय्यम्परे इति रुत्वं नेत्याहुः। वर्जने वर्जयेति। असि
स्य कांड इति णत्वप्रकरणे नेतरमिति शेषः। तेन पर्याख्यानमित्यत्रं ककारेणव्यवधानात्कृत्यच इति णत्वं न। तथा सुपरख्येन निर्वृत्तं सौपरख्यं तत्र भवः सौपरखीयः॥
यत्वस्यासिद्धत्वात् धन्वयोपधादिति वुञ् न किं तु छ एवेति बोध्यं। अचष्टेति। स्कोरिति कलोपः। ष्टुत्वं॥ ॥ अस्यतिवक्ति। ख्यातीत्यत्र विधिसामर्थ्याद्यत्वं न्यासि
द्धं। स्वतंत्रस्य ख्याधातोः सार्वधातुकमात्रविषयतया वक्ष्यमाणत्वात्। अस्यतेः पुषादिपाठादङि सिद्धे तङर्थं ग्रहणमित्यादि पुषादिषु वक्ष्यति। वक्तीति ब्रु
वो वचिः। वच परिभाषण इति उभयोर्ग्रहणं। ईर। ईरिता। ईरिष्यते। लङि। ऐर्त। ऐरातां। ऐरत। ऐरिः। ऐर्वहि। ऐर्महि। ईशः से। यथाश्रुतसूत्रन्यासे ईशो ध्वे
शब्दे परे ईशिध्वे ईशिध्वमिति न सिध्येदत आह। ईशीडजनामिति। वैचित्र्यार्थ इति। ध्वे इत्यस्य पूर्वत्रापकर्षः। से इत्यस्योत्तरत्रानुवृत्तिरित्येवं विचित्रबोधा

सि·कौ· र्थ इत्यर्थः। इह काशिकायां जनेरुदाहरणमुक्तं। तथाहि। जनी प्रादुर्भाव इत्यस्मात् श्यनः छांदसो लुक् उपधालोपाभावश्च। जनिषे। जनिष्वे। जनिध्वे। जनिध्वं। जेन
टी·त· जनने इति श्लुविकरणस्याप्युपधालोपे व्यतिजज्ञिषे। व्यतिजज्ञिध्वे। कर्तरि कर्मव्यतिहार इति तङ्। नमोवाकमिति। नमस्ते रुद्र मन्यव इत्यादि नमोवचनं।
ति·ङ· वच्चे घञ्। चजोरिति कुत्वं। वव वसे इति। वादित्वादेत्वाभ्यासलोपौ न। णिसि चुंबने। वभ्रामेति। नुम्। विसर्जनीयेति सूत्रे वृत्तिपदमंजर्यादिभिरुक्तं नुमादिभिः प्र
५९ त्येकं व्यवाये षत्वमिष्यते तेन निंसे निंस्व इत्यत्र न भवतीति। तन्न। चास्य सांतत्वमुच्यते। श्रांतत्वं तु व्रश्चादिषत्वे षढोः कः सि कत्वे कवर्गात्परत्वेन षत्वं दुर्धारमिति प्रत्युदा
हरणमिदं न संगच्छत इति भावः। णिजि शुद्धौ अनिट्कं णिजिरिति जो होत्यादिकस्य ग्रहणादयं सेडिति ध्वनयति। निंजितेति॥ शिजि अव्य

शिजि अव्यक्ते शब्दे। शिंक्ते। पिजि वर्णे। संपर्चन इत्येके। उभयत्रेत्यन्ये। अवयव इत्यपरे। अव्यक्ते शब्द इतीतरे। पिंक्ते। पृजी इत्येके।
पृंक्ते। वृजी वर्जने। इत्वोऽक्ष्यादिः। इदित्। वृंक्ते। वृजाते। वृक्षा। इदित इत्यन्ये। वृङ्क्ते। पृची संपर्चने। पृंक्ते। षूङ् प्राणिगर्भविमोचने। सूते
सुषुविषे। सोता। सविता। भूसुवोरिति गुणनिषेधः। सुवै। सविषीष्ट। सोषीष्ट। असविष्ट। असोष्ट। शीङ् स्वप्ने। शीङः सार्वधातुके गुणः
॥ ७।४।२१॥ क्ङिति चेत्यस्यापवादः। शेते। शयाते। शीङो रुट्। ७।१।६॥ शीङः परस्य झादेशस्यातो रुडागमः स्यात्। शेरते। शेषे। शेध्वे। ॥
शये। शेवहे। शिश्ये। शयिता। अशयिष्ट। अथ कौत्यंताः परस्मैपदिनः। ऊर्णुञ् उभयपदी। युमिश्रणे अमिश्रणे च॥

क्ते। गव्योक्तप्रत्यये शिंजितं। आवश्यकत्वात्त्यंताद् ङीपि शिंजिनी। भूषणानां तु शिंजितं। मौर्वी ज्या शिंजिनी गुण इति चामरः। सुषुविषे इति। स्वरति सूतीति विक
ल्पं बाधित्वा श्र्युकः कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। शीङ् स्वप्ने। क्ङिति चेत्यस्येति। अन्यत्र सार्वधातुकार्धधातुकयोरित्यनेनासिद्ध इति भावः। शी
ङो रुट्। झोंत इत्यतोऽत इत्यनुवर्तते। अदभ्यस्तादित्यतोऽदिति च तथा चेष्टानुरोधेनाऽदिति प्रथमांतस्य षष्ठ्यंतत्वमाश्रित्य व्याचष्टे। झादेशस्याऽत इति। अस्ये
व रुडागमे तु अदादेशो दुर्लभ इत्यादिस्वस्याप्यनुवृत्तिः कृता। शिश्ये इति। एरनेकाच इति यण्। शेताम्। शयाताम्। शेरताम्। शेष्व शयाथां। शेध्वं॥

उतो वृद्धिः। नाभ्यस्तस्याचिपितीत्यतो निषेधानुवृत्तेराह नत्वभ्यस्तस्येति। उतः किं। एति। एषि। लुकीति किं। सुनोति। जुहोति। हलि किं। यवानि। यवाव। आडुत्तमस्येत्या
डागमः पित्। पितीति किं। युतः। रुतः। नाभ्यस्तस्येति किं। योयोति। रोरोति। सार्वधातुके किं। यूयात्। नचात्र ङिच्च पिन्नेति व्याख्यानान्निर्वाहः शंक्यः। किदाशिषीति यासु
टः कित्वात्। केचित्तु युयात् रुयात् इत्यादावपि ङिच्च पिन्नेत्यनाश्रित्य व्याचक्षते संज्ञापूर्वकविधेरनित्यत्वाद्वृद्धिर्न भवति। अन्यथा उतऔदित्येव वदेदिति। तु
रुस्तुः सौत्रो धातुरिति वक्ष्यति। अपिदर्थमिति। एभ्यः परस्य पितः सार्वधातुकस्येति प्राचो व्याख्यानं प्रामादिकं। रुवीतः। स्तुवीत इत्यादावसिद्ध्यापत्तेरिति भा

उतो वृद्धिर्लुकि हलि। ७।३।८९॥ लुग्विषये उकारस्य वृद्धिः स्यात् पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य। यौति। युतः। युवंति। युयाव। यवि
ता। युयात्। इह उतो वृद्धिर्न भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात्। विशेषविहितेन ङित्वेन पित्त्वस्य बाधात्। यूयात्। अयावीत्। रुश
ब्दे। तुरुस्तुशम्यमः सार्वधातुके। ७।३।९५॥ एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात्। नाभ्यस्तस्येत्यतो नुवृत्तिसंभवे पुनः सार्व
धातुकग्रहणमपिदर्थं। रवीति। रौति। रुवीतः। रुतः। हलादेः किं। रुवंति। तिङः किं। शाम्यन्ति। सार्वधातुके किं। आशिषि रूयात्। विध्यादौ तु
रुयात्। रुवीयात्। अरावीत्। अरविष्यत्। तु इति सौत्रो धातुः। गतिवृद्धिहिंसासु। अयं च लुग्विकरण इति स्मरंति। तवीति। तौति। तुवीतः।
तुतः। तोता। तोष्यति। अतौषीत्। णु स्तुतौ। नौति। नविता। टुक्षु शब्दे। क्षौति। क्षविता। क्ष्णु तेजने। क्ष्णौति। क्ष्णविता। ष्णु प्रस्रवणे॥
स्नौति। सुष्णाव। स्नविता। स्नुयात्। स्नूयात्। ऊर्णुञ् आच्छादने। ऊर्णोतेर्विभाषा। ७।३।९०॥ वृद्धिर्वा स्याद्धलादौ पिति सार्वधातुके। ऊर्णौ
ति। ऊर्णोति। ऊर्णुतः। ऊर्णुवंति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। ऊर्णोतेराम्नेति वाच्यं॥ ॥

८९ वः। शम्यमोरुदाहरणं तु शमीध्वं। अमीति। अ
भ्यंति। शम्यमोश्छन्दसि विकरणस्य लुकि सति हलादिसार्वधातुकमनंतरं संभवतीति काशिकायामुक्तं। आपिशलास्तु तुरुस्तुशम्यमः सार्वधातुके छन्दसीति पठंति
तन्मते सूत्रमिदं छन्दस्येव। ऊर्णोतेर्विभाषा। उतो वृद्धिरिति नित्ये प्राप्ते विभाषेयं। हलादौ किं। ऊर्णवानि। पितीति किं। ऊर्णुतः। सार्वधातुके किं। ऊर्णूयात्। ऊर्णोतेरा
म्नेति। ऊर्णोतेर्णुवद्भावो वाच्य इति वक्ष्यमाणस्य आमभावोपि फलमिति भावः॥ ॥ ॥ ॥

सि॰ कौ॰ टि॰ त॰ ति॰ उ॰ पूर्व

नन्द्राः। अजादेरितिवर्तते समवकर्मधारयः आदिग्रहणस्य तु प्रकृते नुपयोगस्तदेन दाहा। अचः परा इति। उंरिरिषति। इंदिदिषति। अड्डिडिषति। अर्चिचिषति। नन्द्राइ
तिर्कि। ईक्षतेः सनि ईचिक्षिषते। संयोगादयः किं। प्राणिणिषति। अरिरिषति। अचः पराः किं। इंद्रीपितुमिच्छतीति क्यजंतात् सनि इंदिद्रीयिषति। इह नकारस्य द्वित्वा
भावेपि दकारस्तु द्विरुच्यत एव चः परत्वाभावात्। नुशब्दस्येति। उपदेशेन कारएव। णत्वं तु रषाभ्यामि त्यनेनेति भावः। पूर्वत्रासिद्धीयमिति। अत्र द्विर्वचन
शास्त्रेन षाष्ठमाष्टमिकं चोभयं गृह्यते तत्र षाष्ठस्य उडिमास्यत् औडिढत्। इत्युदाहरणं। आष्टमिकस्य तु द्रोग्धा द्रोग्धा। द्रोढा। द्रोढेति। इह त्रिपादीस्थ
घत्वढत्वादिकं द्विर्वचने सिद्धमेव। असिद्धत्वे तु त्रिपादीस्थकार्यात् पूर्वमेव द्रोहनादरस्य द्वित्वे पश्चाद् द्रुहेति घत्वढत्वयोः प्रवृत्तौ द्रोग्ध्रा द्रुह् इ सपि द्वि

नन्द्राः संयोगादयः। ६।१।३॥ अचः पराः संयोगादयो नदरा द्विर्न भवंति। नुशब्दस्य द्वित्वं। णत्वस्यासिद्धत्वात्। पूर्वत्रासिद्धीयमद्विर्वचन इ
तित्वनिसंग उभौ साभ्यासस्येति लिंगात्। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः। विभाषोर्णोः। १।२।३॥ इडादिप्रत्ययो ङिद्वा स्यात्। ऊर्णुनुविथ
ऊर्णुनविथ। ऊर्णुविता। ऊर्णविता। ऊर्णोतु। ऊर्णौतु। ऊर्णवानि। ऊर्णवै। गुणोऽपृक्ते। ७।३।९१। ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्व
धातुके। ह्रस्वापवादः। और्णौत्। और्णोः। ऊर्णुयात्। ऊर्णुयाः। इह द्विर्ना ङिच्चापिन्नेति भाष्यात्। ऊर्णूयात्। ऊर्णविषीष्ट। ऊर्णुविषीष्ट। औ
र्णुवीत्। और्णुविष्टां ॰ ४

र्वचनं कदाचित्स्यात्। ननु द्रोग्धा द्रोग्धेति समानजातीयस्यैव नियमे न द्विर्वचनं सिध्यति। किं चाष इसंनादरस्य त्रउस्य
चत्वे टकारस्य द्वित्वं पूर्वत्रासिद्धीयमद्वित्वे इत्युक्तेरिति मनोरमायामुक्तं। अत एव सुध्युपास्य इत्यत्र धस्य जश्त्वेन दकारे व्यक्तिभेदात् दकारस्यापि द्वित्वं सवच्चमेवेत्या
हुः। अनित्यमिति। अत एव हतिशब्दस्य द्वित्वं औजिढदित्यपि नामधातुषु वक्ष्यति। उभौ साभ्यासस्येति। अनितेरित्यनेन णत्वं कृत्वा द्विर्वचने कृते प्राणिणत्। प्राणि
णीषतीति सिद्धमिति सूत्रमिदं ज्ञापकमित्यर्थः। एवं च प्राणिनायेत्यादौ द्वितीयस्य णत्वाभावः सिद्धः। विभाषोर्णोः। गाङ्कुटादिभ्य इत्यतो ङिदिति विज इडित्यत इ
डिति चानुवर्तते। इत्याशयेनाह। इडादिप्रत्यय इत्यादि। तेन गुणविकल्पपक्षे उवङ्। गुणोऽपृक्ते। नाभ्यस्तस्याचीत्यतः पिति सार्वधातुके इति उतो वृद्धिर्लुकि
हलीत्यतो हलीति वर्तते। तदाह हलीदावित्यादि॥

ऊर्णोतेर्विभाषा॥ सिचि वृद्धीति सूत्रं नेटीत्यत इटीति चानुवर्तत इत्याशयेनाह। इडादाविन्यादि। स्नवीतीति। तुरुस्तुशम्यम इति ईड्डा। स्नुसुधूञ्भ्यः इत्यत्र परस्मै
पदेष्विन्मुक्तेः। आत्मनेपदे तु नेट्। अस्तोष्ट। अस्तोषातां॥ ब्रुवः पंचानां। विदो लटो वेत्यतो लटो वेति वर्तते। ब्रुव इत्येन दादिमं पंचम्यं तमं तिमं ब्रुव आहं तमिमा
शयेनाह। ब्रुवो लट इत्यादि। चत्वमिति। प्रक्रियालाघवादाहल इत्येवसुवचमित्याहुः। ब्रुव ईट्। हलादेः किं। ब्रवाणि। पितः किं। ब्रूतः। अल्लोपित्वविधा

ऊर्णोतेर्विभाषा।७।२।६॥ इडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात्। पक्षे गुणः। और्णावीत्॥ और्णाविष्टां। और्णाविषुः। और्णवीत्। और्
णविष्टां। द्यु अभिगमने। द्यौति। द्योता। षु प्रसवैश्वर्ययोः। प्रसवोऽभ्यनुज्ञानं। सोता। असौषीत्। कु शब्दे। कोता। ष्टुञ् स्तुतौ। स्तौति। स्त
वीति। स्तुतः। स्तुवीतः। स्तुते। स्तुवीते। स्तुसुधूञ्भ्यः इतीट्। अस्तावीत्। प्राक्सितादिति षत्वं। अभ्यष्टौत्। सिवादीनां वा। पर्यष्टौत्। अप
र्यस्तौत्। ब्रूञ् व्यक्तायां वाचि। ब्रुवः पंचानामादित आहो ब्रुवः।३।४।८४॥ ब्रुवो लटः परस्मैपदानामादितः पंचानां णलादयः पंच वा स्युः।
ब्रुवश्चाहादेशः। अकार उच्चारणार्थः। आह। आहतुः। आहुः। आहस्थ।८।२।३५॥ झलि परे। चर्त्वं। आत्थ। आहथुः। ब्रुव ईट्।७।३॥
९३॥ ब्रुवः परस्य हलादेः पित ईट् स्यात्। आस्थेत्यत्र स्थानिवद्भावान्नाप्तोऽयं। स्थलीति थत्वविधानान्न भवति। ब्रवीति। ब्रूतः। ब्रुवं
ति। ब्रूते। आर्द्धधातुकाधिकारे॥ ब्रुवो वचिः।२।४।५३॥ उवाच। ऊचतुः। ऊचुः। उवचिथ। उवक्थ। ऊचे। वक्ता। ब्रवीतु ब्रूतात्। ब्रुवन्तु। आपि
त्वादीत्। अब्रवीत्। ब्रवाणि। ब्रवै। ब्रूयात्। उच्यात्। अस्यतिवक्तिख्यातिभ्योऽङ्। वच उम्।७।४।२०॥ अङि परे। अवोचत्। अवोचेत। अथ परस्मै
पदिनः। इङ् त्वात्मनेपदी। इण् गतौ। एति। इतः। इणो यण्।६।४।८१॥ अजादौ प्रत्यये परे। इयङोऽपवादः॥ यंति। इयाय। दीर्घ इणः कि
ति।७।४।६९॥ इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि। ईयतुः। ईयुः। इययिथ। इयेथ। एता। एतु। ऐत्। ऐतां। आयन्। इयात्। ईयात्॥

नादिति। ईडागमे कृते झलादित्वाभावादिति भावः। इण् गतौ। इयङोऽपवाद इति। येन नाप्राप्तिन्यायेनेति भावः। गुणवृद्धी तु परत्वादस्य बाधिके। अयमां आ
पकः दीर्घ इणः किति अत्र लोपोऽभ्यासस्येत्यतोऽभ्यासस्येत्यनुवर्तते व्यत्ययो लिटीत्यतो लिटीति च। किति किं। इयाय। अत्र वदंति। इह दीर्घे कृते पश्चादभ्यासवर्णे इतीय अरु

पसिद्धेः क्ङितीति व्यर्थं न च दीर्घस्य यङि दीर्घविधानं व्यर्थमिति वाच्यं। ईयतुः ईयुरित्यत्र वार्णादाङ्गं बलीय इति यणि कृते दीर्घविधेः सावकाशत्वात्। किं चाक्ङितीत्य
नुवर्तनमपीह व्यर्थमेव व्यावर्त्याभावादिति। एता। एष्यति। एतु। इतात्। इता। यंतु। इहि। उत्तमे तु अयानि। अयाव अयाम॥ लङ् मध्यमे। ऐः। ऐतं। ऐत। उ
त्तमे त्वायं। ऐव। ऐम। इयादिति। अकृत्सार्वेति दीर्घः॥ ॐ॥ एतेर्लिङि। इह आङ् ईधातुक इति स्वरूपकथनार्थं प्रश्लिष्टं। किति लिङीत्यनावृत्तेव प्रसिद्धेः
उभयत आश्रय इति। अंतादिशब्दौ अवयवविशेषवाचिनौ न तु यद्दिपूर्वस्य अवयवबुध्या एकादेश आश्रियते तेन तत्स्यैव परस्य कथमादिवद्भावः स्यात् एवं परस्यादित्वेऽपूर्वस्या

एतेर्लिङि॥७।४।२४॥ उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्द्धधातुके किति लिङि। निरियात्। उभयत आश्रयणे नान्तादिवत्। अभी
यात्। अणः किं। समेयात्। समीयादिति प्रयोगस्तु भौवादिकस्य॥ इणो गा लुङि॥२।४।४५॥ गातिस्थेति सिचो लुक्। अगात्। अगातां
अगुः। इङ् अध्ययने। नित्यमधिपूर्वः। अधीते। अधीयाते। अधीयते। गाङ् लिटि। २।४।४९॥ इङो गाङ् स्याल्लिटि। लिडवस्थायां विवक्षितत्वा
दधिजगे। अधिजगाते। अधिजगिरे। अध्येता। अध्येष्यते। अध्ययै। गुणायादेशयोः कृतयोरुपसर्गस्य यण्। पूर्वं धातुरुपसर्गेणेति तु द
र्शनेऽतरंगत्वादिणः पूर्वसवर्णदीर्घः प्राप्तः। एरध्ययने वृत्तमिति निर्देशात् न भवति। अध्यैत। परत्वादियङ्। ततआट्। वृद्धिः। अध्यै
याता। अध्यैयत। अध्यैयि। अध्यैवहि। अधीयीत। अधीयीयातां। अधीयीध्वं। अधीयीय। अध्येषीष्ट॥ विभाषा लुङ्लृङोः॥२।४।
५०॥ इङो गाङ् वा स्यात्॥ लुङ्लृङोः॥ १९ नवद्भावो नस्यादेकस्योभयापेक्षयापारत्यविरोधादिति भावः। नन्वेवं रामो इत्यस्य सुपि ङं तमिति परत्वेन
स्यात् पराऽऽदित्वे रामेति प्रकृतेरभावात्। यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणमिति स्वीकारात् रामइत्यस्य प्रकृतित्वात्। पूर्वान्तत्वे तु परत्र प्रत्ययाभावात् अत्राहुः पू
र्वपदसंज्ञापश्चादेकादेश इति नोक्तदोषः। इह च ज्ञापकं सुपि सूतिसमा इति ——॥ विध्यादौ समीयादिति न भवत्येव। आशीर्लिङि तु अकृत्सार्वेति दीर्घे कृतेपि ह्रस्वे
न भाव्यमित्याशंक्याह। भौवादिकस्येति। इट किट कटी इत्यत्र प्रश्लिष्टस्य ईधातोराशीर्लिङि इदं रूपं। वीगतीत्यत्र ईकारोपि धात्वंतरं प्रश्लिष्यत इति मते तु विध्यादि
लिङ्यपि भवत्येवेति बोध्यं। गाङ् लिटि। लावस्थायामिति वार्तिकमते एकादेशात्प्रागेव गाङादेशः। द्विर्वचनेचीति सूत्रं न प्रवर्तते द्वित्वनिमित्ताचोऽभावात्।

विवक्षित इति। भाष्यमते तु सुतरां न प्रवर्त्तते अनैमित्तिकत्वादिति भावः। निर्देशान्न भवतीति ।-वार्णादाङ्गं बलीय इति समाधानं तु न प्रवर्तते व्याश्रयत्वादिति भावः। अ
ध्यैयतेति। आत्मनेपदेष्वनत इति रस्य अत्। लङ् मध्यमे तु अध्यैथा अध्यैयाथां। अध्यैध्वं। अध्यैषीष्टेति। लिङः सीयुट्। अध्यैषीयास्तां। अध्यैषीरन्॥ ॥
गाङ्कुटादिभ्यो। इह गाङ्ग्रहणेनाविशेषस्य न ग्रहणं। मेङर्थे तथा ङकारानुबन्धस्य तत्र चरितार्थत्वात्। आदेशङकारस्तु अचरितार्थः। स्थानिवद्भावेनैव तङ्सि
गाङ्कुटादिभ्योऽञ्णिन्ङित्। १।२।१। गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्ययाः ङितः स्युः। घुमास्थागापाजहातिसां हलि। ६।४।६६। एषामा
त ईत्स्यात् हलादौ क्ङित्यार्द्धधातुके। अध्यगीष्ट। अध्यैष्ट। अध्यगीष्यत। अध्यैष्यत। इकु स्मरणे। अयमप्यधिपूर्वः। अधीगर्थदयेशां कर्मणि इति
लिङ्गात्। अन्यथा हीगर्थेत्येव ब्रूयात्। इण्वदिक इति वक्तव्यम्। अधीयन्ति अध्यगान् केचित्वार्द्धधातुकाधिकारोक्तस्यैवातिदेशमा
हुस्तन्मते यण् न तथा च भट्टिः सम्प्रीतयोरराघवयोरधीयन्निति वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु प्रजनो गर्भग्रहणं असनं क्षेपणं वेति
वीतः वियन्ति वेषि वेमि वीहि अवेत् अविताम् अवियन् अडागमे सत्यनेकाच्त्वाद्यणिति केचित् अत्र ईकारोपि धात्वन्तरं प्रश्लिष्यते एति
ईतः इयति ईयात् ऐषीत्। या प्रापणे प्रापणमिह गतिः प्रणियाति याति याः यान्ति लङः शाकटायनस्यैव ।३।४।१११। आदन्तात्परस्य लङो झेर्जुस्वा
स्यात् अयुः अयान् यायात् यायातां यायासुः वा गतिगन्धनयोः भा दीप्तौ ष्णा शौचे श्रा पाके द्रा कुत्सायां गतौ प्सा भक्षणे पा रक्षणे पायासुः अपा
सीत् रा दाने ला आदाने द्वावपि दाने इति चन्द्रः दाप् लवने प्रणिदाति प्रनिदाति दायासुः अदासीत् ख्या प्रकथने अयं सार्वधातुकमात्रविषयः
सस्थानत्वं नमः ख्यात्रे इति वार्तिकेन तद्भाष्ये च हलिङ्गं सस्थानो जिह्वामूलीयः सनेति ख्यात्रादेशस्य खशादित्वे प्रयोजनमित्यर्थः संपूर्वस्य ख्यातेः प्रयो
गो नेति न्यासकारः प्रा पूरणे मा माने अकर्मकः तनौ ममुस्तत्र न कैटभद्विष इति माघः उपसर्गवशेनार्थान्तरे सकर्मकः उदरं परिमाति मुष्टिना नेर्गदेत्य
त्र नास्य ग्रहणं प्रणिमाति प्रनिमाति वच परिभाषणे वक्ति वक्तः अयमन्तिपरो न प्रयुज्यते बहुवचने इत्यन्ये झिपर इत्यपरे वग्धि वच्यात् उच्यात्
ऊच्यादित्याह। गाङादेशादिति कुटादित्वादि द्विगुणः केचित्तु कुट आदिर्येषां ते कुटादयः। कुटस्य आदिः कुटादिः कुटादिश्च कुटादयश्च कुटादयः इति समास

सि·कौ· रूपमाश्रित्य कुट्पूर्वस्य लिखधातोरपि ग्रहणं लिखनमिति प्रयोगः सिद्ध इत्याहुः तच्चरलो व्युपधादिति सूत्रस्थेन लिखित्वा लेखित्वा लिलिखिषति लिलेखिषति इति ग्रन्थेन शाकु
टि·त· निघालेखने इति सौत्रप्रयोगेण च विरुध्यते। अश्लिरिति किं। घञि कोटः। पोटः। णलि चुकोट पुपोट चुमाव्या राङ्गुड चीत्यतः क्ङितीत्यनुवर्तते। आर्द्धधातुक इति चाधिक्रियत एव क्ङितीति किं। स
लि·उ· नाधाता हल इति दीर्घः दरतुः दरुः अन्यथा आतो लोपात्परत्वादीत्वं स्यात् आर्द्धधातुके किं। ममातः माथः अध्यगीष्टेति सिचो ङित्वादीत्वं इकः स्मरणे ककार इह इत्येव दिक इति विशेषणे
६९ र्थः एतिस्मुक्के तु इह किट् कटीत्यत्र प्रश्लिष्टस्य इधातोरपि ग्रहणं स्यादित्याहुः केचित्तु इति आर्द्धधातुकाधिकारे वार्तिकपाठात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादृतिनिर्देश इति भावः
ति। स्मरन्ति स्मरणार्थः। राघवयोरित्यत्राधिगर्थदयेशां कर्मणि इति षष्ठी। वी गतौ। अवियन्निति। अडागमात्परत्वादियङ्। अडागमे सतीति। कृताकृतप्रसङ्गित्वमात्रेणाटो
नित्यत्वादिति भावः। अतएवापरितोषाद्दसिद्धवदत्राभादिति समानाश्रये यणि कर्तव्ये अटोऽसिद्धत्वादियङ् वाचित इत्याशयेन वाके विद्दिलुक्तं। लावस्थायामे
वाडागम इति पक्षस्तु यत्ले वेति बोध्यं। ईकारोपीति। प्रयुंजते च। नहि तरणिरूढीनेरिक् पराधीनवृत्तिरिति। व्याख्यातं च मनोरमायां। कर्मव्यतिहारे तङ्। न च न
गतिहिंसार्थेभ्य इति निषेधः प्रांक्यः उत पूर्वस्याः विर्भावार्थत्वादिति। अत्र वदंति। व्यतिशब्दं विना कर्मव्यतिहारकल्पने क्लेशावहा परकीय कर्म च कर्मव्यति
हारेऽपेक्ष्यते। तच्चात्र नोपात्तं। परस्परकरणं तु न संभवत्येव। ततश्चोदीते इति भावेनिष्ठा ज्ञेया। तथा चोदयेदिक् पराधीनवृत्तिसरणिर्नेत्यर्थः। सुगम इति
प्रतिदानीति। शेषे विभाषेति णत्वविकल्पः। अदासीदिति। अघुत्वान्न सिज्लुक्। नमःख्यात्रिदूतियघमार्द्धधातुकेपि प्रयुज्येत तर्हि तृजेऽस्मिन्परे श
परे विसर्जनीय इत्यस्याप्रवृत्त्या कुप्वोरिति जिह्वामूलीयो दुर्वारः स्यादेवेति तदभावः। खशादित्वे प्रयोजनमिति वार्तिककाराशक्ति व्याक्रियेत इति भावः। संपूर्वस्य
स्यादि। संख्यातोऽस्यादि प्रयोगो नास्त्येव। संख्येति प्रयोगस्तु ख्या आदेशस्येति स्यास सकाराशयः। मामाने। नास्येति। घुप्रकृतिमाङ् इति पाठात् ङितामेव तत्र ग्रहणं
ततश्च शेषे विभाषेति विकल्प एव प्रवर्तत इत्याह प्रणिमातीत्यादि। वच परिभाषणे। उवाच। वक्ता। वक्ष्यति। वक्तु। वक्तात्। अवक्। अवक्तां। अयमंतिपर इ
ति। तथा च वचंति। वक्ष्यंति। वचंतु। अवचन्। अवाचन्। अवक्ष्यन्नित्येते असाधवः। बहुवचनपर इति। अस्मिन्पक्षे लटि मध्यमे वक्थ उत्तमे तु वच्मः। लिटि
ऊचुः। मध्यमे। ऊच। उत्तमे तु ऊचिम। लुटि वक्तारः। लिङि वच्यासुः। उच्यासुरित्यादयोप्यसाधवः। झिपर इति। अस्मिंस्तु पक्षे वक्थ वच्मः। ऊच ऊचिम ...इति

विद्यु लटो वा। पंचमीयं न तु षष्ठी। तेन विद्यति विंदन्योः अव्यवहितपरस्य लटोः भावान्नैते आदेशास्तदाहा वेन्नेरिति। लोटो लुगिति। आम इति सूत्रे मंत्रे घसेत्यतो ले
रिति अनुवर्त्य आमः परस्य लेर्लुगिति व्याकुर्वतां मते नेदमुक्तं। निष्कर्षे तु तेनैव लुगिति बोध्यं। पुरुषवचने इति। प्रथमपुरुषो बहुवचनं चेत्यर्थः। परस्मैपद
मप्यविवक्षितमेवेति केषांचिन्मते कर्मव्यतिहारे तङि व्यतिविदांकुरुतां। व्यतिविदांकुर्वातामित्यादि ज्ञेयं। नेनेति। विश्वसेदित्यत्र शपो लुगभावः सिद्ध इति भा
वः। एवमप्यविश्वसत्तमित्यत्रेडभावः कथमिति चेदागमशास्त्रस्यानित्यत्वादिति गृहाण। अतउत्सार्वे। क्ङिति किं। करोषि। लुकोऽसिद्धत्वादिति। सार्वधातुकग्र
हणमुत्तरार्थमेव। न अत्र आवश्यकं। इह भूक्तपूर्वेगत्यासार्वधातुकपरत्वमाश्रीयते इति हृन्तिमते त्वसिद्धत्ववर्णनस्योपयोगलेशोपि नास्तीति ज्ञेयं। दश्नासि

विदो लटो वा।३।४।८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद विदतुः विदुः वेत्थ विदथुः विद वेद विद्व विद्म पक्षे वेत्ति वित्तः विदन्तीत्यादि। विवेद वि
विदतुः। उषविदजागृभ्योऽन्यतरस्याम्।३।१।३८। विदेरकारान्तनिपातनान्न लघूपधगुणः। विदांचकार विवेद। विदांकुर्वन्त्वित्यन्यतरस्याम्।३।१।४१। वेत्तेर्लोट्याम् प्रत्ययो गुणा
भावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते पुरुषवचने न विवक्षिते इति शब्दात्। तनादिकृञ्भ्य उः।३।१।७९। तनादेः कृञश्च उप्रत्य
यः स्यात्। शपोऽपवादः। तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिंगं तेन न विश्वसेदविश्वसत्तमित्यादि सिद्धं। विदांकरोतु। अत उत्सार्वधा
तुके।६।४।११०। उप्रत्ययान्तस्य कृञोऽकारस्य उः स्यात्सार्वधातुके क्ङिति। उदिति तपरकरणसामर्थ्यान्न गुणः। विदांकुरुतात्। विदांकुरुतां। उतश्चेति हे
र्लुक्। आभीयत्वेन लुकोऽसिद्धत्वादुत्वं। विदांकुरु विदांकरवाणि। अवेत्। अवित्तां। सिजभ्यस्तविदिभ्यश्च। अविदुः। दश्च।८।२।७५। धातोर्दस्य पदान्त
स्य सिपि रुर्वा स्यात्। अवेः अवेत्। असभुवि। अस्ति। श्नसोरल्लोपः।६।४।१११। श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति। स्तः सन्ति। तासस्त्योरिति स
लोपः। असि स्थः स्थ अस्मि स्वः स्मः। आर्द्धधातुक इत्यधिकृत्य। अस्तेर्भूः।२।४।५२। बभूव भविता अस्तु स्तात् स्तां सन्तु॥ ११ पिधातोरुर्वेत्यनुवर्तते पदस्येति प्रलापज

ल्पोंते इत्यस्मादंत इति च तदाह। धातोर्दस्य त्यादि। सिपि किं। तिपि। अवेत्। दांतस्य धातोः सिपि रुर्वाभावे तु वेद् सिद्धोपदांतानां तु ष्टुत्वमिदं प्रयोजनेत्याहुः। तच्चिंत्यं
विधीनामतिप्रसंगात् चर्त्वस्यासिद्धत्वेन दांतत्वात्। श्नसोरल्लोपः। अत उदिति सूत्रादत इत्यनुवर्त्य अनुग्रहणात् कृञ्ः शक्यमित्याहुः। श्नसोरिति शाकंध्वादित्वात्

सि·कौ परहूपमित्याह। अस्यासेश्चेति। अस्योदाहरणं। रुधं नीत्यादि। कुतिकिं। रुणद्धि। अस्ति। तपरकरणमात्ता। मासन्नित्यत्र स्याड्डागमे कृते तस्य लोपो मा भूत् इत्येतद
टि·त· र्थं निर्कर्ष तु अनुपदं स्फुटीभविष्यति॥ ※ ॥ ध्वसोरेद्धौ। एत्वमलोऽन्त्यस्य। लोपस्तु शित्वात्सर्वस्येति भाष्यात्। स्पष्टं। देहि। धेहि। असिद्धत्वादाडिति। नन्वेवमाटोऽसिद्ध
ति·उ· त्वात् श्नसोरल्लोपो न भवेदिति तपरकरणं तत्र व्यर्थमिति चेत्। अत्राहुः। आभाच्छास्त्रस्यानित्यत्वज्ञापनाय तपरकरणं। तेन देभतुरित्यादि सिद्धमिति।
६२ स्यादेतत्। अत्र केचित्। अद्ग्रहणस्य निःफलत्वे तपरकरणस्य ज्ञापनार्थत्वं न सिध्येत्। न चानदिति सूत्रस्य तपरकरणमेव ज्ञापनार्थमस्त्विति वाच्यं। अस्य तु कौ
गौरवाद् ईमात्रालाघवाय तत्र तपरत्वमिति सुवचत्वात्। तस्मादुक्तज्ञापनार्थमद्ग्रहणमावश्यकमित्याहुः। उपसर्गप्रादुर्भ्यां। प्रादुस् इति सान्तमव्ययं।

घ्वसोरेद्धावभ्यासलोपश्च।६।४।११९। घोरस्तेश्चैत्वं स्याद्धौ परेऽभ्यासलोपश्च आभीयत्वेनैत्वस्यासिद्धत्वाद्धेर्धिः श्नसोरित्यल्लोपः एधि। तातङ्प
क्षे एत्वं न परेण तातङा बाधा सकृद्गताविति न्यायात्। स्तात्। स्तं। स्त। असानि। असाव। असाम। अस्ति। सिच इतीट्। आसीत्। श्नसोरल्लोपस्याभीय
त्वेनासिद्धत्वादाट्। आस्तां। आसन्। स्यात्। भूयात्। अभूत्। सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादीडेव। उपसर्गप्रादुर्भ्यामस्तिर्यच्परः।८।३।८७
उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि परे। निष्यात्। प्रादुःष्यात्। निषन्ति। प्रादुःषन्ति। यच्परः किं। अभिस्तः। मृजूष् शुद्धौ। मृजेर्वृद्धिः
।७।२।११४। मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे। क्ङित्यजादौ वेष्यते। व्रश्चेति षः। मार्ष्टि। मृष्टः। मृजन्ति। मार्जन्ति। ममार्ज ममार्जतुः ममृजतुः ममार्जिथ
ममार्ष्ठ। मार्ष्टा। मृड्ढि। अमार्ट्। अमार्ज्। अमार्जीत्। अमार्क्षीत्। रुदिर् अश्रुविमोचने। रुदादिभ्यः सार्वधातुके।७।२।७६। रुद् स्वप् श्वस् अन् ज
क्षूभ्यो वलादेः सार्वधातुकस्येट् स्यात्। रुदितः। हौ परत्वादिटि धित्वं न। रुदिहि॥ ॥ प्रादुषश्चेति पाठे प्रादुर्भ्यामिति निर्देशो न युज्यते इति प्राचां

प्रां न पाठः प्रामादिकः। परस्येति। अपसस्तेः सस्य विशेषणं न त्वस्तेः। तेन प्रादुरस्तीत्यत्र न षत्वं। उपसर्गेत्यादि। किं। दधिस्यात्। अस्तेः किं। परिसजति। मृजूष् शु
द्धौ। अयं नकित्। मिदादिपाठसामर्थ्यात्। मृजेर्वृद्धिः। गुणापवादः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्याह। धातुप्रत्यय इति। धातुप्रत्यये
किं। कंसपरिमृड्भ्याम्। क्ङित्यजादाविति। एतच्चान्येषां वैयाकरणानां मतं इको गुणवृद्धी इति सूत्रे भाष्यकृतास्वीकृतं। मृड्ढीति। हुझल्भ्य इति हेर्धिः। षत्व

हुं त्वं जघ्न्वानि। वलादेः सार्वधातुकस्येति। वलादेः किं। रुदंति। सार्वधातुके किं। स्वमाधित्वं नेति। सकृत्गतावितिन्यायात्। हेर्धिरिति स्थान्यादेशयोरिका
रउच्चारणार्थ इत्यादि प्रागुक्तसमाधानाद्धेतिभावः॥ ॐ ॥ रुदश्च पंचभ्यः किं। जागर्तेर्लङि अजागः। प्रकृतिप्रत्ययेत्यादि। हलादिपित्सार्वधातुकापृक्तापेक्ष
त्वाच्च बहिरंगत्वमडीटोः। अरुददिति। इरितो वेत्यङ्। अरोदीदिति। अस्तिसिचइतिरीट्। रुदश्चेत्यनेन तु नास्ति चाव्यवधाने न हलादेः परत्वाभावात्। सु
षुपतुरिति। वचिस्वपीति संप्रसारणं न तो द्वित्वं। सुविसूतिसमा इति। सूतीति क्तिनंतः। समेति पचाद्यजंतः। सुषुप्तिः। सुषूतिः। सुषमा। विषमः। अद्विर्व

रुदश्च पंचभ्यः। ७।२।७६॥ हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात्। अड्गार्ग्यगालवयोः। ७।३।९९॥ अरोदीत् अरोदत् अरुदितां। अ
रुदन्। अरोदीः अरोदः प्रकृतिप्रत्ययविशेषणापेक्षाभ्यामडीड्भ्यामन्तरंगत्वाद्यासुट् रुद्यात्। अरुदत् अरोदीत्। ञिष्वप् शये। स्वपिति स्वपितः
सुष्वाप सुषुपतुः सुषुपुः सुष्वपिथ सुष्वप्थ सुविनिर्दुर्भ्यः सुपिसूतिसमाः। ८।३।८८॥ एभ्यः सुप्यादेः सस्य षः स्यात् पूर्वं धातुरुपसर्गेण युज्यते
इति लिटि परत्वात्संप्रसारणे षत्वे च कृते द्वित्वं पूर्वत्रासिद्धीयमद्विर्वचने सुषुषुपतुः सुषुषुपुः अकितितु द्वित्वेऽभ्यासस्य संप्रसारणं षत्वस्या
सिद्धत्वान्नतः पूर्वं हलादिः शेषः नित्यत्वाच्च ततः सुपिरूपाभावान्न षः सुसुष्वाप सुस्वप्ता अस्वपीत् अस्वपत् स्वप्यात् सुप्यात् सुषुप्यात् अ
स्वाप्सीत् श्वस प्राणने श्वसिति श्वसिता अश्वसीत् अश्वसत् श्वस्यात्। श्वस्यास्तां ह्म्यन्तक्षणेति न वृद्धिः॥ अश्वसीत् अन च। अनिति आन अनि
ता आनीत् आनत् अनितेः। ८।४।१९॥ उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् प्राणिति जक्ष भक्षहसनयोः। जक्षिति जक्षितः अदभ्य
स्तात्। ७।१।४॥ क्रस्यात्स्यादंतापवादः जक्षति। सिजभ्यस्तेति जुस् अयमन्तस्यादित्युज्ज्वलदत्तो बभ्राम रुदादयः पंच गताः। जागृ निद्राक्षये।
जागर्ति जागृतः। जाग्रति उषविदेत्याम्वा जागरांचकार जजागार॥ ११ चन इति। तेन षत्वसहितस्य द्वित्वं। सुपिरूपाभावादिति। एकदेशवि
कृतमनन्यवदिति तु न प्रवर्तते। तस्य स्थानिवत् सूत्रशेषत्वात्। षत्वस्य त्रैपादिकत्वेन तत्र कार्ये [illegible] स्थानिवद्भावादित्याहुः। वस्तुतस्तु स्थानिवदादेशरत्ने
नं प्रतित्रिपादीसिद्धेत्युक्तं। तस्मादिह समाधानांतरं मृग्यमित्यन्ये। अनितेः। उपसर्गादसमासेपीत्यत उपसर्गादिति वर्तते रषाभ्यामित्यतो नो ण इति च त

उपसर्गस्थादित्यादि। अंतापवाद इति। णौ तु इत्यस्य अदादेशोऽपवादः। अस्यत्वपवादो जुसि नित्ययः। [illegible]मामेति। जक्षन् क्रीडन् रममाण इत्युपनिषदि जक्षादि त्वस्य निर्विवादत्वात्। नाभ्यस्ताच्छतुरिति निषेधेन जक्षन् इति नुमः छांदसत्वेपि जक्षादित्वस्य तु कल्पनायाः अन्याय्यत्वात्। धातुवृत्त्यादौ जक्षादिपाठच्च॥ ॐ॥ जाग्रोऽविचिण्णल्ङित्सु। अविचिण्णल्ङिद्भ्योऽन्यस्मिन्निति। जागृविः। विशब्देन क्वादिप्रत्ययो गृह्यते। इकारस्तु उच्चारणार्थ इति वदतां मते क्वसावपि न भवति। जजागृवान्। जजागृवांसौ। चिण्। अजागारि। णल्। जजागार। ङित्। जागृतः। जागृथः। वृद्धिविषये इति। ण्वुलि। जागरकः। घञि। जागरः। णिचि। जागरयति। न चैतेषु गुणे कृतेऽप्यत उपधाया इति वृद्धिः स्यात् इति वाच्यं। गुणविधेः क्ङिति चेति प्रतिषेधस्य चाऽनर्थक्यापत्तेः। जुसि च। च

जाग्रोऽविचिण्णल्ङित्सु।७।३।८५॥ जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च जजागरतुः अजागः अजागृतां अभ्यस्तत्वाज्झुस्। जुसि च।७।३।८३॥ अजादौ जुसीगन्तांगस्य गुणः स्यात् अजागरुः अजादौ किं जागृयुः आशिषि तु जागर्यात् जागर्यास्तां जागर्यासुः लुङि अजागरीत् जागृ इ स इ त् इति स्थिते यण्प्राप्तः तं सार्वधातुकगुणो बाधते तं सिचि वृद्धिः तां जागर्तिगुणः तत्र कृते हलन्तलक्षणा प्राप्ता नेटीति निषिद्धा ततोऽतो हलादेरिति बाधित्वा ॠतो ल्रान्तस्येति प्राप्ता स्यन्तेति निषिध्यते तदाहुः गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनं पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव ते इति दरिद्रा दुर्गतौ। दरिद्राति इद्दरिद्रस्य।६।४।११४॥ दरिद्रातेराकारस्य इकारः स्यात्क्ङिति सार्वधातुके दरिद्रितः॥

कारः स्वष्टप्रतिपत्त्यर्थः। क्तस्य चीत्यतोऽचीत्यनुवर्तत इत्याह। अजादाविति। जागृयुरिति। एवं शृणुयुः। चिनुयुरित्यादावपि गुणो नेति बोध्यं। यासुटो ङित्वाच्छृणुयुरित्यादौ गुणो नेति प्राचोक्तिस्तु मनोरमायां दूषिता। जुसि चेति गुणस्य निषेधापवादत्वादिति। केचित्तु जुसि चेत्यत्र उसीत्यसावर्ण्य उस्रूपे जुसीति व्याख्यानान्नोक्तदोष इत्याहुः। अजादौ जुसीति समाधानं तु भाष्यारूढं। जागर्तेः सिच इटि कृते यण्णादिप्राप्तिक्रमं दर्शयति। जागृ इस इत्यत्रेति। तत्र कृते इति हलन्तलक्षणाया वृद्धेर्जागर्तिगुणेन बाधने गुणेन हलन्तत्वसंपादनात्। या हि गुणप्रवृत्तिसमये वृद्धिः सा बाध्यतेऽनन्येति भावः। अजागरिषं। अजागरिषुः। अजागरीरित्यादि। दरिद्रा। इद्दरिद्रस्य। इद्दरिद्र इति वक्तुमुचितं॥

श्नाभ्यस्तयोः क्रीणंति। क्रीणते। पुनंति। पुनते। दधति। दधते। क्ङितिकिं। क्रीणाति। पुनाति। दधाति। आतः किं। बिभ्रति। ओ इत्येव सिद्धे इति। प्रथमस्यागेमानाभा
वादिति भावः। निर्मूलमेवेति। यत्तु व्याख्यातृभिः समर्थ्यते। आमोऽभावे आतो लोपे कृते आदंतत्वाभावादौत्वं नेति तन्न। आत औ णल इत्यत्र प्राथम्यादेका
र कर्तव्ये औकारविधानं दरिद्रातेराल्लोपेपि श्रवणार्थं सत् आमभावे लिंगमिति हरदत्तमाधवादिग्रंथैः स्वग्रंथेन च विरोधात्। ततः कथमौत्वस्याप्रवृत्तिर्भवेत्।
यदप्युक्तं। ओकारौकारयोर्द्विमात्रत्वाविशेषादौकारविधानमिति तदपि स्थवीयः तस्मिन्पक्षे आमो दुर्वारत्वप्रसंगात्। विवक्षित इति। तेन दरिद्रातीति दरिद्र
इति पचाद्यजेव भवति परसप्तम्यां तु ष्यञ्ध्येत्यादंतलक्षणो णः स्यात्। सति तु तस्मिन् आतो युक्चिण्कृतोरिति युकि दरिद्रायक इति स्यादिति भावः॥

श्नाभ्यस्तयोरातः ॥६।४।११२॥ अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके। दरिद्रति। अनेकाच्त्वादाम्। दरिद्राञ्चकार। आत औ णल इत्यत्र ओ
इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थं अत एव ज्ञापकादाम्नेत्येके। दरिद्रौ। ददरिद्रतुः इत्यादि। यत्तु णलि ददरिद्रेति त
न्निर्मूलमेव दरिद्रातेरार्द्धधातुके विवक्षिते आतो लोपो वाच्यः लुङि वा सनिण्वुलि ल्युटि च न। दरिद्रिता। अदरिद्रात्। अदरिद्रिता। अदरिद्रुः
दरिद्रियात् दरिद्र्यात्। अदरिद्रीत् इट्सकौ अदरिद्रासीत्। चकासृ दीप्तौ। हस्य अत्। चकासति। चकास्तां। चकारधि चेति सलोपः। सिचवए
वेत्येके। चकाद्धि। चकाधीत्येव भाष्यं। तिप्यनस्तेः ॥८।२।७३॥ पदान्तस्य सस्य दः स्यात् तिपि न त्वस्तेः। अचकात्। अचकाद्। अचकासुः। सिपि धातो
रुर्वा ॥८।२।७४॥ पदान्तस्य सस्य रुः स्याद्वा पक्षे दः। अचकाः। अचकात्। शासु अनुशिष्टौ। शास्ति॥ ११ सनिण्वुलीति। एतेष्वालोपो नेत्यर्थः। दिदरिद्रा
सति। दरिद्रायकः। दरिद्रायणम्। अदरिद्रुरिति सिजभ्यस्तेति झेर्जुस्। लङः शाकटायनस्यैवेत्यादंतलक्षणो विकल्पस्तु न भवति। परत्वात् श्नाभ्यस्तयोरित्यालो
पे आकारान्तत्वाभावात्। ई हल्यघोरित्यात ईत्वमिह न शंक्यमेव। झेर्जुसि हलादिपरत्वाभावादिति भावः। ननु दरिद्राझि इति स्थिते जुसः प्रागेव आल्लोपात् पर
त्वादपवादत्वाच्च ईत्वं स्यात्। मैवं। अकृतव्यूहपरिभाषया जागरूकत्वात्। ईत्वनिमित्तं हि हला[illegible]तच्च विनाशोन्मुखं जुसो भावित्वात्। हस्य अदिति। अ
दभ्यस्तादित्यनेन। तिप्यनस्तेः। पदांतस्य किं। चकास्ति। सस्येति किं। वशेर्लङि तिपि अवट्। तिपि किं। क्विपि चकाः। अनस्तेः किं। सर्वमा इदं। आः इति लङि तिपि

सि·कौ· शासइदङ्हलोः। अङि। अशिषत्। अशिषतां। किति शिष्टः शिष्टवान्। शिष्यात्। शिष्यास्तां। अङ् साहचर्यात् परस्मैपदएवेत्वं। नेह। आशास्त। अन्येतु यस्मात्शा
टि·तं· सिरङ् संभवति तस्यैवेत्वमिति व्याख्याय व्यतिशिष्टे व्यतिशिङ्क्ष्व इत्यात्मनेपदेपि इत्वं स्वीकुर्वंति। शास्ते। पूर्वसूत्रे उपधापदान्वयानुरोधेन शासइत्सवयवष

ति·अ· शासइदङ्हलोः ६।४।३४॥ शासउपधाया इत्स्यादङि हलादौ क्ङिति च शासिवसीतिषः शिष्टः शासति शा शास शाशासतुः शशासुः शिष्ट
६४ न् शिष्टा शासतु शाहौ। ६।४।३५। शास्तेः शादेशः स्याद्धौ परे तस्यामीयत्वेनासिद्धत्वाद्धेर्धिः शाधि अशात् अशिष्टां अशासुः अशाः अशा
न् शिष्यात् सति शास्ता असङ् अशिषत् अशासिष्यत् दिधीङ् दीप्तिदेवनयोः एतदादयः पंचधातवश्छान्दसाः दीधीते एरनेकाच इति यण् दी
ध्याते यीवर्णयोर्दीधीवेव्योः ७।४।५३॥ एतयोरंत्यस्य लोपः स्याद्यकारे इवर्णे च परे इति लोपं बाधित्वा नित्यत्वाद्गुणे दीध्ये दीधीवेवीटामिति गुण
निषेधः दीध्यांचक्रे दीधिता दीधिष्यते वेवीङ् वेतिना तुल्ये वीगतीत्यनेन तुल्येर्थे वर्तत इत्यर्थः अथत्रयः परस्मैपदिनः षस सस्ति स्वप्ने सस्ति स
स्तः ससंति ससास सेसतुः ससुः सधि पूर्वत्रासिद्धमिति सलोपस्यासिद्धत्वाद्धेर्हेरिति लुक् असत् असस्तां असः असत् सस्यात् असासीत् अ
ससीत् सन्ति सन्नः संस्तति वहूनां समवायेद्वयोः संयोगसंज्ञानेत्याश्रित्य स्कोरिति लोपाभावात् संस्ति संस्त इत्येके वश कान्तौ कान्तिरिच्छा।
वष्टि उष्टः उशान्ति उशातु वशिता वष्टु उश्मात् उष्टां उड्ढि अवट् औष्टां औशन् अवशं उश्याः तां उश्यास्तां चर्करीतं च यङ्लुगंतमदादौबो
ध्यं ह्नुङ् अपनयने ह्नुते ह्नुवीत ह्नोषीष्ट अन्होष्ट ॥ इत्यदादयः॥ ॥ ९९ शापिर हस्वा न षष्ठ्येव उपधाया इत्स्यानिरन्तरत्वादि
त्याह। शास्तेः शादेश इति। धिचेति सलोपेन शाधीति रूपे सिद्धेपि सलोपस्यासिद्धत्वाच्छासइदिति इत्वं स्यात्तद्वारणाय शाविधानमित्याहुः। यीवर्णयोः॥
य्योरित्युक्तेपीष्टसिद्धौ यकार इकारयोरिति स्फुटप्रतिपत्तिर्न स्यादिति वर्णग्रहणं कृतं। यिश्च इवर्णश्च यीवर्णौ तयोः। यिश्चेति इकार उच्चारणार्थो न तु वि
वक्षितलदाह। यकारे इवर्णेचेति। यिवर्णयोरिति पाठः सूचितः। लोपं बाधित्वेति। लोपस्यतु उदाहरणं। आदीध्यगतः। आवेव्यगतः। दीधिष्यते। वेविता॥

वेविष्यते। यीवर्णयोरिति किं। आदीध्यनं। आवेव्यनं। षस। असदिति। तिष्यनसोरिति दत्वं। असइति। सिपि धातोरिति रुर्वा। पदस्येदः। संतीति। इदित्वान्नुमि संस्नति
इति। स्थितेस्कोरिति सलोपे कृते हरिस वर्ण इति तकारस्य वा लोपः। संस्ति संस्त इति। इह्यापि पूर्ववत्तलोपो वा वो थ्यः। वश कान्तौ। भाषायामप्यस्य प्रयोगो दृश्यते। वष्टि।
भागुरिरल्लोपं। जयापसेनान्यमुशंति देवा इति। चर्करीतं च। गणसूत्रमिदं। चर्करीतमिति यङ्लुगंतस्य पूर्वाचार्याणां संज्ञा। अदादौ बोध्यमिति। तेन यङ्लुगं
तेभ्यः टिप्प्रभृतिभ्य इति शपो लुक् भवतीति भावः। प्राचा तु चर्करीतमिति यङ्लुगंतं परस्मैपदमित्युक्तं तच्चेहाप्रकृतत्वादुपेक्षितं। इत्यदादयः॥ ॥ हुदा
नयपि स्वत्वनिवृत्तिपूर्वकं परस्वत्वोपादानमेव दानं तथापि प्रयोगमनुसृत्य व्याचष्टे प्रक्षेप इति। वैध इति। आहवनीयादौ। हविष इति। विधिबोधितदेश

हुदानादनयोः आदाने चेत्येके प्रीणनेपीति भाष्यं दानं चेह प्रक्षेपः स चेह वैध आधारे हविषः प्रक्षेप इति स्वभावाल्लभ्यते इतश्चत्वारः परस्मैपदिनः॥
जुहोत्यादिभ्यः श्लुः।२।४।७५॥ शपः श्लुः स्यात्॥ श्लौ।६।१।१०॥ धातोर्द्वे स्तः। जुहोति। जुहुतः। अदभ्यस्तादित्यत्। हुश्नुवोरिति यण्। जुह्वति। भीह्री
भृहुवां श्लुवच्च।३।१।३९॥ एभ्यो लिटि आम्वा स्यादामि श्लाविव कार्यं च। जुहवांचकार। जुहाव। होता। होष्यति। जुहोतु। हेर्धिः। जुहुधि। आटि परत्वाद्गु
णः। जुहवानि। परत्वाज्जुसि चेति गुणः। अजुहवुः। जुहुयात्। हूयात्। अहौषीत्। ञिभी भये। बिभेति। भियोऽन्यतरस्यां।६।४।११५॥ इकारः स्याद्धलादौ
लादौ क्ङिति सार्वधातुके। बिभीतः। बिभितः। बिभ्यति। बिभयांचकार। बिभाय। भेता। ह्री लज्जायाम्। जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयांचकार। जि।

॥ह्राय पृ पालनपूरणयोः। अर्तिपिपर्त्योश्च।७।४।७७॥ अभ्यासस्येकारोऽन्तादेशः स्याच्छ्लौ॥

स्येत्यर्थः। स्वभावादिति। तेन आहवनीये पुरोडाशे प्रक्षेप्तव्ये प्रमादेन कोपेन वा पाषाणः प्रक्षिप्तः पुरोडाशो वा गर्तादौ स तु प्रक्षेपो न होम इति ज्ञेयं। परस्मैपदिन इति।
तेन होष्य इति केषांचित् प्रयोगोऽसाधुरेव। समाग्नौ जुह्वाना इत्यानन्दलहरी प्रयोगस्तु साधुरेव। शानच्च प्रवृत्तावपि चानश उक्तत्वात्। आटीति। आडुत्तमस्येत्य
नेन आपरत्वादिति। हुश्नुवोरिति यणपेक्षया परत्वादित्यर्थः। भियोन्यतरस्यां। सार्वधातुके किं। भीयते। [illegible]भीयते। हलादौ किं। बिभ्यति। क्ङिति किं। बिभेति। केचित्
तु हलादौ क्ङितीत्येतन्नानीयते। इत्वविधानस्य बिभितः इत्यादौ चरितार्थत्वात्। बिभ्यति बिभेनीत्यादौ यणादेः प्रवृत्तिसंभवादित्याहुः। अर्तिपिपर्त्योश्च।
अर्तेरुदाहरणमियर्तीति वक्ष्यति॥

सि·कौ· उदोष्ठ्या। अंगावयवेति किं। ऋपृणो कादिस्तस्मात् क्तप्रत्यये ष्वुकः। किं नीति इण्निषेधात् समीलिरिति भवत्वा। अन्यथा तु सभूर्ण इति स्यात्। शॄ दॄ प्रां शॄ हिंसायां दॄ विप
टी·त· दारणे। इमौ क्र्यादौ। पक्षे गुण इति। ऋच्छत्यॄतामित्यनेन। पप्रतुरिति। ह्रस्वपक्षे यण्। ननु ह्रस्वग्रहणं ... हमास्तु गुणे न वृत्यान तस्यैव विकल्पयोस्तु। तथा च यण
ति·उ· देशेन पप्रतुः। शश्रतुरित्यादि सिध्यत्येव। गुणपक्षे तु पपरतुः शशरतुरित्याद्यपि सिध्यतीति चेत्। मैवं। गुणाभावपक्षे ऋत इद्धातोरिति इत्वप्रसंगात्। नवा
६५ तरंगत्वाद्यणेव स्यात् इति वाच्यं। वार्णादांगस्य बलीयस्त्वात्। उ भृञ् इति। ङितः किंः। भृ त्रिमां। भृञामित्। निजां त्रयाणामित्यतोऽनुवर्तनादाह। एषां त्रयाणामि

उदोष्ठ्यपूर्वस्य। ७।१।१०२॥ अंगावयवौष्ठ्यपूर्वो यऋदन्तस्यांगस्योत्स्यात्। गुणवृद्धी परत्वादिमं बाधेते पिपर्ति। उत्वं रपरत्वं हलि चेति दीर्घः पि
पूर्तः। पिपुरति पपार। किति लिटि ऋच्छत्यॄतामिति गुणे प्राप्ते शॄदॄप्रां ह्रस्वो वा। ७।४।१२॥ एषां किति लिटि ह्रस्वो वा स्यात्। पक्षे गुणः। पप्रतुः प
प्रुः पपरतुः। परिता परीता अपिपः अपिपूर्तां अपिपरुः पिपूर्यात् पूर्यात् अपारीत् अपारिष्टां ह्रस्वान्तोऽयमिति केचित्। पिपर्ति पिपृतः पिप्र
ति पिपृयात्। आशिषि प्रियात् अपार्षीत् पाणिनीयमते तु तरादर्सी पिपृतमित्यादौ छान्दसत्वं शरणं डुभृञ् धारणपोषणयोः भृञामित्। ७।४।७६
भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्येत् स्यात् श्लौ। बिभर्ति बिभृतः बिभ्रति बिभृषे श्लुवद्भावाद्विर्वे बिभरामास बभार बभर्थ बभृव बिभृहि बिभराणि
अबिभः अबिभृतां अबिभरुः बिभृयात् भ्रियात् भृषीष्ट अभार्षीत् अभृत माङ् माने शब्दे च ई हल्यघोः। ६।४।११३॥ श्नाभ्यस्तयोरात ईत्स्यात् सार्व
धातुके किङिति हलि न तु घोः। मिमीते। श्नाभ्यस्तयोरित्यालोपः। मिमाते मिमते ममे माता ओहाङ् गतौ जिहीते जिहाते जिहते जहे हाता हास्यते ओहा।
ति। केचित्तु कपिंजलाधिकरणन्यायेन त्रयाणामिति लभ्यत इत्याहुः। त्रयाणां किं। जहाति। श्लौ किं। बभार। ई हल्यघोः। ९९ कृन्यागे परस्मैपदी जहाति
श्नाभ्यस्तयोरिति। लुनीते पुनीते। किङितीति किं। लुनाति। अघोः किं। दत्तः। मिमीते इति। घुमास्थेति ईत्वमिह न प्रवर्तते न त्रार्द्धधातुक इत्यनुवृत्तेः। अन्यथा
मातः माथः। माते। मासे इत्यादावतिप्रसंगात्। अतएव काशिकायामुक्तं मार्द्धधातुक इत्यधिकारान्नस्यापीति योगं ... वरिति॥ ॥ ः॰ः ॥ ॥ ९॥

जहातेश्च । क्ङितीति किं । जहाति । सार्वधातुके किं । हीयते । घ्वादीदीताविति । अत एव भट्टिः प्रायुंक्त । जहिहि जहीहि जहाहि रामभार्यामिति । लोपो यि । सार्वेति किं । हे
जहातेश्च ६।४।११६ ॥ इत्स्याद्वा हलादौ क्ङिति सार्वधातुके पक्षे ईत्वं जहितः जहीतः जहति जहौ जहातु जहितात् जहीतात् आ च हौ ६।४।११७ ॥ जहातेर्हौ प
र आत्स्याच्चादितीतौ जहाहि जहिहि जहीहि अजहात् अजहुः लोपो यि ६।४।११८ ॥ जहातेरातो लोपः स्याद्यादौ सार्वधातुके जह्यात् एर्लिङि हेयात्
अहासीत् डुदाञ् दाने प्रणिददाति दत्तः ददति दत्ते ददौ घ्वसोरित्येत्वाभ्यासलोपौ देहि अददात् अदत्तां अददुः दद्यात् देयात् अदात् अदातां
अदुः अदित डुधाञ् धारणपोषणयोः दानेप्येके प्रणिदधाति दधस्तथोश्च ८।२।३८ ॥ द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः
वचनसामर्थ्यादालोपो न स्थानिवदिति व्यमनमाधवौ वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवत् धत्तः दधति धत्थः धत्थः दध्वः धत्ते धत्से धध्वे धेहि अधित
अथ त्रयः स्वरितेतः णिजिर् शौचपोषणयोः णिजां त्रयाणां गुणः श्लौ ७।४।७५ ॥ णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ नेनेक्ति नेनिक्तः ने
निजति नेक्षि नेक्ष्यति नेनेक्तु नेनिग्धि नाभ्यस्तस्याचि पिति सार्वधातुके ७।३।८७ ॥ लघूपधगुणो न स्यात् नेनिजानि ऐ अनेनेक् अनेनिक्तां
अनेनिजुः नेनिज्यात् निज्यात् अनिजत् अनैक्षीत् विजिर् पृथग्भावे वेवेक्ति वेविक्ते वेविजिथ अत्र विज इडिति ङित्वं न ओविजी इत्यस्यैव तत्र
ग्रहणात् णिजिविजीः इत्यादावपि विष्लृ व्याप्तौ वेवेष्टि वेविष्टे लृदित्वादङ् अविषत् तङि क्सः अजादौ क्सस्याचीति लोपः अविक्षत अविक्षा
तां अविक्षन्त अथार्धगणान्ताः परस्मैपदिनश्छान्दसाश्च घृ क्षरणदीप्त्योः जिघर्म्यग्निं हविषा घृतेन भृत्रामित् वहुलं छन्दसीतीत्वं हृ प्रसह्य
करणे अयं स्तुवो अभिजिहर्ति हो मातः ऋ सृ गतौ वहुलं छन्दसीत्येव सिद्धे अर्तिपिपर्त्योश्चेतीत्वविधानाद्भाषायामपि अभ्यासस्यासवर्ण
इतीयङ् इयर्ति इयृतः इयृति आर आरतुः ऋद्धनोः स्ये इति नित्यमिट् आरिथ अर्ता अरिष्यति इयर्तु ऐयः ऐयृतां ऐयरुः इयृयात् ।
यात् । प्रणिरदातीति । नेर्गदेति णत्वं । दन्तइति । श्नाभ्यस्तयोरित्यालोपः घ्वसोरित्युक्तत्वात् ईत्वं तु न । अदादिति । गातिस्थेति सिचो लुक् । दधस्तथोश्च । दधइति कृत

सि·कौ· द्विर्वचनाभ्यासकार्ये धात्वेव गृह्यते न तु दधाः इत्यय मिति व्याचष्टे। द्विरुक्तस्येति। झषंतस्य किं। दधाति। नन्वेवं धुन इत्यादावपि न स्यादाल्लोपस्य स्थानिव
टी·त· त्वेनाझषंतत्वादत आह। वचनसामर्थ्यादिति। निजां। इत्लाविति किं। निनेजानाभ्यस्तस्य। अभ्यस्त इति किं। हुषाणि। अचि किं। देहुष्टि। पिद्वहणमुत्तरार्थं इ हिलु
ति·उ· किहलीत्युत्तरार्थं। सार्वेति किं। निनेजा। बहुलं छंदसीतीत्वमिति। एतच्चपूर्वेणान्वयी। इयर्तीति अभ्यासस्य इयङ्। अभ्यासादुत्तरस्य तु गुणः इय्रतीति
६६ ति। अरभ्यस्तादित्यत्॥ ःॐः ॥ अर्यादिति। मुलोर्तीति गुणः। आरदिति। सर्ति शास्त्योर्ति भ्यो ङिः ऋदृशोऽङि गुणः वध्व इति। लसस्तकारस्य फषस्त
अर्थात् आरत् ससर्ति भसभर्त्सनदीप्त्योः बभस्ति घसिभसोर्हलीत्युपधालोपः झलोझलीति सलोपः बब्धः भप्स्यति कि ज्ञाने चिकेति तुर त्वरणे
तुतोर्ति तुतूर्तः तुतुरति धिषशब्दे दिधेष्टि दिधिष्टः धनधान्ये दधन्ति दधन्तः दधनति। जनजनने जजन्ति जनसनखनां सञ्झलोः दा
। था कृशः रूपा मा का रोन्तादेशः स्या स्सलादौ सनि झलादौ क्ङिति च जजातः जज्ञति जजंसि जजान जजन्यात् जजायात् जन्यात् आ यात्
गा स्तुतौ देवाञ्जिगाति सुम्नयुः जिगीतः जिगति॥ इति जुहोत्यादयः॥ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्न
कान्ति गतिषु त्रयोदश परस्मैपदिनः दिवादिभ्यः श्यन्। ३। १। ६९॥ शपोपवादः हलि चेति दीर्घः दीव्यति दिदेव देविता देविष्य
ति दीव्यतु अदीव्यत् दीव्येत् दीव्यात् अदेवीत् अदेविष्यत् षिवु तन्तुसन्ताने परिषीव्यति परिषिषेव न्यषेवीत् न्यसेवीत् स्रिवु गति
शोषणयोः ष्ठिवु निरसने केचिदिह मन्नपठंति ष्णसु अदने आदाने त्येके अदर्शन इत्यपरे स्नस्यति सुष्णोस ष्णसु निरसने स्नस्यति स
स्नास क्नसु ह्वरणदीप्त्योः ह्वरणं कौटिल्यं चक्नास व्युष दाहे वुव्योष प्लुष च॥ ॥ ९९ थोरिति घत्वानुनृत्तइति। हलि चेति दीर्घः। धनधा
न्ये धान्यार्जनमित्यर्थः। दधंत इति। छांदसत्वादननुनासिकस्येति नेह दीर्घ इत्याहुः। जनसनखनां। जनजनने। जनी प्रादुर्भावे। इत्युभयोरपि ग्रहणं। झलादौ स
नि क्ङिति चासति। जज्ञतीति। गमहनेत्युपधालोपः। जजायादिति। येविभाषेति वा आत्वं। एवं जायादित्यत्रापि। जिगातीति। बहुलं छंदसीति इत्वं॥ इति जुहोत्या
दिः॥ दिवु क्रीडा। उदित् करणं क्त्वायामिड्विकल्पार्थं निष्ठायामनिडर्थं च। देवित्वा। द्यूत्वा। द्यूतं। क्रीडायां दीव्यति माणवकाः विजिगीषायां शत्रुं दीव्यति

विजिगीषते इत्यर्थः। कांतिरिच्छा। द्युतेः पृथक्ग्रहणं ताच्छील्ये वा परिषिषेवेति। स्थादिष्वेवाभ्यासस्येति नियमो नेह प्रवर्त्तते तत्र प्राक्सितादित्यनुवृत्तेः। अस्य चाप्रकृतित्वात्। तेनाभ्यासस्य षत्वं परिनिविभ्य इत्यनेन भवत्येव। न्यषेवीदिति सिवादीनां वेति विकल्पः॥ ॥ नृती। ईदित्करणं श्वीदित इति निष्ठायामिण्निषेधार्थं। यद्यपि मेसिसीवीति इटो विकल्पितत्वाद्यस्य विभाषेत्यनेनैवेट् सिध्यति तथापि यस्य विभाषेत्यस्य अनित्यत्वज्ञापनार्थमीदित्करणं तेन धावितमिभरणधियेत्यादि सिद्धं। सेऽसिचि। नर्तिष्यति। नर्त्स्यतीति। निनर्तिषति। निनृत्सति। कर्तिष्यति। कर्त्स्यति। चिकर्तिषति। चिकृत्सति। इत्यादि ज्ञेयं। अनर्तीदिति। श्वसिचीत्युक्तत्वादिह नित्यमिट्। त्रेसतुरिति। वा जृभ्रमुत्रसामित्येत्वाभ्यासलोपौ। कुथ। पूतीभावः पवित्रभवनं। कुथ्यति। भूमिः। पवित्री भवतीत्यर्थः। पुष्यविकसने

नृती गात्रविक्षेपे नृत्यति ननर्त्त से सिचि कृतचृतछृदतृदनृतः। ७।२।५७। एभ्यः परस्यासिचो सिच इट् वा स्यात्। नर्तिष्यति नर्त्स्यति नृत्येत् नृत्यात् अनर्तीत् त्रसी उद्वेगे वा भ्राशेति श्यन्वा त्रस्यति त्रसति त्रेसतुः तत्रसतुः कुथ पूतीभावे पूतीभावो दौर्गन्ध्यं पुथ हिंसायां गुध परिवेष्टने क्षिप प्रेरणे क्षिप्यति क्षेप्ता पुष्प विकसने पुष्यति पुपुष्प तिम ष्टिम ष्टीम आर्द्रीभावे तिम्यति स्तिम्यति स्तीम्यति व्रीड चोदने लज्जायां च व्रीड्यति इष गतौ इष्यति षह षुह चक्यर्थे चक्यर्थस्तृप्तिः सह्यति सुह्यति जॄष झॄष वयोहानौ जीर्यति जजरतुः जेरतुः जरिता जरीता जीर्यात् जॄस्तम्भुच्रुच्लुचुग्लुचुग्लुञ्चुश्विभ्यश्च। ३।१।५८। अङ् वा। ऋदृशोऽङि गुणः अजरत् अजारीत् अजारिष्टां झीर्यति जझरतुः अझारीत्॥ ॥

कालात्साधुपुष्प्यत्पच्यमानेष्विति सूत्रे पुष्प्यदिति शत्रंतः। पचाद्यच् वि पुष्पं। संज्ञायां कन्। पुष्पकं। व्रीड इगुपधज्ञाप्रीकिरः कः इत्यस्मात् प्रत्यये टाप्। व्रीडा। घञि तु व्रीडः। अत एव व्रीडमावहति मे स संप्रतीति कालिदासः। व्रीडादिर्वाभ्यासगतैर्विलिल्ये इति माघश्च। षह षुह। परिनिविभ्य इत्यत्र सहेः सकार उच्चारणार्थ इति षत्वमिह भवति। परिषह्यति। नीषसहेती इविकल्पस्तु नास्य भवति सहेति शपा निर्देशात्। किं तु षह मर्षणे इत्यस्यैव सह इत्यात्रेपादयः। सहेति निर्देशस्योभयत्र तुल्यत्वेनीषसहेत्यत्र शपा निर्देशः। परिनिविभ्य इत्यत्र तु नेत्यर्थः। जरतीयमिदं हेयमेवातत्त्वं तु प्रयोगमनुसृत्य महद्भिरेव निर्द्धार्यं। नपुंसके भावे क्तः। सुहितं तृप्तिरेव पूरणगुणेति सूत्रे सुहितार्थास्तृप्त्यर्था इति व्याख्यातं। जेरतुरिति। ॠच्छत्यॄतामिति गुणे कृते भ्रासदेति गुणशब्देन भावितस्य निषेधादेत्वं एकह

सि·कौ· षूङ्। प्रसवः। उत्पत्तिः। मृत्पिंडो घटं सूयत इत्यादिप्रयोगाभावात् प्राणीत्युक्तं। स्वादय ओदित इति प्रस्यमाणत्वात् ओदितश्चेति निष्ठातस्य नत्वं प्रसूनं। वि
टी·त· कल्पमिति। परमपीति शेषः। निषेधे प्राप्त इति। पुरस्तात् प्रतिषेधकांडारंभसामर्थ्यादि तिभावः। दीङो। पंचमीत्यभिप्रायेण व्याचष्टे। परस्येति। ङः सीत्यत्रे
ति·उ· व उभयनिर्देशे पंचमीनिर्देशो बलीयानिति सप्तम्याः षष्ठी कल्पनं। अचिकिं। दिदीयते। क्ङितीति किं। उपदानं। आभीयत्वेनासिद्धत्वमाशंक्याह। वुग्युटावि
६७ ति। दिदीये इति। परमपि यणं बाधित्वा नित्यत्वादादौ युट्। सतितु यणि ईकारस्य श्रवणं न स्यादिति युटः सिद्धत्वमुक्तं। मीनाति। मीञ् हिंसायां। डुमिञ् प्र
क्षेपणे। प्रमाय। उपदाय। प्रमातव्यं। उपदातव्यं। एज्निमित्त इति विषयसप्तमी। तेन आदावात्वं पश्चात् घञ्। आतो युगिति युक्। उपदाय इति सिध्यति।

षूङ् प्राणिप्रसवे सूयते सुषुवे स्वरति सूतीति विकल्पं बाधित्वा श्र्युकः कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् सुषुविषे सुषुविवहे सो
ता सविता दूङ् परितापे दूयते दीङ् क्षये दीयते दीङो युडचि क्ङिति। ६।४।६३। दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् वुग्युटावु
वङ्यणोः सिद्धौ वक्तव्यौ दिदीये मीनाति मिनोति दीङां ल्यपि च। ६।१।५०। एषामात्वं स्याल्ल्यपि चकारादशित्येज्निमित्ते दाता दास्यते अदास्त अदा
स्थाः डीङ् विहायसा गतौ डीयते धीङ् आधारे धीयते दिध्ये धेता मीङ् हिंसायां हिंसाऽत्र प्राणवियोगः मीयते रीङ् श्रवणे रीयते लीङ् श्लेष
णे विभाषा लीयतेः। ६।१।५१। लीलयोरिति यका निर्देशो न तु श्यना लीलीङोरात्वं वा स्यादेज्विषये ल्यपि च लेता लाता लेष्यते लास्यते एज्विषये
किं लीयते लिल्ये अन्यथा एरचिकृतेनतत आत्वे उपदाः इति स्यात्॥ अदास्तेति। दीङः प्रतिषेधः स्थाघ्वोरिच्चेति न घुत्वमित्यदित्तेति रूपं न भवतीत्ये

के। अन्ये तु स्थाघ्वोरिच्चेत्येतत्तु न भवति दीङो नुकरणे दारूपासंभवेन अघुत्वात्। अतएव प्रनिदातेत्यादौ नेर्गदेति णत्वमपि न भवतीत्याहुः। अयं भावः। दो अ
वखंडने इत्यादेर्दारूपत्वं संभवति। आदेच उपदेश इत्यस्य अनैमित्तिकत्वात्। दीङस्तु एज्निमित्तप्रत्ययविषये आत्वं दा इत्यनुकरणे एज्निमित्तस्याभावि
त्वान्न घुत्वं। एवं च घुप्रकृतित्वमपि नास्तीति णत्वस्याप्रसक्तिरिति। डीङ्। डीनः। डीनवान्। स्वादिषु पाठसामर्थ्यान्निष्ठायामिण्न। इटि हि सति व्यवधानादोदि
तश्चेति नत्वं न स्यादिति। स्वादिषु पाठसामर्थ्यात् इड्व्यवधानेपि णत्वमस्त्विति न शंक्यमिष्टानुरोधात्। डयित इति प्रयोगस्तु भौवादिकस्यानिष्ठा शी

ङित्त्वं निष्ठेति योगविभागादकित्त्वे गुण इत्याहुः। मीङ् हिंसायां। मीञ् इति क्र्यादौ। प्राणवियोग इति। मीयते प्राणैर्वियुज्यत इत्यर्थः। लीङ्। लीङ् श्लेषण इति क्र्यादौ। यके ति। सार्वधातुके यगिति विहितेन। न तु श्यनेति। अन्यथा लीङ् इत्येव ब्रूयात् इति भावः। यकारनिर्देशस्य फलमाह। लीलीङोरिति। ल्यपि। विलाय। विलीय ॥ ॥ व्रीङ् वृणोत्यर्थे वरणं। वृञ् वरण इति स्वादौ पठिष्यमाणत्वात्। वरण इति वक्तव्ये वृणोत्यर्थ इति वचनं वैचित्र्यार्थं। व्रीवरण इति क्र्यादौ। माङ्मायत इति। घुमास्थेतीत्वं तु न। तत्रार्द्धधातुक इत्यधिकारात्। षो अंते। अंतकर्मनाशने। राघवस्य शरैर्बाणैर्घोरं रावणमाहवे इति। राघवेति संबुध्यंतं। स्यं

व्रीङ् वृणोत्यर्थे व्रीयते विव्रिये स्वादय ओदितः तस्य लं तु निष्ठायान्नत्वं पीङ् पाने पीयते माङ् माने मायते ममे ईङ् गतौ ईयते अयां चक्रे प्रीङ् प्रीतौ सकर्मकः प्रीयते पिप्रिये अथ परस्मैपदिनश्चत्वारः शो तनूकरणे ओतः श्यनि ।७।३।७१। लोपः स्याच्छ्यनि शशौ शाता शास्यति विभाषा घ्राधेडिति सिचो वा लुक् लुगभावे यमरमेतीट्सकौ अशात् अशासीत् छो छेदने छ्यति षोन्तकर्मणि। स्यति ससौ अभिष्यति अभ्यष्यत् अभिससौ दो अवखंडने द्यति ददौ देयात् अदात् अथात्मनेपदिनः पंचदश जनी प्रादुर्भावे ज्ञाजनोर्जा ।७।३।७९। अनयोर्जादेशः स्याच्छिति जायते जज्ञे जनिता जनिष्यते दीपजनेति वा चिण् जनिवध्योश्च ।७।३।३५। अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च अजनि अजनिष्ट॥

॥ ९८. त्रिलोण् मध्यमैकवचनं। अभिष्यतीति। उपसर्गात्सुनोतीति षत्वं। अभ्यष्यदिति। प्राक् सितादड्व्यवायेपीति षत्वं। अभिससाविति। स्थादिष्विति नियमान्न षत्वं। दो अवखंडने। अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः। खंडनेत्येनावन्तु क्तेपि रूपसिद्धेः। प्रणिदातेति। नेर्गदेति णत्वं। देयादिति। एर्लिङि इत्येत्वं। अदादिति। गातिस्थेति सिचो लुक्। ज्ञाजनोर्जा। जानाति। श्यति किं। ज्ञाता। ज इति ह्रस्वोच्चारणं व्यर्थं। दीर्घो यत्रीति दीर्घसिद्धे जाग्रहणं गणकृतपरिभाषा ज्ञापनार्थं॥ तेन पा धातोः पिबादेशे कृते गुणो न भवति। पिबादेशस्यादन्तत्वाश्रयणं तु पायां नरमित्याहुः। ञ्णितीति ञ्णिति कृति चेति। ञितीत्युदाहरणं घञि जनः। णिति कृति तु जनकः। जनयतीत्यत्र उपधावृद्धेः सत्त्वात् जनीजॄषितीति मित्त्वान्मितां ह्रस्व इति ह्रस्वः ॥ ॥

सि॰कौ॰ दीपीदीप्तौ। ईदित्वान्निष्ठायामिण्न दीप्तः। एवंपूरिप्यादेरीदित्वान्पूर्णइत्यादि ज्ञेयं। केचित्विति। तेषांमते ऐश्वर्येतप्यते इत्येवप्रयोगोन तु तपतीति। न्यविक्षतेति।

दी॰त॰ दीपीदीप्तौ दीप्यते दिदीपे अदीपि अदीपिष्ट पूरी आप्याने पूर्यते अपूरि अपूरिष्ट तूरीगतित्वरणहिंसयोः तूर्यते तुतूरे धूरीगूरीहिंसागत्योः

वि॰उ॰ धूर्य्यते दुधूरे गूर्य्यते जुगूरे घूरीजूरीहिंसावयोहान्योः शूरीहिंसास्तंभनयोः चूरीदाहे तपऐश्वर्ये वा अयन्धातुरैश्वर्ये वा तङ् श्यनौ लभते अन्य

६८ दानुशासिके इत्यपरस्मैपदी सथे केचित्तु वाग्रहणं वृतुधातोराघवयवमिच्छन्ति तेप्यते तेपे तप्ता तप्स्यते पतेति व्यत्यासेन पाठान्तरं ख्रु ना-

घामानिपुनः पत्यमानः वृतुवरणे वृत्यते पक्षान्तरे वावृत्सते ततो वावृत्यमानासाराम शालांन्यविक्षतेति भट्टिः क्लिश उपतापे क्लिश्यते क्लेशिता

काशृदीप्तौ काश्यते वाशृशब्दे वाश्यते ववाशे अथयंचस्वरितेतः मृषतितिक्षायां मृष्यति मृष्यते ममर्ष ममृषे ईशुचिर्पूतीभावे पूतीभावः क्ले

दः शुच्यति शुच्यते शुशोच शुशुचे अशोचीत् अशोचिष्ट णहबंधने नह्यति नह्यते ननाह नेहिथ नेहे नद्धा नत्स्यति अनात्सी

त् रंजरागे रंजति रंजते शपआक्रोशे शप्यति शप्यते अथैकादशानुदात्तेतः पद्गतौ पद्यते पेदे पत्ता पद्येत पत्सीष्ट चिण्ते पदः। आपदं

पद् ष्ठेश्चिण्स्यात्तशब्दे परे प्रत्ययादि अपत्साता अपत्सत खिददैन्ये खिद्यते चिखिदे खेत्ता अखित्त विदसत्तायां विद्यते वेत्ता बुध अवगमने

बुध्यते बुबुधे बोद्धा भोत्स्यते भुत्सीष्ट अबोधि अबुद्ध अभुत्साता युधसंप्रहारे युध्यते युयुधे योद्धा अयुद्ध कथंयुध्यतीति युधमिच्छतीति क्य

च् अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमिति वा अनोरुधकामे अनुरुध्यते अणप्राणने अण्यते आणे अणिता अने जि इत्यन्ये नायमित्यन्ये के

मनज्ञाने मन्यते मेने मन्ता युजसमाधौ समाधिश्चित्तवृत्तिनिरोधः अकर्मकः युज्यते योक्ता सृजविसर्गे अकर्मकः संसृज्यते सरसिजैरहल्लंशुभिन्नैः

ससृजिषे स्रष्टा स्रक्ष्यते लिङ्सिचावितिकित्वान्नगुणो नाप्यम सृक्षीष्ट असृष्ट असृक्षातां लिशअल्पीभावे लिश्यते लेष्टा लेक्ष्यते लिक्षीष्ट

निर्धूर्वौ दिशातेर्लुङि शलइगुपधेति क्सः। नेर्विश इति तङ्। वाशृशब्दे। मंदिवाशीत्युरचा। वाश्रा रात्रिः। तितिक्षायामिति। गुपूतिजकिद्भ्य इति सन्। तत्रैहि

तेऽजः समायामित्युक्तं। ईशुचिर्। इदित्वान्नेट् शुक्तं। क्लिन्नमित्यर्थः। ननद्धेति। नहो ध इति धत्वं। चिण्ते पदः। नशब्द इति। सामर्थ्यादात्मनेपदप्रथमपुरुषैकवचनं
तशब्दे किं। अपत्स्याः। प्रत्यपादीति। चिणो लुगिति तशब्दस्य लुक्। नेर्गदेति णत्वं। अबोधीति। दीपजनबुधेति चिण्। अनोरुधकामे। अनोः परो रुधधातुः कामे
कामे इच्छायां दिवादिषु पाठसामर्थ्यात् दुधादिभ्य इति श्नमं बाधित्वा श्यन्। नाप्यमिति। सृजिदृशोर्झल्यमकितीत्यकित्येव विधानात्। लिश आतपादिर्वा अन
ल्पस्य अल्पभावः। अल्पीभावः। लिक्षीष्टेति। लिङ्सिचावात्मनेपदेष्विति कित्वान्न गुणः। अलिक्षतेति। शल इगुपधेति क्सः॥ ❁ ॥ राधोऽकर्मकात् भिन्न

राधोऽकर्मकाद्वृद्धावेव एवकारो भिन्नक्रमः। राधोऽकर्मकादेव श्यन्। उदाहरणमाह वृद्धाविति। यन्मत्यमपराध्यति दुःखतीत्यर्थः। विराध्यन्तं स
मेतकः दुःखनमित्यर्थः। राध्यत्योदनः सिध्यतीत्यर्थः। कृष्णाय राध्यति दैवं पर्यालोचयतीत्यर्थः। दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वं
रराध रराधतुः रराधिथ। राधो हिंसायामित्येत्वाभ्यासलोपौ। विहन हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात्। राद्धा रात्स्यति। अयं स्वादि
श्चुरादिश्च। व्यध ताडने। ग्रहिज्येति संप्रसारणं। विध्यति। विव्याध। विविधतुः। विव्यद्ध। विव्यधिथ। व्यद्धा। व्यत्स्यति। विध्येत्। अव्यात्सीत्। पुष पुष्टौ।
पुष्यति। पुपोष। पुपोषिथ। पोष्टा। पोक्ष्यति। पुषादित्वादङ्। अपुषत्। शुष शोषणे। अशुषत्। तुष प्रीतौ। दुष वैकृत्ये। श्लिष आलिङ्गने। श्लिष्य
ति। शिश्लेष। श्लेष्टा। श्लेक्ष्यति॥ ॥ मं दर्शयति। अकर्मकादेवेति। राधो वृद्धावेव श्यनिति व्याख्यायामकर्मकादिति विशेषणं व्यर्थं स्यात् वृद्धा

वस्याकर्मकत्वात्। अकर्मकात् किं। शत्रुमपराध्नोति। हिनस्तीत्यर्थः। राधसंसिद्धावितिस्वादौ। राधो हिंसायामित्यनुवादात् हिंसायामपि अयम्। उदाहरण
मा हेति। अकर्मकत्वप्रयोजकस्य चिदर्थस्य इति भावः। अकर्मके श्यन्नेनस्य प्रयोगान् दर्शयति प्रियकर्त्यमित्यादिना। कृष्णायेति। राधीक्ष्योरिति चतुर्थी। अपु
षदिति। ङित्वात् गुणाभावः। शुष। शोषणे। शोक्ष्यति। श्लिष आलिङ्गन इति सूत्रं योगविभागेन व्याचष्टे॥ ॥

सि·कौ· श्लिष इति। अनिट इग्लुपधः क्स इति। एतच्च क्सः सिच् शल इगुपधादित्यतोऽनुवर्तत इति भावः। अनिटः किं। श्लिषु दाह इति भौवादिकस्य सेटो मा भूत्। अन्यथा श
टी·त· ल इगुपधेति सिद्धे पुनः क्सविधेः फलमाह। पुषाद्यङ इति। सामर्थ्यादिति। यदि हि श्लिष इति धातुमात्रं क्सो नियम्येत तर्हि योगविभागो व्यर्थः स्यादिति भावः। शल इ
नि·अ· गुपधादित्यस्यापीति। तेन कर्मण्याङ्प्रभृतिष्वनालिङ्गने च्लिजेव भवति न तु क्सः। समाश्लिक्षत जतुनि काष्ठे इति। क्स प्रत्यये सति तु समाश्लिक्षतेति स्यादिति भ

६८ श्लिषः ३।१।४६॥ अस्मात्परस्यानिटश्च्लेः क्सः स्यात्। पुषाद्यङोऽपवादो न तु च्लिणः पुरस्तादपवादन्यायात्। आलिङ्गने ३।१।४६॥ श्लिषश्च्लेरा
लिङ्गन एव क्सो नान्यत्र। योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं नियमः। अश्लिक्षत् कन्यां देवदत्तः। आलिङ्गन एवेति किं। समश्लि
षज्जतु काष्ठं। अङ्। न्यासनाविह श्लिषिः कर्मण्यनालिङ्गने सिजेव न तु क्सः। एकवचने च्लिण। अश्लेषि अश्लिक्षातां अश्लिक्षत अश्लिक्षथाः अश्लिड्ढ्वं
क विभाषितो मर्षणे विभाषित इत्युभयपदी स्वर्थः। शक्यति शक्यते हरिं द्रष्टुं भक्तः। शशाक शेकिथ शशक्थ शेके शक्ता शक्ष्यति शक्ष्यते अशकत्
त् अशक्त सेडयमित्येके तन्मते नानिट्कारिकासु लृदित्पाठः। शकिता शकिष्यति। ष्विदा गात्रप्रक्षरणे घर्मस्रुतावित्यर्थः अयं ञीदिति न्यास
कारादयः। नेति हरदत्तादयः। स्विद्यति सिष्वेद सिष्वेदिथ स्वेत्ता अस्विदत्। क्रुध क्रोधे क्रोद्धा क्रोत्स्यति। क्षुध बुभुक्षायां क्षोद्धा। क्षुधित इति साम्य
हादिकि वनान्नारकादित्वादिति जितिमाधवः। वसु स्तम्भे वसति घोरितीड्स्यते शुध शौचे शुध्यति शुशोध शोद्धा। षिधु संराद्धौ ऊदित्पा
ठः प्रामादिकः। सिध्यति सेद्धा सेत्स्यति असिधत्। रध हिंसासंराध्योः। रध्यति रधिजभोरचीति नुम्। ररन्ध ररन्धतुः॥ ॥

का। प्रत्यासत्तावेति। आलिङ्गनं हि प्राणिकर्तृकं न तु काष्ठादिकर्तृकमिति भावः। श्लिषश्च्लेरालिङ्गन एव क्स इति व्याख्यानफलं दर्शयति। कर्मणीत्यादिना। अश्लि
क्षातामित्यादौ यद्यपि क्ससिचोर्विशेषो नास्ति क्सस्याचीत्यकारलोपात्तथापि थासादावस्त्येव विशेष इति ध्वनयन्नुदाहरति। अश्लिक्षाः। अश्लिड्ढ्वमिति। न्यास
कारादय इति। तथा च तन्मते ञीतः क्त इति वर्तमाने क्तो भवति। आदित्वान्निष्ठायां नेट्। स्विन्नः। विभाषाभावादिकर्मणोः। स्विन्नः। स्वेदितमित्यादि। षिधु। संराद्धि
र्निष्पत्तिः। उदितो वेति क्त्वायामिड्विकल्पः। इट्पक्षे रलो व्युपधादिति वा कित्त्वं। सिधित्वा सेधित्वा। सिद्ध्वा। प्रामादिक इति। ऊदित्वे त्वनुदात्तेषु सिध्यतेः पाठाप्रा

रधादिभ्यश्चास्वरतिसूत्रीत्यतो वेत्यनुवर्तते। योगविभागो वैचित्र्यार्थः। गणनिर्देशाद् यङ्लुकि रारधितेत्येव न तु रारद्धेति। नेट्यलिटि। रधेरिति किं। रंधकः। अलिटीति

रधादिभ्यश्च ७।२।४५। एभ्यो वलाद्यार्धधातुकस्येड्वा स्यात्। ररन्धिथ ररद्ध ररन्धिव ररध्व नेट्यलिटि रधेः ७।१।६२। इटि लिड्वर्जे रधेर्नुम् न स्यात्। रधिता। रधिष्यति रत्स्यति आङि नुम् अनिदितामिति नलोपः अरधत् णश अदर्शने नश्यति ननाश नेशतुः नेशिथ मस्जिनशोर्झलि ७।१।६०। नुम् स्यात् ननंष्ठ नेशिव नेश्व नेशिम नशिता नंष्टा नशिष्यति नंक्ष्यति नश्येत् नश्यात् अनशत् प्रणश्यति नशेः षान्तस्य ८।४।३६। णत्वं न स्यात् प्रनंष्टा अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थं प्रनंक्ष्यति तृप प्रीणने प्रीणनं तृप्तिस्तर्पणं च नाग्निस्तृप्यति काष्ठानां पितॄनतार्प्सीदिति भट्टिः तुभयत्र दर्शनात् ततर्पिथ ततर्प्थ ततृप्व तर्पिता तर्प्ता त्रप्ता स्पृशमृशकृषेति सिज्वा अतर्प्सीत् अत्राप्सीत् अतृपत् दृप हर्षमोहनयोः मोहनं गर्वः दृप्यतीत्यादि रधादित्वादिमौ वेड्वावमर्षमनुदात्तानां द्रुह जिघांसायां वा द्रुहेति वा घः पक्षे ढः दुद्रोग्ध दुद्रोढ दुद्रोहिथ द्रोहिता द्रोग्धा द्रोढा द्रोहिष्यति ध्रोक्ष्यति ढत्वघत्वयोस्तुल्यं रूपं अद्रुहत् मुह वैचित्त्ये वैचित्त्यमविवेकः मुह्यति मुमोहिथ मुमोग्ध मुमोढ मोग्धा मोढा मोहिता मोहिष्यति मोक्ष्यति अमुहत् ष्णुह उद्गिरणे स्नुह्यति सुष्णोह सुष्णोहिथ सुष्णोग्ध सुष्णोढ सुष्णुहिव सुष्णुह्व स्नोहिता स्नोग्धा स्नोढा स्नोहिष्यति स्नोक्ष्यति अस्नुहत् ष्णिह प्रीतौ स्निह्यति सिष्णेह वृत् रधादयः समाप्ता इत्यर्थः पुषादयस्त्वागणान्ता इति सिद्धान्तः शमु उपशमे शशाम शमां दीर्घः श्यनि ७।३।७४। शमादीनामित्यर्थः प्रणिशाम्यति शशाम शेमतुः शेमिथ शमिता अशमत् तमु कांक्षायां ताम्यति तमिता अतमत् दमु उपशमे उपशमे इति ण्यन्तस्य तेन सकर्मकोऽयं न तु शमिवदकर्मकः अदमत् श्रमु तपसि खेदे च श्राम्यति अश्रमत् भ्रमु अनवस्थाने वा भ्राशेति श्यन्वा तत्र क्रमे शमामष्टानामिति दीर्घः भ्राम्यति लुदित्वादङ् अभ्रमत् शेषं भ्वादिवत् क्षमूष सहने क्षाम्यति चक्षमिथ चक्षन्थ चक्षमिव ॥

किं। ररंधिव। नुमि कृते संयोगान्तलोपः परत्वेनाकित्वान्न लोपो ना। नंष्टेति। नशेर्वेति कुत्वमिह न शंक्यं। पदान्त एव तद्विधानात्। अन्यथा नष्टं नष्टिरित्यादि न सिध्येत्।

सि॰कौ॰ प्रणश्यतीति। उपसर्गादसमासेपीति णत्वं। नशेः। नभाभूपूकमिगमीत्यतो नेत्यनुवर्त्तते तदाह। णत्वं नस्यादिति। षस्येत्युक्ते षिपरस्येत्यस्य विशेषणेन षांतस्य

टी॰त॰ वक्तव्यत्वेत्वसांशयव्यक्तव्यमितांसन्ता अयं नवित् भ्वादिस्तु षित् अपि तः श्राम्यतेः सान्तिस्सम् पः स्मतेः क्षमा क्रमुग्लामौ क्राम्यति। शपीव श्यन्य

ति॰उ॰ पि ष्ठिवुक्लमुचमित्येवसिद्धे शमादिपाठो घिनुणर्थः। अङ् अक्लमत् मदीहर्षे माद्यति शमादयोष्टौ गताः। असुक्षेपणे अस्यति आस असिता अस्यते

७० स्युक् ७।४।१७॥ अङि परे आस्थत् अस्यपुषादित्वादङि सिद्धे स्यतिवक्तीतिवचनं नन्तङर्थं तन्न उपसर्गादस्यत्यूह्योरिति वक्ष्यते पर्यास्थत य

सुप्रयत्ने यसोनुपसर्गात्। ३।१।७१॥ संयसश्च ३।१।७२॥ श्यन्वास्यात् यस्यति यसति संयस्यति संयसति अनुपसर्गात्किं प्रयसति जसुमोक्षणे।

जस्यति तसु उपक्षये दसु च तस्यति अतसत् दस्यति अदसत् वसुस्तंभे वस्यति ववास ववसतुः नशसददेतिनिषेधः वशादिरयमितिमतेतु

वेसतुः वेसुः व्युषविभागे अयं दाहे पठितः अर्थभेदेन त्वङर्थं पुनः पठ्यते अव्युषत् ओष्ठ्यादिर्दन्त्यान्तोयं व्युसइत्यन्ये अयकारं वुसइत्यपरे प्लु

षदाहे अप्लुषत् पूर्वत्रपाठस्सिजर्थ इत्याहुः तद्बादिपाठे नगतार्थमितिसुवचं विसप्रेरणे विस्यति अविसत् कुससंश्लेषणे अकुसत् बुसउ।

त्सर्गे मुसखंडने मसीपरिणामे परिणामो विकारः समीत्येके लुठविलोडने उचसमवाये उच्यति उवोच ऊचतुः माभवानुचत् भृशुभ्रंशु

अधः पतने बभर्श अभृशत् अनिदितामिति नलोपः भ्रश्यति अभ्रशत् वृशवरणे वृश्यति अवृशत् कृशतनूकरणे कृश्यति ञितृषा

पिपासायां तृषत् हृष हृष्टौ श्यन्नङौ भौवादिकाद्विशेषः रुषरिषहिंसायां तीषसहेति वेट् रोषिता रोष्टा रेषिता रेष्टा डिपक्षेपे कुपक्रोधे गुपव्याकु

लत्वे युपरुपलुप विमोहने युप्यति रुप्यति लुप्यति लोपिता सेट्कः अनिद्वारिका सुलपिसाहचर्यात्तौदादिकस्यैव तत्रग्रहणात् लुभगार्ध्ये गार्ध्यमा।

कांक्षा तीषसहेति वेट् लोभिता लोब्धा लोभिष्यति लुभ्येत् लुभ्यात् अलुभत् भ्वादेर त्वक्तत्वाल्लोभतीत्यपीत्याहुः क्षुभसंचलने क्षुभ्यति॥

त्तिं लोभार्थं तद्ग्रहणं व्यर्थं सत् ज्ञापयतीत्याह। भूतपूर्वेति। काष्ठानामिति। करणस्य शेषत्वविवक्षायां षष्ठी। तत्र पथ्येति। अनुदात्तस्य चर्दुपधस्येति विके

सि॰ कौ॰ टी॰ त ति॰ उ॰ ७१

षुञ्। सुन्वइति। लोप। श्चास्येत्युकारस्य वा लोपः। सुनवानीति। आडुत्तमस्येत्याटि कृते हुश्नुवोरिति यणं बाधित्वा परत्वात् गुणः। सुनोतेः स्यसनोः। न रपरेत्यस्मान्ने त्यनुवर्तनादाह। षो न स्यादिति। सन्नितु अभि सुसूः। सन्नंतादस्मात् क्विप्यतो लोपे हल्वे दीर्घः। सुसूषतीत्ये तत्तु नो दाहरणं। सौतिण्योरेव षस्यीति नियमेनैव

षुञ् अभिषवे। अभिषवः स्नपनं पीडनं स्नानं सुरासंधानं च तत्र स्नाने अकर्मकः स्वादिभ्यः श्नुः ३।१।७५॥ सुनोति सुनुतः हुश्नुवोरिति यण्
सुन्वन्ति सुनेः सुनुवः सुन्वहे सुनुवहे सुषाव सुषुवे सोता सुनु सुनवानि सुनवै सुनुयात् सूयात् सुनुधूञ्स्पृ इतीट् असावीत् असोष्ट अभि
षुणोति। अभ्यषुणोत्। अभिसुषाव। सुनोतेः स्यसनोः ८।३।११७॥ स्ये सनि च परे सुञः षो न स्यात्। विसोष्यति। षिञ् बन्धने। सिनोति। विसिनोति। सि
षाय। सिष्ये। सेता। शि ञ् निशाने। तालव्यादिः। शिना। डुमिञ् प्रक्षेपणे। मीनातिमिनोतीत्यात्वम्। ममौ। ममिथ। ममाथ। मिम्ये। माता। मीयात्। मासीष्ट। अ
मासीत्। अमासिष्टां। अमास्त। चिञ् चयने। प्रणिचिनोति। विभाषा चेः ७।३।५८॥ अभ्यासात्परस्य चिञः कुत्वं वा स्यात् सनि लिटि च। प्रणिचिकाय
चिचाय। चिक्ये। चिच्ये। अचैषीत्। अचेष्ट। स्तृञ् आच्छादने। स्तृणोति। स्तृणुते। गुणोर्तीति गुणः। स्तर्यात्। ऋतश्च संयोगादेः ७।२।४३॥ ऋदन्तात्
संयोगादेः परयोर्लिङ् सिचोरिड्वा स्यात्तङि। स्तरिषीष्ट। स्तृषीष्ट। अस्तरिष्ट। अस्तृत। कृञ् हिंसायाम्। कृणोति। कृणुते। चकार। चकर्थ। चकृषे। कि
यात्। कृषीष्ट। अकार्षीत्। अकृत। वृञ् वरणे। वभूथाततन्थजगृम्भववर्थेति निगमे ७।२।६४॥ एषामेवेदमेवेड भावो निपात्यते। तेन भाषायां ववरिथ
ववरिथ। ववृव। ववृवहे। वरिता। वरीता। लिङ्सिचोरात्मनेपदेषु ७।२।४२॥ वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि। न लिङि
७।२।३९॥ वृतो लिङ इटो दीर्घो न स्यात्। वरिषीष्ट। वृषीष्ट। अवारीत्। अवरिष्ट। अवरीष्ट। अवृत। धुञ् कम्पने। धुनोति। धुनुते। अधौ
षीत्। अधोष्ट। दीर्घान्तोऽप्ययम्। धूनोति। धूनुते। स्वरतिसूतीति वेट्। दुधविथ। दुधोथ। किति लिटि तु श्र्युक इति निषेधं बाधित्वा क्रादिनियमा

त्क्वाभावसिद्धेः। एतच्च काशिकायां स्पष्टं। चिञ् चयने रचना विशेषः। विभाषा चेः चजोरिति सूत्रात् कुरनुवर्तते सन्लिटोर्जेरित्यतः सन्लिटोरिति चानुवृत्तिराह हरणं

वकीर्षते। चिचीर्षति। ऋतश्च संयोगादेः। इट् सनि वेत्यतः इट् वेत्यनुवर्तते लिङ्सिचोरिति सूत्रादात्मनेपदेष्विति च तदाह। इट् वास्यात् तङि। तङि किं। असार्षी
त्। अभूषातं तथा। भूधातोस्तनोतेश्च थलि इड्भावो निपात्यते। त्वं हि होता प्रथमो बभूथ। येनान्तरिक्षमुर्वीततन्थ। भाषायां तु बभूविथ। ततनिथ। जगृभ्मा ते दक्षि

दुधुविव। स्तुसुधूञ्भ्य इति नित्यमिट्। अधावीत्। अधविष्ट। अधोष्ट। अथ परस्मैपदिनः। टुदु उपतापे। दुनोति। हि गतौ वृद्धौ च। हिनुमीना। ८।४।१५॥ उ
पसर्गस्थान्निमित्तात्परस्य णत्वं स्यात्। प्रहिणोति। हेरचङि। ७।३।५६। अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि। जिघाय। पृ प्रीतौ। पृ
णोति। पर्ता। स्पृ प्रीति पालनयोः। प्रीति चलनयोरित्यन्ये। चलनं जीवनमिति स्वामी। स्पृणोति। पस्पार। स्मृ इत्येके। स्मृणोति। पृणोत्यादयस्त्रयोऽपि छा
न्दसा इत्याहुः। आप्लृ व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नुवः। आप्ता। आप्नुहि। लृदित्वादङ्। आपत्। शक्लृ शक्तौ। अशकत्। राध साध संसिद्धौ॥
राध्नोति। राधो हिंसायाम्। ६।४।१२३। एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। अपरेधतुः। रेधुः। रेधिथ। राद्धा। साध्नोति। साद्धा। असात्सीत्। असा
द्धाम्। अथ द्वावनुदात्तेतौ। अशू व्याप्तौ संघाते च। अश्नुते। अश्नोतेश्च। ७।४।७२। दीर्घादभ्यासात् ... वर्णात्परस्य नुट् स्यात्। आनशे। अशिता। अ
ष्टा। अशिष्यते। अक्ष्यते। अश्नुवीत। अक्षीष्ट। अशिषीष्ट। आशिष्ट। आष्ट। आक्षाताम्। ष्टिघ आस्कन्दने। स्तिघ्नुते। तिष्टिघे। स्तेघिता। अथ आग
णान्ताः परस्मैपदिनः। तिक तिग गतौ च। चादास्कन्दने। तिक्नोति। तिग्नोति। षघ हिंसायाम्। सघ्नोति। ञिधृषा प्रागल्भ्ये। धृष्णोति। दधर्ष। धर्षिता।
दम्भु दम्भने। दम्भ न दम्भः। दभ्नोति। ददम्भ। श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वम्वेति व्याकरणान्तरम्। इहाप्यस्य श्रीपतिनाप्युक्तम्। अनि
दितामिति नलोपः। तस्याभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ। दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ॥ देभतुः। ददम्भतुः। इह ... दविहिष

णमिरुद्ध। भाषायां जगृहिम। वृणोतेः थलि क्रादिसूत्रेण इण्निषेधे सिद्धेपि नियम एव निषेधो नान्यत्रेति नियमार्थं ववर्थग्रहणं। ववर्थ त्वं हि ज्योतिषां।
भाषायां ववरिथ। ववृषे। लिङ्सिचोः। इत इत्यनुवर्तते। आत्मनेपदेषु किं। अवारीत्। अवारिष्टः। सिचि च परस्मैपदेष्विति निषेधादिह वृतो वेति न दीर्घः।

सि.कौ. हि तुमीनां प्रमीलां ॥ जहिर् च ङि । जेघीयते । अचङीति किं । अजीहयत् । इहण्यंतस्य धात्वंतरत्वात् केवलस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावान्न कुत्वप्राप्तिरे

टी.त. वनालीत्यचङीति निषेधोऽप्यर्थः सन्नाप्यपति । ण्यधिकस्यापि कुत्वमेव नीति । तेन जिघाययिषतीत्यादि सिद्धं । आमुहीति । संयोगपूर्वत्वादुतश्च प्रत्ययमादि

सि.उ. तिहेर्लुङ्ना । राधौ हिंसायां । अत इत्यनुवर्तमानेपि सामर्थ्यादकारमात्रं स्थानित्वेनाश्रीयते । अश्नोतेश्च । तस्मान्नुङि इत्यनुवर्तत इत्याह । ल्ङि मूर्धादि इति । श्रु वि

७२ कारणनिर्देशः किं । ज्यादेरपि भोजनद इत्यस्य माभूत् । आश । आशतुः । त्रिधृषा । शूलेन धृष्णोति प्रगल्भत इति शूलधृक् । शूलधृषौ । नृत्विक् दधृगिति

तन्मतेतिपूर्वप्राप्तिप्सुर्दभार्दभिथा । दभेतिरूपान्तरमप्राध्यम् । अपिहितं यकमितिन्यासकारादिमतेतु । ददम्भ । ददम्भिथ । ददम्भेत्येव । दम्भ्यात् ऋधु वृद्धौ । तृप प्रीणन इत्येके । सुभ्वादित्वात् णत्वं न । तृप्नोति । छन्दसि । आगणान्तादधिकारोऽयम् । अह व्याप्तौ । अह्नोति । दघ घातने पालने च रघ्नोति । चमु भक्षणे । चम्नोति । रि क्षि चिरि जिरि दाश दृ हिंसायां । रिणोति । क्षिणोति । अयं भाषायामपीत्येके । ततक्षुः शास्त्रभृतां क्षिणोति । स्त्र हीत्येकत्वाजादिरित्यन्ये क्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । दृत् । इति स्वादयः ॥ तुद व्यथने ॥ इतः षट् स्वरितेतः तुदादिभ्यः शः । ३।१।७७ ॥ तुदति । तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् । अतुत्त ॥ णुद प्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता । दिश अतिसर्जने । अतिसर्जनं दानम् । देष्टा । दिक्षीष्ट । अदिक्षत् । अदिक्षत । भ्रस्ज पाके । ग्रहिज्येति संप्रसारणं । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः

किते विधानादन्यत्रापि परान्तविषये कुत्वं । दंभु दम्भने । लोकवंचनाय विहितकर्मानुष्ठानं दम्भः । तृप । अयं सेट्कः । अनुदात्तेषु अपठनान्निर्देशात् । अह व्याप्तौ । व्यासृ द हलो एयेति अत्व इति तस्यादित उदात्तमर्द्धह्रस्वमित्यत्रास्माभिरुपपादितं । अन्ये त्वाहुः । शानचः कं योक्ता वर्तनिरित्यत्र अत्व इति षष्ठ्यंतमेव । घे ङिनीति गुणस्तु अहि शब्दस्य छांदसत्वान्नेति । रिक्षि । एते षट् धातवः एक एव अजादिरिति मते तु पंचधातवः । इति स्वादयः ॥ तुदतीति । लघूपधगुणं बाधित्वा निस्त्वा न गुण इत्येके । अकृतव्यूहपरिभाषया गुणो न प्रवर्तत इत्यन्ये । भ्रस्ज पाके । भर्जनरूपः पाकोऽत्र धात्वर्थो न त्वोदनादेः पाकस्तत्र प्रयोगाभावादित्याहुः ॥

भ्रस्जो इति केचित्पाठे तु ओ इत् श्वेतिनिष्ठानत्वप्रसक्त्या भृष्टः । भृष्टवानिति न सिध्येत् ॥ ॥ भ्रस्जो रोपधयोः रम्यकार उच्चारणार्थः । रमित्यस्य अन्त्याचःपर त्वे रोपधयोरिति षष्ठीनिर्देशस्य वैयर्थ्यमाशंक्याह । निवृत्तिरिति । अयंभावः । स्थानविशेषलाभायमित्वस्य करणेन रोपधयोः स्थाने रम भवति । यत्र ह्यनिर्दिष्टस्थानिक स्थानं षष्ठ्या निर्दिश्य विधीयते स तत्स्थाने भवति । यथा इको यणचीत्यादौ यणादिः । प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयोः स्थाने न भवति । एवं चास्य आदेशागमत्वे भवतो यथा श्नमः भ्रम्य यागमत्व इति । अन्ये तेनादृग्व्याख्यानमयुक्तमिति मत्वा सनःक्तिचि इत्यतो लोपमनुवर्त्य भ्रस्जो रोपधयो र्लोपः रमागम

भ्रस्जो रोपधयोरमन्यतरस्याम् । ६।४।४७ । भ्रस्जेरेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्द्धधातुके । मित्वादन्त्यादचः परः स्थान षष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज्ज । बभर्ज्जतुः । बभर्ज्जिथ । बभर्ष्ठ । बभर्ज्ज । रमभावे । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः व्रश्चेति षः । बभ्रष्ठ । बभ्रज्ज । भर्ष्टा । भ्रष्टा । भर्क्ष्यति । भ्रक्ष्यति । क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन । भृज्ज्यात् । भृज्ज्यास्ताम् । भर्क्षीष्ट । भ्रक्षीष्ट । अभार्क्षीत् । अभ्राक्षीत् । अभर्ष्ट । अभ्रष्ट । क्षिप प्रेरणे । क्षिपति । क्षिपते । क्षेप्ता । अक्षैप्सीत् । अक्षिप्त । कृष विलेखने । कृषति । कृषते । क्रष्टा । कर्ष्टा । कृष्यात् । कृक्षीष्ट । स्पृशमृशकृषेति सिज्वा पक्षे क्सः । सिचि अम्वा । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । न ङिल्लिङ्सिचाविति कित्वात् दम् । अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षत । अकृक्षाताम् । अकृक्षन्त । ऋषी गतौ । परस्मैपदी । ऋषति । आनर्ष । जुषी प्रीतिसेवनयोः । आत्मनेपदिनश्चत्वारः । जुषते । ओविजी भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते ॥

॥ आगममेवेत्याहुः । अपरे तु भ्रस्जो रमन्यतरस्यामित्येव सूत्रमसुरः ऋ इति च्छेदः । रस इति रेफाकार सकाराणां यः संघातस्तस्य ऋ इत्यादेशः स्यादित्यर्थः । ततश्च क्ङिति भर्जको भर्जनं बभर्जेत्यादि सिध्यति । क्ङोरभावपक्षे तु भ्रज्जको भ्रज्जनं बभ्रज्जेत्यादि । क्ङिति तु ऋकारपक्षे भृष्टिः । भृज्ज्यादित्यादि । तदभावे संप्रसारणे सति तदेव रूपं । एवं च वरीभृज्यत इत्यादौ रीको रेफस्य निवृत्तिर्वारपि तुमनुदात्तोपदेशेत्यत्र उपदेशग्रहणमनुवर्त्य इदानीं तु नानुवर्त्य क्ङिति रमागमं बाधित्वा सम्प्रसारणमिति पूर्वविप्रतिषेधश्च न कर्तव्यमिति महदेव लाघवमित्याहुः इदं च रसो र्वचनाल्लिङ्गमिति वार्तिकाशयवर्णनमेव न त्वपूर्वोक्तवचनादित्यस्य वाक्यं ॥

सि·कौ· वचनादितिच्छेदः।भाष्यकारैस्तुसूत्रंभित्वेतेयथान्यासमेवास्त्वितिवेद्द्विरस्याकल्पनायांदुष्टत्वंसूचितंतच्चमनोरमायांस्पष्टमेव।तथाहिरेफाकारसमुदायस्यऋभ
टी·त· वेपंचदोषाः।अपेक्षितेविभर्जतुःवभर्जुरित्यादीष्यतेवभृजतुःवभृजुरित्यादिस्यात्।नचात्रगुणेननिर्वाहः।ऋभावेसतिअसंयोगाल्लिट्किदितिकित्वप्रसंगात
ति·उ न्निषेधात्।सनीवंतेतिइड्विकल्पाद्बिभर्क्षतीत्यादिरिष्यतेविभृक्षतीत्यादिस्यात्।ऋभावेहलंताच्चेतिसनःकित्वप्रवृत्तेः।लिङ्सिचोस्तङिभर्क्षीष्टअभर्ष्टेत्यादी
७३ ष्यतेभृक्षीष्टअभृष्टेत्यादिस्यात्।लिङ्सिचावात्मनेपदेष्वितिकित्वात्।णिजंताच्चङिअवभर्जदिष्यतेअबीभृजदित्यपिस्यात्।उरृतामपवादत्वेनउऋदितिऋ
त्वप्रवृत्तौसन्वल्लघुनीतिसन्वद्भावात्सन्यतइतीत्वेदीर्घोलघोरितिप्रवृत्तेः।यद्यपिउऋदित्यस्यवैकल्पिकत्वादवभर्ज दितिसिध्यत्येवतथापिपक्षेअ
वीभृजदित्यनिष्टंस्यादितिबोध्यं।भृजिभृजीभर्जनेइतिभ्वादेरत्रादृशंरूपमिष्टमितिचेत्।मैवं।भर्जनार्थेहितादृक्रूपमिष्टंनतुपाकसामान्ये।उभयोरेकार्थ
त्वाभ्युपगमेपिप्राचीनाश्चत्वारोदोषास्तुदृढाएव।नहितेपिधात्वंतरेणसुपरिहाराः।अपिलिटिभृजेरपिधातोर्गुणाभावादनुदात्तत्वेनआत्मनेपदित्वाच्चव
भर्जतुरित्यादिरूपस्यतेनाप्यसिद्धेः।तथाभृजेरुदात्तत्वेनततः परयोःसन्लिङ्सिचामिडागमध्रौव्यात्बिभर्क्षतिभर्क्षीष्टअभर्ष्टेत्यादिरपितेननसिध्यति।एतेन
भ्रस्जेर्भृजिरादेशइतिपक्षोपिनिरस्तः।पूर्वोक्तदूषणगणप्रसंगात्।किंच।अस्मिन्पक्षेयङ्लुकिअधिकोदोषः।बधादेशवत्साभ्यासस्यभृज्यादेशेपुनर्द्विर्वच
नस्यदुर्लभत्वात्स्थानिवत्त्वेनअनभ्यासस्येतिनिषेधात्।स्वीकृतेपिद्विर्वचनेरुग्रिग्रीकोभ्यासस्यस्युरेवेतिरुगादिरहितंबाभर्जितावाभर्जिष्यतीत्यादिरूपंनैवसि
ध्येत्।यदितुलाघवपक्षपातेनस्वातंत्र्यंचिकीर्ष्यतेतर्हिभ्रस्जरसोरितिपठित्वारसितिसमुदायस्यअरेवविधीयतांतथाचनकोपिदोषइति।अयमत्रसंग्रहः
रसत्रऋचेदपिलिट्सन्लिङ्सिच्चङ्परणिक्षुते।दोषाभ्रस्जेर्भृजौचैवदोषोयङ्लुकिचाधिकः।साभ्यासस्यहिभृज्भावोभवेद्धंतेर्वधिर्यथा।द्वित्वंपुनर्नैव
ष्येत्स्थानिवत्त्वाद्वधेरिव।तस्माद्रस्तुयथान्यासंस्वातंत्र्येरसोरिति।पूर्वविप्रतिषेधेनेति।नित्यत्वादित्यपिसुवचं।नचसंप्रसारणात्पूर्वधातोरेकस्यपश्चात्तुर
मागमेरेफस्येतिशक्यं।नरमागस्यासंप्रसारणस्यनित्यत्वंनेतिशंक्यं।लक्ष्यानुरोधेनकृताकृतप्रसंगित्वेनापिक्वचिन्नित्यत्वस्वीकारात्॥

मूः विज इट्।१।२।२। विजेः परः इडादिः प्रत्ययो ङिद्वत्। उद्विजिता। उद्विजिष्यते। ओलजी ओलस्जी व्रीडायां। लजते। लेजे। लज्जते। ललज्जे। अथ
परस्मैपदिनः। ओव्रश्चू छेदने। ग्रहिज्या। वृश्चति। वव्रश्च। वव्रश्चतुः। वव्रश्चिथ। वव्रष्ठ। लिट्यभ्यासस्येति सम्प्रसारणं। रेफस्य ऋकारः। उरत्। तस्या
चः परस्मिन्निति स्थानिवद्भावान्न सम्प्रसारणे इति वस्यात्वन्न। व्रश्चिता। व्रष्टा। व्रश्चिष्यति। व्रक्ष्यति। वृश्च्यात्। अव्रश्चीत्। अव्राक्षीत्। व्यच व्या
जीकरणे। विचति। विव्याच। विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्। अव्यचीत्। व्यचेः कुटादित्वमनसीति तु नेह प्रवर्त्तते। अनसी
ति पर्युदासेन कृन्मात्रविषयत्वात्। उछि उञ्छे। उञ्छति। उछी विवासे। उच्छति। ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु। ऋच्छत्यृतामिति गुणः
द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्। आनर्च्छ। आनर्च्छतुः। ऋच्छिता। मिच्छ उत्क्लेशे। उत्क्लेशः पीडा। मिमिच्छ। अमिच्छीत्। जर्ज चर्च
झर्झ परिभाषणभर्त्सनयोः। त्वच संवरणे। तत्वाच। ऋच स्तुतौ। आनर्च। उब्ज आर्जवे। उज्झ उत्सर्गे। लुभ विमोहने। विमोहनमाकुलीकरणम्। लु
भति। लोभिता। लोब्धा। लोभिष्यति। रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। रिफति। रिरेफ। रिह इत्येके। शिशुन्न विप्रा मतिभी रिहन्ति। तृप तृम्फ तृप्तौ। आ
द्यः प्रथमान्तः। द्वितीयो द्वितीयान्तः। द्वावपि द्वितीयान्तावित्यन्ये। तृपति। ततर्प। तर्पिता। स्पृशमृशेति सिज्विकल्पः पौषादिकस्यैव। अङ्पवादत्वात्।
तत्रात्र नित्यं सिच्। अतर्पीत्। तृम्फति। शास्यङ्ङित्वात् नेदितामिति नलोपे। शे तृम्फादीनां नुम्वाच्यः। आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते तृम्फाद
यः। तृम्फति। ततृम्फ। तृफ्यात्। तुप तुम्प तुफ तुम्फ हिंसायाम्। तुपति। तुम्पति। तुफति। तुम्फति। दृप दृम्फ उत्क्लेशे। प्रथमः प्रथमान्तः द्वितीयो द्वितीयान्त इत्येके। दृपति
दृफति। दृम्फति। ऋफ ऋम्फ हिंसायाम्। ऋफति। आनर्फ। ऋम्फति। ऋम्फाञ्चकार। गुफ गुम्फ ग्रन्थे। गुफति। गुम्फति। जुगोफ। जुगुम्फ। उभ उम्भ पूरणे।
उभति। उवोभ। उम्भति। उम्भाञ्चकार। शुभ शुम्भ शोभार्थे। शुभति। शुम्भति। दृभी ग्रन्थे। दृभति। चृती हिंसाग्रन्थनयोः। चर्तिता। सेऽसिचीति वेट्। चर्तिष्यति।
चर्त्स्यति। अचर्तीत्। विध विधाने। विधति। वेधिता। जुड गतौ। तवर्गान्त इत्येके। जुडति। मरुतो जुनन्ति। मृड सुखने। मृडति। मर्डिता। पृड च। पृडति। पृण प्री

मृ॰ पृणति। पपर्ण। वृण च। वृणति। मृण हिंसायाम्। तुण कौटिल्ये। तुतोण। पुण कर्म्मणि शुभे। पुणति। मुण प्रतिज्ञाने। कुण शब्दोपकरणयोः। शुन गतौ। द्रुण
हिंसागतिकौटिल्येषु। घुण घूर्ण भ्रमणे। षुर ऐश्वर्य्यदीप्त्योः। सुरति। सुषोर। आशिषि। सूर्य्यात्। कुर शब्दे। कुरति। कूर्य्यात्। अत्र न भकुर्छुरामिति निषेधो न।
कोरिता। रेवतत्र ग्रहणादिष्वाकुः। खुर छेदने। मुर संवेष्टने। क्षुर विलेखने। घुर भीमार्थशब्दयोः। पुर अग्रगमने। वृहू उद्यमने। दन्त्योष्ठ्यादिः। प्रवर्गीयादिरि
त्यन्ये। तृहू स्तृहू तृंहू हिंसार्थाः। तृहति। ततर्ह। स्तृहति। तस्तर्ह। तर्हिता। तर्ढा। स्तर्हिता। स्तर्ढा। अतृहीत्। अतार्क्षीत्। अतार्ढाम्। इष इच्छायाम्। इषु
गमीति च्छः। इच्छति। एषिता। एष्टा। एषिष्यति। इष्यात्। ऐषीत्। मिष स्पर्द्धायाम्। मिषति। मेषिता। किल श्वैत्यक्रीडनयोः। तिल स्नेहे। चिल्ल वसने। चल वि
लसने। इल स्वप्नक्षेपणयोः। विल संवरणे। दन्त्योष्ठ्यादिः। बिल भेदने। ओष्ठ्यादिः। णिल गहने। हिल भावकरणे। शिल षिल उञ्छे। मिल श्लेषणे। लिख अक्षर
विन्यासे। लिलेख। कुट कौटिल्ये। गाङ्कुटादिभ्य इति ङित्वम्। चुकुटिथ। चुकोट। चुकुट। कुटिता। पुट संश्लेषणे। कुच सङ्कोचने। गुज शब्दे। गुड रक्षायाम्। डि
प क्षेपे। छुर छेदने। न भकुर्छुरामिति न दीर्घः। छुर्य्यात्। स्फुट विकसने। स्फुटति। पुस्फोट। मुट आक्षेपमर्दनयोः। त्रुट छेदने। वा भ्राशेति श्यन्वा। त्रुट्यति त्रुटति। तुत्रोट। त्रुटि
श्लेषणे। कुड घनत्वे। घनत्वं सान्द्रता। चकोड। कुडिता। कुड बाल्ये। पुड उत्सर्गे। घुट प्रतिघाते। तुड तोडने। तोडनं भेदः। थुड स्थुड संवरणे। थुडति। तुथोड।
तुस्थोड। खुड छुड इत्येके। स्फुर स्फुल सञ्चलने। स्फुर स्फुरणे। स्फुल सञ्चलने इत्येके। स्फुरति। स्फुलति। निर्निविभ्यः। ८।३।७६। षत्वं वा स्यात्। निष्फुर
ति। निःस्फुरति। स्फर इत्यकारोपधं केचित्पठन्ति। पस्फार। स्फुड चुड ब्रुड संवरणे। क्रुड भृड निमज्जन इत्येके। गुरी उद्यमने। अनुदात्तेत्। गुरते। जुगुरे।
गुरिता। णू स्तवने। दीर्घान्तः। परिणूतगुणोदयः। इतः श्वत्वारः परस्मैपदिनः। नुवति। अनुवीत्। धू विधूनने। धुवति। गु पुरीषोत्सर्गे। जुगुविथ। जुगुथ। गुता।
गुष्यति। अगुषीत्। ह्रस्वादङ्गात्। अगुताम्। अगुषुः। ध्रु गतिस्थैर्ययोः। ध्रुव इति पाठान्तरम्। आद्यस्य ध्रुवतीत्यादि गुवतिवत्। द्वितीयस्तु सेट्। दुध्रुविथ। ध्रु
विता। ध्रुविष्यति। ध्रूयात्। अध्रुवीत्। अध्रुविष्टाम्। कुङ् शब्दे। दीर्घान्त इति कैयटादयः। कुविता। अकुविष्ट। ह्रस्वान्त इति न्यासकारः। कुता। अकुत। हेत् कु
टादयो वृत्ताः। पृङ् व्यायामे। प्रायेण व्याङ्पूर्वः। रिङ्। इयङ्। व्याप्रियते। व्यापप्रे। व्यापप्राते। व्यापरिष्यते। व्यापृत। व्यापृषाताम्। मृङ् प्राणत्यागे

विजइट् इत्यत्र द्वियस्येति सूत्रान्मंडूकप्लुत्या यस्यादिरिति अनुवर्तते तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितं तान्न्यासेडुइडित्यनेन उक्तमेकवचनं न गृ
ह्यते। तथा च सति विजिषीयेत्यत्रैव स्यान्न तु हिंसितेत्यादौ। न च श्लिष्टसिद्ध्यर्थमिडागमो गृह्यते तस्य तु ङित्त्वव्यर्थं तन्निमित्तगुणस्याप्राप्तेरतो लक्षणया इड्ग्रहणं न
गृह्यते। इड्ग्रहणं यस्यादिरिति फलितार्थकथनमिडादिप्रत्ययो ङिद्भवतीति। एवं च इडादिरिति लाभाय यस्यादिरिति अनुवर्तनक्लेशो व्यर्थ एवेत्याहुः। इह
ओविजी। तितुदादिः रुधादिश्च गृह्यते न तु विजिर पृथग्भावे इति जुहोत्यादिर्व्याख्यानात्। यस्तु तत्र हरदत्तेन जुहोत्यादेरग्रहणे हेतुरुक्तः तस्यानिट्कत्वादिति
तदयुक्तं। क्रादिनियमेन लिटि इट्संभवात्। न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्वं व्यर्थमिति वाच्यं। अपिपिच्छिषः कित्त्वेऽपि विविजिषेत्यत्रापि त्वेन ङित्त्वा
भावात्। व्रश्चेति। अत्र नव्याः। वव्रश्चेत्यादौ लिट्यभ्यासस्येत्यभ्यासावयवयोरीयोरपि यणः संप्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय न संप्रसारणे इति
सूत्रं स्वीक्रियते तत एव ज्ञापकात्परस्य प्रथमं संप्रसारणमिति परिकल्प्य आपादपरिसमाप्तेरंगाधिकार इति पक्षमभ्युपगम्य उरदत्वस्यान्त्यस्य
नप्रत्ययनिमित्तकत्वस्वीकारादचः परस्मिन्निति स्थानिवद्भावप्रवृत्त्या संप्रसारणपरत्वमाश्रित्य वकारस्य संप्रसारणनिषेधः कथंचिदुपपादितः परस्य संप्रसारणं
इत्यर्थलाभात् उक्तक्लेशं विनैव वव्रश्चेत्यादि सर्वं सिध्यति न चैवं लिटि वयो य इत्यत्र संप्रसारणनिषेधाय नञोऽनुवृत्तिर्न लभ्यते इति वाच्यं न लिटि वयो य इ
ति सूत्रकरणे बाधकाभावात् न संप्रसारणे इति यथाश्रुतसूत्रप्रणयने त्वं ततो गत्वा मात्राद्वयस्याधिक्याच्च। एवं च लघूपायेनेष्टसिद्धौ न संप्रसारणे इति सूत्रारंभो
ज्ञापयति निमित्तभेदाभावेऽपि स्थानिभेदे पुनरपि कार्यं प्रवर्तते इति। तथा च सुस्थुपास्य इत्यादौ उकारात्परस्य धकारस्य हित्वे कृते पुनरुकारात्परस्य दकारस्या
पि हित्वमिति प्रक्रिया। काराद्व्याख्यानसूत्रकारमभिप्रेतमेवा यदि स्थानिभेदेऽपि निमित्तैक्ये कार्याप्रवृत्तिः क्वचिदिष्यते तत्र तु ज्ञापकसिद्धं न सर्वत्रेति सदोषः
परिह्रियतामित्याहुः। अव्रश्चीदिति। ऊदित्वात्पक्षे इट् वदव्रजेति वृद्धौ नेटीति निषेधः। अव्राक्षीदिति। स्कोरिति सलोपः व्रश्चेति षः। षढोरिति कः। ननु स
स्य षत्वान्न चात्र सकारस्य कथं लोप इति वाच्यं। धातुपाठे सकारस्य पाठात्। तदाहुः। नकारजावनुस्वारपंचमौ झलि धातुषु। सकारजः शकारश्च षाट्टवर्गस्तव
र्गजः इति। व्यचा व्यचीकरणे। पर्युदासे नेति। प्रसज्यप्रतिषेधे हि वाक्यभेदः स्यात् असमर्थसमासश्च प्रसज्येत। निभावः कृन्मात्रविषयत्वादिति। तेन उद्विचिता उद्विचि

सि॰ कौ॰
टी॰ त॰
ति॰ उ॰
७५

तुमित्यत्र संप्रसारणं भवति। व्यचित्यादौ तु निङ्निषेधेन भवति॥ विव्याचेत्यत्र कुटादित्वेऽपि न क्षतिः। गाङ्कुटादिभ्य इति सूत्रे अञ्णितः प्रत्ययाः ङितः स्युरिति उक्तत्वात्। उत्तमे णलि तु णित्त्वाभावपक्षे ङित्त्वात् संप्रसारणे विव्यचेति न सिध्येदिति अनसीति पर्युदास आवश्यक इति बोध्यम्। उछि उञ्छे। उछी विवासे। इमौ भ्वादिगणे व्याख्यातौ। इह पाठस्तु उञ्छतीत्यत्र आच्छीनद्योरिति नुम्विकल्पार्थः। पूर्वपाठस्तु स्वरार्थः। तथा हि। उञ्छति उच्छतीत्यादावपि हुचनेशापूतिवादी नां पित्त्वात् अनुदात्तत्वे धातुस्वरेण आद्युदात्तं पदं। शे तु प्रत्ययस्वरेण मध्योदात्तमिति। न च सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वक्ष्यमाणत्वात् कथमिह मध्योदात्तत्वेनेति वाच्यं। कुटुत इत्यादौ तसादेर्विकरणत्वपरत्वेन तत्स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेऽपि शस्य धातोः परत्वेन धातुस्वरापेक्षया शस्वरस्योदात्तस्य प्रबलत्वात्। उपलक्षणत्वादिति। अत एव अदुपधस्य चेत् अश्नोतेरेवेति नियममाश्रित्य हि हलग्रहणं भाष्यकारैः प्रत्याख्यातं। अन्यथा तन्न संगच्छेतेति भावः। आनर्छेति। अनृच्छ इति पर्युदासान्नाम्। न चासु ऋच्छत्यॄतामिति लिटि परे गुणविधानसामर्थ्यादामभावः सिद्ध इति इजादेरिति सूत्रे अनृच्छ इत्येतत् स्पष्टप्रतिपत्त्यर्थमित्याहुः। अन्ये तु ऋच्छत्यॄतामित्यत्र तौदादिकं ऋच्छेरिति सर्वैरेव व्याख्यातत्वात् गणान्तरेऽपि ऋच्छेरितीत्यनुमीयते तद्ग्रहणार्थं तु लिट्यामनिवारणाय अनृच्छ इत्येतदावश्यकमित्याहुः। मिछ। उत्क्लेशे। उत्क्लेशः। ऋच स्तुतौ। ऋच्यते स्तूयते देवतादिकमनेयेति ऋक्। बाहुलकादिह करणे क्विप्। लोभिता। लोब्धा तीषसहेति वेट्। शिशुं न विप्रा इति। न शब्द इवार्थे। विप्रा ब्राह्मणाः शिशुमिव मतिभी रिहन्ति॥ हिंसन्ति न्यूनीकुर्वन्तीत्यर्थः। चृती हिंसाग्रन्थनयोः। ईदित्करणं श्वीदितो निष्ठायामिति इण्निषेधार्थं। यद्यप्यस्य वेट्त्वात् निष्ठायामिण्निषेधः सिध्यति तथापि यस्य विभाषेत्यस्यानित्यतां ज्ञापयितुमीदित्करणं। तेन धावितमिभराजधियेत्यपि सिद्धमित्याहुः। कुर शब्दे। कोरोतेरेवेति। सुप्रसिद्धत्वात्। कुर्यादित्युक्ते हि लोकानां कृञ एवोपस्थितिर्भवति न त्वस्येति भावः। मुर संवेष्टने। इगुपधलक्षणः कः। मुरो दैत्यः मुरारिर्विष्णुः। क्षुर विलेखने। विलेखनं छेदनं। केशान् क्षुरति। इगुपधेति कः। क्षुरः शस्त्रं। तिल स्नेहने। तिलति। इगुपधेति कप्रत्यये तिलः। तिल गतौ। तेलतीति शपि। लिख अक्षरविन्यासे। लिखितुं लिखिष्यतीति प्रयोगः प्रामादिकः। यत्तु कैश्चित् कुटस्यादिः कुटादिः कुटः आदिर्येषां ते कुटादयः कुटादिश्च कुटादयश्च कुटादयः इत्येकशेषं स्वीकृत्य लिखितुमित्यादि स

मर्थितं। नददसत्। लेखिता। लेखिष्यतीत्यादौ गुणनिषेधापत्तेः। न चेष्टापत्तिः। वृत्तिकारहरदत्तादिग्रन्थविरोधात्। गाङ्कुटादिभ्य इत्येव सूत्रितव्ये कुटादिभ्य इ-
ति पठनस्य स्वारस्यभङ्गापत्तेश्च। किं च। शकुनिष्वालेखने इति सौत्रप्रयोगोऽपि विरुध्येत इति प्रागेवोक्तं रत्नमानानां वत्वालिखापयतीति प्रयोगस्तु मनोरमायामि-
त्थं समर्थितः। आपनं आयः प्राप्तिः। लिखस्यापो लिखापः तं करोति। स्फुट विकसने। स्फुटत्यर्थोऽस्मादिति स्फोटः। स च पदस्फोटवाक्यस्फोटादिभेदेनअ-
नेकविधः। कडमदे। कुटादिकार्याभावेऽपि डित्त्वानुरोधेनायं कुटादौ पठितः। भ्वादौ पठितस्य पुनरत्र पाठः शतरि नुम्विकल्पार्थः। पूर्वपाठस्तु उञ्छतीत्या-
दाविव कडतीत्यादौ आद्युदात्तार्थः। स्फुरतिस्फुलत्योः। सिवादीनामित्यतो वेत्यनुवर्त्तमाने आह। षत्वं वा स्यादिति। परिणूतेति। श्र्युकः कितीति निषेधः॥ ०
॥ ❁ ॥ म्रियतेर्लुङ्लिङोश्च। चात् शित इति अनुकृष्यते तदाह। शितश्च प्रकृतिभूतादिति। तङिति। आत्मनेपदमित्यर्थः। तेन म्रियमाण इति सिद्धं।

म्रियतेर्लुङ्लिङोश्च। १।३।६१। लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र। ङित्त्वं स्वरार्थम्। म्रियते। ममार। ममर्थ। ममृव।
मर्त्तासि। मरिष्यति। मृषीष्ट। अमृत। अथ परस्मैपदिनः। सम। रिपि गतौ। लघूपधगुणात् अन्तरङ्गत्वादियङ्। रियति। पियति। रेता। पेता।
धि धारणे। क्षि निवासगत्योः। षू प्रेरणे। सुवति। सविता। कृ विक्षेपे। किरति। किरतः। चकार। चकरतुः। करिता। करीता। कीर्यात्। अकारी-

त्स्वरार्थमिति। माहिमृतेत्यत्र तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमित्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः। ङि-
त्त्वाभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यात्। न च सिज्लोपस्यासिद्धत्वात् ङितः परत्वं लसार्वधातुकस्य दुरुपपादमिति तस्य कथमनुदात्तता स्यादिति
शंक्यं। ङित्त्वसामर्थ्यात् सिज्लोपस्यासिद्धत्वं नेति सुवचत्वात्। अमृतेत्यत्राडागमस्यैवोदात्तत्वात् मृङो ङित्त्वस्य न किञ्चित् प्रयोजनमिति अपनिवासस्य। मा
हिमृतेति माङः प्रयोगात् तिङ्ङतिङ इति निघातेऽपि ङित्त्वं व्यर्थमेव स्यात् इति हिशब्दप्रयोगः। हिप्रयोगे तु हि चेत्यनेन न तिङ्ङतिङ इति निघातनिषेधादिष्टस्वरः सि-
॥ ध्यतीति बोध्यं॥ रिपिगतौ। परत्वाल्लघूपधगुणः स्यादित्याशङ्कायामाह। अन्तरङ्गत्वादिति। ॥

किरतौ लवने। उपात् प्रतियत्नेति सूत्रादुपादिति वर्तते। लवने किं। उपकिरति। हिंसायां प्रतेश्च। चादुपात्। उरोविदारं प्रतिचस्करे नखैरिति माघः। कर्मणि लिट्। नॄ

किरतौ लवने। ६। १। १४०॥ उपात्किरतेः सुडागमः स्याच्छेदेर्थे। उपस्किरति। अडभ्यासव्यवायेऽपि सुट्कात्पूर्व इति वक्तव्यम्। उपास्किरत्। उपचस्कार। हिंसायाम्प्रतेश्च। ६। १। १४१॥ उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम्। उपस्किरति। प्रतिस्किरति। गॄ निगरणे। अचि विभाषा। ८। २। २१॥ गिरतेः रेफस्य लत्वं वा स्यादजादौ। गिरति। गिलति। जगार। जगाल। जगरिथ। जगलिथ। गरिता। गलिता। दृङ् आदरे। आद्रियते। आद्रियेते। आदद्रे। आदद्रिषे। आदर्ता। आदरिष्यते। आदृषीष्ट। आदृत। आदृषाताम्। धृङ् अवस्थाने। ध्रियते। अथ परस्मैपदिनः षोडश। प्रच्छ ज्ञीप्सायाम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। पप्रच्छिथ। पप्रष्ठ। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्। वृत्। किरादयो वृत्ताः। सृज विसर्गे। विभाषा सृजिदृशोः। ससर्जिथ। सस्रष्ठ। स्रष्टा। स्रक्ष्यति। सृजिदृशोर्झल्यमकितीत्यमागमः। सृजेत्। सृज्यात्। अस्राक्षीत्। टुमस्जो शुद्धौ। मज्जति। ममज्ज। मस्जिनशोर्झलीति नुम्। मस्जेरन्त्यात्पूर्वो नुम्वाच्यः। संयोगादिलोपः। ममङ्क्थ। ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः। रुजो भङ्गे। रोक्ता। रोक्ष्यति। अरौक्षीत्। अरौक्ताम्। भुजो कौटिल्ये। रुजिवत्। छुप स्पर्शे। छोप्ता। अछौप्सीत्। रुश रिश हिंसायाम्। तालव्यान्तौ। रोष्टा। रोक्ष्यति। रेष्टा। रेक्ष्यति। लिश गतौ। अलिक्षत्। स्पृश संस्पर्शने। स्प्रष्टा। स्पर्ष्टा। स्प्रक्ष्यति। स्पर्क्ष्यति। अस्प्राक्षीत्। अस्पार्क्षीत्। अस्पृक्षत्। विच्छ गतौ। गुपूधूपेत्यायः आर्द्धधातुके वा। विच्छायति। विच्छायाञ्चकार। विविच्छ। विश प्रवेशने। विशति। वेष्टा। मृश आमर्शने। आमर्शनं स्पर्शः। अम्राक्षीत्। अमार्क्षीत्। अमृक्षत्। णुद प्रेरणे। कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनः पाठः। षद्लृ विशरणगत्यवसादनेषु। सीदतीत्यादि भौवादिकवत्। इह पाठो नुम्विकल्पार्थः। सीदती। सीदन्ती। ज्वलादौ पाठ॰

छ्वन्एनामिति गुणः। दृङ् आदरे। तयाद्रियन्ते न बुधाः सुधामपीति श्रीहर्षः। प्रच्छ ज्ञीप्सायां। ज्ञातुमिच्छा ज्ञीप्सा। अत्र ज्ञपि ज्ञीने। आ पृच्छ्युधामीत्

अत्र लोपः रत्यभ्यासलोपः। ण्वुलि। प्रच्छकः। पृच्छा। शब्दान्तनत्क रोतीति णिजन्तात् ण्वुलि तु प्रच्छकः। पृच्छा। शब्दसुभिदादेराकृतिगणत्वात् अङि संप्रसारणे वो
ध्यः। किरादयो वृत्ताः इति। एते च भूषाकर्मकिरादिसनामिति वक्ष्यमाणयङ्क्लिणादिनिषेधवार्तिके उपयोक्ष्यन्ते। किरश्च पंचभ्यः इत्यत्र पंचभ्य इत्येतदुत्तरसूत्रे ऽ
नुवृत्त्यर्थमिति बोध्यं। ससर्जिथेति विभाषा सृजिदृशोरिति थलि वेट्। विच्छ गतौ। तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो न तु शप्। तेन विच्छायती।

गुणार्थः। सादः। स्वरार्थश्च शब्दानुदात्तः। शसुदात्तः। शद्लृ शातने। स्वरार्थ एव पुनः पाठः शातनं नास्ति। शदेः शित इत्यात्मनेपदोक्तेः। अथ ष
ट्स्वरितेतः। मिल सङ्गमे। मिल संश्लेषणे इति पठितस्य पुनः पाठः कर्त्रभिप्राये तङर्थः। मिलति। मिलते। मिमेल। मिमिले। मुच्लृ मोक्षणे। शेमु
चादीनाम्। ७।१।५९॥ नुम् स्यात्। मुञ्चति। मुञ्चते। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुचत्। अमुक्त। अमुक्षाताम्। लुप्लृ छेदने। लुम्पति। लुम्पते।
अलुपत्। अलुप्त। विद्लृ लाभे। विन्दति। विन्दते। विवेद। विविदे। व्याघ्रभूत्यादिमते सेडयम्। वेदिता। भाष्यादिमते ऽनिट्कः। वेत्ता। परिवेत्ता। परि
वेत्तने। ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः। तृन्फौ। लिप उपदेहे। उपदेहो वृद्धिः। लिम्पति। लिम्पते। लेप्ता। लिपिसिचीत्यङ्॥
तङि तु वा। अलिपत्। अलिपत। अलिप्त। षिच क्षरणे। सिञ्चति। सिञ्चते। असिचत्। असिचत। असिक्त। अभिषिञ्चति। अभ्यषिञ्चत्।
अभिषिषेच। अथ त्रयः परस्मैपदिनः। कृती छेदने। कृन्तति। चकर्त। कर्तिता। कर्तिष्यति। कर्त्स्यति। अकर्तीत्। खिद परिघाते। खिन्द
ति। चिखेद। खेत्ता। अयं दैन्ये दिवादौ रुधादौ च। पिश अवयवे। पिंशति। पेशिता। अयं दीपनायामपि। त्वष्टा रूपाणि पिंशतु। इति मुचादयः
तुदादयश्च॥ रुधिर् आवरणे। नव स्वरितेत इरितश्च॥ ॥

९ विच्छायंती इति नुम्विकल्पः। केचित्तु तुदादिपाठसामर्थ्यादायप्रत्य
यस्य पाक्षिकत्वं स्वीकृत्य विच्छती विच्छंती इति नुम्विकल्पं विच्छति विच्छतः विच्छंतीत्यादिरूपाणि चोदाजह्रुस्तेषां तु मते तुदादिपाठस्य केवले चरितार्थत्वा
दायप्रत्ययान्तात् च्छदेवाते न विच्छायंती इति नित्यमेव शप्श्यनोरिति नुम्। पठितस्येति। अस्मिन्नेव गणे परस्मैपदिषु पठितस्येत्यर्थः। तङर्थ इति। पूर्वपा
ठस्तु संश्लेषणे कर्त्रभिप्रायेऽपि परस्मैपदार्थः। षिच क्षरणे। षिचिरिति केचिदिरितं पठंति। तन्नु फलाभावादुपेक्ष्यं। हलिपिसिचि व्हश्चेति च्लेरङ् विधीयते स

सि॰ कौ॰
टी॰ त॰
ति॰ उ॰
७७

चाप्राप्तविधिः इति त्वेतु विकल्पेन प्राप्ते नित्यार्थो विधिरिति फलाभावः। पिंष्टविति। दीपयत्वित्यर्थः। इति तु सदयः॥ ॥ रुधादिभ्यः श्नम्। प्रत्ययत्वेपि मित्वादन्त्याद-
चः परः। प्रत्ययसंज्ञाफलं तु श्नसेत्संज्ञा। श्नस्योच्चारणं तु श्नसोरल्लोपः श्नान्नलोप इत्यत्र विशेषणार्थं न तु सार्वधातुकसंज्ञार्थं। फलाभावात्। नेचापित्सार्वधातुकस्यङि-

रुधादिभ्यः श्नम्। ३।१।७८॥ श्नपोऽपवादः। मित्वादन्त्यादचः परः। नित्यत्वाद्गुणम्बाधते। रुणद्धि। श्नसोरल्लोपः। णत्वस्यासिद्धत्वादनुस्वा-
रः परसवर्णश्च नस्यासिद्धत्वाल्लत्वन्न। नपदान्तेति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत्। रुन्धः। रुन्धन्ति। रुन्धे। रोद्धा। रोत्स्य-
ति। रोत्स्यते। रुणद्धु। रुन्द्धात्। रुन्द्धि। रुणधानि। रुणधै। अरुणत्। अरुन्धां। अरुणत्। अरुणः। अरुणधम्। अरुधत्। अरौत्सीत्।
अरुद्ध। भिदिर् विदारणे। भिनत्ति। भिन्ते। भेत्ता। भेत्स्यति। अभिनत्। अभिनः। अभिनदम्। अभिन्त। अभिदत्। अभैत्सीत्। अभित्त॥
छिदिर् द्वैधीकरणे। अच्छिदत्। अच्छैत्सीत्। अच्छित्त। रिचिर् विरेचने। रिणक्ति। रिङ्क्ते। रिरेच। रिरिचे। रेक्ता। अरिणक्। अरिचत्। अरैक्षी-
त्। अरिक्त। विचिर् पृथग्भावे। विनक्ति। विङ्क्ते। क्षुदिर् संप्रेषणे। क्षुणत्ति। क्षुन्ते। क्षोत्ता। अक्षुदत्। अक्षौत्सीत्। अक्षुत्त। युजिर् योगे
योक्ता। उच्छृदिर् दीप्तिदेवनयोः। छृणत्ति। छृन्ते। चच्छर्द। सेऽसिचीति वेट्। चच्छृदिषे। चच्छृत्से। छर्दिता। छर्दिष्यति। छर्त्स्यति। अच्छृदत्
अच्छर्दीत्। अच्छर्दिष्ट। उतृदिर् हिंसानादरयोः। तृणत्तीत्यादि। कृती वेष्टने। परस्मैपदी। कृणत्ति। आर्द्धधातुके तौदादिकवत्। ञिइन्धी
दीप्तौ। त्रय आत्मनेपदिनः। श्नान्नलोपः। ६।४।२३॥ श्नमः परस्य नस्य लोपः स्यात्। श्नसोरल्लोपः। इन्धे। इन्त्से। इन्धि ना। इन्धे। ऐन्ध। ऐ-
न्धाः। खिद दैन्ये। खिन्ते। खेत्ता। विद विचारणे। विन्ते। वेत्ता। अथ परस्मैपदिनः। शिष्लृ विशेषणे। शिनष्टि। शिंष्टः। शिंषन्ति। शिशेषिथ
शेष्टा। शेक्ष्यति। हेर्धिः। जश्त्वम्। झरो झरीति वा डलोपः। अनुस्वारपरसवर्णौ। शिण्ढि। शिण्ड्ढि। शिनषाणि। अशिनट्। लृदित्वादङ्। अशि-
षत्। पिष्लृ सञ्चूर्णने। शिष्लृवत्। पिनष्टि। भञ्जो आमर्दने। भनक्ति। बभञ्जिथ। बभङ्क्थ। भङ्क्ता। भुज पालनाऽभ्यवहारयोः। भुनक्ति। भोक्ता।

त्वे गुणनिषेधः फलमिति शंक्यं। इगन्तस्याङ्गत्वाभावात्। अरुणद् इति। सिपि दश्चेति रुर्वा। एवमभिन इत्यत्रापि। उच्छृदिर्। उकारः क्त्वायामिड्विकल्पार्थः। छृत्वा। छर्दित्वा।

इट्पक्षे न क्त्वा सेडिति कित्त्वनिषेधाद्गुणः। श्नान्नलोपः। अस्य मुख्योदाहरणम्। अनक्ति। श्नादित्यत्र सृष्टमकारानुबन्धस्य श्नमो ग्रहणमित्याह। श्नमः परस्येति। एवं च यजयाचेति विश्नशब्दस्यापि नुटि विश्नानामित्यत्र लक्षणप्रतिपदोक्तप्रत्ययग्रहणपरिभाषयोः प्रवृत्त्या नलोपशंकैव नास्तीत्याहुः। इन्धे इन्से श्नमो नकारस्यानुस्वारपरसवर्णौ। अनिदितामिति नलोपस्तु न भवति। अल्लोपस्यासिद्धवदत्रेत्यसिद्धत्वात्स्थानिवत्त्वाद्वा। भंजो। ओदित्करणं निष्ठानत्वार्थं। भग्नः। भुज पालनादौ भुजोऽनवने इत्यात्मनेपदं वक्ष्यते। भुनक्ति। भुङ्क्ते। भुंजते॥ ॐ॥ तृणह इम्। तृह इति वक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमा श्नमो बाधो माभूदित्येवमर्थं। न च लाक्षणिकस्य तृह इत्यस्य व्यावृत्त्यर्थमेवास्त्विति शंक्यं। ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानात्। नाभ्यस्तस्याचि पितीत्यतः पितीति

तृणह इम्। ७।३।९२। तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। अतृणेट्। हिनस्ति। जिहिंस। हिंसिता। उन्दी क्लेदने। उनत्ति। उन्त्तः। उन्दन्ति। उन्दाञ्चकार। औनत्। औन्ताम्। औन्दन्। औनः। औनत्। औनदम्। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। अनक्ति। अङ्क्तः। अञ्जन्ति। आनञ्ज। आनञ्जिथ। आनङ्क्थ। अङ्क्ता। अञ्जिता। अङ्ग्धि। अनजानि। आनक्। अञ्जेः सिचि। ७।२।७१। अञ्जेः सिचो नित्यमिट् स्यात्। आञ्जीत्। तञ्चू संकोचने। तनक्ति। तङ्क्ता। तञ्चिता। ओविजी भयचलनयोः। विनक्ति। विङ्क्तः। विज इडिति ङित्त्वं विविजिथ। विजिता। अविनक्। अविजीत्। वृजी वर्जने। वृणक्ति। वर्जिता। पृची सम्पर्के। पृणक्ति। पपर्च॥ इति रुधादयः॥ ॥

उतो वृद्धिरित्यतो हलीति च वर्तते तदाह। हलादौ पितीति। प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रस्थभाष्यकारीयनिष्कर्षेण तु हलीति नानुवर्तते किं तु पितीति अनुवर्तते एव। तेन तृढ इत्यत्र नातिप्रसंगः। न च हलीत्यननुवृत्तौ तृणहानीत्यत्रातिप्रसंग इति वाच्यं। अचि नेत्यनुवर्तनात्। उंदी क्लेदनमार्द्रीभावः। अंजू। व्यक्तिर्विवेचनं। म्रक्षणं स्निग्धता। अंजेः सिचि। नित्यमिट् स्यादिति। विभाषाग्रहणं नानुवर्तत इति भावः। सिचि किं। अंक्त। पृची। ईदित्वान्निष्ठायां नेट्। पृक्तः। अपृक्त एकालित्यत्र नञ्पूर्वः॥ इति रुधादयः॥

सि॰ कौ॰ अतनिष्ट। अतानिष्टेति। तस्थस्थमिपामिति तादेशः। अतो हलादेर्लघोरिति वा वृद्धिः। अततेति। तनादिभ्यस्तथासोरिति सिज्लुक्यनुनासिकलोपः। अतनिष्टेति लु
टी॰ त॰ गभावपक्षे। रूपं। षणु दाने। नांतो यं णकारस्तु लाक्षणिकः। तेन यङ्लुकि संसंति संसंतरत्यादावनुस्वारपरसवर्णौ। क्षणु हिंसायां। क्षिणु च। इमावपि लो

३ अथ सप्त स्वरितेतः। तनु विस्तारे। तनादिकृञ्भ्य उः। तनोति। तन्वः। तनुवः। तनुते। ततान। तेने। तनुः। अतनीत्। अतानीत्। तनादिभ्य
७८ स्तथासोः। २।४।७९॥ तनादेः सिचो वा लुक् स्यात्तथासोः। थासा साहचर्यादेकवचनं थशब्दो गृह्यते। तेनेह न। यूयमतनिष्ट। अता
निष्ट। अनुदात्तोपदेशेत्यनुनासिकलोपः तङि। अतत। अतनिष्ट। अतथाः। अतनिष्ठाः। षणु दाने। सनोति। सनुते। ये विभाषा। सायात्
सन्यात्। जनसनखनां सञ्झलोरित्यात्वं। असात। असनिष्ट। असाथाः। असनिष्ठाः। क्षणु हिंसायां। क्षणोति। क्षणुते। ह्म्यन्तेति न वृद्धिः। अक्षणीत्।
———। अक्षत। अक्षणिष्ट। अक्षथाः। अक्षणिष्ठाः ———। क्षिणु च। उप्रत्ययनिमित्तो लघूपधगुणः। संज्ञापूर्वको विधिरनित्य इ
ति न भवतीत्यात्रेयादयः। भवत्येवेत्यन्ये। क्षिणोति। क्षेणोति। क्षेणितासि। क्षेणितासे। अक्षेणीत्। अक्षित। अक्षेणिष्ट। ऋणु गतौ। ऋणो
ति। अर्णोति। अर्णुतः। अर्णुवन्ति। आनर्ण। आनृणे। अर्णितासि। आर्णीत्। आर्त्त। आर्णिष्ट। आर्थाः। आर्णिष्ठाः। तृणु अदने। तृणोति। त
र्णोति। तृणुते। तर्णुते। घृणु दीप्तौ। जघर्ण। जघृणे। अथ द्वावनुदात्तेतौ। वनु याचने। वनुते। ववने। चान्द्रमते परस्मैपदी। वनोति। ववान
मनु अवबोधने। मनुते। मेने। डुकृञ् करणे। करोति। अत उत्सार्वधातुके। कुरुतः। यण्। न भकुर्छुरामिति न दीर्घः। कुर्वन्ति। नित्यं करोतेः
।६।४।१०८॥ प्रत्ययोकारस्य नित्यं लोपः स्यात् म्वोः परयोः। कुर्वः। चकर्थ। चकृव। कर्त्ता। करिष्यति। ये च।६।४।१०९॥ कृञ उलोपः स्यात् यादौ प्र
त्यये परे। कुर्यात्। आशिषि। क्रियात्। कृषीष्ट। अकार्षीत्। तनादिभ्य इति लुकोऽभावे ह्रस्वादङ्गादिति सिचो लोपः। अकृत। अकृथाः। सम्परिभ्यां

क्षालिकलकारौ तेन वंक्षंति वंक्षंति इत्यत्रानुस्वारपरसवर्णौ। सिचो लोप इति। न चास्मिन्पक्षे प्रत्ययलक्षणेन ह्रस्वा अकृतेत्यत्र गुणः स्यादिति वाच्यं॥

उच्येति सिन्नः किंत्वेन तन्निषेधात्। संपर्युपेभ्य इति वृत्तिस्थपाठं विहाय भाष्यवार्त्तिकानुसारेणेह संपरिभ्यामिति। इति तनादयः॥ एवं कृस्याद्भाव इति। आत्म

करोतौ भूषणे। ६।१।१३७॥ समवाये च। ६।१।१३८॥ सम्परिपूर्वस्य करोतेः सुट् स्याद्भूषणे सङ्घे चार्थे। संस्करोति। अलङ्करोतीत्यर्थः। स
स्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। सम्पूर्वस्य क्वचिदभूषणेऽपि सुट्। संस्कृतम्भक्षा इति ज्ञापकात्। परिनिविभ्य इति षः। परिष्करोति। सिवादीनां वा
पर्यष्कार्षीत्। पर्यस्कार्षीत्। उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च। ६।१।१३९॥ उपात्कृञः सुट् स्यादेष्वर्थेषु। चात्प्रागुक्तयोरर्थयोः। प्रतियत्
नो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्यस्याध्याहारः। आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या। अलङ्कृतेत्यर्थः। उपस्कृता ब्रा
ह्मणाः। समुदिता इत्यर्थः। एधोदकस्योपस्कुरुते। गुणाधानं करोतीत्यर्थः। उपस्कृतम्भुङ्क्ते। विकृतमित्यर्थः। उपस्कृतं ब्रूते। वाक्याध्याहारेण
ब्रूते इत्यर्थः। सुट्कात्पूर्वः। ६।१।१३५॥ अडभ्यासव्यवायेऽपीत्युक्तम्। सञ्चस्कार। कात्पूर्व इत्यादि भाष्ये प्रत्याख्यातम्। तथा हि पूर्वं धातुरुपसर्गेण
युज्यते। अन्तरङ्गत्वात्सुट्। ततो द्वित्वम्। एवं च। ऋतश्च संयोगादेर्गुणः। सञ्चस्करतुः। कृसृभृ इति सूत्रे ऋतो भारद्वाजस्येति सूत्रे च कृञो सुट इति
वक्तव्यम्॥ तेन स सुट्कात्परस्येट्। सञ्चस्करिथ। सञ्चस्करिव। गुणोऽर्तीति सूत्रे नित्यं छन्दसीति सूत्रान्नित्यमित्यनुवर्तते। नित्यं यः संयोगादिस्तस्य
त्वर्थात्सुटि गुणेन। संस्क्रियात्। ऋतश्च संयोगादेरिति लिङ्सिचोर्नेट्। एकाच उपदेश इति सूत्रादुपदेश इत्यनुवर्त्य उपदेशे यः संयोगादिरि
ति व्याख्यानात्। संस्कृषीष्ट। समस्कृत। समस्कृषाताम्॥ इति तनादयः॥ डुक्रीञ् द्रव्यविनिमये। क्र्यादिभ्यः श्ना। ३।१।८१॥ क्रीणाति। ई हल्यघोः।
क्रीणीतः। ईत्वात्पूर्वं झेरन्तादेशः परत्वान्नित्यत्वादन्तरङ्गत्वाच्च। एवं कृस्याद्भावः। ततः श्नाभ्यस्तयोरात इत्याल्लोपः। क्रीणन्ति। क्रीणीते। क्रीणाते। क्रीण
ते। चिक्राय। चिक्रियतुः। चिक्रयिथ। चिक्रेथ। चिक्रियिव। चिक्रियिषे। क्रेता। क्रेष्यति। क्रीयात्। क्रेषीष्ट। अक्रैषीत्। अक्रेष्ट। प्रीञ् तर्पणे कान्तौ च
कान्तिः कामना। प्रीणाति। प्रीणीते। श्रीञ् पाके। मीञ् हिंसायाम्। हिनुमीना। प्रमीणाति। प्रमीणीते। मीनातिमिनोतीत्यात्त्वविषये आत्त्वम्। ममौ॥

उ.

सि॰ कौ॰ टी॰ न॰ ४६

तेपदेष्वनन्तरस्य नेन। सौत्रा इति। नकारोपधा इत्यपि ज्ञेयाः। विष्टभ्नोतीति। अनिदितामिति नलोपः। स्तम्भेरिति षत्वं। वेस्कभ्नातेर्नित्यं। सिवादीनां चेत्यतो वेति नानुवर्ती
नेरस्ते ष्वननार्थमिह नित्यग्रहणं। विस्कभ्नोतीति। स्कभ्नातेरिति श्नाविशिष्टं रूपं न विवक्षितं किंतु धातुमात्रं। अन्यथा विष्कंभिता विष्कंभितमित्यादावपि

मिम्यतुः। ममिथ। ममाथ। मिम्य। माता। मास्यति। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। षिञ् बन्धने। सिनाति। सिनीते। सिषाय। सिषे। सेता। स्कुञ् आप्रवणे। स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यश्श्नुश्च। ३।१।८२। चात् श्ना। स्कुनोति। स्कुनुते। स्कुनाति। स्कुनीते। चुस्काव। चुस्कुवे। स्कोता। अस्कौषीत्। अस्कोष्ट। स्तम्भ्वादयश्चत्वारः सौत्राः। सर्वे रोधनार्था इत्येके। माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ। द्वितीयो निष्कोषणार्थः। चतुर्थो धारणार्थ इत्याह। सर्वे परस्मैपदिनः। नलोपः। विष्टभ्नोति। विष्टभ्नाति। अवष्टभ्नोति। अवष्टभ्नाति। अवतष्टम्भ। जृस्तम्भु इत्यङ् वा। व्यष्टभत्। व्यष्टम्भीत्। स्तुभ्नोति। स्तुभ्नाति। वेः स्कभ्नातेर्नित्यम्। ८।३।७७। वेः परस्य स्कभ्नातेः सस्य षः स्यात्। विष्कभ्नोति। विष्कभ्नाति। स्कुभ्नोति। स्कुभ्नाति। हलः श्नः शानज्झौ। ३।१।८३। हलः परस्य श्नः शानजादेशः स्याद्धौ परे। स्तभान। स्तुभान। स्कभान। स्कुभान। स्तम्भुहीत्यादि। युञ् बन्धने। युनाति। युनीते। योता। क्नूञ् शब्दे। क्नूनाति। क्नूनीते। क्नविता। द्रूञ् हिंसायाम्। द्रूणाति। द्रूणीते। पूञ् पवने। प्वादीनां ह्रस्वः। ७।३।८०। शिति परे। पुनाति। पुनीते। पविता। लूञ् छेदने। लुनाति। लुनीते। स्तॄञ् आच्छादने। स्तृणाति। स्तृणीते। तस्तार। तस्तरतुः। स्तरिता। स्तरीता। स्तृणीयात्। स्तृणीत। आशिषि। स्तीर्यात्। लिङ्सिचोरिति वेट्। न लिङीति वृत इटो लिङि दीर्घो न स्यात्। स्तरिषीष्ट। उश्चेति कित्त्वम्। स्तीर्षीष्ट। सिचि च परस्मैपदेष्विति न दीर्घः। अस्तारीत्। अस्तारिष्टाम्। अस्तरिष्ट। अस्तीर्ष्ट। कॄञ् हिंसायाम्। कृणाति। कृणीते। चकार। चकरे। वृञ् वरणे। वृणाति। वृणीते। ववा((र। ववरे। वरिता। वरीता। अवा[illegible]

ष्टुत्वं न स्यात्। न चेष्टापत्तिः। माधवादिग्रन्थविरोधादिति भावः। हलः श्नः। स्तभानेति। अतो हेरित्यारंभसामर्थ्यान्न संनिपात
परिभाषया अप्रवृत्तेर्हेर्लुक्। अत एव जहीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः। यत्तु केश्चिन्श्नानजादेशो धातुपाठपठितेभ्यः परस्य श्नो

भवति न तु सौत्रेभ्य इति व्याख्यायतस्मीहीत्युदाहृतं। तन्निःप्रमाणं। माधवादिग्रंथविरुद्धं च। प्वादीनां ह्रस्वः। ष्ठिवुक्लमुचमामित्यतः शितीत्यनुवर्तत इत्याह। अशिति
पर इति। नलिङीति। अनेन वृत इटो लिङि दीर्घो नेति स्मारितं। उदोष्ठ्य। इतोष्ठ्योपि ओष्ठ्यग्रहणेन गृह्यत इत्याह॥ ॥ वूर्यादिति। वरिशीष्टेति। लिङ्सिचो।

वूर्यात्। वरिषीष्ट। वूर्षीष्ट। अवारीत्। अवारिष्टाम्। अवरिष्ट। अवरीष्ट। अवूर्ष्ट। धूञ् कम्पने। धुनाति। धुनीते। दुधविथ। दुधोथ। दुधुविव। धोता। ध
विता। स्तुसुधूञ्भ्य इतीट्। अधावीत्। अधविष्ट। अधोष्ट। अथ वध्यात्यन्ताः परस्मैपदिनः। शॄ हिंसायाम्। शॄदॄप्रां ह्रस्वो वेति ह्रस्वपक्षे यण्। अन्यदा ऋ
च्छत्यॄतामिति गुणः। शश्रतुः। शशरतुः। श्र्युकः कितीति निषेधस्य क्रादिनियमेन बाधः। शशरिव। शश्रिव। शरिता। शरीता। शृणीहि। शीर्य्या
त्। अशारिष्टाम्। पॄ पालनपूरणयोः। पप्रतुः। पपरतुः। आशिषि। पूर्य्यात्। वॄ वरणे। भरण इत्येके। भृ भर्त्सने। भरणेप्येके। मॄ हिंसायाम्। मृणाति।
ममार। दॄ विदारणे। दद्रतुः। ददरतुः। जॄ वयोहानौ। झॄ इत्येके। धॄ इत्यन्ये। नॄ नये। कॄ हिंसायाम्। ॠ गतौ। ऋणाति। आ[illegible]स्त्वकार। अरिता। आर्णीत्। आ
र्णीताम्। ईर्य्यात्। आरीत्। आरिष्टाम्। गॄ शब्दे। ज्या वयोहानौ। ग्रहिज्या। हलः। अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात्।
इति दीर्घे कृते। प्वादीनां ह्रस्वः। जिनाति। जिज्यौ। जिज्यतुः। री गतिरेषणयोः। रेषणं वृकशब्दः। ली श्लेषणे। विभाषा लीयतेरित्येज्विषये आत्व
म्। ललौ। लिलाय। लाता। लेता। व्ली वरणे। व्लिनाति। प्ली गतौ। वृत्। ल्वादयो वृत्ताः। प्वादयोपीत्येके। व्री वरणे। भ्री भये। भरण इत्येके। क्षीष् हिंसाया
म्। एषां त्रयाणां ह्रस्वः। केचिन्मते तु न। ज्ञा अवबोधने। ज्ञाजनोर्जा। जानाति। दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः। बन्ध बन्धने।

[illegible]नेपदेष्विति वेट्। अकर्षीष्टेति। उश्चेति लिङ्सिचोः कित्त्वाद्गुणाभावे सत्युत्वं। हलः। संप्रसारणस्येत्यनुवर्तते। अंगस्येत्यवयवषष्ठी। हल इति पंचमी। तदेत
दाह। अंगावयवादिति। अंगावयवात्किं। निरुतं। दुरुतं। न इंतत्[illegible]स्य किं। विध्यति। क्षीष् हिंसायां। चिन्वाद्रुः क्षिया। हेति क्षियायां। क्षियाशीः रिन्त्वादेः क्षिया धर्म
व्यतिक्रम आचारभेद इति वक्ष्यति। दीर्घनिर्देशसामर्थ्यादिति। ननु दीर्घग्रहणेन अंगवृत्तपरिभाषा ज्ञाप्यत इत्याकरे स्थितं। अन्यथा ज्ञाजनोर्जेति विदध्यात्।

३

प्र·कौ· अतो दीर्घो यञीति दीर्घसिद्धेः। तथा च दीर्घनिर्देशसामर्थ्यस्योपक्षयात्कथमिह ह्रस्वाभावसिद्धिरिति चेत्। अत्राहुः। ह्रस्वाभावे सत्येव दीर्घनिर्देश उक्तपरिभाषाया ज्ञा-
टी·न पकः सति तु ह्रस्वे पुनरंगकार्यप्रवृत्तमेवेति न ज्ञापकः। तथा च ह्रस्वाभावसिद्धौ न किंचिद्बाधकमिति किंच। अंगवृत्ते पुनर्वृत्तावविधिरिं स्थैव परिभाषा शास्त्रीरा-
त्रयोक्तज्ञापकात्सिद्धा। यद्वि तु युष्मदोः स्यम इति सूत्रे भाष्ये परिनिष्ठितस्यैव पाठः सर्हि सनन्त्रमेव । वनेन न तु ज्ञापकसिद्धमिति पक्षोऽपि युष्मदस्मच्छब्द

वध्नाति। बबन्धिथ। बबन्ध। बन्धा। बन्धारौ। भंत्स्यति। बधान। अभांत्सीत्। पूर्वत्रासिद्धमिति भष्भावात्पूर्वं झलो झलीति सिज्लोपः। प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न। प्रत्ययलक्षणमप्यतिसिज्लोपस्यासिद्धत्वात्। अबन्द्धाम्। अभान्त्सुः। वृङ् संभक्तौ। वृणीते। वव्रे। ववृषे। वरिता। वरीता। अवरिष्ट। अवरीष्ट। अवृत। श्रन्थ विमोचनप्रतिहर्षयोः। इतः परस्मैपदिनः। श्रथ्नाति। श्रन्थियग्रन्थी स्यादिना कित्वपक्षे एत्वाभ्यासलोपावप्यत्र वक्तव्यौ। इति हरदत्तादयः। श्रेथतुः। श्रेथुः। इदङ्कित्वमपि नामपीति सुधाकरमते। श्रेथिथ। अस्मिन् पिपक्षे णलि। शश्राथ। उत्तमे तु शश्रथ। शश्रथेति माधवः। तत्र मूलं मृग्यम्। मन्थ विलोडने। ग्रन्थ ग्रन्थसन्दर्भे। अर्थभेदात् ग्रन्थेः पुनः पाठः। रूपं तूक्तम्। कुन्थ संश्लेषणे। संक्लेशे इत्येके। कुथ्नाति। चुकुन्थ। कुथ इति दुर्गः। चुकोथ। मृद क्षोदे। मृद्नाति। मृदान। मृड च। अयं सुखेऽपि दृष्टव्यम्। मृड्णाति। गुध रोषे। गुध्नाति। कुष निष्कर्षे। कुष्णाति। कोषिता॥ ॥ ९ गतमनोरमा ग्रंथाद्वगम्यते तस्मिंस्तु पक्षे दीर्घ-

ग्रहणसामर्थ्येनोपक्षीणमिति सम्यगेवायं ग्रंथ इति। केचित्तु संज्ञापूर्वकविधेरनित्यत्वान्न ह्रस्व इति व्याख्येयमित्याहुः॥ ॥ वध्नातीति। अनिदितामिति नलोपः। अभान्त्सीदिति। वदव्रजेति वृद्धिः। भष्भावः। अबान्द्धामिति। झषस्तथोरिति तस्य धत्वं। झरो झरीति वा लोपः। वृङ् संभक्तौ। भक्तिर्भजनं। श्रंथ कि-
त्वपक्षे इति। श्रंथिग्रंथिदंभीनां लिटः कित्त्वं वेति व्याकरणांतरमित्युक्तत्वात्॥ ॥ ॥ ॥ ॥

निरः कुषः। स्वरतीति सूत्राद्वेत्यनुवर्तते आर्द्धधातुकस्येडित्यधिक्रियत एवेत्याह। वलादेरित्यादि। निरः किं। कोषिता। कोषितुं। निरकुषदिति। इडभावे क्तः ॥ स
हिंसा साहचर्यादिति। यद्यपि षह षुह चक्यर्थ इति दिवादिरपि सहिरस्ति तथापि सहेति श्यपा निर्देशात् भौवादिकेनैव सहिना साहचर्यमित्याहुः। श्यन्प्र
यादिति। बहुव्रीहिरयं। श्यन्प्रत्ययवत इषेस्तकारे परत इड्विकल्पप्रतिषेध इति वार्तिकार्थः। तथा च दैवादिकाद्विकल्पो नेति फलितं। एवं चतीर्ष्वहेत्य

निरः कुषः ७।२।४६॥ निरः परात्कुषो वलादेरार्द्धधातुकस्य इड्वा स्यात्। निष्कोषिता। निष्कोष्टा। निरकोषीत्। निरकुक्षत्। क्षुभ संचलने।
क्षुभ्नादिषु च ८।४।३९॥ क्षुभ्नाति। क्षुभ्नीतः। क्षोभिता। क्षुभाण। णभ तुभ हिंसायां। नभ्नाति। तुभ्नाति। नभते। तोभते। इति शपि। नभ्यति।
तुभ्यतीति श्यनि। क्लिशू विबाधने। ग्र्यादिति ष्टुत्वनिषेधः। क्लिश्नाति। क्लेशिता। क्लेष्टा। अक्लेशीत्। अक्लिक्षत्। अश भोजने। अश्नाति।
आश। उध्रस उञ्छे। उकार इत्। ध्रस्नाति। उकारो धात्ववयव इत्येके। उध्रसांचकार। इष आभीक्ष्ण्ये। पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम्।
इष्णाति। तीषसहेत्यत्र सहिना साहचर्याद्विकरणस्य तौदादिकस्यैव इषेर्ग्रहणं न त्विष्यतीष्णात्योरित्याहुः। एषिता।
वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः। तथा च वार्तिकम्। इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति। विष विप्रयोगे। विष्णाति। वेष्टा। प्रुष प्लुष
स्नेहनसेवनपूरणेषु। प्रुष्णाति। प्लुष्णाति। पुष पुष्टौ। पोषिता। मुष स्तेये। मोषिता। खच भूतप्रादुर्भावे। भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः। ख
ञ्जाति। वान्तोऽयमित्येके। च्छ्वोः शूडनुनासिके च ६।४।१९॥ सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् एतौ स्तः क्वौ झलादौ च।
क्ङिति। खौनाति। चखाव। खविता। शानचः परत्वाद् ऊठि कृते हलन्तत्वाभावान्न शानच्। खौनीहि। हिठ च। ष्टुत्वम्। हिठ्णाति। ग्रह उपादाने। स्वरि

त्र इष्णातेरपि ग्रहणमिति बोध्यं। पोषितेति। अनिट्सु पुष्येति श्यना निर्देशादयं सेडिति भावः। च्छ्वोः शूडनुनासिके इति सतुक्कस्यानुकरणं। तुक्त्वेन सकारस्यानेव
कार इत्याह। सतुक्कस्येति। एवं च सूत्रे छकारात्पूर्वं चकारो न्नेयः। सतुक्कस्य किं। विच्छ प्रच्छाभ्यां नङ्प्रत्यये छकारस्य शकारे कृते तुकोऽश्रवणं यथा स्यात्
अकृतव्यूहपरिभाषा त्वनित्या। अस्मादेव सतुक्कग्रहणात् तेनानित्याऽभवकं तमतिभवकानित्यादि सिद्धमित्याहुः। सूत्रस्थेन च शब्देन क्विझलोः क्ङितीत्यनुकृ

उ·

सि·कौ· ग्रहोऽलिटि दीर्घः। एकाचः किम्। जाग्रहिता। जाग्रहिष्यति इत्यादौ यङ्लुकि मा भूत्। विहितः स्येति किम्। ग्राहिता। न चात्र णिलोपस्य स्थानिवद्भावात् ग्रहेः परत्वं
टी·त· नेति वाच्यं दीर्घविधौ स्थानिवत्त्वनिषेधात्। त्रैपादिके दीर्घविधावेव स्थानिवत्त्वनिषेध इत्यभ्युपगमे तु विहितविशेषणं व्यर्थमेवेत्याहुः। ग्रह्णतस्येत्

ग्रहोऽलिटि दीर्घः। ७।२।३७॥ एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यात् न तु लिटि। ग्रहीता। लिटि तु जग्रहिथ। गृह्यात्। ग्रहीषीष्ट। ह्म्यन्तेति न वृद्धिः। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम्। अग्रहीषत॥ इति क्र्यादयः॥ चुर स्तेये। सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्। ३।१।२५॥ एभ्यो णिच् स्यात्। चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु स्वार्थे। पुगन्तेति गुणः। सनाद्यन्ता इति धातुत्वम्। तिप्शबादि गुणायादेशौ। चोरयति। णिचश्च। १।३।७४। णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले। चोरयते। चोरयामास। चोरयिता। चोर्यात्। चोरयिषीष्ट। णिश्रीति चङ्। णौचङीति ह्रस्वः। चङीति द्वित्वम्। हलादिः शेषः। दीर्घो लघोरित्यभ्यासदीर्घः। अचूचुरत्। अचूचुरत। चिति स्मृत्याम्। चिन्तयति। अचिचिन्तत्। चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्। तेन चिन्त्यात्। चिन्त्यते इत्यादौ नलोपो न। चिन्तति। चिन्तेत्। एतच्च ज्ञापकं सामान्यापेक्षमित्येके। अत एव हलन्त्यत्र वृत्तिकृता जगणतुः जगणुः इत्युदाहृतत्वात्। विशेषापेक्षमित्यपरे। अत एव घृषादेर्हुतस्य न वैयर्थ्यम्। यत्रि संकोचे। यन्त्रयति। यन्त्रेति पठितुं शक्यम्। यत्तु इदित्करणं यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम्। एवं कुद्रि तन्त्रिमन्त्रिषु। स्फुडि परिहासे। स्फुण्डयति। इदित्करणात्। स्फुण्डति। स्फुटीति पाठान्तरम्। स्फुण्टयति। लक्ष दर्शनाङ्कनयोः। कुद्रि अनृतभाषणे। कुन्द्रयति। लड उपसेवायाम्। लाडयति। मिदि स्नेहने। मिन्दयति। मिन्दति। ओलडि उत्क्षेपणे। ओलण्डयति। ओलण्डति॥

११ ग्रहोऽलिट ग्राहिता ग्राहिष्यत इत्यादौ चिण्वदिटो न दीर्घः। ग्रहीषीष्टेति। ऋत इत्यनुवृत्ते र्नल्लिङीति दीर्घनिषेधो न प्रवर्तते। अग्रहीषातामिति। लुङात्मनेपदद्विवचनं॥ इति क्र्यादयः॥ सत्यापपाशे

एतस्योदाहरणानि अग्रे नामधातुषु स्फुटीभविष्यन्तीति नास्माभिरुपपाद्यते। लवचप्रत्ययोऽकारान्तः। प्रपंचार्थमिति। सन्यापग्रहणं तु आपुगर्थमिति ह्येषां। अन्ये त्वाहुः। सापेक्षेभ्योऽपि णिजर्थमेषामुपादानं। अन्यथा रमणीयं घटं करोतीत्यादावपि विरमणीयं रूपयतीत्यादावपि लिङ्गनस्यादिति। अचूचुरदिति। अत्र प्राचां पाठस्यात्रासन्वल्लघुनीति सन्वद्भाव इत्युक्तं तद्भ्रमात्। सन्वद्भावविषये हि जायमानो दीर्घः सन्वद्भावेनापेक्षत इति। सामान्यापेक्षमिति। सर्वैर्विचुरादयो विकल्पेन णिचं लभन्त इत्येतदर्थकमित्यर्थः। न चैवमाधृषाद्वेति व्यर्थमिति वाच्यं। ज्ञापकसिद्धस्यासार्वत्रिकत्वात्। एवं चास्मिन्पक्षे आधृषीयाणामेवैच्छिको विकल्पः। अन्येषां तु शिष्टप्रयोगाद्व्यवस्थित इत्यर्थः। जगाण। जगणतुरिति। वृत्तौ च काणचकणतुरिति प्रचुरः पाठस्तस्मिंस्तु पाठे नास्त्येव प्रकृतार्थसिद्धिः न केचित्तु णिजभावे गणयामासेत्यादिरूपाभावेऽपि गणधातोरदन्तत्वाद्गणयामासेत्याद्यसंभवितव्यमिति जगाणेत्यादिपाठश्चिंत्य इत्याहुः। न वैयर्थ्यमिति। वै

ओकार इदित्येके। लण्डयति। लण्डति। उकारादिरयमित्यन्ये। उलण्डयति। जल अपवारणे। लज इत्येके। पीड अवगाहने। पीडयति

यर्थ्यशंकापि नेत्ययमेव पक्षो युक्त इति भावः। न च पूर्वोक्तपक्षस्य शिथिलत्वे जगाण जगणतुरिति वृत्तिप्रयोगः कथं संगच्छतामिति शंक्यं। भ्वादेराकृतिगणत्वात् तत्रत्यधातोरूपसिद्धेः। तच्चिंत्यमिति। यत्रितत्रिमन्त्र्यादिषु इकारो व्यर्थ एव न तु ज्ञापनार्थः। तेषां संयोगान्तत्वात् यंत्र तंत्र मंत्र इति न[illegible]प ठितं व्यनिदितामिति लोपो न लभ्यते नकारस्यानुपधात्वात् चिंत्यादिस्त्वत्र तु चिन्त स्मृत्यामिति नकारोपधपाठेन लोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः। लडि। स्नेहपूर्विका सेवा उपसेवा। लाडयति पुत्रं। लडयोरभेदाल्लालयति॥ ॥ ओकार इदित्येक इति। ओदित्करणमोदितश्चेति धातोरव्यवहितस्य निष्ठानकारस्य नत्वार्थमिति तद्बलान्नेडित्येके। लण्णः। ओदित्त्वलाद्व्यवधानेऽपि नत्वमित्यन्ये। लंडितः। पीड अवगाहने॥ ॥

सि·कौ· भ्राजभासेति ह्रस्वपक्षे सन्वद्भावविषयत्वाद्दीर्घो लघोरित्यभ्यासस्य दीर्घः। ह्रस्वाभावपक्षे तु न दीर्घ इत्याह। अपीपिडदित्यादि। पॄ पूरणे। दीर्घोच्चारणमित्या

टि·त· भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्। ७।४।३। एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ। अपीपिडत्। अपिपीडत्। नट अवस्य

८२ न्दने। अवस्यन्दनं नाट्यम्। श्रथ प्रयत्ने। प्रस्थाने इत्येके। बध संयमने। बाधयति। बन्धेति चान्द्राः। पॄ पूरणे। पारयति। दीर्घोच्चारणं णिचः।
पाक्षिकत्वे लिङ्गं तद्धि सेट्कत्वाय। एवम्पृणाति पिपर्तिभ्याम्परितेत्यादिसिद्धावपि परति परत इत्यादिसिद्धिः फलम्। ऊर्ज बलप्राणनयोः। प
क्ष परिग्रहे। वर्ण चूर्ण प्रेरणे। वर्ण वर्णने इत्येके। प्रथ प्रख्याने। प्राथयति। नान्ये मितोऽहेताविति वक्ष्यमाणत्वान्नास्य मित्त्वम्। अत्स्मृदॄ
त्वरप्रथम्रदस्तॄस्पशाम्। ७।४।९५। एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ। इत्वापवादः। अपप्रथत्। पृथ प्रक्षेपे। उऋत्। ७।४।७। उ
पधाया ऋवर्णस्य स्थाने ऋत् स्याद्वा चङ्परे णौ। इरारामपवादः। अपीपृथत्। अपपर्थत्। पथ इत्येके। पाथयति। षम्ब सम्बन्धने। सम्बय
ति। अससम्बत्। शम्ब च। अशशम्बत्। साम्ब इत्येके। भक्ष अदने। कुट्ट छेदनभर्त्सनयोः। पूरण इत्येके। कुट्टयति। पुट्ट चुट्ट अल्पीभावे। अ
ट्ट षुट्ट अनादरे। अट्टयति। अयं दोपधः। ष्टुत्वस्यासिद्धत्वान्न न्द्राः इति निषेधः। आटिट्टत्। लुण्ठ स्तेये। लुण्ठयति। लुण्ठतीति। लुण्टि स्तेये॥ इ
तिभौवादिकस्य। शठ श्वठ असंस्कारगत्योः। श्वठि इत्येके। तुजि पिजि हिंसाबलादाननिकेतनेषु। तुञ्जयति। पिञ्जयति। इदित्करणात्
तुञ्जति। पिञ्जति। तुजपिजेति केचित्। लजि लुजि इत्येके। पिस गतौ। पेसयति। पेसतीति तु शपि गतम्। षान्त्व सामप्रयोगे। श्वल्क वल्क परि
भाषणे। ष्णिह स्नेहने। स्फिट इत्येके। स्मिट अनादरे। अषोपदेशत्वान्न षः। असिस्मिटत्। स्मिङ् अनादरे इत्येके। ङित्त्वस्यावयवेऽचरितार्थ
त्वात्सिजन्तात्तङ्। स्माययते। श्लिष श्लेषणे। पथि गतौ। पन्थयति। पन्थति। पिच्छ कुट्टने। छदि संवरणे। छन्दयति। छन्दति। श्रण दाने।

टि· पारयतीत्यादिरूपाणि ह्रस्वोच्चारणेऽपि सिध्यन्तीति परतीत्याद्यर्थं दीर्घोच्चारणमित्यर्थः। अत्र वदन्ति। धातुपाठकृता पाणिनिना विधिष्वेव उदात्ता अनु[illegible]

श्चपठिताः। नहि ऋकारान्ताः सेट्काः इति। तेन परिभाषितं येनेत्यंतस्यार्थः कल्प्येत। कविकल्पद्रुमे त्वस्य नित्यण्यन्तत्वमुक्तमिति। एवं चास्मिन् पक्षे दीर्घोच्चारणं व्यर्थमिति
प्रायेण। यंविपूर्वः। विश्राणयति। नड आघाते। नाडयति। खड खडि भेदने। खाडयति। खण्डयति । कुडि रक्षणे। गुडि वेष्टने रक्षणे इत्ये
के। कुठि इत्यन्ये। अवकुण्ठयति। अवकुण्ठति। गुठि इत्यपरे। खुडि खण्डने। वडि विभाजने। विडि इत्येके। मडि भूषायां हर्षे च। भडि कल्याणे।
छर्द वमने। पुस्त बुस्त आदरानादरयोः। चुद संचोदने। नक्क धक्क नाशने। णोपदेशलक्षणे पर्युदस्तोऽयम्। प्रनक्कयति। चक्क चुक्क व्यथने
क्षल शौचकर्मणि। तल प्रतिष्ठायाम्। तुल उन्माने। तोलयति। अतूतुलत्। कथं तुलयति तुलना इत्यादि। अतुलोपमाभ्यामिति निपात
नाददन्तस्य तुलाशब्दस्य सिद्धो नतो णिच्। दुल उत्क्षेपे। पुल महत्त्वे। चुल समुच्छ्राये। मूल रोहणे। कल क्षेपे। बिल भेदने। तिल
स्नेहने। चल भृतौ। पाल रक्षणे। लूष हिंसायाम्। शुल्व माने। शूर्प च। चुट छेदने। मुट संचूर्णने। पडि पसि नाशने। पण्डयति। पण्डति
पंसयति। पंसति। व्रज मार्गसंस्कारगत्योः। शुल्क अतिस्पर्शने। चपि गत्याम्। चम्पयति। चम्पति। क्षपि क्षान्त्याम्। क्षम्पयति। क्षम्पति। छ
जि कृच्छ्रजीवने। श्वर्त गत्याम्। श्वभ्र च। ज्ञप मिच्च॥ अयं ज्ञाने ज्ञापने च वर्त्तते। मितां ह्रस्वः। मितामुपधाया ह्रस्वः स्या
ण्णौ परे। ज्ञपयति। यम च परिवेषणे। चान्मित्। परिवेषणमिह वेष्टनम्। न तु भोजनम्। नापि वेष्टना। यमयति चन्द्रं। परिवेष्टत इत्यर्थः। च
ह परिकल्कने। चहयति। अचीचहत्। कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचचहत्। चप इत्येके। चपय
ति। रह त्यागे इत्येके। अरीरहत्। कथादेस्तु। अररहत्। बल प्राणने। बलयति। चिञ् चयने॥ ११ निफलितो। अन्ये तु दीर्घोच्चारणं परिताप्यर्थ
नित्यादौ वृत्तो वेति इट्। टो दीर्घविकल्पार्थो। ततश्चाणिच्विकल्पः सिद्ध एवेति परतीत्यादि रूपमाहुः। ऊर्ज्ज। ऊर्ज्जयति। बलवान् भवति जीवतीवेत्यर्थः। ऊर्जि
ता जिघ्रतेर्वेत्यतो वेति वर्त्तते। इरा रारामिति। ऋकारोपधे उपधाया ऋवर्णस्य च कृत दित्यादौ इर् प्राप्तः अमीमृजदित्यत्र मृजेर्वृद्धिरारप्राप्तः इत ऋषां ऋदुपधानां ग्र

उ

सि॰कौ॰ लोन। अपीपचदित्यादावर इति विवेकः। नन्विह उरित्यनूद्यमानः सवर्णान् गृह्णाति ऋदिति विधीयमानस्तु न गृह्णाति। तथा च अचीकृपदित्यत्र उर्ऋदित्यने

टी॰त॰ न ऋवर्णे सति अचीकृपदिति न स्यादिति चेत्। मैवं। लत्वस्यासिद्धत्वेन प्रथमम् उर्ऋदित्यस्य प्रवृत्तौ पश्चात् कृपो रो ल इत्यनेन ऋकारैकदेशस्य रेफस्य लकारैकदेशविधानादि

८३ ष्टसिद्धेः। न च चलीक्लृप्यत इत्यादौ रीगागमादेर्लत्वार्थं कृपो रो ल इत्यस्यावश्यकत्वेपि कृपू धातुः क्लृपू सामर्थ्य इत्येवं पठ्यतां एवं हि प्रक्रियालाघवं लभ्यते ऋकारैक

देशस्य लकारैकदेश इति व्याख्यानक्लेशोपि न भवतीति वाच्यं। अचीकृप

दित्यत्र उर्ऋदित्यस्य प्रवृत्तावनिष्टरूपप्रसंगात्। कृपो रो ल इत्यनेन ऋकारैकदेशस्य लकारैकदेश इत्यभ्युपगमे तु उक्तव्याख्यानक्लेशो ध्रौव्यात् इदं च कैयटस्वारस्यात्(?)

संनालिरलोः समा न तउदित्यनेन तपकरणेन ऌवर्णग्राहकत्वरूपासिद्धेः स्पष्टत्वात्। अयं लोपध इति। उपधत्वेनाद्धृतेः इति स्यादिति भावः। शठ [illegible]

ठयति। असंस्कृतो भवति गच्छतीति वेत्यर्थः। स्मायपत इति। आत्वं तु नेह भवति। नित्यं स्मयतेरिति निर्दिष्टत्वात्। स्मिङ् ईषद्धसन इति मो वा इदित्कारेव हेतुमण्णौ त

ह्विवाना त। श्रण दाने। विश्राणनं वितरणं। चुद संचोदने। एयास संप्रथ इति पुचिवोदना। वज मार्ग। वाजयति मार्गयति। केचित्तु मार्गे मिन धात्वन्तरं किं तु संस्क

क एव धातुर्मार्गसंस्कारगत्यौ चेति व्याचख्युः। ज्ञप मिच्च। चाद्ग्यामिन्य के ज्ञपधातुर्णिचं लभते मित्संज्ञकश्चेत्यन्ये। ज्ञाने ज्ञापने चेति विषय इति चेतना। मच्छ्री

व्याख्यामित्यत्र ज्ञाने। घटादयः षित इति सूत्रे ज्ञीप्स्यमानो बोधयितुमिष्यमाण इति व्याख्यया ज्ञापने च प्रयोगदर्शनादिति भावः। वेष्टनमिति। परिवेषणं परिधिरित्यमरः

न त्विहादि। अयं भावः। घटादौ यमोऽपरिवेषणे इति पठितं तत्र परिवेषणमिति हेतुमण्ण्यन्तस्य रूपं। हेतुमण्ण्यन्तस्य हि भोजनावेष्टनाद्यर्थः। तथा च परिवेषण

इत्यनेन भोजनानोवेष्टनात् श्चान्यत्र मित्वनिषेधे पित्तयोरर्थयोस्त्वमन्तत्वादेव मित्वसिद्धेरिति। यद्यपि घटादौ यमच्छतिभोजनातोऽन्यत्र मिन्नेति व्याख्यातं त

थाप्यत्र स्वग्रंथानुगुण्येनोपलक्षणतया तद्व्याख्येयमित्याहुः। अत्रेदं बोध्यं। घटादौ यमोऽपरिवेषणे इत्यत्र परिपूर्वकस्य विषेर्णिजन्तस्य ल्युटि रूपं यम च

परिवेषणे इत्यत्र तु केवलस्यैव ल्युटि रूपं न तु णिजन्तस्य। तथा च भोजनावेष्टनायां अपि परिवेषणशब्दार्थत्वादुभयत्राप्यमन्तत्वेनैव मित्वं सिध्यति(?) वेष्ट

नेतु अपरिवेषणे इत्यनेन अमन्तत्वप्रयुक्तमित्वस्य निषेधेऽपि यम च परिवेषणे इत्यनेन मित्वं सिध्यतीति दिक्॥ ॥ ॥

विस्फुरोर्णौ। आदेच उपदेशे इत्यत आदित्यनुवर्तते विभाषा लीयतेरित्यतो विभाषाग्रहणं चानुवर्तत इत्याह। आत्वं वा स्यादिति। अर्तिह्री। परत्वादन्तरङ्गत्वाच्च आतो पुक्
पश्चाद्गुणः। अर्पयति। ह्रेपयति। ब्लेपयति। रेपयति। यलोपः। क्नोपयति। क्ष्मापयति। स्थापयति। चपयतीति। वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषानुवृ
ते। आतो नुपसर्गे इति कबाधनाय ह्वावामश्चेत्यारंभादिति भावः। ज्ञपादिभ्य इति। मुख्यमते पंच ज्ञपादयः। मतान्तरे तु सप्त। चूर्णान्त इत्येके। पुलेत्यन्ये इत्यादिदृशे
पुपाठशुद्धिर्निर्णेतुमशक्या। अत एव क्षीरस्वामिनोक्तं। पाठोऽर्थश्चागमभ्रंशान्महतामपि मोहकृत्। नविघ्नः किं जहीमोऽत्र किमुपादद्महे वयमिति। चूर्ण

विस्फुरोर्णौ। ६।१।५४॥ आत्वं वा स्यात्। अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ। ७।३।३६॥ चपयति। चययति॥ त्रित्करणसामर्थ्यादस्य
णिज्विकल्पः। चपते। प्रणिचपयति। प्रनिचपयति। नान्ये मितोऽहेतौ॥ अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः। तेन शमादीनाम
मन्त्वमप्युक्तमित्यन्ये। घट्ट चलने। मुस्त संघाते। खट्ट संवरणे। षट्ट स्फिट्ट चुबि हिंसायाम्। पूल संघाते। पूर्ण इत्येके। पुलेत्यन्ये। पुंस
अभिवर्द्धने। टकि बन्धने। टङ्कयति। टङ्कति। घूस कान्तिकरणे। घूसयति। दन्त्यान्तः। मूर्धन्यान्त इत्येके। तालव्यान्त इत्यपरे। कीट वर्णे।
चूर्ण संकोचने। पूज पूजायाम्। अर्क स्तवने। तपन इत्येके। शुठ आलस्ये। शुठि शोषणे। शुण्ठयति। शुण्ठति। जुड प्रेरणे। गज मार्ज
शब्दार्थौ। गाजयति। मार्जयति। मर्च च। मर्चयति। घृ प्रस्रवणे। स्रावण इत्येके। पचि विस्तारवचने। पञ्चयति। पञ्चत इति व्यक्तार्थ
स्य श्नापि गतम्। तिज निशाने। तेजयति। कृत संशब्दने। उपधायाश्च। ७।१।१०१॥ धातोरुपधाभूतस्य ॠत इत् स्यात्। रपरत्वम्। उपधा
याश्चेति दीर्घः। कीर्तयति। उर्ऋत्। अचीकृतत्। अचिकीर्तत्। वर्द्ध छेदनपूरणयोः। कुबि आच्छादने। कुम्बयति। कुभि इत्येके। लुबि

चूर्णादिषु पाठभ्रंशः। वजधातोर्मार्गसंस्कारोऽर्थ उत संस्कार एवेत्यर्थभ्रंशः। आगमभ्रंशात्। शास्त्रभ्रंशात्। चूर्ण संकोचने। प्रेरणे पठितस्य पुनः पाठोऽर्थभेदकृतः। मर्च च
ति। क्वचिदनुपाठोऽस्या दृष्टत्वेऽपि नायमप्रामाणिक इति मन्तव्यमिदं चोत्यान्तुपर इति सूत्रे कैयटेनास्योपन्यस्तत्वात्। मर्तो मर्जं मर्चयति हृयेनेति प्रयोगदर्शना
च्च। उपधायाश्च। ॠत इद्धातोरिति वर्तत इत्याह। धातोरुपधाया इति। ननु ॠत इद्धातोरिति सूत्रे धातोर्ॠत इति वैयधिकरण्येन व्याख्याने सिद्धमिष्टमिति

किमनेनसूत्रेणेतिचेन्नमैवं। तथाहि सति। ऋकारीयतीत्यत्रापि इत्त्वप्रसंगात्॥ ॐ ॥ अर्दनइत्येक इति। अत्र वदंति। अर्द नेलुर्विवित्तु वीभ्वादौ पठितौ। तयोस्तत्रत्या
ठो वृथास्यादिति त्वादेवलुंवतितुंवतीत्यादि रूपसिद्धेः। अदर्शने त्वर्थः। धर्मभेदात्भ्वादिपाठः सार्थक इत्यर्दनार्थत्वं चौरादिकयोरयुक्तमित्यस्वरसादेक इत्युक्तं।
मिति। म्लक्ष म्लेच्छने। म्लक्षणेप्ययं। तच्चनैत्वादिना ऽभ्यंजनं। म्रक्षयति। अमम्रक्षत्। गुर्द पूर्वनिकेतने। गूर्दयति। पूर्वयति। केचित्तु पूर्वनिकेतनेइतिपठित्वा गु

अर्द नेइत्येके। ह्रूप व्यक्तायांवाचि। क्षूपेत्येके। चुटिछेदने। इलप्रेरणे। एलयति। ऐलिलत्। म्लक्ष म्लेच्छने। म्लेच्छ अव्यक्तायांवाचि। ब्रू
सवर्ह हिंसायाम्। केचिदिह गर्ज गर्द शब्दे। गर्ध अभिकांक्षायामिति पठन्ति। गुर्द पूर्वनिकेतने। जसि रक्षणे। मोक्षणइतिकेचित्। जंसयति।
जंसति। ईड स्तुतौ। जसु हिंसायाम्। पिडि सङ्घाते। रुष रोषे। रुट इत्येके। डिप क्षेपे। ष्टुप समुच्छ्राये। आकुस्मादात्मनेपदिनः। कुस्म नाम्नो
वेतिवक्ष्यतेतमभिव्याप्येत्यर्थः। अकर्तृगामिफलार्थमिदम्। चित सञ्चेतने। चेतयते। अचीचितत्। दशि दंशने। दंशयते। अददंशत्
इदित्त्वाल्लिजभावे। दशति। आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेतिव्याख्यातारः। नलोपे सञ्जिसाहचर्यादिह वा ग्रहणमाद
सि दर्शन दंशनयोः। दंसयते। दंसति। दसेत्यप्येके। डप डिप सङ्घाते। तत्रि कुटुम्बधारणे। तन्त्रयते। चान्द्रा धातुद्वयमितिमत्वा कुटुम्बय
तेइत्युदाहरन्ति। मत्रि गुप्तपरिभाषणे। स्पश ग्रहणसंश्लेषणयोः। तर्ज भर्त्स तर्जने। वस्त गन्ध अर्दने। वस्तयते। गन्धयते। विष्क हिंसायाम्
हिष्केत्येके। निष्क परिमाणे। लल ईप्सायाम्। कूण संकोचे। तूण पूरणे। भ्रूण आशाविशङ्कयोः। शठ श्लाघायाम्। यक्ष पूजायाम्। स्य
म वितर्के। गूर उद्यमने। शम लक्ष आलोचने। नान्येमितइति मित्त्वनिषेधः। शामयते॥ ॥ ८८ ईधातुः पूर्वनिवासे वर्तते इतिव्याच

क्षते। जसु हिंसायां। ज्ञाप्यामिड्विकल्पार्थमुदित्करणमितितत्सामर्थ्यादस्यणिजनित्यः। जासयति। जसति। जसित्वा। जस्त्वा। जस्तं। चित सं चेतनं मूर्छा
यवस्थानिवृत्त्युत्तरकालिकं ज्ञानं। दंशनीति। इह दंशसंजेतिनलोपमाशंक्याह। संजिसाहचर्यादिति। स्पश। स्पाशयते। अतस्मृदृत्वरेत्यादिना ऽभ्यास

स्य अत्वं इत्वापवादः अपस्पशत् तर्ज भर्त्स तर्जने। भर्त्सयते। तर्जयन्नि व केनु भिरितिप्रयोगस्तु णिजंतादस्माद्वौ वादिकात् तर्जतेर्वा। हे तुमर्त्त्यणिचिवोध्यं। भूलाभ भूष
यते। भ्रूणोऽर्भके स्त्रैणगर्भे इत्यमरः। गूर उद्यमने। दीर्घोपधोयं। गूरयते। हृस्वोपधस्तु दिवादौ तुदादौ चेति मनोरमायां स्थितं। यद्यपि तुदादौ गुरी उद्यमने इति
पाठाद्धृस्वोपध एव तथापि दिवादौ घूरी गूरी हिंसागत्योरिति पाठान्नास्ति हृस्वोपध इति नव्याः शमलक्ष। ननु निशामयत इत्यत्र मित्यपि शामय इत्येतत् श
मु उपश्चम इत्यस्माण्णिचि रूपं चेत्। अमंतत्वान्मित्वे सति हृस्वेन भाव्यमित्याशंक्य कथमनेन सिद्धमिति वदंति। आकुस्मीयत्वात्तङि निशामयस्वेति रूपस्य
सर्वसंमतत्वादिति चेत्। अत्राहुः। स्वार्थे ण्यंतादस्माद्धेतुमण्णिचि निशामयेति रूपं। न चार्थासंगतिः। निवृत्त प्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते इति सि

कुत्स अवक्षेपणे। त्रुट छेदने। कुट इत्येके। गल स्रवणे। भल आभण्डने। कूट आप्रदाने। अवसादन इत्येके। कुट्ट प्रतापने। वञ्चु प्र
लम्भने। वृष शक्ति बन्धने। शक्ति बन्धनं प्रजनन सामर्थ्यं शक्तिबन्धश्च। वर्षयते। मद तृप्तियोगे। मदयते। दिवु परिकूजने। गृ विज्ञाने। गा
रयते। विद चेतनाख्यान निवासेषु। वेदयते। सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे। विन्दते विन्दति प्राप्तौ श्यन् लुक् श्नम् शेष्विदं क्रमा
त्। मन स्तम्भे। मानयते। युजु गुप्तायाम्। यावयते। कुस्म नाम्नो वा। कुस्मेति धातुः कुस्मितस्मयने वर्तते। कुस्मयते। अचुकुस्मत्। अ
द्वं नादिति। कुत्स अवक्षेपणे। पुनश्च कुत्सायामिति निर्देशादङ्। कुत्सां ण्यास श्रन्थेति युच्। कुत्सना। भल। ((यद्वा कुस्मेति प्रातिपदिकं ततो धात्व
आभण्डनं निरूपणमित्याहुः। वंचु प्रलंभने। त्वुटि। वंचनं। उदित्करणस्य क्त्वायामिड्विकल्पार्थत्वाण्णिजनित्यः वंचयति वंचति। वचित्वा वंचित्वा। वक्त्वा। वंचि।
लुंच्यृतश्चेति सेटः क्त्वः कित्वविकल्पनात्पाक्षिको नलोपः इडभावे तु नित्यः। निष्ठायां तु वक्तः। यस्य विभाषेति इण्निषेधः। नाम्नो वेति वा शब्दं व्याचष्टे। अथवे
ति। प्रातिपदिकमिति। अन्येष्वपि दृश्यत इति सूत्रे अन्येभ्योपीति वक्ष्यमाणत्वात् कुपूर्वात् स्मयतेर्डप्रत्यये टिलोपे कुगतीति समासे च निष्पन्नमित्यर्थः स्यद
पि कुपूर्वस्य स्मिङो लङादिषु कुस्मयते इत्यादिसिद्धेः तथापि प्रकुस्मयते इत्यादि न सिध्येदुपसर्गस्य धातुनाव्यवधानायोगात्। कुस्मयांचक्रे इत्याद्यर्थमपि कु

इत्याकुस्मीयाः॥ चर्चा। सर्वोपि चुरादिणिच्पाक्षिक इति पक्षे गुरोश्च हल इत्यप्रत्ययः। चर्चा। कणनिमीलने। एकनेत्रनिमीलने एवायं शब्दः स्वभावात्। काणः। काण्या
दीनामिति। एते हेतुमण्ण्यन्ता एव स्युः। हन्त्यर्थाश्च। तेन घातयति हंतीत्येतौ समानार्थौ। अर्ज। प्रतियत्नो गुणाधानं। अर्जयतीति। संगृह्णातीत्यर्थः। घुषिर। विशब्द

इत्याकुस्मीयाः। चर्च अध्ययने। बुक्क भाषणे। शब्द उपसर्गादाविष्कारे च। चाद्भाषणे। प्रतिशब्दयति। प्रतिश्रुतमाविष्करोतीत्यर्थः। अ
नुपसर्गाच्च। आविष्कारे इत्येव। शब्दयति। कण निमीलने। काणयति। णौ चङ्युपधाया ह्रस्वः। काण्यादीनां वेति विकल्प्यते। अचीकणत्
। अचकाणत्। जभि नाशने। जम्भयति। जम्भति। षूद क्षरणे। सूदयति। असूषुदत्। जसु ताडने। जासयति। जसति। पश बन्धने। पाश
यति। अम रोगे। आमयति। नान्ये मित इति निषेधः। अमगत्यादौ पठितः। तस्माद्धेतुमण्णौ। आमयति। चट स्फुट भेदने। विकासे भ्रश
पोः स्फुटति। स्फोटते इत्युक्तं। घट संघाते। घाटयति। हन्त्यर्थाश्च। नवगण्या मुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः। दिवुम र्द
ने। उदित्वाद्देवित्वेत्यपि। अर्ज प्रतियत्ने। अयमर्थान्तरेपि। द्रव्यमर्जयति। घुषिर विशब्दने। घोषयति। घुषिरविशब्दन इति सूत्रे गवि
शब्दन इति निषेधाल्लिङ्गादनित्योऽस्य णिच्। घोषति। इरित्वादङ्। अघुषत्। अघोषीत्। ण्यन्तस्य तु। अजूघुषत्। आङः क्रन्द सातत्ये
भौवादिकः। क्रन्दधातुराह्वानाद्यर्थ उक्तः। स एवाङ्पूर्वो णिचं लभते सातत्ये। आक्रन्दयति। अन्ये तु आङ्पूर्वो घुषिः क्रन्द सातत्ये इत्याहुः
आघोषयति। लस शिल्पयोगे। तसि भूष अलङ्करणे। अवतंसयति। अवतंसति। भूषयति। अर्ह पूजायाम्। ज्ञा नियोगे। आज्ञापयति। भ
ज विश्राणने। शृधु प्रहसने। अशशर्धत्। अशीशृधत्। यत निकारोपस्कारयोः। रक लग आस्वादने। रघ इत्येके। रग इत्यन्ये॥ ॥

नं प्रति ज्ञानं निषेधाल्लिंगादिति। घुषिरविशब्दन इति सूत्रेण अविशब्दने निष्ठाया इण्निषिध्यते विशब्दनार्थादितस्मादनंतरा निष्ठा नास्त्येव णिचा व्यवधाना
त्। अतो घुषिरविशब्दन इति भौवादिकादेव निष्ठाया इण्निषेधो भवेदिति किं विशब्दनप्रतिषेधेन। ततश्चानेनैव विशब्दनप्रतिषेधेनानित्योऽस्य णिज्ज्ञाप्यत इति।

ईदित्करणं दधिणिजिकल्पः सिध्यतीति केचित्। शिल्पयोग इति क्रियाकौशलं शिल्पं। यत निकारोपस्कारयोः यत्नो वा प्रैषो वा निकारः। निराकारोपस्कारयोरिति पाठां-
तरं। क्रियानिर्घटौ च यत्ने प्रैषे निराकारे यातये द्युपस्कृतौ नित्यो यं धान्यधनयोः प्रतिदाने इत्युक्तं। अस्यार्थः। यत्नाद्यर्थेषु चतुर्षु यत धातुं प्रयुंजीत णिनि

अञ्चु विशेषणे। अञ्चयति। उदित्वमिड्विकल्पार्थम्। अत एव विभाषितो णिच्। अञ्चति। एवं शृधुजसुप्रभृतीनामपि बोध्यम्। लिगि
चित्रीकरणे। लिङ्गयति। लिङ्गति। मुद संसर्गे। मोदयति सक्तून् घृतेन। त्रस धारणे। ग्रहण इत्येके। वारण इत्यन्ये। उध्रस उञ्छे। उकारो
धात्ववयव इत्येके। नेत्यन्ये। ध्रासयति। उध्रासयति। मुच प्रमोचने। मोदने च। वस स्नेहच्छेदापहरणेषु। चर संशये। च्युस हने। हसने
चेत्येके। च्यावयति। च्युसेत्येके। च्योसयति। भुवो अवकल्कने। अवकल्कनं मिश्रीकरणमित्येके। चिन्तनमित्यन्ये। भावयति। कृपेश्
च। कल्पयति। आस्वदः सकर्मकात्॥ स्वदिमभिव्याप्य सम्भवत्कर्मभ्य एव णिच्। ग्रस ग्रहणे। ग्रासयति फलम्। पुष धारणे। पोष
यत्याभरणम्। दल विदारणे। दालयति। पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि
बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोक लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः। पाटयति। पोटयति। लोटयति। तुञ्जयति। तुञ्जति। एवम
न्येषाम्। घाटयति। घण्टयति। नाग्लोपि शास्वृदिताम्॥ ७।४।२॥ णिचि च्यम्लोपिनः शास्तेॠदितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ।
अलुलोकत्। अलुलोचत्। वर्त्तयति। वर्द्धयति। उदित्वाद्वर्त्तति। वर्द्धति। रुठ लजि अजि दसि भृशि रुशि शीक नट पुटि जि चि रघि
लघि अहि रहि महि च। लडि तड नल च। पूरी आप्यायने॥ ईदित्वान्निष्ठायामिण्निषेधाय। अत एव णिज्वा। पूरयति। पूरति। रुज

सः परस्मैपदे चेत्प्रयुज्यते तर्हि यं धान्यधनयोः प्रतिदाने वर्तत इति। ऋणं निर्यातयति। प्रतिददातीत्यर्थः। अंचु विशेषणे। विशेषणं व्यावर्तनं। भुवोऽवकल्कने
भूधातोर्णिच् स्यात्। भावयतीति। मिश्रीकरोति चिंतयति वेत्यर्थः। कृपेश्च। कृपेर्णिच् स्यात् अवकल्कने। आस्वदः। अभिव्याप्येति। आकुस्मादिति पूर्वत्र आ

सि० कौ० धृषादागर्वादिति परत्र च आङोऽभिविध्यर्थतया सर्वसंमतत्वेन तन्मध्यपतितेः ञापितस्यैव व्याख्यानमुचितमिति भावः। अन्ये त्वाङ्पूर्वकात् स्वदः सकर्मका
ना० त० ण्णिच् इति व्याचख्युः। आस्वदीयेषु धावतः सर्वे सकर्मकाः। घादयन्तीति। अयं चुरादावेव संघातेगतः। पुनः पाठस्तु अर्थभेदात्॥ ❀ ॥ स्वाद इत्येक इति।
८६ अस्मिन्मते पूर्वत्राप्यास्वादः सकर्मकादिति पाठ्यम्। ननु दीर्घपाठे व्यर्थः। ह्रस्वपाठेऽप्युपधावृद्ध्या स्वादयतीति रूपाणां तुल्यत्वादत आह। दीर्घस्य त्विति
सः स्विदिस्वदिसहीनां चेति सूत्रेण अभ्यासेणः परस्य सस्य सकारो न तु षत्वमिति वक्ष्यमाणत्वात् सन्नन्तेऽपि सिस्वादयिषतीत्यादि रूपं तुल्यमेवेत्यभि

स्वाद इत्येके। असिष्वदत्। दीर्घस्य त्वषोपदेशत्वात्। असिस्वदत्। आधृषाद्वा। इत ऊर्ध्वं विभाषितणिचः। धृषधातुमभिव्याप्य। युज पृचि संयमने। योजयति। योजति। अयौक्षीत्। पर्चयति। पर्चति। पर्चिता। अपर्चीत्। अर्च पूजायाम्। षह मर्षणे। साहयति। सहति। सल्वा यन्नागः सहति कलभेभ्यः परिभवम्। ईर क्षेपे। लीङ् द्रवीकरणे। लापयति। लयति। लेता। वृजी वर्जने। वर्जयति। वर्जति। वृञ् आवरणे। वारयति। वरति। वरते। वरिता। वरीता। जॄ वयोहानौ। जारयति। जरति। जरिता। जरीता। ज्रि च। ज्रापयति। ज्रयति। ज्रेता। रिच वियोजनसंपर्चनयोः। रेचयति। रेचति। रेक्ता। शिष असर्वोपयोगे। शेषयति। शेषति। शेष्टा। अशिक्षत्। अयं विपूर्वोऽतिशये। तप दाहे। तापयति। तपति। तप्ता। तृप तृप्तौ। सन्दीपने इत्येके। तर्पयति। तर्पति॥

९९ भेत्याह। असिस्वददिति। इत्यास्वदीयाः॥ आधृषाद्वा। व्याख्यानात् योग्यतावलाद्वा णिजिति संबध्यते। आधीक्षीदिति। णिजभावपक्षे अनिट्त्वाद्यमिति भावः। लीङ् द्रवीकरणे लिनाति लीयन्त्योर्यकां निर्देशाद् इति भाष्यकारोक्त्या विभाषा लीयतेरित्यात्वमिह न प्रवर्तत इति ध्वनयति लेतेति। वरीतेति। वृतो वेति वा दीर्घः। लिङि वूर्षात्। आत्मनेपदे तु वृषीष्ट। वरिषीष्ट। लिङ्सिचोरात्मनेपदेष्विति वेट्। न लिङीति इटो दीर्घनिषेधः। इडभावपक्षे उश्चेति कित्त्वान्न गुणः। लुङि अवारीत्। अवारिष्टाम्। अवारिषुः। सिचि च परस्मैपदेष्विति दीर्घनिषेधः। आत्मनेपदे तु अवरिष्ट। अवरीष्ट। इडभावे सिचो लोपः। अवृत। रिचाणिजभावे अयमनिडित्याह। रेक्तेति। अशिक्षदिति

शलइगुपधेति क्सः। तृप। अनिट्सु श्यनानिर्देशादयं सेडिति ध्वनयति॥ ॥ तर्पिनेति। छृदी। ईदित्वान्निष्ठायामनिट्। ऋवर्णान्नस्य णत्वं। छृणः। छृण
वान्। ह्रस्वश्चेति। धुञ् कंपने इत्यर्थः। अवाक्षीदिति। अस्यतिवक्तीति लुका निर्देशादङ्नेति भावः वचिस्वपीति संप्रसारणं। उच्यात्। घृष प्रसहने। के

तर्पिता। छृदी सन्दीपने। छर्दयति। छर्दति। छर्दिता। छर्दिष्यति। सेऽसिचीति विकल्पो न। साहचर्यात्तत्रौधादिकस्यैव ग्रहणात्। चृप छृप दृप सन्दीपन इत्येके। चर्पयति। छर्पयति। दृभी भये। दर्भयति। दर्भति। दर्भिता॥ ।दृभ सन्दर्भे। अपन्नुदाददावीदित्। श्रथ मोक्षणे। हिंसायामित्येके। मी गतौ। माययति। मयति। मेता। ग्रन्थ बन्धने। ग्रन्थयति। ग्रन्थति। शीक आमर्षणे। चीक च। अर्द हिंसायाम्॥ स्वरितेत्। अर्दयति। अर्दति। अर्दते। हिसि हिंसायाम्। हिंसयति। हिंसति। हिनस्तीति श्नमि गतम्। अर्ह पूजायाम्। आङः षद पद्यर्थे आसादयति। आसीदति। पाघ्रेति सीदादेशः। आसन्नः। आसात्सीत्। शुन्ध शौचकर्मणि। शुन्धिता। अशुन्धीत्। अशुन्धिष्टाम्। छद अपवारणे। स्वरितेत्। जुष परितर्कणे। परितर्कणमूहा हिंसा वा। परितर्पण इत्यन्ये। परितर्पणम्परितृप्तिक्रिया। जोषयति। जोषति प्रीतिसेवनयोर्जुषते इति तु तौदादौ। धूञ् कम्पने। णिचि त्वधिकृत्य। धूञ्प्रीञोर्नुग्वक्तव्यः॥ धूनयति। धवति। धवते। केचित्तु धूञ्प्रीणोरिति पठित्वा प्रीणाति साहचर्याद्धूनातेरेव नुकमाहुः। धावयति। अयं स्वादौ क्र्यादौ तुदादौ च। स्वादौ ह्रस्वश्च। तथा च कविरहस्ये धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम्। वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति

चित्वादिति माहुस्तन्मते धृष्टो। मुख्यमते तु धृषितः। नन्वत्र निष्ठा शीङिति त्यादिना सेट् निष्ठायाः कित्वनिषेधात् गुणेन भाव्यमिति चेत्। अत्राहुः। आदित्साहच
र्याद्धादित एव ञिधृषेत्यस्य तत्र ग्रहणात्। न च आदितो निष्ठाया इट् दुर्लभ इति शंक्यं। विभाषाभावादिकर्मणोरिति तत्संभवादिति। इत्याधृषीयाः। आस्वः

३

सि·कौ· अथादन्ता इति। वक्ष्यमाणेषु धातुष्वन्त्या अवयवा अकारेणोच्चारणार्था इत्यर्थः। स्थानिवत्त्वान्न वृद्धिरिति। अचः परस्मिन्निति सूत्रेणेत्यर्थः। न च स्थानिनिमित्ति

टी·त यत् कार्यं तदेव स्थानिवदित्यनेनातिदिश्यते। न त्वादेशप्रयुक्तं वार्यते अन्यथा नायकः पावकः इत्यादि न सिध्येदिति वृद्धिरत्रेदुर्वारेति वाच्यं। अचः परस्मि-

८७ चन्द्रनमस्कारैश्च १ प्रीञ् तर्पणे॥ प्रीणयति। धूञ्प्रीञोरिति हरदत्तोक्तपाठे तु। प्रापयति। प्रपति। श्रन्थ ग्रन्थ सन्दर्भे। आप्लृ लम्भ-
ने। आपयति। आपति। आपत्। आप्ता। स्वरितेदयमित्येके। आपते। तनु श्रद्धोपकरणयोः। उपसर्गाच्च दैर्घ्ये। तानयति। वितानयति।
तनति। वितनति। चन श्रद्धोपहननयोरित्येके। चानयति। चनति। वद सन्देशवचने। वादयति। स्वरितेत्। वदति। वदते। अनुदात्ते-
दित्येके। ववदतुः। ववदिथ। ववदे। वदिता। वच परिभाषणे। वाचयति। वचति। वक्ता। अवाक्षीत्। मान पूजायाम्। मानयति। मा-
नति। विचारणे तु। भौवादिको नित्यसन्नन्तः। स्तम्भे मानयते। इत्याकुस्मीयाः॥ मन्यते इति दिवादौ। मनुते इति तनादौ च। भू प्राप्तावा-
त्मनेपदी। भावयते। भवते। णिच्सन्नियोगेनैवात्मनेपदमित्येके। भवति। गर्ह विनिन्दने। मार्ग अन्वेषणे। कठि शोके। उत्पूर्वोऽयमु-
त्कण्ठायाम्। कण्ठते इत्यात्मनेपदी गतः। मृजू शौचालङ्कारयोः। मार्जयति। मार्जति। मार्जिता। मार्ष्टा। मृष तितिक्षायाम्। स्वरितेत्।
मर्षयति। मर्षति। मर्षते। मृष्यति। मृष्यते इति दिवादौ। सेचनेऽपि। मर्षति। धृष प्रसहने। धर्षयति। धर्षति। इत्याधृषीयाः। अथा-
दन्ताः। कथ वाक्यप्रबन्धे। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। कथयति। अग्लोपित्वान्न दीर्घसन्वद्भावौ। अचकथत्। वर ईप्सायाम्।

न्नित्यत्र स्थानिवदित्यनुवर्त्य शास्त्राधिकारपक्षाश्रयेण भावाभावावुभावप्यतिदिश्येते इति सिद्धान्तात्॥ वरयति। वारयतीति गतम्। गण संख्याने। ग-
स्थानिनिमित्तस्याभावं त्वा वृद्धेरादेशेऽप्यभावात्। स्थानिनिमित्ते यन्न भवति तदादेशेऽपि न भवतीत्यत्र तु न पदान्तेति सूत्रस्थयलोपादिग्रहणमेव लिङ्गमिति दिक्।

ईचुगणः। अन्तस्थ इत्वरे इत्यत्र योगे तु स चकारेण समुच्चीयते। स्तनगदी। गदीत्यत्र इकारान्निर्देशादतो लोपः अनेकाच्त्वेनाषोपदेशत्वात्। षत्वं न। तिस्तनयिषति

स्तनित्ह विपुषीति। लोरिन्नु च्चयामं तेस्यादेशः। स्तनयित्नुर्बलाहकः। पतमतौ वा। गणसूत्रमिदं। कृपयतीति। कृपो रो ल इति न प्रवर्तते। तत्र कृपूसामर्थ्ये इत्य

स्य ग्रहणात्। कृपप्रकृतिकणिजन्तस्य तु धात्वन्तरत्वात्। स्पृहा। आप्नुमिच्छा ईप्सा। अवभामत्। इति। अल्लोपस्य स्थानिवत्वाण्णौ चङ्यनुपधाह्रस्वो न॥ सूचा

ईचुगणः।७।५६७॥ गणो रभ्यास इत्यस्य चङ्परे णौ चाद् इत्। अजगणत्। अजीगणत्। शठ श्वठ सम्यग्वभाषणे। पट वट ग्रन्थे। रह

त्यागे। अररहत्। स्तनगदी देवशब्दे। स्तनयति। गदयति। अजगदत्। पतगतौ वा। वाणिजन्तः। वा अदन्त इत्येके। आद्ये। पतयति। पतति

पन्नाम्ब्बकार। अपतीपतत्। द्वितीये। पातयति। अपीपतत्। पष अनुपसर्गात्। गतौ वित्येवा। पषयति। स्वर आक्षेपे। स्वरयति। रच प्रतिय

त्ने। रचयति। कल गतौ संख्याने च। चह परिकल्कने। परिकल्कनं दम्भः शाठ्यं च। मह पूजायाम्। महयति। महन्तीति शपि गतौ। सा

र कृप श्रथ दौर्बल्ये। सारयति। कृपयति। श्रथयति। स्पृह ईप्सायाम्। भाम क्रोधे। अवभामत्। सूच पैशुन्ये। सूचयति। अषोपदेशत्वान्न

षः असुसूचत्। खेट भक्षणे। तृतीयान्त इत्येके। खोट इत्यन्ये। क्षोट क्षेपे। गोम उपलेपने। अजुगोमत्। कुमार क्रीडायाम्। अचुकुमारत्

शील उपधारणे। उपधारणमभ्यासः। साम सान्त्वप्रयोगे असमामत्। साम सान्त्वने इत्येतस्य तु। असीषमत्। वेल कालोपदेशे। वेलयति। का

ल इति पृथग्धातुरित्येके। कालयति। पल्यूल लवनपवनयोः। वात सुखसेवनयोः। गतिसुखसेवनेष्विति इत्येके। वातयति। अववात

त्। गवेष मार्गणे। अजगवेषत्। वास उपसेवायाम्। निवास आच्छादने। अनिनिवासत्। भाज पृथक्कर्मणि। सभाज प्रीतिदर्शनयोः

पिशुनो दुर्जनस्तस्य कर्म पैशुन्यं। अषोपदेशत्वादिति। अनेकाच्त्वादिति भावः। साम सान्त्वने इत्यतीतस्य प्रीतिसेवनयोरित्यन्ये। सभाजयति॥

त्विति। अयं धातुः इतः प्राङ्मूलपुस्तके न क्वापि पठितः पुस्तकान्तरेषु मृग्यः। केचित्तु साम सान्त्वने इत्यस्य क्वाप्यपठितत्वेपि षान्त्वसामप्रयोगे इति प्राक्पा

ठितमेव तत्र च षान्त्वसामेति धातुद्वयं प्रयोगे वर्तते। प्रयोगश्च सान्त्वप्रयोगपरः स च सान्त्वनमेवेत्येवं ग्रन्थकाराशयं वर्णयित्वा स्थितस्य गतिं समर्थयते। गवेष

उ
सि·कौ ऊनपरिहाणे। अस्मात्णौ चङि द्वित्वात् परत्वादन्तरंगत्वाच्च अल्लोपे न अजादेर्द्वितीयस्येति लि चास हद्वित्वे औनिनदित्यनिष्टं प्रसज्येत। किं तु औननदित्येवरूप
टी·त· मिष्टं तच्च नशब्दस्य द्वित्वं विना न संभवति। न च द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावात् निषेधाद्वा नशब्दस्य द्वित्वं सिध्यतीति वाच्यं णि
८८ चो द्वित्वनिमित्तत्वाभावात्। अत आह। ओः पुयण्ज्यपरे इत्यादि। संपूर्णसूत्रं लिंगमिति केषांचित् भ्रमं निवर्तयितुमाह। पयपयोरिति। अयं भावः। स्मिपूङ्रञ्ज्वशां स
नि सनीवन्तर्धेति सूत्राभ्यां पूङ् यौति भ्यां परस्य सन इडागमे कृते द्विर्वचनेऽचीति स्थानिवद्भावादादेशनिषेधाद्वा उवर्णस्यैव द्वित्वमिति पुपविषते। पुयु

ऊनपरिहाणे। ऊनयति। ओः पुयण्ज्यपरे इति सूत्रे पयपयोरिति वक्तव्ये वर्गप्रत्याहारजकारग्रहोल्लिङ्गं लिचि अच आदेशे न स्याद्द्वित्वे कार्ये इति
पक्षे हि रुरौ अभ्यासो नरख एडस्य आद्यो ऽचः प्रक्रियायां परिनिष्ठितरूपे वा ऽवर्णो लभ्यते तत्रैकार्यन्निषेधः। ज्ञापकस्य सजातीयापेक्षत्वात्तु
नाचिकीर्तदितिसिद्धम्। प्रकृते तु नशब्दस्य द्वित्वं न तु उत्रख एडे ऽल्लोपः। औननत्। मा भवानूननत्। ध्वन शब्दे। अदध्वनत्। कूट परितापे।
परिदाहे इत्यन्ये। सङ्केत ग्राम कुण गुण चामन्त्रणे। चात्कूटे ऽपि। कूटयति। सङ्केतयति। ग्रामयति। कुणयति। गुणयति। पाठान्तरम्। के
तश्राव णे निमन्त्रणे च। केतयति। निकेतयति। कुण गुण चामन्त्रणे। चकारात् केतने। कूणसङ्कोचने इति। स्तेन चौर्ये। अतिस्तेनत्। आगर्वा
दात्मनेपदिनः। पद गतौ। पदयते। अपपदत्। गृह ग्रहणे। गृहयते। मृग अन्वेषणे। मृगयते। मृग्यतीति कङ्कादिः। कुह विस्मापने। शूर वीर वि
क्रान्तौ। स्थूल परिबृंहणे। स्थूलयते। अतुस्थूलत्। अर्थ उपयाच्ञायाम्। अर्थयते। आर्तथत्। सत्र सन्तानक्रियायाम्। अससत्रत। अत्र
कांचत्वान्नषोपदेशः। सिसत्रयिषते। गर्व माने। गर्वयते॥ ॥

९१ विषतीत्यनिष्टं प्रसज्येत। ततश्च अभ्यासोवर्णस्येत्वार्थं पयपयोरि
त्यपेक्षितं। अन्यथा पिपविषते। पिपविषतीति न सिद्ध्येत् इति। वर्गप्रत्याहारेत्यादि। पुयण्जीति वर्गादिग्रहणफलं तु अबीभवत् अमीमवत् अरीरवत् अलील
वत्। अजीजवत्। बिभावयिषति। मिमावयिषति। रिरावयिषति। लिलावयिषतीत्यादिरूपसिद्धिरिति वाच्यं। तद्रूपपादम्। णिचि परत्वादन्तरंगत्वाच्च वृद्ध्यादे
कृते द्वित्वे सत्यभ्यासे उवर्णस्य दुर्लभत्वादकारस्य सत्यत इत्वेन रूपसिद्धेश्च। ततो वर्गादिग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः। ज्ञापकफलं तु यत्र ओः-

पुयण्जीत्यस्याप्राप्तिरत्र बोध्या। तद्यथा। चुस्रावयिषति। चरुः। चुस्रवत्। उडुरिवाचरति उडवति। सर्वप्रातिपदिकेभ्य इत्याचारक्विबन्तादं नामधातोर्णौ सन्। उडुव
वयिषति। चडि औडुडवत्। तु इति सौत्रो धातुः ततो णौ सन्। तुतावयिषति। चडि अतूतवत्। नुनावयिषति। अनूनवत्। पुस्फारयिषति। अपुस्फुरत्। विस्फुरणं
विति वा आत्वं। अपुस्फुरदित्यादिष्वभ्यासे उकार   अवर्णं भवति ज्ञापनबलादन्यथा चिस्रावयिषतीत्यादि प्रसज्येतेतदेतत्सकलमभिप्रेत्य वार्तिककृतो-
क्तं। ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवत्भावस्येति स्थानिवद्भावः   प्रतिषेधस्याप्युपलक्षणं। अच आदेशो न स्यादिति। प्रतिषेधपक्षे मुख्य इत्यभिप्रे-
त्येदमुक्तं। प्रतिषेधः स्थानिवद्भावस्याप्युपलक्षणमिति बोध्यं। नन्वेवं कृत संशब्दने इति धातोर्णौ चङि इरादेशात्प्रागेव कृते इत्यस्य द्वित्वे उरत्वे च अच
कीर्त्तादिति स्यान्न तु अचिकीर्तदित्यत आह स्थानिवद्भावेत्ति। चङ्सहित   स्यान्तरखंडत्वमभ्युपेत्येदमुक्तं। अन्ये तु आद्यग्रहणं स्पष्टप्रतिपत्त्यर्थं। धातोरवयवस्यैकाचो द्वि-
र्वैसत्यभ्यासोत्तरखंडे अज्झलसंभवादित्याहुः। औजढत् औननदित्यादौ परिनिष्ठिते अवर्णस्यालाभादाह। प्रक्रियायामिति। चुस्रावयिषतीत्यादौ प्रक्रिया-
यामवर्णो न लभ्यत इत्याह। परिनिष्ठितरूपे वेति। वाशब्दो नास्थायां। क्वचिदवर्णपरत्वं विवक्षितं न तु अमुकत्रैवेत्याग्रह इति भावः। सजातीयापेक्षत्वादि-
ति। पुयण्जोऽभ्यासोत्तरखंडे अवर्णपरा भवंति अतः तथैव ज्ञापकमित्यर्थः अत एव भाष्यकृता पवर्गादेरन्यस्मिन् अपि हलि अवर्णपरे एव स्थानिवत्त्वमि-
ति अचिकीर्तदित्यादौ नातिव्याप्तिरिति सिद्धांतितं। ननु ओः पुयण्जीति सूत्रे णिचि इति नास्ति। तथा च णिच्यच आदेशो न स्यादित्यर्थे कथमिदं ज्ञापकं भवेत्। न
च सामान्यतो द्वित्वे कार्ये अच आदेशो न स्यादित्येव ज्ञाप्यतामिति वाच्यं। दिदवनीयिषति निनवनीयिषतीत्यादावभ्यासे उकारश्रवणप्रसंगादिति चेत्। अत्रा-
हुः। येन नाव्यवधानमित्येकेन प्रत्ययेन द्वित्वनिमित्तप्रत्ययस्य व्यवधानमाश्रीयते तत्र च वर्णेरेव संभवतीति णिज्विषयकमेव ज्ञापकं दिदवनीयिषेत्यत्र तु
ल्युट् क्यच् चाचव्यवधानादनेकव्यवधानमिति न तद्विषयं ज्ञापनमिति। अस्मिन्मते आचारक्विबंताद्दवनशब्दात्सनि दुदवनिषतीति स्यात्। तच्चानेष्यते णौ स्था-
निवद्भावस्य ज्ञापकमिति वार्तिकोक्तेः। स्थानिवत्त्वेन प्रतिषेधे   न वा णेर्वेवाभ्यासे उकारे लभावितव्यमतो वार्तिककारवचनादेव णौ स्थानिवदिति स्वीकर्त-
व्यं तथा च न पूर्वोदाहरणेषु दोष इति दिक्। फलितमाह। प्रकृते   त्विति। औननदिति। नोनूयति ध्वनयतीति चङ्निषेधस्त्विह न। तत्र च्छंदसीत्यनुवृत्त्या मा

सि·कौ· त्वापत्तौ जरितुः काममूनयीरित्याद्यावेव तन्निषेधात्। यद्यपि परिनिष्ठित एव अवर्णपरत्वमित्याशयेन उवर्णादेश एव स्थानिवत् स्यान्नान्य इति वदतां चोपदेवादीनाम्
टी·त· तेऔ निनदित्येव भाव्यं। अवर्णादेशस्य स्थानिवत्त्वे तु परिनिष्ठितरूपे अवर्णपरत्वालाभात् यथा। अचिकीर्तदित्यादौ स्थानिवत्त्वमाशंक्य उत्तरभागे अवर्णभा
८९ वादिति भाष्यकारोक्तपरिहारपर्यालोचनया उवर्णादेश एव स्थानिवदिति नियमो नास्तीत्यौनिनदिति रूपं निर्बाधमेव। किंच। उवर्णादेश एवेति नियमे लोपः
पिबतेरीच्चाभ्यासस्येति सूत्रे अपीप्यदित्यत्र पिबतेर्णौ शाच्छासेत्यादिना युकि चङि उपधालोपेन तस्य स्थानिवत्त्वात् पाय् शब्दस्य द्वित्वमिति वृत्तिग्रंथो विरुध्ये
त। अपि च। शुष्किका शुष्कजंघा च क्षामिमा नौजढ इत्यत्रोक्तवैयाघ्रपद्यवार्तिकस्य औजढदिति प्रयोगोऽपि विरुध्येत। एतद्धि पूर्वत्रासिद्धमित्यस्य प्रयोजनकथ
नं वार्तिकं। तद्यथा। शुष्किकेत्यत्रोदीचामात इति इत्वे विकल्पो न। शुषः क इति कत्वस्यासिद्धत्वेन यकपूर्वत्वाभावात्। शुष्कजंघेत्यत्र कत्वस्यासिद्धत्वादेव न
कोपधायाः इति पुंवत् भावनिषेधो न। क्षामिमानित्यत्र तु मादुप
धाया इति वत्वं न। क्षायो म इति मत्वस्यासिद्धत्वात्। वहेः क्तान्तान्णिचि चङि औजढदित्यत्र ढत्वस्यासिद्धत्वाण्णौ कृतस्य टिलोपस्य स्थानिवत्त्वाच्च हतशब्दस्य द्वि
त्वं। कुहोश्चुः अभ्यासे चर्चेति सन्वदित्वं तु अनग्लोपीति प्रतिषेधान्न भवति। एवं काशिकायामपि पूर्वत्रासिद्धमिति सूत्रे औजढदित्युदाहृत्य ऊढिमाख्यदौजिढदित्येत
त्तु निर्णीते न तस्य ऊढिशब्दस्य प्रवृत्तौ युक्तं तदपि विरुध्येत। उवर्णादेश एव स्थानिवत् इति नियमे। णौ कृतस्य टिलोपस्यात्र स्थानिवत्त्वाभावेन हतशब्दस्य हति
शब्दस्य वा द्वित्वासंभवात्। एवं चौक धातोर्णिच्यल्लोपे चङि स्थानिवत्त्वात् कशब्दस्य द्वित्वे अचकदिति रूपमेव सर्वसंमतं न त्वाचिकदिति वोपदेवोक्तमिति
बोध्यं। नन्वचिकीर्तदित्यादौ स्थानिवत्त्वमाशंक्योत्तरभागे अवर्णाभावादिति वदता भाष्यकारेण वोपदेवग्रंथस्य प्रतिकूलः उत्तरभागे परिनिष्ठितरूपे अवर्णपरत्व
मुवर्णादेशस्यैव संभवति नान्यस्येत्याशयेनैव भाष्यकारेण तथोक्तमिति वक्तुं शक्यत्वादिति चेत्। मैवं। तथाहि। सति यत्र ओः पुयण्ज्यपरे इत्यस्य प्राप्तिस्तत्राप्युवर्णा
देश एव स्थानिवत्। ज्ञापकस्य सजातीयापेक्षत्वादित्येवमेव भाष्यकारो वदेत्। ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगात् इति दिक्। संकेतिनाश्चत्वारो
ऽत्र धातवः। पाठान्तरमिति। संकोचन इत्येतत्पर्यन्तं। अनेकाच्त्व नाषोपदेशत्वात् षत्वं नेति ध्वनयति। अतित्वनदिति। गृहयतेरिति। अल्लोपस्य स्थानिव

त्वान्न गुणः। लुङि। अजगृहत्। अल्लोपान्न सन्वद्भावः। मृगयते इति। मार्गयति मार्गतीति तु मार्ग अन्वेषणे इत्यादिः। घृणीयस्य अर्थी। अर्थयत इति। वृद्धेर्लोपो बलीयानित्य
ल्लोपान्न वृद्धिः। वोपदेवस्तु वृद्धौ कृतायां पुकि चार्थापयते इति रूपमाह। तत्र असात्। न चार्थवेदसत्यानामित्यापुक् स्यादेवेति वाच्यं। तत्र प्रातिपदिकस्य ग्र
हणात्॥ ॐ॥ अदन्तत्वसामर्थ्यादिति। कथादिषु उपधावृद्धिदीर्घसन्वद्भावविरहेण सारभामप्रभृतीनां उपधाह्रस्वस्य गृहमृगप्रभृतीनां उपधागुणस्य च
व्यावर्तनेन अदन्तत्वं सार्थकं। इह त्वदन्तत्वे प्रागुक्तफलाभावात् णिचः पाक्षिकत्वं ज्ञापयतीति भावः। ननु अदन्तत्वसार्थकत्वाय वाल्लोप इति प्राचोक्तमेवा
भ्युपगम्यतामिति चेत्। अत्राहुः। चिंतयतेरिदित्वं सामान्यापेक्षं ज्ञापकमिति मते इह अदन्तत्वस्य फलं स्पष्टमेव। विशेषापेक्षं ज्ञापकमिति मते तु तत्र तत्र आकां
अदन्तत्वसामर्थ्यात् णिज्विकल्पः। धातोरन्त उदात्तः लिट्याम् स्वरफलम्। एवमग्रेऽपि। इत्यागर्वीयाः। सूत्र वेष्टने। सूत्रयति। असुसूत्रत्। मूत्र प्रस्र
वणे। मूत्रयति। मूत्रति। रूक्ष पारुष्ये। पार तीर कर्मसमाप्तौ। अपपारत्। अतितीरत्। पुट संसर्गे। पुटयति। धेक दर्शने इत्येके। अदिधेकत्।
कत्र शैथिल्ये। कत्रयति। कत्रति। कर्त्रेत्यप्येके। कर्त्रयति। कर्त्रति। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च॥ प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्ठव
च्चा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वल्लावपि स्युः। पटुमाचष्टे पटयति। परत्वा
द्वृद्धौ सत्यां टिलोपः। अपीपटत्। णौ चङ्यन्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम्। अपपटत्। तत्करोति तदाचष्टे॥ पूर्वस्य प्रपञ्चः करो
र इकार ईकार उकार ऊकाराश्चेत्यनुबन्धाः यथा ज्ञापकतया स्वीकृताः। तथा अदन्तत्वापि णिच् विकल्पमेव ज्ञापयतु ((त्याचष्ट इति धात्वर्थमात्रेणि जर्थः
ल्पे नैव णिज्विकल्पेन कृतार्थत्वे अपूर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात्। एवं हि सति मतद्वयेप्येकरूपमेव फलं लभ्यत इति। असूसुत्रदिति
अनेकाच्त्वान्न षत्वं। प्रातिपदिकादिति। यदि सुबंताण्णिच् स्यात्तदा स्वजयतीत्यादौ कुत्वं स्यादिति भाव इति केचित्। तन्न। इष्ठवद्भावेन भत्वे कुत्वस्या
प्रसक्तेः। अत्र बहुलं णिच् स्यात् स च णिच् इष्ठवत् भवतीति अन्वयात् पक्षे वाक्यमपि भवतीत्याह। पटुमाचष्ट इति। धात्वर्थ इत्यनेन करणाख्यानादि गृ
ह्यत इति भावः। ननु बहून्याचष्टे भावयतीत्यत्र इष्ठस्येव द्वितीणिचोपि यिट् स्यात्। अत्राहुः। टेरिति सूत्रे णाविष्ठवत्। प्रातिपदिकस्येति वार्तिके प्रातिप

दिकग्रहणं प्रत्ययकार्याणामतिदेशो मा भूदित्येवमर्थं। तेनात्र णिचोपि णं न भवति। तदभावे भूभावेनापि न भवितव्यं। संनियोगशिष्टत्वात्। किंतु बहयतीत्येव भवितव्यमिति मतांतरं। एतच्च तत्रैव सूत्रे कैयटे स्पष्टमिति। अन्ये त्वाहुः। इष्ठवदिति हि सप्तम्यंताद्वतिर्णाविष्टुपमेये सप्तमीदर्शनात्तेन इष्ठनि परे पूर्वस्य यत्कार्यं तत् णिनि दृश्यते। तेन लिष्ठनोपीति। पुंवद्भावेति। अतिशयेन पटुमाचष्टे इत्यत्र भस्याढे तद्धित इति पुंवद्भावः। कृशिष्ठः। द्रढिष्ठ इत्यत्र रऋतो हलादेरिति रभावः। साधिष्ठ इत्यादौ टिलोपः। अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र विन्मतोर्लुगिति विनो लुक्। अतिशयेन गोमान् गविष्ठ इत्यादौ मतुपो लुक्। स्थविष्ठ इत्यादौ स्थूलदूरेत्यादिना यणादिलोपः। प्रेष्ठ इत्यादौ प्रियस्थिरेत्यादिना प्रस्थाद्यादेशाः। तद्धस्मावयतीति। पुंवद्भावस्योदाहरणमेनीमाचष्टे एतयति। टिलोपे नैव सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्भावग्रहणं दरदमाचष्टे दारदयतीत्यादिसिद्ध्यर्थमिति बोध्यं। द्रढयतीत्यादौ रभावः। स्रग्विणमाचष्टे स्रजयतीत्यत्र विनो लुक्। गोमंतमाचष्टे गवयतीत्यत्र मतुपो लुक्। अंगवृत्तपरिभाषया वृद्धिरत्र न भवति। प्रियमाचष्टे प्रापयति। स्थिरमाचष्टे स्थापयतीत्यादौ तु वृद्धिर्भवत्येव। आह्वयोरिति निर्देशेन तस्याः परिभाषाया अनित्यत्वज्ञापनादिति दिक्। परत्वाद्वृद्धाविति। लोपः शाब्दांतरप्राप्त्याऽनित्यः वृद्धिरप्यनित्या उभयोरनित्ययोः परत्वाद्वृद्धिस्तस्यां कृतायां मैकारस्याबादेशात् प्रागेव परत्वाद्वर्णादांगस्य बलीयस्त्वाच्च लोप इत्यर्थः। एवं चानग्लोपित्वाद्दीर्घसन्वद्भावौ स्त इत्याह। अपीपटदिति। इह टिलोपस्य स्थानिवद्भावेन व्यवधानाद्दीर्घसन्वद्भावौ नेति न भ्रमितव्यं। स्थानिवत्त्वेप्यंगस्याणिच्परत्वानपायात्। चङ्परे णौ यल्लघ्विति पक्षेपि अभ्यासस्य आदिष्टादचः। पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति दीर्घसन्वद्भावौ स्त एव। केचित्तु चङ्परे णौ यल्लघ्विति पक्षे पटुशब्दोकारस्य वृद्धौ कृतायां णिपरं लघु दुर्लभमिति सन्वद्भावाप्राप्त्या अपपटदित्येव रूपं। प्रथमं टिलोपः पश्चाद्द्विर्वचनमिति मत्वा अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति मनोरमोक्तं यत्तन्नादर्तव्यं। णिच्च च आदेशो न स्यात् द्वित्वे कर्तव्ये इति निषेधपक्षस्य मुख्यतया प्रागुक्तत्वेन प्रथमं टिलोपस्य दुरुपपादत्वादित्याहुस्तन्मंदं। अपीपटदित्यत्र द्वितीयाच्पर्यंतस्य प्रथमावयवस्य द्वित्वमिति हि निर्विवादं तथा च द्वितीयस्याचो द्वित्वाकरणात् प्रथमं टिलोपः स्यादेवेति। पटुर्लोप इति। कृताकृतप्राप्तिमात्रेण लोपो नित्यः। वृद्धिस्त्वनित्या। टिलोपे सति स्थानिनः पूर्वत्र कर्तव्यायां लोपस्य स्थानिवत्त्वात् स्वविधौ स्वस्य स्थानिवत्त्वाभावाच्च। अस्मिंस्तुप

क्षमुंडमिश्रेति सूत्रे हलिकल्योरदंतत्वनिपातनस्य वैयर्थ्यमेव। वृद्धेः प्राक् टिलोपे सति अग्लोपित्वसंभवात्। तथा चादंतत्वनिपातनसामर्थ्यात् टिलोपात् पूर्वं वृद्धिरेवेत्यनग्लोपित्वादपीपटदित्येव रूपं साध्विति प्रतीयते। भाष्यहृदयप्रामाण्याद्रूपद्वयमपि साध्विति बहवः॥ ॥लडर्थ इति। करोत्याचष्टे इति हि कर्तरि वर्तमाने लडेकवचनं। लडर्थविवक्षायां तु ण्यंतात् भावकर्मणोः भूतभविष्यतोर्द्वित्वबहुत्वयोश्चाप्युत्पत्तिर्भवत्येवेति भावः। यद्यप्येकत्वादिसंख्याल डर्थो न भवति तथापि लडादिप्रातिङर्थोपीह लडर्थत्वेन गृहीत इति ज्ञेयं। तेनातिक्रामति। तृतीयाप्रकृतिभूतात् प्रातिपदिकात् तस्मिंश्च तृतीयांतात् णिजि त्यर्थः। एवं तत्करोतीत्यत्रापि द्वितीयाप्रकृतिभूताद्द्वितीयांताद्वा णिच्। न च सुवंतात् णिचि विवाचं करोत्याचष्टे वा वाचातिक्रामति वा विवाचयतीत्यत्र कुत्वं स्यादि

लडर्थस्त्वविवक्षितः। तेनातिक्रामति। अश्वेनातिक्रामति। अश्वयति। हस्तिनातिक्रामति। हस्तयति। धातुरूपं च्चेति। णिच्प्रकृतिर्धातुरूपमापद्यते। चशब्दोऽनुक्तसमुच्चयार्थः। तथा च वार्त्तिकम्। आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति। कंसवधमाचष्टे कंसं घातयति। इह कंसं हन् इति स्थिते। हनस्तोऽचिण्णलोः। ७।३।३२। हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञ्णिति णिति। नन्वयमन्तादेशो धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता। ततश्चाड्द्वित्वयोर्दोषः। किञ्च। कुत्वतत्वे न स्यातां धातोः स्वरूपग्रहणे तत्प्रत्यये

ति शङ्क्यं। इष्टवद्भावेन भसंज्ञया पदसंज्ञायाः बाधात्। यशस्विनमाचष्टे यशसयति। स्रग्विणमाचष्टे स्रजयतीत्यादौ विनो॥ कार्याविज्ञानात्। सम्म लुकि प्राप्तस्य पदकार्यस्य बाधार्थं भसंज्ञातिदेशस्यावश्यकत्वात् तत्करोतीत्यादिनिर्देशानुगुणत्वाच्च सुवंतात् णिजिति पक्ष एव ज्यायानित्याहुः। णिच्प्रकृतिरिति। वधशब्दो णिच्प्रकृतिरिदानीं तु कृल्लुक्यवशिष्टभाग एव प्रकृतिरित्यर्थः। आख्यानात् कृत इति। यद्यपि वधशब्दः कृदंतः स आख्यानं न भवति तथाप्याख्यानवाची कृदंतश्च कंसवधशब्दो भवत्येव कृतग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। कृल्लुगिति। हनश्च वध इति विहितस्य अप्प्रत्ययस्य लुक्। प्रकृतिप्रत्यापत्तिरिति। विकारपरित्यागेन स्वरूपेणावस्थितिरित्यर्थः। एतत्सकलमभिप्रेत्याह। कंस हन् इति स्थिते इति। कंसविशिष्टस्येति। तस्मादेव णिचो विधानादिति भावः। दोष इति। कशब्दात् पूर्वमडागमः कंस इत्यस्य द्विर्वचनं स्यादित्यर्थः। किं चेति। एतेन च कंसमजीघतदिति इष्टम् न सिध्येदिति भावः। तत्प्रत्यये धातोर्वि

उ.
कौ. हितप्रत्ययेनानेनवार्त्रघ्नमित्यत्रहनस्तइतितत्वंनभवतीतिज्ञेयं। उक्तदोषानपरिहरति। सत्यमिति॥ ॥ प्रकृतिवच्चेतिचकारोऽनुक्तसंग्रहार्थइत्याह॥
नं.
८० प्रकृतिवच्चेतिचकारोभिन्नक्रमः कारकञ्चाहार्य्यम्। हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौयात्पूर्वशङ्काकारकन्धातावनन्तर्भूतंद्वितीयान्तं
यादृशञ्चकार्य्यकृत्त्वंतत्वादितद्दिहापीत्यर्थः। कंसमजीघतत्। कर्तृकरणेहत्वर्थे। कर्तुर्व्यापारार्थयत्करणंनतुचक्षुरादिमात्रमित्यर्थः। अ
सिनाहन्ति। असयति। वष्कदर्शने। चित्रचित्रीकरणे। आलेख्यकरणइत्यर्थः। कदाचिद्दर्शने। चित्रत्ययमद्भुतदर्शनेणिचंलभते। चित्रयति।
अंसंसमाघाते। वट विभाजने। लज प्रकाशने। वटिलजिइत्येके। वण्टयति। लञ्जयति। अदन्तेषुपाठबलादन्तलेवृद्धिरित्यन्ये। वण्टापयति।
लञ्जापयति। शाकटायनस्तुकथादीनांसर्वेषांपुकमाह। तन्मतेकथापयति। गणापयतीत्यादि। मिश्रसम्पर्के। संग्रामयुद्धे। अयमनुदात्तेत्। अ
कारप्रश्लेषात्। असंग्रामत। स्तोमश्लाघायाम्। अनुस्तोमत्। छिद्रकर्णभेदने। करणभेदनइत्यन्ये। कर्णेतिधात्वन्तरमित्यन्ये। अन्धदृष्ट्यु
पघाते। उपसंहारइत्यन्ये। आन्दधत्। दण्डदण्डनिपातने। अङ्कपदेलक्षणेच। आञ्चकत्। अङ्गच। आञ्जगत्। सुखदुःखतत्क्रियायाम्
रसआस्वादनस्नेहनयोः। व्ययवित्तसमुत्सर्गे। अवव्ययत्। रूपरूपक्रियायाम्। रूपस्यदर्शनंकरणंवारूपक्रिया। छेदद्वैधीकरणे। अ
चिच्छेदत्। छदअपवारणइत्येके। छदयति। लाभप्रेरणे। व्रणगात्रविचूर्णने। वर्णवर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रियावर्ण
करणम्। सुवर्णंवर्णयति। कथांवर्णयति विस्तृणातीत्यर्थः। हरिंवर्णयतिस्तौतीत्यर्थः। बहुलमेतन्निदर्शनम्। अदन्तधातुनिदर्शन
मित्यर्थः। बाहुलकादन्येपिबोध्याः। तद्यथा। पर्णहरितभावे। अपपर्णत्। विष्कदर्शने। क्षपप्रेरणे। वसनिवासे। तुत्थआवरणे। एवमान्दोल
यति। प्रेङ्खलयति। विडम्बयति। अवधीरयतीत्यादि। अन्येतुदशगणीपाठोबहुलमित्याहुः। तेनापठिताअपिसौत्रलौकिकवैदिकाबोध्याः
वांतकार्यमिति। यद्यप्यन्यतरातिदेशेनाप्यड्द्विर्वचनेसिध्यतः। तथापिधातावनन्तर्भूतद्वितीयानांदिलाभायकारकातिदेशःकार्यातिदेशस्तुकृत्वत्वा

दित्वाभावेतिविवेकः। इहभारतभागवतादिप्रसिद्धकंसवधाद्युपाख्यानेएव णिजितिनाग्रहः किंतु उपाख्यानमात्रेति नराजागमनमाचष्टे राजानमागमयतीत्या
दिसिध्यति। इह कृतप्रकृतौ। राज्ञः कर्तृत्वेपि ममेहे तु मण्योगतिबुद्धीत्यनेन तस्य कर्मत्वमिति द्वितीयां तमेवरूपातिदेशबलात्स्वीक्रियते। देवदत्तपाकमाच
ष्टे देवदत्तेन पाचयतीत्यत्र तु देवदत्तस्य कर्तृत्वानपायात्तृतीयैव भवति। रुक्मिणीहरणमाचष्टे इत्यादौ हृक्रोरन्यतरस्यामिति विकल्पाद्रुक्मिणीं रु
क्मिण्या वा हारयतीति प्रयोगः। कर्तृकरणेइति। कर्तृग्रहणाभावे च स्त्रूयापश्यति चक्षयतीत्यादावेव स्यान्न तु करिभिरववधाति अवकरयतीत्यादौ। लो
केइंद्रियाणामेव करणत्वेन सुप्रसिद्धत्वादतः तत्संग्रहार्थं कर्तृग्रहणमिति मनोरमायां स्थितं। नव्यास्तु साधकतमत्वेन विवक्षितं यत्तत्करणशब्दे

अपरे तु नवगणीपाठो बहुलमित्याहुः। तेनापठितेभ्योपि क्वचित्स्वार्थे णिच्। रामो राज्यमचीकरदिति यथेत्याहुः। चुरादिभ्य एव बहुलं णि
जित्यर्थ इत्यन्ये। सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः। णिङ्ङ्गान्निरसने॥ अङ्गवाचिनः प्रातिपदिकान्निरसनेर्थे णिङ् स्यात्। हस्तौ निरस्यति ह
स्तयते। पादयते। श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च॥ श्वेताश्वादीनां चतुर्णामश्वादयो लुप्यन्ते णिङ् धात्वर्थे। श्वेताश्व
माचष्टे तेनातिक्रामति वा श्वेतयते। अश्वतरमाचष्टेऽश्वयते। गालोडितं वाचां विमर्शः। तत्करोति गालोडयते। आह्वरयते। केचित्तु णिचमेवानु
वर्तयन्ति तन्मतेपरस्मैपदमपि। पुच्छादिषु धात्वर्थ इत्येव सिद्धम्। णिजन्तादेव बहुलवचनादात्मनेपदमस्तु। माऽस्तु पुच्छमाएडति णिङ्

न गृह्यते न तु लोकप्रसिद्धकरणमेव। अन्यथा कर्तृकरणयोस्तृतीयेत्यादावपि लोकप्रसिद्धकरणग्रहणं (( धिः। सिद्धश्चायं ग्रन्थो नेमङ्गलार्थः। इति तु राम्ब्रिः॥
प्रसङ्ग्या दात्रेण हत इत्यादिरूपं न सिद्ध्येत्। न तथा च कर्तृग्रहणं विनाप्यवकरयतीति रूपसिद्धौ न किंचिद्बाधकमिति व्याख्यायकर्तृकरणादित्यत्र समाहारद्वंद्वं
मत्वा देवदत्तेन पाचयति देवदत्तयतीत्युदाजह्रुः। कदाचिद्दर्शने। चित्रकरणे कदाचिद्दर्शनयोरिति सुवचं। अदंतेषु पाठबलादिति। अदंतस्य फलांतराभावा
दतो लोपं बाधित्वा वृद्धिरित्यर्थः। संग्रामासंग्रामेति युद्धवाचि प्रातिपदिकं करोतीत्यर्थे णिचं लभते। अनुदात्तेदिति। एतच्च भृशादिभ्यो भुवीति सूत्रे कैयटेनो
क्तं। अकारप्रश्लेषादिति। तेन प्रश्लिष्टस्येत्संज्ञा प्रकृतस्याकारस्य तु इष्ठवदिति टिलोपः। तथा च अग्लोपात् सुसंग्रामत इत्यत्र नोपधाह्रस्वः। सुख दुःखतच्च

शब्देन सुखदुःखे प्रातिपदिकार्थौ परामृश्येते। प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे अनयोः पाठः सोपसर्गान्मन्त्रयत्यर्थ इत्येके। सुखदुःखाभ्यां तत्तत्क्रियायामेव णिच् स्यान्न त्वाचष्ट इत्यस्मिन्नर्थे इत्येतदर्थः पाठ इत्यन्ये पुच्छादिष्विति भीमसेनस्य वाक्यं। ग्रंथांत इति। भू सत्तायामित्यादिधातुपाठस्यांत इत्यर्थः॥ इति चुरादयः॥
तत्प्रयोजको हेतुश्च। तच्छब्देन स्वतंत्रः कर्तेति पूर्वसूत्रोपात्तः कर्ता परामृश्यते। तस्य कर्तुः प्रयोजकः प्रेरकः तद्व्यापारानुकूलव्यापारवानित्यर्थः। चकारः एकसंज्ञाधिकारबाधनार्थस्तदाह। हेतुसंज्ञः कर्तृसंज्ञश्चेति। हेतुसंज्ञायाः प्रयोजनं भीस्म्योर्हेतुभये भियो हेतुभये षुगित्यादौ प्रयोजकस्य हेतुत्वेन व्यवहारः। कर्तृसंज्ञायास्तु लः कर्मणि च भावे चेति सूत्रेण प्रयोजके वाच्ये लकारादयः॥ हेतुमति च। स्वनिष्ठाधारतानिरूपिताधेयतासंबंधेन हेतुर्यत्रास्ति स हेतुमान् व्यापारः। तस्मिन् वाच्ये णिजित्याह। प्रयोजकव्यापार इति। प्रयोजकश्चेतनाचेतनसाधारण्येन विवक्षितः स च क्वचित्सिद्धः क्वचित्फलरूपः देवदत्तः पाचयति गमयतीत्यादौ सिद्धः। भिक्षा वासयति संग्रामो वासयतीत्यादौ तु फलरूपः। प्रेषणादाविति। भृत्यादेर्निकृष्टस्य प्रव

तत्प्रयोजको हेतुश्च। १।४।५५॥ कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्। हेतुमति च। ३।१।२६॥ प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्। भवन्तं प्रेरयति। भावयति॥ णिचश्चेति कर्तृगे फले आत्मनेपदम्। भावयते। भावयाम्बभूव॥ ॥

र्तना प्रेषणा। आज्ञेत्यर्थः। आदिशब्देन अध्येषणानुमत्यादीनामुपादानं। समानस्याधिकस्य वा ऋत्विगाचार्यादेः प्रवर्तना अध्येषणं। प्रार्थनेत्यर्थः। अनुमतिस्तु राजादेः संमतिः तां विना यागादिक्रिया न निष्पद्यत इत्यनुमतिमात्रेण राजादिः प्रयोजकः। अनुमत्यादीत्यादिशब्देनात्रोपदेशानुग्रहयोरुपादानं। ज्वरितः कषायं पिबेदित्युपदेशमात्रेण वैद्यादिः प्रयोजकः। यस्तु केनचिद्धंतुमिष्टं पलायमानं निरुणद्धि सोपि हंतुरनुग्राहकत्वेन प्रयोजकः। सर्वेप्येते विशेषाः कथं णिच्प्रत्ययगम्या इति चेत्। अत्राहुः। सर्वानुगतं प्रवर्तनासामान्यं णिचोऽर्थः विशेषास्तु अर्थप्रकरणादिगम्या इति। नन्वेवं णिचो लोडादीनां च पर्यायता स्यात्तथा च इदानीं पृच्छतु भवानिति वक्तव्ये प्रच्छयतीति णिजपि प्रयुज्येतेति चेन्न। मैवं। कर्तुः प्रयोजको हि हेतुः प्रेषविषयः संबोध्यो देवदत्तादिः स तु नाद्यापि प्रश्नकर्तृत्वेनावधारितः। तथा च प्रयोज्यप्रवृत्त्युपहितायाः प्रयोजकनिष्ठप्रवृत्तेः सा णिजर्थस्तदनुपहिता

प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः। उक्तं च। द्रव्यमात्रस्य तु प्रैषे एच्छादेर्लोड्विधीयते। सक्रियस्य प्रयोगस्तु यदा स विषयो णिच इति। अस्यार्थः। कर्तृत्वेनानवधारितस्य देवदत्तादेस्तु प्रैषे प्रच्छत्नीप्सायामित्यादेर्लोड्भवति प्रयोज्यप्रवृत्त्युपहितप्रवृत्त्याश्रयस्य प्रयुक्तिस्तु यदा सा णिचो विषय इति। किंच प्रयोक्तृनिष्ठा प्रयुक्तिर्लोडर्थः प्रयोक्तृप्रयोक्तृकर्तृका तु णिजर्थः। पचेद्देवदत्तेनेत्यत्र हि वक्तैव प्रेरकः पाचयतीत्यादौ वक्तृभिन्नः पाचयामीत्यादौ तु वक्तेति दिक्॥ ॐ॥ ओः पुयण्जि। पुयण्जीति समाहारद्वन्द्वात्सप्तम्येकवचनं। अपर इति बहुव्रीहिः। अत्र लोपोऽभ्यासस्येत्यतः अभ्यासस्येत्यनुवर्तते

ओः पुयण्ज्यपरे। ७।४।८०॥ सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः। अबीभवत्। अपीपवत्। मूङ्। अमीमवत्। अयीयवत्। अरीरवत्। अलीलवत्। अजीजवत्॥ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा। ७।४।८१॥ एषामभ्यासोकारस्येत्वं वा स्यात्सन्यवर्णपरे धात्वक्षरे परे। असिस्रवत्। असुस्रवत्। नाग्लोपीति ह्रस्वनिषेधः। अशशासत्। अडुढौकत्। अचीचकासत्। मतान्तरे। अचचकासत्। अग्लोपीत्तु सुब्धातुप्रकरणे उदाहरिष्यते। ण्यन्तानां चापूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः। चोरयति। णौ चङीति ह्रस्वः। दीर्घो लघोः। न चाग्लोपित्वाद्द्वयोरप्यसम्भवः। ण्याकृतिनिर्देशात्। अचूचुरत्। णौ च संश्चङोः। ६।१।३१॥ सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात्। सम्प्रसारणं तदाश्रयं च कार्यं बलवदिति

भृशामित्यनन्तरद्वन्द्वग्रहणं संन्यतरस्यतः सनीति च अंगस्येति तु अधिक्रियत एवं त ((वचनात्सम्प्रसारणम्पूर्वरूपम्। अशूशवत्। अलघुत्वा... दि तदभिप्रेत्याह। सनि परे यदङ्गमित्यादि। अपरे किं। बुभूषति। पवर्गयण्जीति किं। उर्णुनविषति। अबीभवदित्यादि। भूसत्तायां। पूङ् पवने। मूङ् बंधने युमिश्रणादौ। रु शब्दे। लञ् छेदने। जु गतौ। सौत्रोऽयं धातुर्जु चंक्रम्य इत्यत्र निर्दिष्टः ननु भूभू इति हि द्वित्वोत्तरं वृद्ध्यावादेशौ भवतस्तत्कृतस्य णौ चङीति ह्रस्वस्यानिवृत्त्वावेन लघुपरत्वाभावात्सन्वद्भावाप्रवृत्त्या ऽबीभवदित्यादावभ्यासोवर्णस्येत्वं दुर्लभमिति चेत्। अत्राहुः आरंभसामर्थ्यादेवनस्यानिवत्त्वमिति॥

स्रवति शृणोति। अपर इत्यनुवर्तते न तु पुयण्जीति। पवर्गजकारयोरसंभवाद्यणः संभवेऽपि अव्यभिचारान्नदाह। अवर्णपरे धात्वक्षर इति। अक्षरशब्दोऽत्र वर्णपरः। अवर्णपरः किं। शुश्रूषति। शृणोत्यादेरुदाहरणं तु अशिश्रवत्। अशुश्रवत्। अदिद्रवत्। अदुद्रवत्। अपिप्रवत्। अपुप्रवत्॥ अचिच्यवत्। अचुच्यवत्। अडुढौकदिति। ढौकृ गतौ। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर इति पक्षाश्रयेणाह। अचीचकासदिति। मतान्तर इति अङ्गं यत्र द्विरुच्यते इति मते चङ्परे णौ यल्लघुतत्परो योऽङ्गस्याभ्यास इति मते चेत्यर्थः सुप्धातुप्रकरण इति। अतितिरायत्। असस्मधायत्। अविविध्वद्रायत्। अदिदेवद्रायदित्याद्युदाहरिष्यत इत्यर्थः। वृद्धिं बाधित्वेति। एयल्लोपावियङ्ङ्स्योदिवचनाणिलोपांशप्रत्याख्यानपक्षेऽपवाद इत्यर्थः। असंभव इति। तथा च। अचुचो रदित्येव रूपमिति भावः। ए(?)ाकृतिनिर्देशादिति। चङ्परे णावित्यत्र चङ्परे णित्वे इत्यर्थस्तेन णिहूयेसत्यपि णित्वं चङ्परमस्तीति ह्रस्वदीर्घयोरस्ति संभव इति भावः। एतेन अवीवदद्वीणां परिवादकेनेत्यादौ सन्वद्भावो व्याख्यातस्तत्रापीत्थमेव पूर्व

स्तम्भुसिवुसहां चङि। ८। ३। ११६ एषां सस्य षो न स्याच्चङि। अतस्तम्भत्। पर्यसीषिवत्। न्यसीषहत्। अटिटत्। आशिशत्। बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात्प्रागेव। ओणेॠदित्करणाल्लिङ्गात्। मा भवानिदिधत्॥ ॥ ॥

पक्षसिद्धान्तयोस्तुल्यत्वात्। लौ चा। विभाषाश्वेरित्यनुवर्तते संश्च ञेरिति णावित्यस्य विशेषणं ह्वः संप्रसारणमित्यतः संप्रसारणमनुवर्तत एवेत्याह। सन्परे चङ्परे चेत्यादि। वचनादिति। इयं च परिभाषा लिट्यभ्यासस्योभयेषामित्यत्र वच्यादीनां ग्रह्यादीनामनुवृत्त्यैवेष्टसिद्धावुभयेषां ग्रहणसामर्थ्याल्लभ्यते। अन्यथा न व्रश्चेत्यत्र हलादिः शेषे कृते वस्य संप्रसारणं स्यादित्याकूतः। ॥स्तम्भुसिवु॥ स्तम्भुः सौत्रः। षिवु तन्तुसन्ताने। षह मर्षणे। स्तम्भुतेस्तम्भेरित्यनेन प्राप्तिरन्ययोस्तु परिनिविभ्य इत्यनेनेति विवेकः। आटिटत्। आशिशदिति। णिचा सह द्वित्वात्सन्वद्भावो नेति तन्न विषये विहितो यो दीर्घो लघोरिति दीर्घः स न प्रवर्तते। ॠदित्करणाल्लिङ्गादिति। यदि पूर्वं द्विर्वचनं भवेत्तदा णिशब्दस्य द्वित्वे सत्युपधाह्रस्वस्याप्राप्तेस्तत्प्रतिषेधार्थमृदित्करणं व्यर्थं स्यादतस्तदृकारो ज्ञापकमेव॥

एजादावेधत्याविति। एत्येधत्यूठ्स्विति सूत्रे एजाद्योरेत्येधत्योरिति व्याख्यानत्वादिति भावः। न च माभवान्प्रेदिधत् इत्यत्र णौ चङीति ह्रस्वे कृते नायमेधतिरिति वृद्धेरप्रव
र्तौ किमेधतेरेजादिविशेषणेनेति वाच्यं। एकदेशविकृतस्यानन्यत्वात्। न चैवमपि अजादेर्द्वितीयस्येति धिशब्दस्यानेधिधिशब्दादेशे सति वस्तसोरेव प्रकृ
तिप्रत्ययविभागसंमोह इति वाच्यं। द्विःप्रयोगो द्विर्वचनं षाष्ठमिति भाष्ये सिद्धान्तितत्वात्। अन्यथा इहैव प्रेदिधदित्यत्र णिलोपो न स्यात्। जिघांसतीत्यादौ स
न्सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यादिति दिक्। उब्ज आर्जव इति। अयमुपध्मानीयोपध इति वार्तिककृतोक्तं। तस्य झलां जश् झशीति जश्त्वेन
बकारे कृते उब्जिता। उब्जितुमिति रूपं। एतच्चायोगवाहानां शर्षु पाठस्य फलं। भाष्यकारादयस्तूपध्मानीयोपधपाठे उब्जिजिषतीति रूपं न सिध्येत्। यदि पू
र्वत्रासिद्धीयमद्विर्वचने इत्याश्रित्य बकारोत्तरं द्वित्वं क्रियते यदि वा अस्या नित्यतामाश्रित्य बकारात् पूर्वमेवोपध्मानीयस्य द्वित्वमुभयथापि इष्टरूपासिद्धि
राधे उब्जिजिषतीति द्वितीये तूपध्मानीयस्य चुत्वान्न दादेरजादेर्द्वितीयस्येति द्वित्वे हलादिः शेषे द्वितीयोपध्मानीयस्य जश्त्वेन बकारे पश्चात् प्रथमस्यापि तथैव

एजादावेधतौ विधानान्न वृद्धिः। माभवान्प्रेदिधत्। नन्द्राः इति न दराणां द्वित्वं। औन्दिदत्। आड्डिडत्। आर्चिचत्। उब्ज आर्जवे। उ
पदेशे दकारोपधः। भुजन्युब्जौ पाण्युपतापयोरिति सूत्रे निपातनाद्दस्य वः स चान्तरङ्गोऽपि द्वित्वविषये नन्द्रा इति निषेधाज्जिशब्दस्य द्वि
त्वे कृते प्रवर्तते। न तु ततः प्राक् दकारोच्चारणसामर्थ्यात्। औब्जिजत्॥ ॥

११ बकारे उब्जिषतीत्यापत्तेरतश्चेष्टसिद्धये दकारोपधो
यं स्वीकार्यः। भुजन्युब्जाविति निपातनादुपधादकारस्य वो भवतीति वाक्यं कल्प्यते तच्च स्तोः श्चुना श्चुरित्यस्याग्रे। तदयमर्थः। श्चुना योगे उद्ज्ञेर्दकारोऽप्यव
कार इति। अभ्युद्गः समुद्ग इत्यत्र तु उब्जिता उब्जितुमित्यत्रैव च वर्गयोगो नास्तीति न वकारः। दकारोपधे चास्मिन् स्वीकृते नन्द्रा इति निषेधाज्जिशब्दस्य द्वि
त्वे न ततो वकारे च उब्जिजिषतीति सिध्यति रूपं। न च पूर्वत्रासिद्धीयमद्विर्वचने इति वकारोत्तरं द्विर्वचने सति स्यादेवानिष्टमिति वाच्यं। द्विर्वचने हि त्रैपादि
कं सिद्धं न तु तन्निषेधेऽपि तथा च निषेधे त्रिपादीस्थस्यासिद्धत्वान्न न्द्रा इति निषेधः प्रवर्तते। यद्वा। तादृशवाक्यमिह न कल्प्यते किंतु भुजन्युब्जाविति नि
पातनेन दस्य व इति। न चैवं वकारसहितस्य द्वित्वप्रसंगः। धातौ दकारोच्चारणसामर्थ्यात्। न चाभ्युद्ग इत्यादावपि वकारश्रवणप्रसंगः। अकुत्वविषय॥

एवचकारनियातनाभ्युपगमात्। यद्वा। अभ्युद्दइत्यादिरूपं त्वनुपसर्गाद्दमेर्ड प्रत्यये ज्ञेयं। उद्जेस्तु घञि अनभिधानात् प्रयोगाभाव इति वदंति। न देतन्ड्राष्यादिम
तमभिप्रेत्याह। उपदेशे इकारोपध इत्यादि॥ ॥ अजादेरित्येवेति। नन्द्राइत्यत्र अजादेरित्यनुवर्तते तेन आदिभूतादचः परो एव नदराद्विर्नोच्यंते नान्येइ
त्यर्थः। ननु लवस्थायामेव अडिति भाष्यकारोक्तपक्षे अदिद्रपदित्यत्र अजादित्वमस्त्येवन्याय्यश्च प्रथमम टपरत्वादंतरंगत्वाच्चेति चेत्। अत्राहुः। द्वितीयस्येत्यस्य
नुवर्तते न तत्सामर्थ्याच्च नित्यं द्वितीयस्येति तदर्थः। तेन लावस्थायामटि कृतेपि धातुसंज्ञाप्रवृत्तिकाले अजादित्वाभावान्नोक्तदोषः। नित्यं द्वितीयस्येत्युक्ते
चायं नदराणां प्रथममेव निषेधात्। न चैवं नित्यं द्वितीयस्येतिव्याख्यायैव इष्टसिद्धौ अजादेरित्यस्यानुवृत्तिर्मास्त्विति वाच्यं। इर्द्रिद्रीयिषतीत्यत्र एकाचो द्वे प्रथमस्येति प्रथमैकाजंशस्य

अजादेरित्येवं नेह। अदिद्रपत्। इभेरशब्लिटोः ७।१।६३॥ इभेर्नुमस्यादचि न तु शब्लिटोः। लभेश्च ७।१।६४॥ अरम्भत्। अललम्भत्। हेर
चङीति सूत्रे चङीत्युक्तेः कुत्वं न। स्पजीहयत्। अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्। असस्मरत्। नपरत्वसामर्थ्याद्दत्र लघोर्न दीर्घः। वि
भाषा वेष्टिचेष्ट्योः। ७।४।९६॥ अभ्यासस्यात्वं वास्याच्चङ्परे णौ। अववेष्टत्। अविवेष्टत्। अचचेष्टत्। अचिचेष्टत्। भ्राजभासेत्यादिना वोप
धाह्रस्वः। अबिभ्रजत्। अबभ्राजत्। काण्यादीनां वेति वक्तव्यम्। त्वनाकरणभणश्रणलुपहेठः काण्यादयः। षष्ठाध्याये उक्तं हायि वामिंन्नो
टिलोपस्य स्थानिवत्त्वादिस्थानिकाप्रस्ते। चाणिलोठीत्यप्यन्यत्र इत्यं ह्यदेश। अचीकणत्। अचकाणत्॥ ॥ इ द्वित्वनिषेधापत्तेः। अजादेरित्युक्तौ

त्वादिभूतादचः परत्वं इकारस्य नेति सिद्धमिष्टं। न च अजादेरित्युक्तावपि चंदिद्रीयिषतीत्यत्र दोषः स्यादेव आद्यवयवस्य हलत्वान्नकारस्य द्वित्वनिषेधाप्रस
गादिति वाच्यं। अजादेरिति कर्मधारयात् पंचमीत्युक्तत्वात्। इह च एकदेशे स्वरितत्वं प्रतिज्ञाय अच इत्येवानुवर्त्यतां। अथवा आदेरित्यस्याप्यनुवर्तनमस्तु त
स्य नावयवपरत्वं किं तु पूर्ववर्तिमात्रपरत्वं शब्दाधिकाराश्रयणादिति ज्ञेयं। नन्वेवमुत्तरार्थतया द्वितीयस्येतिग्रहणस्य सार्थकत्वे स्थिते द्वितीयस्येति न वक्त
व्यमिति भाष्यं विरुध्येतेति चेत्। मैवं। यस्मिन्सूत्रे पठितं तत्र मास्त्विति तदाशयात्। न च अजादेरित्येतावत्युक्ते यस्य कस्य चिदेकाचो द्वित्वं स्यादिति वाच्यं।
प्रथमस्यैकाचः पूर्वत्वेनैव सिद्धेः पुनरारंभो द्वितीयस्य द्वित्वार्थमिति सुवचत्वात्। इभेरशब्लिटोः इधिजभोरित्यतो ऽचीति इदित इत्यतो नुमिति चानुवर्तते

अचि किं। आरब्धं     अशावृत्तिदोः किं। ... रेमे। रमेश्च योगविभाग आङो यी न्यत्र लभेरेवानुवृत्तिर्यथा स्यादिति। कारणपादीनामिति। कण निमीलने। रण शब्दे।
भण शब्दे। श्रण दाने। लुप छेदने। हिठ विबाधायां। षट्। हेठ स्पर्द्धायां शब्दे च। वण शब्दे। लुठ प्रतिघाते। लुप छेदने। लोपीति णिजन्त निर्देशः। लापयइति पाठान्तरं।
लप व्यक्तायां वाचि। केचित्तु लप हेठ इति पठंति। न्यासे चत्वारः। चण दाने। लुट स्तेये भ्वादिः। चुरादौ दंडकपाठे भाषार्थकोपि। अरीरणत्। अरराणत्। अबीभणत्। अव
भाणत्। अशिश्रणत्। अशश्राणत्। अलूलुपत्। अलुलोपत्। अजीहिठत्। अजिहेठत्॥ ॥ स्वापेश्चङि। चङि किं। स्वापयति। असूषुपदिति। इह संप्रसा
रणेन्तरंगत्वं। शाच्छासा। शो तनूकरणे। छो छेदने। षो अन्तकर्मणि। ह्वेञ् स्पर्द्धायां। व्येञ् संवरणे। वेञ् तंतुसंताने। पा पाने। लुग्विकरणो लुग्विकरणेति परि

स्वापेश्चङि। ६। १। १८। ण्यन्तस्य स्वापेश्चङि सम्प्रसारणं स्यात्। असूषुपत्। शाच्छासाह्वाव्यावेपां युक्। ७। ३। ३७। युकोपवादः। शाय-
यति। ह्वाययति। ह्वः सम्प्रसारणम्। ६। १। ३२। सन्परे चङ्परे च णौ ह्वः सम्प्रसारणं स्यात्। अजूहवत्। अजुहावत्। लोपः पिबतेरीच्चाभ्या-
सस्य। ७। ४। ४। पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ। अपीप्यत्। अर्त्तिह्रीति पुक्। अर्पयति। ह्रेपयति। व्लेपय-
ति। रेपयति। यलोपः। क्नोपयति। क्ष्मापयति। स्थापयति। तिष्ठतेरित्। ७। ४। ५। उपधाया इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्। जिघ्र-
तेर्वा। ७। ४। ६। अजिघ्रिपत्। अजिघ्रपत्। उर्ऋत्। अचीकृतत्। अचिकीर्त्तत्। अवीवृतत्। अववर्त्तत्। अमीमृजत्। अममार्जत्। पातेर्णौ लुग्व

भाष्यवार्त्तिकस्पर्शं इति नेह गृह्यते। तस्मात्तु पालयतीति रूपमनुपदं वक्ष्यति। शाययति। अशीशयत्। छाययति। अ ((क्तव्यः। पुकोपवादः। पालयति॥
चिच्छयत्। साययति। असीषयत्। ह्वाययति। अजूहवत्। व्याययति। अविव्ययत्। वाययति। अवीवयत्। पाययति। अपीप्यत्। इह शाच्छासादीनां कृतात्वानां निर्देशः पुकः प्राप्तिं ध्व-
नयितुं तत्प्रयोजनं त्वस्मिन्प्रकरणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः। तेन ध्यापयति क्ष्मापयतीत्यादि सिद्धं। ह्वः सम्प्रसारणे च सन्यङोरिति वर्तनेन त-
दाह। सन्परइत्यादि। अजूहवत्। अजुहावदिति। कारणपादीनां वेति ह्रस्वविकल्पः। अपीप्यदिति उपधालोपस्य द्वित्वे कर्त्तव्ये प्रतिषेधात् कृते लोपे स्था-
निवद्भावाद् द्वापायशब्दस्य द्वित्वे हलादिः शेषे ईकारः। स च अनभ्यासविकार इति निषेधादन्त्यस्य इहाम्लोपित्वादलघूपधत्वाच्च ... पिहि। पीयारम।

उ. सि. कौ. टी. त. ८५

ह्रावित्वं विधीयते व्लेपयतीत्यादि। ज्ञी वरणे। रीङ् स्रवणे। क्नूयी शब्दे उंदे च। क्ष्मायी विधूनने। तिष्ठतेरित्। तकारो मंदप्रयोजनः। स्फुतिपानिर्देशो यङ्लुकनिवृत्त्यर्थः।
अन्तास्थापयतेर्लिटि तास्थापयीति। तास्थापेति। उऋत्। चुरादौ व्याख्यातं। अचिकीर्तदिति। ऋदादेशाभावपक्षे उपधायाश्चेतीत्वे रपरत्वमुपधायां चेति दीर्घः।
पुकोपवाद इति। आरंतत्वात्पुकः प्राप्तिः। एवं च लुगागमस्य पुङ्निवृत्तिरेव फलं पालयतीति रूपस्य पाल रक्षणे इति धातुनाऽपि सिद्धेरिति भावः॥
वो विधूनने लुग्विकरणः। लुग्विकरणपरिभाषया ओवै शोषणे इत्यस्यैव ग्रहणं न तु वा गतिगंधनयोरित्यस्य लक्षणप्रतिपदोक्तपरिभाषात्वस्मिन् प्रकर
णे न प्रवर्तते इत्युक्तं प्राक्। ओवै शोषणे इत्यस्य हस्वमिति वदन् वामनोऽप्यत्रानुकूलः। वज गताविति धातुना वाजयतीति रूपे सिद्धे जुगागमस्य पुङ्निवृ
त्तिरेव रहस्यफलं। वातेरिति। वायतेरिति वक्तुं युक्तं। आत्वविधायकसूत्रस्मारयति। विभाषालीयतेरिति। लीयतेरिति यका निर्देशो न तु श्यना। अ

वो विधूनने जुक् ७।३।३८॥ वातेर्जुक् स्यात् णौ। कम्पेर्थे। वाजयति। कम्पे किं। केशान्वापयति। विभाषा लीयतेः। लीलोर्नुग्लुकावन्यत
रस्यां स्नेहविपातने ७।३।३९॥ लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ स्तो वा णौ स्नेहद्रवे। विलीनयति। विलापयति। विलालयति। विलाप
यति वा घृतम्। लीई इति ईकारप्रश्लेषादात्वपक्षे नुक्। स्नेहद्रवे किम्। लोहं विलापयति। प्रलम्भनाभिभवपूजासु लियो नित्यमात्वमिष्य तिवाच्यम्॥

न्यथा विभाषा लीङ् इत्येवावक्ष्यत्। तेन लीलीङोरुभयोरप्यात्वं भवति। लीलोः। लीङ् श्लेषणे दिवादिः। ली श्लेषणे क्र्यादिः। लाग्रहणेन
ला आदाने अदादिः कृतात्वो लीलीङौ च तत्र योपि गृह्यंते। लीयतेरिति श्विच्यादिह्यापि यका निर्देश इत्युभयोरपि ग्रहणं न च निरनुबंधकग्रहणे न सानुबंध
कस्य ग्रहणमिति परिभाषया सूत्रेपि लीङो न ग्रहणमिति वाच्यं। इयं हि परिभाषा वामदेवाड्ड्यड्ड्यौ विन्यत्र डित्वेन ज्ञापिता। ज्ञापनं च उत्सर्गतः। सजातीया
पेक्षमिति प्रत्ययग्रहणविषयत्वमस्याः कल्प्यते। यथा सद्व्यपत्तव्यसमानाधिकरणेनेत्यत्र तव्यस्यैव ग्रहणं न तु तव्यतः। अत एव कर्तृत्व श्नाः क्लिरितिसू
त्रे ग्रहणमिति ज्ञीर्यत्ते उभयोर्ग्रहणमिति न्यासकृतोक्तं। अतोऽत्र लीलीङोर्ग्रहणमिति सम्यगेव। न चैवं दिव औदिति सूत्रे निरनुबंधपरिभाषया दिविति प्राति
पदिकस्यैव ग्रहणं न तु धातोरिति ग्रन्थः कथं संगच्छते इति वाच्यं। उत्सर्गतः प्रत्ययग्रहणविषयत्वेन क्वचिदन्यत्रापि प्रवृत्तौ बाधकाभावादिति वदंति।

विलीनयतीति। लीलीङोरीकारान्तयोर्णिचि रूपं विलापयतीति। नुगभावपक्षे तयोरेव रूपं विलालयतीति। लातेः कृतात्वयोर्लीलीङोश्च लुकि रूपं विलापय तीति। लुगभावपक्षे आदन्तानां नेयामेव रूपं लोहं विलाययतीति। नुगलुकोरभावादात्वपक्षे पुक् आत्वाभावे त्वयावादेशौ। प्रलम्भनेति। प्रलम्भनं वञ्चनम्। अप्रीतिकिं। लीयते। लिनाति॥ ❀ ॥ लियः संमानना चात्प्रलम्भने। विभेतेर्हेतुभये। हेतुः प्रयोजकः। इह आदेच उपदेशे इत्यतः एच आदित्यनुवर्तते विभ

लियः सम्माननशालीनीकरणयोश्च। १।३।७०॥ लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे। जटाभिर्लापय ते। पूजामधिगच्छतीत्यर्थः। श्येनो वर्तिकामुल्लापयते। अभिभवतीत्यर्थः। बालमुल्लापयते। वञ्चयतीत्यर्थः॥ विभेतेर्हेतुभये। ६।१।५६॥ विभेतेरे च आत्वं वा स्यात्प्रयोजकाद्भयं चेत्। भीस्म्योर्हेतुभये। १।३।६८॥ आभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ। सूत्रे भयग्रहणमात्वयोरुपलक्षणम्। मुण्डो भापयते। भियो हेतुभये षुक्। ७।३।४०॥ भी ई इतीकारः प्रश्लिष्यते। ईकारान्तस्य भियः षुक् स्यात् णौ हेतुभये। भीषयते। नित्यं स्मयतेः। ६।१।५७॥ स्मयतेरेचो नित्यमात्वं स्याद्धेतोः स्मये। जटिलो विस्मापयते। हेतोश्चेद्भयस्मयावित्युक्तेर्नेह। कुञ्चिकयैनं भापयति। विस्माप यति। कथं तर्हि विस्मापयन् विस्मितमात्मवृत्तौ इति मनुष्यवाचेति करणादेव हि तत्र स्मयः। अन्यथा शानजपि स्याद्वा सत्यम्। विस्मा पयन्नित्येव पाठ इति साम्प्रदायिकाः। यद्वा। मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते तया सिंहो विस्मापयन्निति एवं ज्ञात्वा शतेति व्याख्येयम्। स्फा यो वः। ७।३।४१॥ णौ। स्फावयति। शदेरगतौ तः। ७।३।४२॥ शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ। शातयति। गतौ तु। गाः शादयति गोविन्दः। गमय तीत्यर्थः। रुहः पोऽन्यतरस्याम्। ७।३।४३॥ णौ। रोपयति। रोहयति॥ ९९

नालीयतेरित्यतो विभाषा चिस्फुरोरित्यतो णाविति चानुवर्तते। ह। विभेतेरे च इत्यादि। भीस्म्योः। व्यत्ययेन षष्ठीत्याह आभ्यामिति। लोरणाविन्यतो णेरित्यनुवृत्तेर्ण्यन्ताभ्यामेव विधिरकर्त्रभिप्रायार्थः। ईकारान्तस्येति। तेन आत्वपक्षे भापयते इत्येव न त्वत्र षुगित्यर्थः। करणादेव हीति। तथा च। करणात्स्मये आत्वाभावेन पुक् दुर्लभ इति भावः। प्रयोज्यकर्त्रीति। यद्यपि प्रथमम् अर्थं प्रति मनुष्यवा गेव प्रयोजिका अत एव आत्वं प्रवृत्तं तथापि हेतौ यणिजर्थाभिप्राये तद्युक्तमिति मनोरमायाम्। केचित्तु प्रयोज्यस्य कर्त्री प्रयोजककर्त्रीति या वदन्ति प्रथम

उ॰
सि॰कौ॰ लिङ्गमभिप्रायेणोवेदं सुयोगमित्याहुः। ण्यंतात्ण्विति। राजा विस्मयते तं मनुष्य वा कृ विस्मापयते तपासिंहो विस्मापयन् इत्यर्थः। एवं च प्रथमत्रापि हेतुर्मनुष्य वा गिति
टी॰त॰ आत्वपुकावुपपन्नौ॥ ॥ क्रीङ्‌जीनां। डुक्रीञ् इङ् अध्ययने। जि जये। अचिक्रपत्। अजीजपत्। अध्यजीगपत् इति। नात्रणिज्निमित्तस्य गाङो हि लेकर्तव्ये स्था
८६ निवद्भावो निषेधो वा शंक्यः। यत्राभ्यासोत्तरखंडे आद्यो जवर्णोस्ति तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात्। इह तु गाङः पूर्वसति हि द्वित्वे अजादेर्द्वितीयस्येति णि
चएव द्वित्वं भवेत्तत्रश्च इङ् परणिज्निमित्तो गाङ् न तन्नश्च प्रक्रियायां परिनिष्ठितरूपे वा अवर्णवदुच्चारखंडदुर्लभं कीर्तयति सामर्थ्यादिति नोक्तशंकावकाशः। अ
ध्यापिपदिति णिच्छब्दस्यात्र द्वित्वं। सिध्यतेरपारा इत्यनात्निर्देशाद्वौ वादिकस्याग्रहणं। तत्त्वनिश्चिनोतीति। तत्त्वनिश्चयश्चात्मविषयकः स च परलोके उपयु

क्रीङ्‌जीनां णौ। ६। १। ४८॥ एषामेच आत्वं स्याण्णौ। क्रापयति। अध्यापयति। जापयति। णौ च संश्चङोः। ६। १। ३१॥ सन्परे चङ्परे च णौ
इङो गाङ् स्यात्। अध्यजीगपत्। अध्यापिपत्। सिध्यतेरपारलौकिके। ६। १। ४९॥ ऐहलौकिकेर्थे विद्यमानस्य सिध्यतेरेच आत्वं स्याण्णौ।
अन्नं साधयति। निष्पादयतीत्यर्थः। अपारलौकिके किम्। तापसः सिध्यति। तत्त्वं निश्चिनोति। तं प्रेरयति। सेधयति तापसं तपः। प्रज
नेर्वीयतेः। ६। १। ५५॥ अस्यैच आत्वं वा स्याण्णौ प्रजनेर्थे। वापयति। वाययति वा गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः। ऊदुपधाया गोहः। ६।
४। ८९॥ गूहयति। दोषो णौ। ६। ४। ९०॥ दुष इति सुवचम्। दुष्यतेरुपधाया ऊत्स्यात्सौ। दूषयति। वा चित्तविरागे। ६। ४। ९१॥ विरागः प्रीत
ता। चित्तं दूषयति। दोषयति वा कामः। मितां ह्रस्वः। भ्वादौ घुरादौ च मितउक्ताः। घटयति। जनीजृष्। जनयति। जरयति॥

त्येते। प्रजनो वीयतेरिति वीगतिप्रजनादौ वा रीदिकस्य यका निर्देशः। अत्र केचिदुत् प्रेरयंति वीतेरितिवक्तव्ये यका निर्देशात् व्येञोपि ग्रहणं तस्यापि यकि संप्रसार ८६
णे वीधातुना समानरूपत्वात्। अतो द्वयोरपि प्रजनेर्थे आत्वं वा स्यात् नन्वआत्वेतर भावे च पघापि व्येञः व्यापयतीति रूपं तु ल्यं शाच्छासातिपुकापवाद तयाप्युग्विधाना
न तथापि रिाजं नात् क्विपि व्योः व्यौ व्याः आत्वाभावपक्षे। व्येः व्यायो॥ व्यायः इत्यस्ति विशेषः। विभाषाविधानसामर्थ्यात्पक्षेप्यादेच उपदेशेशिति इति न प्रवर्तते। अने
कार्थत्वाच्च धातूनां व्ययतेरपि प्रजनोर्थ इति। दोषो णौ। दुष वैकृत्ये दिवादिः णौ किं। दोषः। चित्तमिति। चिती संज्ञाने इत्यस्मात्क्तः। दूषयति। दोषयति वेति। चि
॥

तेदुष्यति खानसंध्या दौर्विरक्तो भवति। तत्प्रयुंक्त इत्यर्थः॥ ॥ जृणातेस्त्विति। अपित्वादस्य मित्वं नेति भावः। आखेटकमिति। मृगयेत्यर्थः। रजयतीति। रजंति मृगा यस्मिन्
णीमरणं यत्र नु कुलव्यापारविषया भवंति तान् मृगानन्ताद्दृग्व्यापारविषयान् करोतीत्यर्थः। ज्ञपादिष्विति। तेन मित्वाद्ध्रस्व इति भावः। स्वादिगणस्थस्य तु मित्वं
नेत्युक्तं हरति चापयतीत्यादि। अपुस्फरदिति। द्वित्वे कर्तव्ये अजादेशस्य स्थानिवत्वान्निषेधाद्धास्फुरित्युकारवतो द्वित्वं ततः चिस्फुरोर्णौ विति वा आत्वं॥ उ
भौसा। इत्याभ्यासमिति सूत्रेन इति षष्ठ्यंतं प्रथमाद्विवचनांततया विपरिणम्यते इत्याह। उभौ नकाराविति। ननु साभ्यासस्येत्युक्तं उभयोरपि भविष्यतीत्युभौ यः।

जृणातेस्तु जारयति। रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः। मृगरमणमाखेटकम्। रजयति मृगान्। मृगेति किम्। रञ्जयति पक्षिणः। रमणे
इत्यत्र तु। रञ्जयति मृगान् रञ्जनेन। चुरादिषु ज्ञपादिष्विज्। चिस्फुरोर्णौ। चपयति। चययतीत्युक्तम्। चिनोतेस्तु। चापयति। चाययति। स्फार
यति। स्फोरयति। अपुस्फरत्। अपुस्फुरत्। उभौ साभ्यासस्य। ८।४।२१। साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति। प्राणिणत्। णौ
गमिरबोधने। २।४।४६। इणो गमिः स्याण्णौ। गमयति। बोधने तु। प्रत्याययति। इण्वदिकः। अधिगमयति। हनस्तोऽचिण्णलोः। हो हन्तेरिति
कुत्वम्। घातयति। ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्॥ तृतीयस्य व्यञ्जनस्य तृतीयैकाच इति वार्थः। आद्यपकारस्य द्वित्वं वारयितुमिदम्। द्वितीये त्वजा
देर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते प्रवर्त्तते। ऐर्ष्यियत्। ऐर्षिष्यत्। द्वितीयव्याख्यायां णिजन्ताच्चङि षकारस्यैवाभ्यासे श्रूयते। हलादिः शेषे बा
ना द्वित्वं तु द्वितीयस्यैव। तृतीयाभावेन प्रकृतवार्त्तिकाप्रवृत्तेः। निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिच्। तुल्यार्थः। तेन प्रार्थयन्ति शयनोत्थितं प्रियाः
स्त्वोरिति सिद्धम्। एवं सकर्मकेषु सर्वेषूह्यम्॥ इति ण्यन्तप्रक्रिया ॥
(( हणं व्यर्थमिति चेन्न। अत्र हि न साहित्यमात्रं विवक्षितं न तुल्ययोग इत्यभ्यु
पगमे द्वयोर्युगपन्नसिद्धेरित्युभौ ग्रहणं। न च तुल्ययोगाविवक्षायां तेन सहेति तुल्ययोग इति समासोऽत्र न स्यादिति शंक्यं।
तुल्ययोगग्रहणं प्रायिकं सकर्मकः सलोमक इत्युक्तत्वादिति। कैयटे तु उभौ वित्यस्मिन्नसति साभ्यासस्यानितेणौभ
वतीत्युच्यमाने वचनसामर्थ्याच्च पूर्वत्रासिद्धीयमद्विर्वचन इत्यनाश्रीयमाणे अकृतणत्वस्य द्विर्वचने कृते अनंतरस्यानितेरिति पूर्वेणैव णत्वस्य सिद्धत्वात्

उ॰ सि॰ कौ॰ टी॰ त॰ ८७

व्यवहितनकारार्थमिदं णत्वं स्यात् अनंतरस्य तु तत्र कौंडिन्यन्यायेन न स्यादिति उभावित्युच्यत इति स्थितं। साभ्यासस्येति किम्। प्राणिनमति। असत्यस्मिन् अनितेरिति
षष्ठीसंबंधसामान्यस्यानंतश्चानंतर्यादिसंबंधोपि गृह्येत। सति त्वस्मिन् अवयवावयविभावसंबंधो लभ्यते। अतो अर्थवत्साभ्यासग्रहणं यदि त्विष्टानुरोधेन।
निनेरिति षष्ठी अवयवसंबंधे व्याख्यायते अनितेश्च नकाररूपाभावात्सामर्थ्याद्द्विर्वचनं प्राप्तं एवं अनिति गृह्येतेन साभ्यासस्येति इदं प्रयोजनं। इह पूर्वेण
त्वं कृत्वा द्वित्वे कृते प्राणिणदित्यादिसिद्धावयमारंभः पूर्वत्रासिद्धीयमद्विर्वचने इत्यस्यानित्यत्वज्ञापनार्थः। तेन ऊर्णुनाव णत्वात् पूर्वमेव नुशब्दस्य द्वित्वा
दभ्यासोत्तरखंडे णत्वाभावः सिद्धः। प्रत्याययतीति। प्रतिपूर्वस्य णो ज्ञानार्थत्वात् लुङि प्रत्यायियत्। इह इलोणिचि कृते इलोयलीति यणं बाधित्वा परत्वाद्वृद्धिः
न च ओः पुयण्ज्यपरे इति ज्ञापकात् पूर्वं द्वित्वं पश्चाद्वृद्धिरिति शंक्यं। अजादेर्द्वितीयस्येति णिचो द्वित्वे अभ्यासोत्तरखंडस्यावर्णपरत्वाभावात्। इति वार्थ इति। व्याख्या
नरूपमप्राकरादृढमिति भावः। षकारस्येति। रेफस्य तु नन्द्राः इत्यनेन न निषेधादिति भावः। द्वितीये त्विति। तृतीयस्यैवाच इति पक्षेपि सन्नंते प्रवर्तते इति वचना
सामर्थ्यादिति भावः। ईर्ष्यियषतीति। तृतीयव्यंजनस्येति पक्षे इदमुदाहरणं। ईर्षिष्यदिति रूपस्यासाधुत्वमाशंक्योपपादयति द्वितीयव्याख्यायामित्यादिना।
द्वितीयस्यैवेति। एकाच इति शेषः। अथ वृत्तेरिति। किंतु सन्नंत एव प्रवर्तते। तत्र त्वनुपदं ईर्ष्यिषिषतीत्युदाहरिष्यति। अर्थ उपयाच्ञायामित्यस्मादागर्वीय
त्वादात्मनेपदेन भाव्यमिति प्रार्थयंतीति माघकाव्यादिप्रयोगोऽसाधुरित्याशंक्य तत्समर्थनायाह। निवृत्तप्रेषणादिति। उक्तं च। निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे
णिजुच्यत इति नेत्यादि। प्रार्थनां कुर्वंतीति विवक्षितार्थे प्रयोगः सिद्ध इति भावः। केचित्तु परस्मैपदसिध्यर्थं प्रार्थनं प्रार्थः तं कुर्वंति प्रार्थयंतीति व्याचक्षते तदस
त्। धातुसंज्ञाप्रयोजकप्रत्यये चिकीर्षिते उपसर्गाणां पृथक्करणस्य वक्ष्यमाणतया अर्थवेदेत्यापुगागमस्य दुर्वारत्वात्॥ इति ण्यंतप्रक्रिया॰ ॥

धातोः कर्मणः। इषिकर्मण इत्यादिः। इच्छायामिति श्रुतत्वात्कर्मस्वकर्तृकत्वं च न दृष्टमेव गृह्यत इति भावः। पठितुमिच्छतीति। एकनिष्ठा पाठगोचरा वर्तमानेच्छेत्यर्थः
पिसनोरिति। तृतीयव्यंजनस्येति पक्षे यकारस्य द्वित्वं तृतीयस्यैकाच इति पक्षे तु सन इत्यर्थः। रुदविद। रुदसाहचर्यात्तवेत्तेरेव ग्रहणं। इह रुदविदमुषां ग्रह
णं रलो व्युपधादिति विकल्पे प्राप्ते ग्रहेर्न त्वाक्ता सेडिति निषेधात्। क्त्वायाअप्राप्ते स्वपिप्रच्छोस्तु न्कः किति पि सनः कित्वस्याप्राप्तौ वचनं। रुदित्वा विदित्वा। मुषित्वा। एते
षु गुणाभावः कित्वस्य फलं। गृहीत्वा सुप्त्वा पृष्ट्वा। एतेषु संप्रसारणमपि फलं। सनिग्रहगुहोश्च। ग्रहेर्नित्यं गुहेर्विकल्पेन प्राप्ते निषेधोऽयं। सनः षत्वस्यासि
द्धत्वात् भषभाव इति। कत्वस्यासिद्धत्वान्न भष्भाव इत्येव सुवचं। केचित्तु ढत्वे सति भष्भाव इत्यध्याहारेण योजयंति। तथा च अजगृहस इति स्थिते। इणः

धातोः कर्मणः समानकर्तृकादिच्छायां वा। ३।१।७। इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्। धातोर्विहित
त्वादिह सन आर्धधातुकत्वम्। सन्यतः। पठितुमिच्छति पिपठिषति। कर्मणः किम्। गमनेनेच्छतीति करणान्माभूत्। समानकर्तृकात्कि
म्। शिष्याः पठंत्विति इच्छति गुरुः। वाग्रहणात्पक्षे वाक्यमपि। लुङ्सनोर्घस्लृ। एकाच उपदेशे इति नेट्। सस्यतत्वम्। अत्तुमिच्छति। जिघत्सति। ई
र्ष्यतेस्तृतीयस्येति पिसनोर्द्वित्वम्। ईर्ष्यियिषति। ईर्ष्यिषिषति। रुदविदमुषग्रहिस्वपिप्रच्छः संश्च। १।२।८। एभ्यः संश्च क्त्वा च कित्स्यात्। रुरु
दिषति। विविदिषति। मुमुषिषति। सनिग्रहगुहोश्च। ७।२।१२। ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात्। ग्रहिज्येति सम्प्रसारणम्। सनः षत्व
स्यासिद्धत्वाद्भष्भावः। जिघृक्षति। जुघुक्षति॥ ॥ ८८ परत्वेन सस्य षत्वं प्राप्तं तस्यासिद्धत्वात्कुत्वे भष्भावः। नेत्त्व कत्वे कवर्गात्प
रस्य षत्वमिति विधिक्रमः। अन्ये तु षत्वे ढत्वे च कृते पश्चात् भष्भावे कर्तव्ये सकारपरत्वाभावात् भष्भावो न स्यात् इत्याशंकायां सनः षत्वस्यासिद्धत्वादिति ग्रं
थः प्रवृत्त इति कार्यासिद्धिपक्षावलंबनेन व्याचक्षते। जिघृक्षतीति। गुहेर्जुघुक्षति सूत्रे चकारात् श्र्युकः कितीत्यत उक इति अनुकृष्यते। उगंतात्। बुभूषति
लुलूषति। श्रयतिस्तु नानुकृष्यते। तस्य सनीवंतर्धेति विकल्पविधानात्।

३

सि॰ कौ॰
टी॰ न॰
९८

किरश्च पंचभ्यः। पंचग्रहणमुत्तरार्थं स्पष्टप्रतिपत्तये इहैव कृतं। एवं च प्रच्छधातोरनंतरं गणपाठस्थं दृत्करणं त्यक्तुं शक्यं। अत्र त्पंचभ्य इत्यनेनैव दृत्करणं यत्तु इ पाणिनीयमिति व्याख्येयमित्याहुः॥ केचित्तु भूषाकर्मकिरादिसनामिति वार्तिके किरादित्वानार्थं दृत्करणमावश्यकमित्याहुः। अत्र इट इत्यनि दृतो वेति प्राप्ते भाष्यकारेष्टिरियं। भौवादिकयोरिति। तथा चाकृतनगमामिति वक्ष्यमाणेन दीर्घ इति भावः। इको झल। रुदविदेत्यतः सन्ननुवर्तते सनाक्षिप्तो धातुरिका विशेष्यते विशेषणेन च तदंतविधिरित्याह। इगंतादिति। इगंतात्किं। पिपासति। तिष्ठासति। झलिति किं। शिशयिषते। किंतु स्यादिति। असंयोगाल्लिट्कित् इत्यतः किदनुवर्तते इति भावः। एज्विषयेत्वाभावादिति। कित्वेन गुणाप्राप्तेरित्यर्थः। अत एवेति। यद्येज्विषयात्वं न्यात्वं भवेत्त्

किरश्च पञ्चभ्यः। ७।२।७५॥ कृ गृ दृङ् धृङ् प्रच्छ एभ्यः सन इट् स्यात्। पिपृच्छिषति। चिकरिषति। जिगरिषति। जिगलिषति। अत्र इटो दृतो वेति दीर्घो नेष्टः। दिदरिषते। दिधरिषते। कथमुद्दिधीर्षुरिति। भौवादिकयोर्धृङ्धृञोरिति ग्रहणात्॥ इको झल्। १।२।९॥ इगन्ताज्झलादिः सन् कित् स्यात्। बुभूषति। दीङ्। दातुमिच्छति दिदीषते। एज्विषयत्वाभावान्मीनातिमिनोतीत्यात्वं न। अत एव सनि मीमेति सूत्रे मा घातोः पृथग्मीग्रहणं कृतम्। हलन्ताच्च। १।२।१०॥ इक्समीपाद्धलः परो झलादिः सन् कित् स्यात्। गुह्। जुघुक्षति। बिभित्सति। इकः किम्। यियक्षते। झल्किम्। विवर्धिषते। हल्ग्रहणं जातिपरं। तृन्हू। तितृक्षति। तितृंहिषति। अज्झनगमां सनि। ६।४।१६॥ अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि। सनि लिटोर्जेः। जिगीषति। विभाषा चेः। चिकीषति। चिचीषति। जिघांसति॥ ९९ दामीग्रहणं तत्र न कुर्यात्। माग्रहणेऽविशेषादिति भावः। हलंताच्च। इगित्यनुवर्तते तदवयवत्वं हलो न संभवतीति समीपवाच्यत्रांत शब्द इत्याशयेन व्याचष्टे इक्समीपादिति। सौत्रत्वाद्विशेषणस्य तशब्दस्य परनिपातः। तितृक्षतीति। कित्वे सत्यनिदितामिति नलोपः। अज्झनगमां। गमः सामान्येन ग्रहणे गम्लृ गतावित्यस्मात् संजिगंसते इत्यत्रातिप्रसंगः स्यादतः सनि च इङश्चेति सूत्राभ्यां विहितस्येणिङोरादेशस्य इण्वदिक इति इक आदेशस्य च ग्रहणमित्याशयेनाह। अजादेशगमेरिति। एतत्सूत्रे अज्ग्रहणे लभ्यते। तथा हि। इह सनीत्येव सूत्रं कर्तव्यं। दीर्घश्रुत्योपस्थितेन अचः इत्यनेनांगस्य विशेषणात् अजंतांगस्य दीर्घः। चिचीषति। ततो हनिगम्योरित्यपरं कर्तव्यं।

एव भाज्यग्रहणमातारच्यमानप्रवृत्तिभेदेन गमेर्विशेषणार्थं। अजंतस्य दीर्घो भवति। अजादेशगमेश्चेति। झलादाविति किं। जिगमिषति। गमेरिट्परस्मैपदेष्वि
तीट्॥ ॥ सनि च। इणो गमिरबोधन इत्यतो बोधन इत्यनुवर्तते। प्रतीषिषतीति। तन्न कौण्डिन्यन्यायस्यानित्यत्वात्सन्निरूढस्याभ्यासस्येत्वं। अनित्यत्वे लिं
गं तु नित्यं कौटिल्ये गताविन्यत्र नित्यग्रहणमिति वक्ष्यते। संजिगंसते इति। समो गमृच्छिभ्यामिति तङ्। पूर्ववत्सन इति सन्नंतादपि भवति। रलो व्युपधा। न

सनि च। ७।४।४७॥ इणो गमिः स्यात्सनि न तु बोधने। जिगमिषति। बोधने प्रतीषिषति। इणवदिकः। अधिजिगमिषति। कर्मणि तङ्। प
रस्मैपदेष्विट्युक्तेर्नेट्। झलादौ सनीति दीर्घः। जिगांसते। अधिजिगांसते। अजादेशस्येत्युक्तेर्गच्छतेर्न दीर्घः। जिगंसते। संजिगंसते। इ
ङश्च। २।४।४८॥ इङो गमिः स्यात्सनि। अधिजिगांसते। रलो व्युपधाद्धलादेः संश्च। १।२।२६॥ उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेरलन्तात्प
रौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतिस्वाप्योः सम्प्रसारणम्। दिद्युतिषते। दिद्योतिषते। रुरुचिषते। रुरोचिषते। लिलिखिषति। लिलेखिषति
रलः किं। दिदेविषति। व्युपधात्किम्। विवर्तिषते। हलादेः किम्। एषिषिषति। इह नित्यमपि द्वित्वं गुणेन बाध्यते। उपधाकार्यं हि द्वित्वा
त्प्रबलम्। ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकत्वात्। सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्। ७।२।४९॥ इवन्तेभ्य ऋ
धादिभ्यश्च सन इड्वा स्यात्। इडभावे। हलन्ताच्चेति कित्त्वम्। च्छ्वोः शूडिति वस्य ऊठ्। यण्। द्वित्वम्। दुद्यूषति। दिदेविषति। स्तौतिण्योरेवेति वस्य मा।
णनियमान्न षः। सुस्यूषति। सिसेविषति। आप्ज्ञप्यृधामीत्। ७।४।५५॥ एषामच ईत्स्यात्सादौ सनि॥ अत्र लोपोऽभ्यासस्य। ७।४।५८॥ सनिमी
मेत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात्। आप्तुमिच्छति। ईप्सति। अर्द्धितुमिच्छति। रपरत्वम्। चर्त्वम्। ईर्त्सति। अर्दिधिषति॥

क्त्वा सेडित्यतः सेडिति वर्तते। चकारेण क्त्वायाः संग्रहः। असंयोगादित्यतः किदिति नोपधादित्यतो वेति चानुवर्तते तेनाह। क्त्वासनावित्यादि। सेटौ॥
भित्वाच्छित्वा तु भुक्षते॥ आप्ज्ञप्यृ। सनि मीमेत्यतः अच इत्यनुवर्तते सस्यार्धधातुक इत्यतः सीति च तदाह। अच ईत्स्यात्सादाविति। सीत्यस्य सनो विशेष
णात्सादाविति लाभः। ईप्सतीति। अजादेर्द्वितीयस्येति प्सशब्दस्य द्वित्वं॥

स्कः सीन्यतः सीत्यनुवर्तते तनस्य सने विशेषणत्वात् सादेश सनीति लाभः । मीरूपा विशेषादिति । ननु मिनोतेर्मीरूपस्य लाक्षणिकत्वात् मीग्रहणेन ग्रहणं न प्रा-
प्नोति । नैष दोषः । यत्र लक्षणाभिनिर्दिष्टत्वेन शब्दरूपमपेक्ष्यते तत्र लक्षणप्रतिपदोक्तयोरिति परिभाषोपस्थानं न तु यत्र प्रयोगाश्रयणं तत्रेति इकोझ-
लिति सूत्रे कैयटेनोक्तत्वात् । तस्यायमाशयः मीरूपमात्रस्य प्रयोगोत्राश्रितः विभाषा दिक्समासे इत्यत्र तु लक्षणाभिनिर्दिष्टस्य समासशब्दस्य ग्र-
हणात् दिङ्नामान्यन्तराल इति प्रतिपदोक्त एव समास आश्रीयते इति । लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात् क्वचिदुपतिष्ठते क्वचिन्नोपतिष्ठ-
ते इति तु निष्कृष्टोर्थः ॥ १८ ॥ मित्सतीति । हलन्ताच्चेति कित्त्वान्नोपधागुणः । शिक्षतीति । ननु निरनुबन्धपरिभाषया शकमर्षण इत्यस्यैव ग्रहणमुचित-

॥ मित्सति । मित्सते । मा माने । मित्सति । माङ् मेङोः । मित्सते । दो दाणोः । दित्सति । देङ् । दित्सते । दाण् । दित्सति । दित्सते । धेट् ॥
धित्सति । धाञ् । धित्सति । धित्सते । रिप्सते । लिप्सते । शक्लृ । शिक्षति । शकमर्षण इति दिवादिः । स्वरितेत् । शिक्षति । शिक्षते । पित्सते ।
राधो हिंसायां सनीस्वक्तव्यः ॥ रित्सति । हिंसायां किम् । आरिरात्सति । मुचोऽकर्मकस्य गुणो वा । ७।४।५७ ॥ सादेश सनि । अभ्यासलोपः
मोक्षते । मुमुक्षते वत्सः स्वयमेव । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णः । नवृस्वश्चतुर्भ्यः । विवृत्सति । तङि तु विवर्तिषते । ससिची
तिवट् । निनर्तिषति । निनृत्सति । इट् सनि वा । ७।२।४१ ॥ वृङ्वृञ्भ्यामृदन्ताच्च सन इड्वा स्यात् । तितरिषति । तितरीषति । तितीर्षति । वि-
वरिषति । विवरीषति । वुवूर्षति । वृङ् । वुवूर्षते विवरिषते । दुधूर्षति ॥

मिति चेत् । अत्राहुः । इयं हि परिभाषाऽन्यपग्रहणविषया । अत एवा-
जृव्रश्च्योरित्यत्र जॄज्वा रूभयोर्ग्रहणमिति न्यासकारेणोक्तमतोऽत्रापि भ्वादिदैवादिकयोर्ग्रहणं युक्तमेवेति । मुचोकर्मकस्य । हलन्ताच्चेति कित्त्वेन गुणाभावे
प्राप्ते विधिरयं । विवृत्सतीति । वृद्भ्यः स्यसनोरिति विकल्पेन परस्मैपदं । इट् सनि वा । चिकीर्षतीत्यादावज्झनगमामिति दीर्घे कृते नदप्रवर्तते । एकाच उ-
पदेश इत्यतः उपदेश इत्यनुवर्त्य उपदेशे ऋकारान्तादिति व्याख्यानात् । अत एवेट् विनैवोदाहरति । दुधूर्षतीति । धुर्वी कौटिल्ये । अज्झनेति दीर्घः । उराछच
॥ पूर्वस्य तु उरपरत्वं हलि चेति दीर्घः ॥ ॥

३

सि॰कौ॰ सिपूङ्पूङिति ऊकारानुबंधग्रहणान्न पूञः । पुपूषतीत्येव । सनिग्रहे नीण्निषेधात् । सिस्मयिषत इति । स्मिङ् ईषद्धसने । अस्यानिट्त्वादिडागमस्याप्राप्तिः स्मीति

टी॰त॰ एषोऽरे वेति नियमार्थं लक्षः । अरिरिषतीति । अस्याप्यनिट्त्वादिडागमस्याप्राप्तिः । रिस शब्दस्येति । सनः इटि गुणे च कृते अरि स इति स्थिते अजादेर्द्वितीयस्येति रिस्स

१०० स्मिपूङ्रञ्ज्वशां सनि ॥ ७।२।७४ ॥ स्मिपूङ् ऋ अञ्जू अशू एभ्यः सन इट् स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति । इह रिस शब्दस्य द्वित्वं र सरतिस नोऽवयवः कार्य्यभागिति कार्य्यित्वेनानिमित्तत्वाद्योगाद्द्विर्वचने चेति न प्रवर्त्तते । अञ्जिजिषति । अशिशिषते । उभौ साभ्यासस्य ॥ प्राप्तिर्णिषति । उच्छेस्तु क । चुत्वं । पूर्वत्रासिद्धीयमद्वित्व इति चछोभ्यासहितस्येहोद्वित्वं हलादिः शेषः । उचिच्छिषति । निमित्तापाये नैमित्तिकापाय इति त्वनित्यं । चेक्रीयितसनुकग्रहणाज्ज्ञापकात् । प्रकृतिप्रत्यापत्तिवचनाद्वा । णौ च संश्चङोरिति सूत्राभ्यामिङ्गाङ्श्वयतेः सम्प्रसारणे च वा । अधिजिगापयिषति । अध्यापिपयिषति । शिश्वापयिषति । शुशावयिषति । ह्वः सम्प्रसारणं । जुहावयिषति । णौ द्वित्वात्प्राग च आदेशात्तेनेत्युक्तत्वादुकारस्य द्वित्वम् । पुस्फारयिषति । चुस्रावयिषति । ओः पुयण्ज्यपरे । पिपावयिषति । यियावयिषति । बिभावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । पुयण्जि किम् । नुनावयिषति । अपरे किम् । बुभूषति । स्रवतीति त्वेवा । सिस्रावयिषति । सुस्रावयिषतीत्यादि । अपर इत्येव । शुश्रूषते । स्तौतिण्योरेव षण्यभ्यासात् । ७।४।८१ ॥ अभ्यासेलः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात्स भूते सुनिनान्यस्यात् तुष्टूषति । वृत्तिसंप्रोक्तेरत्रलम् । सुष्वापयिषति । सिषाधयिषति । स्तौतिण्योः किम् । सिसिक्षति । उपसर्गात्सुनोत्यादि ष्वभ्यासेन चेति षत्वम् । परिषिषिक्षति । षणि किम् । तिष्ठासति । सुषुप्सति । अभ्यासादित्युक्तेर्न्नेह निषेधः । २७ ।

वस्य द्वित्वमित्यर्थः । अंजिजिषतीत्यादि । अंजू व्यक्तिम्रक्षणादौ । अशू व्याप्तौ । अनयोरूदित्वाद्विकल्पे प्राप्ते नित्यमिट् । अश भोजने इति । क्रादिस्तु नित्यं सेड् एव । सूत्राभ्यामिति । ए १००
कं द्वितीये अपरं तु षष्ठे तत्राद्येन गाङ् । इङ्कोः परे सम्प्रसारणं । ह्वः सम्प्रसारणं । इदं च णिजन्ते पुष्याख्यातमिह तु स्मारितं । जिजावयिषतीति । जुः सौत्रो धातुर्जवं कुर्वन्त्यस्य सत्रो
तेः । शुश्रूषते इति । ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदं । स्रौतिण्योरेवा एवं च सिषाधयिषेति प्रयोगस्य साधुत्वं न तु सिसाधयिषेत्यस्येति ज्ञेयं । उपसर्गात्त्विति ॥

मध्येऽपवादन्यायात् स्तौतिण्योरिति नियमेनादेशप्रत्यययोरिति षत्वमेव बाध्यते न तु स्थादिष्वभ्यासेन चानुत्तरेण विहितमिति भावः। सुषुप्सतीति। ह्रस्वविदेतिस
नः कित्वान्न गुणः। प्रतीषिषतीति। इहषभूतेरनीणगतावितिधातोः परस्य सस्य षत्वं भवत्येवेत्यर्थः। नियमान्नेहेति। न चात्र नियमादेव निषेधे सुनोतेस्य सनो

प्रतीषिषति। इक्। अधीषिषति॥ सः स्विदिस्वदिसहीनाञ्च। ८।३।६२। अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव न षः। षणि परे। सिस्वेदयि
षति। सिस्वादयिषति। सिसाहयिषति। स्थादिष्वेवाभ्यासस्येति नियमान्नेह। अ०। न सुसूषति। शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः। सरूप
प्रत्ययो नेष्टः सन्नन्तान्न सन् निष्यते। शैषिकाच्छैषिकः सरूपो न। तेन शालीये भव इति वाक्यमेव न तु छान्तात् छः। सरूपः किम्। अहिच्छत्रे भव आ
हिच्छत्रः। आहिच्छत्रे भव आहिच्छत्रीयः। अणन्तात् छः। तथा मत्वर्थात् सरूपः सन। धनवानस्यास्ति। इह मतुबन्तात् मतुप् न। विरूपस्तु स्यादेव।
दण्डिमती शाला। सरूपस्त्वनुषज्यते। अर्थ-द्वारा सा इष्यते तस्यार्थः। तेन इच्छासन्नन्तात् सन् न स्वार्थसन्नन्तात्तु स्यादेव। जुगुप्सिषते। मीमां
सिषते॥ इति सन्प्रक्रिया॥ धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। ३।१।२२। पौनःपुन्यम्भृशार्थश्च क्रियासमभिहारस्तस्मिन् द्योत्ये यङ्
स्यात्। गुणो यङ्लुकोः। ७।४।८२। अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। सनाद्यन्ता इति धातुत्वाल्लडादयः। ङित्त्वादात्मनेपदम्। पुनः पुन
रतिशयेन वा भवति बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट। धातोः किम्। आर्द्धधातुकत्वे यथा स्यात्। तेन ब्रूवो वचिरित्यादि। एकाचः किम्। पुनः
पुनर्जागर्त्ति। हलादेः किम्। भृशमीक्षते। भृशं शोभते। रोचते इत्यत्र यङिति भाष्यम्। पौनःपुन्ये तु स्यादेव। रोरुच्यते। शोशुभ्यते। सूचिसूत्रिमूत्र्य
ट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः॥ आद्यास्त्रयश्चुरादावदन्ताः। सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते॥ अनेकाचत्वेनाप्राप्ते वचनमिदम्॥ ॥

रितिसूत्रं सन्विषये निर्विषयं स्यादिति वाच्यं। अभिसुसूषतेरप्रत्ययः। अभिसुसूरित्यत्र षत्वनिषेधाय तस्यावश्यकत्वात्। एतच्च काशिकायां स्पष्टं। शैषिकेति।
एतच्च श्लोकवार्तिकमिति केचित्। भाष्यमिति बहवः। शेषे भवः शैषिकः। अध्यात्मादित्वाट्ठञ्। मतुवर्थे भवो मतुवर्थीयः। गहादित्वाच्छः। मतुवर्थैः स्यानीति

मतुबर्थिकः अतइनिठन् वितिठन् इतिसन्नंतप्रक्रिया॥ धातोरेकाचो॥ क्रियासमभिहार इत्युक्तत्वाद्धातोरेवस्यान्नतु प्रातिपदिकादितिप्रच्छति धातोः किमिति। सुत्रेव
चिरित्यादीति। वा वच्यते बोरव्यायत इत्यादिरूपसिद्धिः प्रयोजनमित्यर्थः। धातुग्रहणाभावेधिगिस्यव्ययादपिस्यात्तस्यक्रियावाचित्वादेकाच्त्वाच्चेति तद्वारणार्थ
मपि धातुग्रहणमावश्यकमित्याहुः॥ ॐ ॥ यस्य हलः। संघातग्रहणमिति। तेन ईर्ष्यिता अहर्यीरित्यादौ यलोपो न। संघातग्रहणेनचार्थवत्परिभाषोपस्थित्यापुत्रकाम्यत्यादौ नातिप्रसंगः। वर्णग्रहणे तु उक्तपरिभाषया अनुपस्थित्यास्यादेवात्र यलोप इतिभावः। हलः किं। लोलूयिता। पोपू
यिता। दीर्घोकितः। अकितः किं। यंयम्यते। रंरम्यते। ननु दीर्घश्रुत्योपस्थितेनाचात्र लोपोभ्यासस्येत्यतो नु वृत्तमभ्यासस्येत्यनतद्विशेष्यताम्… आजन्ता
भ्यासस्य दीर्घो भवतीत्यर्थात्। पापच्यत इत्यादावेव दीर्घो भवेन्नतु यंयम्यते जंघनीतीत्यादौ। तत्र हि परत्वान्नुकि कृतेऽभ्यासस्याजंतत्वाभावादीर्घस्यप्रस

यस्य हलः। यस्येतिसङ्घातग्रहणम्। हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके। आदेः परस्य। अतो लोपः। सोसूचाञ्चके। सोसू
चिता। सोसूत्रिता। मोमूत्रिता। दीर्घोऽकितः। ७।४।८३॥ अकितोभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च। अटाट्यते। यङि च। ७।४।
।३०॥ अर्तेः संयोगादेश्चर्त्तो गुणः स्याद्यङि॥ यकारपररेफस्य न द्वित्वनिषेधः। अराय्यते इतिभाष्योदाहरणात्। अरारिता। अशाशि
ता। कुर्णोनूयते। वेभिद्यते। अल्लोपस्य स्थानिवत्वान्नोपधागुणः। वेभिदिता॥ ((क्तिरेव नास्तीति कि मनेनाकित इत्यनेन। न चाभ्यासावयवस्या
चो दीर्घ इति वैयधिकरण्यान्वये सौ कृते ऽकितग्रहणं प्रयोजनवदिति वाच्यं। संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। येन नाप्राप्तिन्याये ननु
के दीर्घापवादत्वस्वीकाराच्च। तस्मादकित इति व्यर्थमिति चेत्। अत्राहुः। डोढौक्यते इत्यत्राभ्यासह्रस्वं बाधित्वा परत्वाद्दीर्घोऽकित इति दीर्घे कृते डोढौक्यत इति
स्यात्। तस्मात् अभ्यासविकारेषु उत्सर्गविधीन् बाधकाः न बाधंत इति ज्ञापनायाकित इति ग्रहणं कर्तव्यमिति। तथा चोक्तज्ञापकनिर्वाहाय दीर्घोऽकि
त इत्यत्राभ्यासस्याच इति वैयधिकरण्यपक्षस्याश्रयणात् यंयम्यत इत्यादौ दीर्घात् प्रागेव नुकि कृतेपि दीर्घः स्यात् तद्वारणार्थमकित इत्यावश्यकमिति
दिक्। अटाट्य, तइति। इह यशब्दस्य द्वित्वं। यङि च। इह गुणोर्तिसंयोगाद्योरित्येतत्सर्वमप्यनुवर्तते। यकारपरस्येति। यदि भाष्योदाहरणं सामान्यापेक्ष

नित्यं कौटिल्ये। नित्यंशब्दो ऽवधारणार्थक इत्याह। कौटिल्य एवेति। तच्च कौण्डिन्यन्यायेनैव प्रसिद्धे नित्यग्रहणं तस्य यङ्ग्रहणस्य नियमत्वज्ञापनार्थम्। तेन मतिबु-
द्धिपूजार्थेभ्यश्चेति वर्तमाने क्तो नाबाधनात् पूजार्थेभ्यो भूते क्तः सिध्यति। ततश्च क्तस्य च वर्तमाने इति षष्ठी न प्रवर्तत इति पूजितो यः सुरासुरैरिति न्तौ।
यासाधुरेवा इत्यादीति। जंजप्यते। दंदश्यते। दंदह्यते। बंभज्यते। पसधातुरित्यांतः सौत्रो गत्यर्थ इति। स्पशवाधनस्पर्शनयोरित्यत्र माधवः। पंपस्यते। का-
शिकायां तु नाल्लभ्यांतः क्वचिद्दृश्यते। एवं जंजपीति। जंजभीति। दंदहीति इत्यादि यङ्लुकि उदाहर्तव्यम्। ग्रोऽयङि। कृपो रो ल इत्यतो र ल इति वर्तनेन तद्ग्रहणं
स्य लत्वमिति। चेक्रीयते इति। परत्वाद्रीङि कृते द्विर्वचनं संचेक्रीयत इति। रीङि कृते च सुट्च संकृ इत्यस्या मवस्थायां हि त्वात्परत्वान्परत्वात् सुटि कृते संयोगादित्वेन रीङभावे ऽन्य

नित्यं कौटिल्ये गतौ। ३।१।२३॥ गत्यर्थात् कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे। कुटिलं व्रजति। वाव्रज्यते। लुपसदचरजपज-
भदहदशगॄभ्यो भावगर्हायाम्। ३।१।२४॥ एभ्यो धात्वर्थगर्हायामेव यङ् स्यात्। गर्हितं लुम्पति। लोलुप्यते। सासद्यते। चरफलोश्च। ७।४।
।८७॥ अनयोरभ्यासस्यानुक्स्याद्यङ् लुकोः। नुगित्यनेनानुस्वारो लक्ष्यते। स च पदान्तवद्वाच्यः। वा पदान्तस्येति यथा स्यात्। उत्परस्यातः
।७।४।८८॥ चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः। हलि चेति दीर्घः। चञ्चूर्य्यते। पम्फुल्यते। पंफुल्यते। जपजभदहदशभञ्ज-
पशां च। ७।४।८६॥ एषामभ्यासस्य नुक्स्याद्यङ्यङ्लुकोः। गर्हितं जपति। जञ्जप्यते इत्यादि। ग्रो यङि। ८।२।२०॥ गिरतेरेफस्य लः
स्याद्यङि। गर्हितं गिलति। जेगिल्यते। घुमास्थेतीत्वम्। गुणः। देदीयते। पेपीयते। सेषीयते। विभाषा श्वेः। शोशूयते। शेश्वीयते। यङि च
सासम्यते। रीङृतः। चेक्रीयते। सुट्। संचेस्क्रीयते॥ ११ रीङ अड्भ्यासयोः कृतयोरेव सुट् न तु ततः प्रागिति सिद्धान्तात्। एतेन सुटो बहिरंगत्वा-
त्संयोगादित्वेन गुण इति केषांचित् समाधानं परास्तम्। अभ्यासात्परस्य सुटि कृते साभ्यासस्यांगस्य संयोगादित्वमृदंतत्वं च नास्तीति गुणप्रसक्तेरभावात्। नन्वेवमभ्या-
सव्यवायेपि सुट्कात्पूर्व इति वार्तिकव्याख्यानाय पूर्वं धातुरुपसर्गेण युज्यत इति पक्षं स्वीकृत्य भाष्यकृता संचस्करतुरित्यादावंतरंगत्वात् सुटि सुट्कस्यैव
द्वित्वाभ्युपगमात् संचेस्क्रीयते इति न सिध्येत्। तत्र हि सुटि कृते रीङं बाधित्वा परत्वात् यङि चेति गुणे संचास्कर्यत इत्यनिष्टरूपप्रसंगात्। यदि तु इष्टानुरो-

धेन पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तर्हि अडभ्यासव्यवायेपीति वचनं स्वीकर्तव्यमेव स्यादिति चेत्। अत्राहुः। अडभ्यासेत्यादि वार्तिकं वि नापि संचस्करतुरित्यादि रूपसिद्धये भाष्यकृता पूर्वं धातुरुपसर्गेण युज्यते इति पक्ष आश्रितः। स चेत्स्वीक्रियते। इत्यादि सिद्धिस्तु वार्तिकाय त्तैवेति॥ ॥ ॥सिचो यङि॥ अभ्याससकारस्योपसर्गात्सुनोतीति ततः परस्य तु स्यादिष्वभ्यासेन चेति षत्वे प्राप्ते निषेधोयं। यङि किं। अभिषिषिक्षति। नेकवतेर्यङि। इह कोरित्येव वाच्ये कवतेरिति श्तिपा निर्देशात् कुङ् शब्द इति भ्वादिरेव गृह्यते न तु कु शब्द इति अदादिः कूङ् शब्द इति तुदादिश्चेत्याशयेनाह। कौति कुवसोस्त्विति। ननु कोरित्युक्तेपि कूङः प्रसंगो नास्ति दीर्घोच्चारणात् लुग्विकरणपरिभाषया च कौतेरपि प्रसंगो नास्तीति चेत्। अत्राहुः। कोरित्युक्ते तु निरनुबं

सिचो यङि। ८।३।११२॥ सिचः सस्य षो न स्याद्यङि। सेसिच्यते। न कवतेर्यङि। ७।४।६३॥ कवतेरभ्यासस्य चुत्वं न स्याद्यङि। कोकूय ते। कौतिकुवत्योस्तु। चोकूयते। नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्। ७।४।८४॥ एषामभ्यासस्य नीगागमः स्याद्यङ्लुकोः। अकितः इत्युक्तेर्नदीर्घः। नलोपः। वनीवच्यते। सनीस्रस्यते इत्यादि। नुगतोऽनुनासिकान्तस्य। ७।४।८५॥ अनुनासिकान्तस्याङ् स्यपोऽभ्यासोऽन्तस्य नुक् स्यात्। नुकानुस्वारो लक्ष्यते इत्युक्तम्। यंयम्यते। यंयम्यते। तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न। भाम क्रोधे। बाभाम्यते। ये विभाषा। जाजायते। जञ्जन्यते। हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः॥ जेघ्नीयते। हिंसायां किं॥ जङ्घन्यते॥ ॥

धर्षिरभाषापा अपि जागरूकत्वात् उभयोर्ग्रहणं स्यादिति कौतिव्यावृत्त्यर्थं श्तिपा निर्देशः कर्तव्यः कृते च तस्मिन् कुवतिमपि व्यावर्त यतीत्यत्रेत्यर्थमि ति। कुङिस्त्येवात्रस्तु वच। इत्यादीति। दनीध्वस्यते। वनीभ्रस्यते। चनीकस्यते पनीपत्यते ॥ पनीपद्यते। चनीस्कद्यते। एवं वनीवंचिति सनीस्रंसीति। दनी ध्वंसितीत्यादि यङ्लुक्युदाहर्तव्यं। घ्नीभाव इति। न्हीभावे कृतेप्यभ्यासाच्चेति कुत्वं नजेघ्नीय इति सिध्यति तथापि प्रक्रियालाघवाय घ्नीरित्युक्तमिति मनोरमा॥ अस्मेतु मेहिंमे निरिति इकारोच्चारणसामर्थ्याद्यथा एरुरित्सुत्वं न भवति तथा ही भावे हि कृते अभ्यासाच्चेति कुत्वेन स्यादित्याशयेन घ्नीभावः कृत इत्याहुः। अत्र च दिग्यादेशेनैव घ्नीभावे न हि त्वं न बाध्यते पुनः प्रसंगविज्ञानादिति केचित्। वस्तुतस्तु यङ्न्तावयवस्य हि तीयाजवधिकस्य हि त्वं घ्नीभावस्तु प्रकृतिमात्र

रीगृदुपधस्य चा। ऋदिति किम्। चेकीर्त्यते। णिजभावपक्षे एकाचूत्वाद्यङ्। स्वपिस्यमि। यङि किम्। स्वप्नक्। सेसिम्यते इति। स्यमु शब्दे इत्याजंतत्सादित्वाभावेनाषोप
देशात्वान्न षः। वेवीयते इति। हलइत्विर्वा कृत्स्नावेंति वा दीर्घः। चायः की। यङि परे चायः की स्यात्। दीर्घोच्चारणं यङ्लुगर्थं। अत एव न तु मते ति निषेधोपि न प्रव
र्त्तते इति यङ्लुक्यपि चायः की स्यादेव। चेकीतः। ई घ्राध्मोः। दीर्घोच्चारणं प्राग्वत्। जेघ्रीतः। अस्य च्वौ विन्याद्यर्थं दीर्घग्रहणमिति तु सुवचम्। शाशय्यते इति। पर

रीगृदुपधस्य च।७।४।९०॥ ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः। वरीवृत्यते। क्षुभ्नादित्वान्न णः। नरीनृत्यते। जरी
गृह्यते। उभयत्र लत्वम्। चलीक्लृप्यते। रीगृत्वत इति वक्तव्यम्॥ वरीवृश्च्यते। परीपृच्छ्यते। स्वपिस्यमिव्येञां यङि।६।१।१९॥ संप्रसा
रणं स्यात् यङि। सोषुप्यते। सेसिम्यते। वेवीयते। न वशः।६।१।२०॥ वावश्यते। चायः की।६।१।२१॥ चेकीयते॥ ई घ्राध्मोः।७।४।३१॥ जेघ्रीयते। दे
ध्मीयते। अयङ्यि क्ङिति।७।४।२२॥ शीङोऽयङादेशः स्याद्यादौ क्ङिति परे। शाशय्यते। अभ्यासस्य ह्रस्वः। न तोर्गुणः। डोढौक्यते। तोत्रौक्यते।
इति यङन्तप्रक्रिया॥ यङोऽचि च।२।४।७४॥ यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनापि बहुलं लुक् स्यात्। अनैमित्तिकोऽयम्। अन्तरङ्ग-
त्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः। शेषात्कर्तरि परस्मैपदम्। अनुदात्त
ङित इति तु न। ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः। यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत्। अ
त एव सुदृषत्प्रासाद इत्यत्राऽत्वसन्तस्येति दीर्घो न। यदपि स्यमीङ्शीङादयोऽनुदात्तङितस्तेभ्योऽपि न। अनुदात्तङित इत्यनुबन्धनिर्देशात्। तत्र
चश्तिपा शपेति निषेधात्। अत एव श्यन्नादयो न। गणेनानिर्देशात्। किन्तु शप् एव। चर्करीतं चेत्यदादौ पाठाच्छपो लुक्॥ ॥

त्वादंतरंगत्वाच्चायङादेशे कृते द्वित्वम्। इति यङन्तप्रक्रिया। यङोऽचि च। यञ्साहचर्यादचीति प्रत्ययो गृह्यते न तु प्रत्याहारः एव सत्रियार्थे त्वतोऽत्र लुगनुवर्तते न दा
हेऽच्प्रत्यये लुक् स्यादिति। चकारेण बहुलं छंदसीत्यतो बहुलमित्यनुकृष्यत इत्याह। बहुलं लुक् स्यादिति। यत्तु छंदसीत्यनुकर्षन्ति तेषामपि नैकचिद्बाधा यां
यङ्लुगभवत्येव। भृसृवोरिति गुणनिषेधे सिद्धे बोभूतु इति छंदसि निपातनं तु ज्ञापकात्। एतच्च मूल एव स्फुटीभविष्यति। अनैमित्तिकोऽयमिति। अच्प्रत्यये विधीय

॥

३

सि॰ कौ॰ मानो यङ्लुकं तु तन्निमित्तक एवा तेन लोलुवः पोपुव इत्यादौ न धातुलोप इति निषेधः सिध्यति। यङ्ः तत्वादिति। सन्यङोरिति षष्ठी न तु सप्तमी अन्यथा यङो लुका

टी॰ त॰ लुप्तत्वेन प्रत्ययलक्षणाप्रवृत्तेर्द्वित्वं न स्यादिति भावः। तत्रांगाधिकारविहितकार्यस्यैव न लुमतेति निषेधात् द्वित्वमत्र स्यादेवेति सप्तमीपक्षेऽपि निर्दुष्ट इति वाच्यम्

१०३ न लुमतेत्यत्रांगाधिकारो न स्वर्यते किंतु आगमनागं वा प्रत्यये परतः पूर्वस्य विधीयमानं सर्वमिति सिद्धान्तात्। अन्यथा राजपुरुष इत्यादौ नलोपो न स्यात्। ता [illegible]

त्यात्प्रत्ययलक्षणप्रवृत्तौ भः स्वेन पदत्वबाधात्। यद्यप्येकाच इति विधीयमानं द्वित्वं कित्वाश्रयित्वादिना निषिध्यते तथापि तत्रावश्यकं [illegible] यङ्लुकोः [illegible]

लुकि द्वित्वाद्यभ्यासकार्यविधिर्मिद्धत्वान्निषेधस्य ज्ञापनात् प्रत्ययाप्रत्ययेति। प्रत्यये ङित्त्वदृष्टत्वे ऋतेरीयङ् इत्यादिषु अप्रत्ययेऽपि दृष्टत्वे नु [illegible] एवं च

यङो वा। ७।३।९४। यङ्लुगन्तस्य हलादेः पितः सार्वधातुकस्य ईड्वा स्यात्। भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न। बोभूतु तेतिक्ते इति छन्दसि निपातनात्। अत एव यङ्लुग्भाषायामपि सिद्धः। न च यङ्लुकश्छन्दस्येव गुणाभावो निपात्यतामिति वाच्यं। प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं नाद्रिः प्रयोगो द्विर्वचनं भाष्यमिति सिद्धान्तात्। बोभवीति। बोभोति। बोभूतः। बोभुवति। बोभवाञ्चकार। बोभविता। अबोभवीत्। अबोभोत्। अबोभूताम्। अबोभवुः। बोभूयात्। बोभूयास्ताम्। गातिस्थेति सिचो लुक्। यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक्। अबोभूवीत्। अबोभोत्। अबोभूताम्। अभ्यस्तत्वाज्जुस्। नित्यत्वाद्वुक्। अबोभूवुः। अबोभविष्यदित्यादि। पास्पर्द्धीति। पास्पर्द्धि। पास्पर्द्धः। पास्पर्द्धति। पास्पर्त्सि। हुझल्भ्यो हेर्धिः। पास्पर्द्धि। लङ्। अपास्पर्त्। अपास्पर्द्। सिपि। दश्चेति रुत्वपक्षे रो रि। अपास्पाः।

यङोऽचि लुकि प्रत्ययलक्षणेन यङन्तस्याश्रितङित्त्वप्रयुक्तकार्यमात्मनेपदमत्र न शंक्यमिति भावः। ङित इत्यनुबंधनिर्देशादिति परिहारस्त्वत्र नोक्तः। शीङादीनामिव भूर नादिधातूनामनुबंधेनानिर्दिष्टत्वात् यङो ङकारस्य प्रत्ययानुबंधत्वेन समुदायानुबंधत्वात् यङो न धातुरनुबंधेनानिर्दिष्ट इति बोध्यम् [illegible] इति [illegible] बहुव्रीहि र्हलन्तप्रोजसंतः। दीर्घेनेति। असितिप्रत्ययो प्रत्ययश्चास्तीति। प्रत्ययस्यासाधारणरूपानाश्रयणात् प्रत्ययलक्षणेनासंनत्वाभावादिति भावः। तेभ्योपीति यित्व [illegible] त्वतः प्रत्ययलक्षणं विनैव ङित्त्वं तेभ्योपीत्यर्थः। अदादौ पाठादिति तथा च अदिप्रभृतिभ्यः शप इत्यनेन यङ्लुगन्तस्य शपो लुगित्यर्थः॥ ॥ यङोऽचि च। नाम्य

उ·
सि·कौ· जागाद्धीति। गाधृ प्रतिष्ठादौ। इट्पक्षे तु जागाधीति। जाघात्सीति। एकाच इति भष्भावः। धस्य चर्त्वम्। लोटि। जागाधीतु जागाद्धु जागाद्धाम्। जागाधतु। लङि। अजागाधीत्

टी·त· जागाद्धि। जाघात्सि। अजाघात्। सिपि रुत्वपक्षे। अजाघाः। नाथृ। नानाद्मि। नानात्तः। दध। दादद्धि। दादद्धः। दाधत्सि। अदाधत्। अदादधुः। अदाधः।
९४ अदाधत्। लुङि। अदादाधीत्। अदादधीत्। चोस्कुन्दीति। चोस्कुन्ति। अचोस्कुन्। अचोस्कुन्ताम्। अचोस्कुन्दुः। मोमुदीति। मोमोत्ति। मोमोत्त्व
कार। मोमोदिता। अमोमुदीत्। अमोमोत्। अमोमुत्ताम्। अमोमुदुः। अमोमुदीः। अमोमोः। अमोमोत्। लुङि। गुणः। अमोमोदीत्। चोकूर्त्ति। चो
कूर्दीति। लङि तिपि। अचोकूर्त्। अचोकूर्दीत्। सिप्पक्षे। अचोकूः। अचोखूः। अजोगूः। वनीवञ्चीति। वनीवङ्क्ति। वनीवक्तः। नीग्वञ्चतीति। अ
वनीवञ्चीत्। अवनीवन्। जङ्गमीति। जङ्गन्ति। अनुदात्तोपदेशेत्यनुनासिकलोपः। जङ्गतः। जङ्गमति। म्वोश्च। जङ्गन्मि। जङ्गन्वः। एका
ज्ग्रहणे कृत्वा नेण्निषेधः। जङ्गमिता। अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक्। जङ्गहि। मो नो धातोः। अजङ्गन्। अनुबन्धनि
र्देशान्न च्लेरङ्। इत्यनेनेति न वृद्धिः। अजङ्गमीत्। अजङ्गमिष्टाम्। हन्तेर्यङि। ङ लुक्। अभ्यासाच्चेति कुत्वं। यद्यपि हो हन्तेरित्यनो हन्तेरित्यनुव
र्त्य विहितं। तथापि यङ्लुकि भवत्येवेति न्यासकारः। श्तिपा शपेति निषेधस्त्वनित्यः। गुणो यङ्लुकोरिति सामान्यापेक्षज्ञापकादिति भावः।
जङ्घनीति। जङ्घन्ति। जङ्घतः। जङ्घ्नति। जङ्घनिता। श्तिपा निर्देशाज्जादेशो न। जङ्घहि। अजङ्घनीत्। अजङ्घन्। जङ्घन्यात्। आशिषि न वध्यात्।
अवधीत्। अवधिष्टामित्यादि। वधादेशस्य हित्वं न भवति। स्थानिवत्त्वेनानभ्यासस्येति निषेधात्। न द्विःसमानाधिकरणश्रुतौ विशेषणमाव
त्रीहिवत्स्यन्। आङ्पूर्वात्तु आङो यमहन इत्यात्मनेपदम्। आजङ्घ्नेरत्यादि। उत्परस्येति तपरत्वान्न गुणः। हनि चेति दीर्घत्वस्यादेव। तस्या
सिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात्। चञ्चुरीति। चञ्चूर्त्ति। चञ्चूर्तः। चञ्चुरति। अचञ्चुरीत्। अचञ्चुः। चङ्घनीति। चङ्घन्ति। जनसनेत्यात्वं॥

अजाघात्। अजागाद्धाम्। अजागाधुः। लुङि। अजागाधीत्। अजागाधिष्टाम्। नाथृ नाधृ याच्ञादौ। नानात्ति। ईट्पक्षे नानाथीति। दध धारणे। इट्पक्षे दादधीति

लुङि। अतो हलादेरिति वा वृद्धिः। चोस्कुन्नीति। स्कुदिँ आप्रवणे। इदित् इति नुम्। ईडभावे झरो झरि सवर्णे इति वा लोपः। लङि ईट्पक्षे अचोस्कुंदीत्। लुङि तु अस्तिसिच इति
नित्यमीट्। अचोस्कुंदीत्। अचोस्कुंदिष्टाम्। मोमुदीतीति। मुद हर्षे। नाभ्यस्तस्याचीति लघूपधगुणनिषेधः। मोमोदितेति। न चात्र न धातुलोप इति गुणनिषेधः शंक्यः।
वृहल ग्रहणे न धातस्य यङ्लुकोऽनैमित्तिकत्वात्। लुङि गुण इति संज्ञिनिमित्तकोऽयं गुणः। तेन नाभ्यस्तस्याचीति निषेधो न शंकनीय इति भावः। चोकूर्दीति। कुर्द खुर्द गुर्द गुद
क्रीडायाम्। लङि अजितिपि ईट्पक्षे अचोकूर्दीत्। अचोखूर्दीत्। अजोगूर्दीत्। पक्षे अचोकूः। रिति। दश्चेति रुत्वपक्षे इत्यर्थः। वनीवंचीतीति। वंचु गतौ। नित्यं कौटिल्ये गताविति यङ्
लुकि। नीगंचीत्यभ्यासस्य नीगागमः। यङो लुका लुप्तत्वान्न तदाश्रितो नलोपः। वनीवक्ति इति। न सोऽङित्त्वादिह स्यादेवानिदितामिति न लोपः। लोटि। वनीवंचीतु। वनी

चङ्ख्नतः। गमहनेत्युपधालोपः। चंखनीति। चङ्खाहि। चङ्खनानि। अचंखनीत्। अचङ्खन्। अचङ्ख्नताम्। अचंखनुः। ये विभाषा। चङ्खायात्। चङ्खन्यात्। अचङ्ख
नीत्। अचङ्खानीत्। अतो हलादेरित्यत्र नाभ्यस्तस्येत्यनुवृत्तेरतो वृद्धिर्न। योयोति। योयवीति। अयोयवीत्। अयोयोत्। योयुयात्। आशिषि दीर्घः। योयू
यात्। अयोयावीत्। नोनवीति। नोनोति। जाहेति। जाहाति। ईहल्यघोः। जाहीतः। इहजहातेश्च। आ च हौ। लोपो यि। घुमास्थेत्येत्वं ङितीत्येतत्पक्षेऽपि न
भवति। क्ङिति पानिर्देशात्। जाहाति। जाहासि। जाहेमि। जाहीथः। जाहीथ। जाहीहि। अजाहेत्। अजाहात्। अजाहीताम्। अजाहुः। जाहीयात्। आ
शिषि। जाहायात्। अजाहासीत्। अजाहासिष्टाम्। अजाहिष्यत्। लुकालुप्ते प्रत्ययलक्षणाभावात् स्वपिस्यमीत्युत्वं न। रुदादिभ्य इति गणनिर्दि
ष्टत्वादिण्न। सास्वपीति। सास्वप्मि। सास्वप्तः। सास्वपति। असास्वपीत्। असास्वप्। सास्वप्यात्। आशिषि वा वचिस्वपीत्युत्वं न। मा भवान् सोषुप्यात्। असास्वापी

वङ्क्ताम्। वनीवङ्क्तात्। वनीवञ्च्चतु। वनीवञ्चि। वनीवंचानि। जंग[illegible]। नु गतोऽनुनासिकान्तस्येति नुक्। जङ्गमीति। गमहने (( ना। असास्वपीत्॥
त्युपधालोपः। अजंगन्। ईट्पक्षे त्वजंगमीत्। अजंगताम्। अजंग्मुः। अजंगमीः। अजंगतम्। अजंगत। अजंगमम्। अजंगन्व। अजंगन्म। सामान्यापेक्षे
ति। अयं भावः। एकाचो द्वे इत्यत्रैकाच इत्युपलक्षणं यङ्लुकि द्विर्वचनं न कुत्रापि प्र[illegible]प्नोति। तथा च गुणो यङ्लुकोरित्यभ्यासस्य विधीयमानो गुणो द्विर्वचनं विना नानिदेशम

सि॰ कौ॰ पाश्यपेति सर्वेषामपि निषेधानां क्वचिद्यङ्लुक्यप्रवृत्तिं ज्ञापयतीति तथा च प्र[भषू]मानाः ... जावत्रं जंघनदित्या दिद्धित्वं तु न भवतीति वध्यात् अवधीदित्यत्र हन्तेर्हिंक्व च न स्व
टी॰ त॰ हनो वध लिङि। लुङि चेति वधादेशस्तु न हि द्वित्वं न भवतीत्यर्थः। तत्र हेतुमा... निवत्वेनेति। आङ्पूर्वादिति। प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः। च
१०५ चूर्तीति। चरतिर्गतौ भक्षणे चाचरफलोश्चेत्यभ्यासस्यानुक्। उत्परस्यातइत्युत्वं हलि चेति दीर्घः। अवं चूरित्यत्र तु पदान्तविषयत्वाद् उपधायाम् इति दीर्घः। वंस्व
नीति। स्वनु अवदारणे च ... स्वातइति। यत्तु केचिद्धातुग्रहणेन कृतं कार्यं यङ्लुकि वेति जनसनेत्यात्वाभावेऽनुनासिकस्य क्विझलोरिति दीर्घोऽपि न भवतीति।
प्राहुस्तद्धि कृत्वादिः कृदर्कतत्र गृह्यते न तु तिङ्। तिअभ्युपेत्य चंखंतइति रूपमाहुस्तद्युक्तम्। धातुग्रहणेन कृतस्य यङ्लुक्यप्र... मानानां बात्। सत्यपि प्रमा
णो आत्वं वेति विकल्पो ज्ञया चंखातइति रूपं केन कार्यतामापद्येत। क्रमनुनासिकस्येति सूत्रे क्विप्साहचर्यात्। झलादिरपि कृदेव गृह्यते इति तदप्ययुक्तमेव। यदि हि
कृदेव क्विप्स्यात्तदा साहचर्योक्तिः संगच्छेत न किं तु कुटिन्नेऽपि अस्त्येवा चारक्विप्। अत एव राजानं तिचर्माण्ण निदृत्यादौ माधवादिभिः क्विनिमित्तो दीर्घ उक्तः। चं
खाहीति हेरपित्त्वेन ङित्त्वाज्जनसनेत्यात्वम्। अचंखानीत्यत्र अतो हलादेरिति वा वृद्धिः। जाहेतीत्यादि। हाङ्हाको लुङ्सारूप्यात्। ङित्त्वं प्रयुक्तं स्यात्मनेपदस्य यङ्लुक्य प्रवृ
त्तेः। मृत्त्वा मिदिति हाङ् इत्त्वस्य श्ननिमित्ताभ्यासस्यैव विहितत्वाच्च। न च अकित इति निषेधेन हाकोऽभ्यासस्य दीर्घो दुर्लभ इति कथमुभयोस्तुल्यरूपतेति वाच्यम्।
अकित इत्यत्र हि न विधेः कितो यस्याभ्यासस्येति बहुव्रीहिराश्रीयते तेन न हि प्रयोगो द्विर्वचनं यस्येत्यभ्युपगमाद्धानोः कित्त्वेऽभ्यासस्य कित्त्वेऽपि वनीवच्यीत्यादावित्व
कित्त्वाभावान्न दोषः किं च द्वित्वाभावे केवलसार्थत्वेऽपि द्वित्वसन्निसमुदायएवार्थवान् इति हि सर्वसंमतम्। तथा कित्त्वमपि समुदायस्यैवास्तु न तु प्रत्यवयवमिति नास्त्येव दीर्घप्रति
बन्धः। जाहीयादिति। ईहल्यघोरितीत्वम्। लुक्। लुमइति। सर्वविधिभ्यो लुग्विधेर्बलीयस्त्वादकृतव्यूहपरिभाषया च लुकः पूर्वं नशंकामेवेति भावः। उक्तं नीतिफ
लितार्थकथनमिदं स्वपिस्यमीत्यादिना विधीयमानेयत्संप्रसारणं तन्नेत्यर्थः। असास्वापीदिति। अतो हलादेरिति विकल्पेन वृद्धिः॥

रुग्रिकौ च चर्करीते। रीगृदुपधस्येत्यतो रीगनुवर्त्यते। ऋकारउच्चारणार्थः। ऋतश्च। ऋतः। नुवर्तमानमंगं विशेष्यते। ऋदन्तस्याङ्गस्य योऽभ्यासस्तस्येत्यर्थः। ऋदन्ताद्दृ तारिति
पाठस्तु फलितार्थकथनपरतया नेयः। लोटि। वर्वृतीतु ३। वर्वर्तु २। वर्वृतात्। वर्वृत्ताम् ३। वर्वृततु ३। वर्वृद्धि २। अट्रीति। पुषादिद्युताद्यॢदित इत्यनेन। चर्करीतीति। डुकृञ् करणे।

रुग्रिकौ च लुकि। ७।४।९१। ऋदुपधस्य धातोरभ्यासस्य रुक्रिक्रीकः एते आगमाः स्युर्यङ्लुकि। ऋतश्च। ७।४।९२। ऋदन्तधातोरप्येवं तथा।
वर्वृतीति। वरिवृतीति। वरीवृतीति। वर्वर्ति। वरिवर्ति। वरीवर्ति। वर्वृतः ३। वर्वृतति ३। वर्वर्त्तामास। वर्वर्तिता ३। गणनिर्दिष्टत्वान्न चङ्क्ष्यत्
र्यदतिना। वर्वर्तिष्यति ३। अवर्वृतीत् ३। अवर्वर्त् ३। सिपि। दश्चेति रुत्वपक्षे रोरि। अवर्वाः ३। गणनिर्दिष्टत्वाद् ङ्। अवर्वर्तीत् ३। चर्करीति
३। चर्कर्ति। चरिकर्ति। चरीकर्ति। चर्कृतः ३। चर्क्रति ३। चर्करांचकार ३। चर्करिता ३। अचर्करीत् ३। अचर्कः ३। चर्कृयात् ३। आशिषि रिङ्।
चर्क्रियात् ३। अचर्करीत् ३। ऋतश्चेति तपरत्वान्नेह। कॄ विक्षेपे। चाकर्ति। नातर्ति। नानीर्नः। नातिरति। नानीर्हि। नानरानि। अनानरीत्। अना
नः। अनानर्त्ताम्। अनानरुः। अनानारीत्। अनानारिष्टामित्यादि। अर्तेर्यङ्लुकि द्वित्वेऽभ्यासस्योरदत्वं रपरत्वं। हलादिः शेषः। रुक्रिग्री
कौ तु। अभ्यासस्य सवर्णेदीर्घ इति दीर्घः। अरर्ति। अरिअर्ति। अररीति। अरियरीति। अरर्तः। अरियृतः। झि अतः। यणा रुकोरीति लोपः। न च
स्मिन्कर्तव्ये यणः स्थानिवत्त्वमापूर्वत्रासिद्धे तन्निषेधात्। आरति। अरियति। लिङि। स्तिपानि ईशाद् लोप्ते रिति। तेनारिङ्। रलोपः। दी
र्घः। आरियात्। अरिरियात्। अरीरियात्। गृहू ग्रहणे। जर्गृहीति ३। जर्गर्ढि ३। जर्गृढः ३। जर्गृहति ३। अजर्घट् ३। गॄ निगरणे। जागृहीति
जाग्राढि। न साऽऽर्धधातुकेति निमित्तं सम्प्रसारणम्। तस्य बहिरङ्गतेनासिद्धत्वान्न रुगादयः। जागृढः। जागृहति। जाग्रहीषि। जाघर्षि। लुङि। जा
ग्रहिता। ग्रहोऽलिटीति दीर्घस्तु न। तत्रैकाचरित्यनुवृत्तेः॥ ॥ चर्कृयादिति। सार्वधातुकत्वाद् क्त्सार्वेति न दीर्घः। लुङि असिचि वृद्धिरिति वृ
द्धिः। अचर्कारीत् २। अचर्कारिष्टाम् २। अचर्कारिषुः २। अचर्कारीः २। चाकर्त्ति। जंगेक्ष्य चाकरीति। लोटि। चाकरीतु। चाकर्तु। चाकीर्तात्। चाकीर्त्ताम्। चाकिरतु। चाकी
र्हि। लङि। अचाकरीत्। अचाकः। अचाकीर्त्ताम्। अचाकरुः। लिङि। चाकीर्यात्। आशिषि तु चाकीर्यास्ताम्। लुङि। अचाकारीत्। अचाकारिष्टाम्। एवं तनातरीतीत्यादि।

३·
सि·कौ· अर्तेरिति। भौवादिकजौहोत्यादिकयोर्ग्रहणम्। अरर्त्तमिति। केचित्तु गुणो यङ्लुकि भपधाया गुणमाहुः फले तु न विशेषः। रिकरीकौ त्विति। एवं च अरिपर्त्तीति ह पश्चिमभयोस्तुल्या।
टी·त· मितिभावः। आरर्त्तीति। रोरीति लोपे ढ्रलोप इति दीर्घः। दीर्घो ऽकित इति दीर्घस्तु न भवत्यनन्तरत्वात्। अरिपर्त्तीति परत्वात् पूर्वमियङ् ततो यणा। रिग्रीकोस्तुल्यमिदं मध्यमोत्तमयोस्तु अरर्षि अ
९६ रियर्षि। अररीषि। अरियरीषि। अरर्थः। अरिपृथः। अरर्मि। अरियर्मि। अररीमि। अरियरीमि। अरर्वः। अरिपृवः। ऌिटि अररांचकार। रिग्रीकोस्तु अरियरांचकार। लुटि। अरिताऽररिता। रीकोस्तु
अरियरिता। अररिष्यति। अरियरिष्यति। अरर्त्तु। अरियर्त्तु। अरर्त्तात्। अरिपृतात्। अरर्त्ताम्। अरिपृताम्। अरियर्तु। अरर्हि। अरिपृहि। अररतानि। अरियराणि। अररावा। अरियराव
लङि आरः। आरियः। आररीत्। आरियरीत्। आरर्त्ताम्। आरिपृताम्। आररुः। आरिपरुः। आरिपः। आररीः। आरियरीः। आरर्त्तम्। आरिपृतम्। आरर्त्त। आरिपृत। आररम्। आ
यरम्। आरर्व। आरिपृव। विधिलिङि अरर्यात्। अरिपृयात्। अरर्यात्ताम्। अरिपृयाताम्। अरर्युः। अरिपृयुः। लिङीति। आशीर्लिङि अन्त्यर्थः। अरिप्रियादिति। रिग्रीकोः अ
रिपृ इति स्थिते लिङि रिङ्। बहिरङ्गत्वेन रिङः सिद्धत्वाद् यलोपो न भवत्यचः परस्मिन्निति स्थानिवत्त्वाच्च न च नपदान्तेति निषेधः शंक्यः स्वरदीर्घयलोपेषु लोपस्याजादेश
एव न स्थानिवदित्युक्तत्वात्। न च अकृत्व्यूहपरिभाषया इयङ् नेति शंक्यम्। रिङः स्थानिवत्त्वेन निमित्तविनाशाभावात्। उक्तपरिभाषाया अप्रवृत्तेः। अत एव अरिप्रतीत्य
पि सिद्धम्। तत्रापि यणः स्थानिवत्त्वेन निमित्तविनाशाभावात् तत्परिभाषाऽप्रवृत्तेरियङो निर्बाधत्वात्। क्वचित्तु मूलपुस्तके षपरत्वान्नित्यत्वाच्च पूर्वं रिङि कृते ...
प्रवृत्तिरित्याशयेन अरिरियात् आरीरियादिति पठ्यते तदापातः। अरिप्रतीतिरूपासिद्धा पूर्वोत्तरग्रन्थयोर्विरोधापत्तेः। लुङि। आरारीत्। आरियारीत्। लृङि। आरीरि
त्। आरिपरिष्यत्। जर्गृहीतीति। नाभ्यस्तस्याचीति गुणनिषेधः। मध्यमोत्तमयोस्तु जर्गृहीषि। जर्घर्षि। जर्गृढः। जर्गृढ। जर्गृहीमि। जर्गर्हमि। जर्गृह्वः। जर्गृह्मः। जर्गृ
ह्यांचकार। जर्गर्हिता। जरीगर्हिता। इत्यनुबंधनिर्देशाद् दृढ्लक्षणइड्विकल्पो न। जर्गृहीतु। जर्गृढु। जर्गृढात्। जर्गृहतु। जर्गृढि। मिपि। जर्गृहाणि। लुङि। अजर्गृहीत्
ईडभावे एकाच इति भष्भावः। अजर्घट्। यद्यपि इह पंचैकाच्ग्रहणं चेति निषेधाद् भष्भावो दुर्लभस्तथापि गुणो यङ्लुकोरित्यनेन ज्ञापितत्वात्। पूर्वादिनिषेधस्या
नित्यत्वज्ञापनात् भष्भावोऽत्र प्रवर्त्ततेऽत्याहुः। अजर्गृढाम्। अजर्गृहुः। अजर्गृहीः। अजर्घट्। अजर्गृढम्। अजर्गृढ। अजर्गृहम्। अजर्गृह्व। जर्गृह्यात्। अजर्गी
हीत्। अजर्गर्हिष्यत्। जागृहीतीति। ग्रह उपादाने। यङ्लुक्यन्तर्गतत्वात् निमित्तं ग्रहिज्येति संप्रसारणमिह नेति भावः। जागृढ इति। उरत्। दीर्घोऽकि

११ वद्भावस्यवक्तुमशक्यत्वात् एवंचयङ्लुकि दीर्घप्रवृत्तौ न किंचिद्बाधकं यङ्लुको नैमित्तिकत्वात् अजन्तादेशत्वाच्चस्थानि ११

माधवस्त्विति। अयंभावः। ग्रहोलिटीतिसूत्रे यङ्लोपे चोक्तमितिवार्त्तिकतदीयभाष्यकैयटादिपर्यालोचनयाजरीगृहितेत्यादिषु ग्रहेर्यङ्नात्तृचस्तासेवीयटस्तत्स्य दीर्घाभावे युक्तिद्वयं लभ्यते पूर्वस्मादपि विधौ स्थानिवद्भावदुरस्ये के। ग्रहेर्विहितस्य परस्ततस्य दीर्घस्त्यपरे। तत्राद्यः पक्षो भाष्यवार्त्तिककाराभ्यां हि पूर्वत्रासिद्धे न स्थानिवदित्यत्र पञ्चम्यदीर्घादिग्रहणस्य प्रत्याख्यानात्। त्रैपादिके दीर्घातिरिक्ते दीर्घे ऽस्मिन् कर्तव्ये स्थानिवद्भावस्य तन्मते सुवचत्वात्। द्वितीयस्तु

माधवस्तु दीर्घमाह तद्भाष्यविरुद्धम्। जर्गृधीति ३ जर्गर्द्धि ३। जर्गृद्धः ३ जर्गृधति ३। जर्गृधीषि ३ जर्घर्त्सि ३ अजर्गृधीत् ३। ईडभावे गुणः ह लङ्यादिलोपः। भष्भावः जश्त्वचर्त्वे। अजर्घत्। अजर्गृद्धाम्। सिपि। दश्चेतिपक्षे रुत्वम्। अजर्घाः ३। अजर्गर्धीत् ३। अजर्गर्धिष्टाम् ३। पापच्छीति। पाप्रष्टि। नसाद्रौ ग्रहिज्येति सम्प्रसारणं न भवति क्षिपानिर्देशात्। च्छ्वोः शूडिति शः व्रश्चेतिषः। पाप्रष्टः। पाप्रच्छति। पाप्रष्टि। पाप्रच्छथ। पाप्रश्नः। यकारवकारान्तानां तु ऊठ भावि नायङ्लुङ्नासीति च्छोः रितिसूत्रे भाष्ये ध्वनिता कैयटेन स्पष्टीकृतमाद्दस्त्वच्छोरिति यत्रोठं नहि व्यक माच्वरत्वरेत्यूठ भाविनोः स्त्रिविमव्योस्तु यङ्लुगस्त्येवेति न्यायम्। माधवादिसम्मतञ्चामव्यवन्धने। अयं यान्तः ऊठ भावी। तेवृदे वृदेवनेदयादयो वा न्तोः हयगतौ। जाहयीति। जोहति। जाहतः। जाहयति। जाहयीषि। जाहसि। वलिलोपे यन्तादौ दीर्घः जाहामि। जाहाव। जाहामः। हर्य्य गतिकान्त्योः। जाहर्य्यीति। जाहर्ति। जाहर्तः। जाहर्य्यति। लोटि। जाहर्हि। अजाहः। अजाहर्ताम्। अजाहर्युः ११ मवबन्धने॥

त्रीत्या तेननुसामान्यतो दीर्घविधौ स्थानिवद्भावस्य निषिद्धत्वान्न मते स्थानिवद्भावायोगात्। द्धिः प्रयोगो द्विर्वचनं णश्चमितिसिद्धान्तो यङ्लुगन्तादुद्धृत्ते विहितस्य ग्रहे विहितत्वानपायाच्च। तद्भाष्यादिविरुद्धमित्यादिशब्देन कैयटहरदत्तौ गृह्येते विरोधश्चात्रमनोरमायामुपपादितः। तथाहि एकाचो द्वे प्रथमस्येति सूत्रे ग्रहेरङ्गादिति भाष्यमुपादाय कैयट आह। तृ चेऽजं गो गृहीत्यङ्ग नतु ग्रहिस्त्रिशेषणसामर्थ्याद्धि यथा श्रुतं रूपाश्रयणमितिय द्यपि तत्र यङ्लुक्यं प्रक्रम्येदमुक्तं तथापि युक्तिसाम्याद्यङ्लुगन्तेपि न दीर्घ इति लिङ्गा विकारग्रहणमनुवर्त्तयन्हरदत्तोप्यत्रानुकूलः। न त्वस्मिन्पक्षे यङ्लुकि दीर्घस्य प्रस

क्तिरस्ति। एवं च पूर्वस्मादपि विधौ स्थानिवद्भाव इति ग्रहेर्विहितस्य परस्य तस्य दीर्घ इति च प्रागुक्तसमाधानमुपायस्योपायान्तरादूषकत्वादिति न्यायेन यङ्लोपे ऽपवादत्वात् परत्वेनेपमन्त
च ग्रहीतिय यथाश्रुतरूपाश्रयणे गृहीतरं त्यादाविटो दीर्घो न स्यादिति वाच्यम्। अंगसंज्ञाप्रवृत्तिवेलायां यथाश्रुतरूपस्यैव सत्त्वात्। ग्राहितमित्यादौ तु नैवं। एकाच इति स
माधानं तु णिज्भिन्नविषयकमेव निष्ठायां सेटीति णिलोपे ग्राहितमित्यादावेकाच्त्वानपायात्। तर्हि स्यमृपयङ्लुगन्तात् णिजन्तात् च यङन्तात् च ग्रहेः स्तिः द्विधा निधाय च तु दीर्घ दीर्घ
भ्रान्तिः समाहिता अस्यार्थः। यङ्लुगन्ताद्दीर्घप्राप्तेः समाधानद्वयम्। ग्रहेरंगस्य इति व्याख्यानमेकाच इत्यनुवृत्तिश्चेति। णिजन्तात् तु ग्रहिस्वरूपाभावः विहितविशेषणं स्था
निवद्भावश्चेति समाधानत्रयम्। यङन्तात् समाधानचतुष्टयं एकाच इत्यनुवृत्तिः पूर्वोक्तसमाधानत्रयं चेति अजर्घा इति। गृधु अभिकांक्षायाम्। इह अपदान्तस्यापि रेफस्य
रो रीति लोपो भवत्येव तत्र मंडूकप्लुत्या पदस्येत्यनुवर्तनात्। पापृष्टीति। प्रच्छ ज्ञीप्सायाम्। व्रश्चेति षः। पापच्छिता पापच्छिष्यति। पापृष्टु पापृष्टात् पापृष्टाम् पा
प्रच्छतु पापडढि। पापच्छीनि। अपापच्छीत्। अपापट्। अपापृष्टां। अपापच्छुः। अपापच्छीः अपापट् अपापृष्टं अपापृष्ट अपापच्छम्। अपापच्छ्व अपापृष्म। भाष्ये ध्वनितमि
ति। च्छ्वोः शूडिति सूत्रे भाष्ये किं द्रहलमनुवर्तते नवेति विकल्प्य कांश्चिद्दोषानुद्भाव्य परित्यस्य चोक्तमेतावानेव विशेषः। अनुवर्तमाने किंद्रहलो च्छः षत्वं वक्तव्यमि
ति। अननुवर्तमाने त्वनेच्छः शत्वे कृते शांतत्वाद्वषो भविष्यतीति प्रष्टा प्रष्टुमित्यादिसिद्धये व्रश्चादिसूत्रे छग्रहणं न कर्तव्यमिति भावः। एवं हि वदता भाष्यकृता ऊठ
भाविभ्यो यङ्लुकं नासीत्युक्तप्रायम्। अन्यथा दिवेर्यङ्लुकि ईडभावपक्षे देदेत्ति देद्यष्टि इत्यादौ ऊठाभावाभावाभ्यां महान् विशेषः स्यात्। तत्र किं तु हलष्वनुवृत्ता वूठः प्र
वृत्त्या देद्योति देद्योषीत्यादिरूपविशेषलाभात्। ततश्चैतावानेवेत्येवकारो विरुध्येत। स्रिविमव्योस्त्विति। स्रिवु गतिशोषणयोः। मव बंधने। जाहामीति। इट्पक्षे
जाहयीमि। लोटि। जाहयीतु। जाहतु। जाहता। जाहयानि। जाहयाव। जाहयाम। लङि अजाहयीत्। अजाहत्। अजाहताम्। अजाहयुः। अजाहयीः। अजाहः
अजाहतम्। अजाहत। अजाहयम्। अजाहाव। अजाहाम। जाहयात्। स्यतस्तलेति वृद्धिनिषेधः अजाहयात्। अजाहयिष्टाम्। अजाहयिष्यत्। ॥

ज्वरत्वर। ज्वररोगे। त्रि त्वरासंभ्रमे। अत्र वृत्तौ झलादौ क्ङितीत्युक्तं तत्र क्ङितीत्येतद्भ्रमकृतमेवेत्याह। क्ङितीति नानुवर्त्तनइति अवतेस्तु नीति। ज्वरत्वरेत्युपधावकारयोरू ठि गुणे च कृते ओतुरिति सिध्यति नान्यथा। तेनात्र क्ङितीति नानुवर्त्तनीयमिति भावः। अवतेरिति। उपधावकारयोरूठि गुणे च कृते मन्त्रस्य यस्य टिलोपे ओमिति सि ध्यतीत्यर्थः। ज्वरादेरुदाहरणं क्विपि जूः जुरौ जुरः झलादौ तु जूर्तिः। जूर्णः जूर्णवान् त्वरतेः तूः तुरौ तुरः तूर्त्तिः। तूर्णः तूर्णवान् स्रिवि। स्रूः स्रुवौ स्रुवः। स्रूतिः। अविः ऊः उवौ उवः। ऊतिः। मवः मूः मुवौ॥ मुवः। मूतिः। मूतः। मामोविरित्यादिरूपपक्षे मामवीषि मामवीमि मामवीतु अमामवीत् अमामवीरिति बोध्यम्। राल्लोपः। छ्वोः शूडित्य

ज्वरत्वरस्रिव्यविमवामुपधायाश्च। ६।४।२०॥ ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। अत्र क्ङितीति नानुवर्त्तते। अवतेस्तुनि ओतुरिति दर्शनात्। अनुनासिकग्रहणं चानुवर्त्तते। अवतेर्मनिन्प्रत्यये तस्य टिलोपे ओमिति दर्शनात्। ईडभावे ऊठि पिति गुणः। मामोति। मामवीति। मामूतः। मामवति। मामोषि। मामोमि। मामावः। मामूमः। मामोतु। मामूतात्। मामूहि। मामवानि। अमामोत्। अमामोः। अमामवम्। अमामाव। अमामूम। तुर्वी हिंसायाम्। तोतूर्वीति। राल्लोपः। ६।४।२१॥ रेफाच्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। इति वलोपः। लघूपधगुणः। न धातुलोप आर्धधातुके। १।१।४॥ धात्वंशलोपनिमित्ते आर्धधातुके परे इको गुणवृद्धी न स्तः इति नेह निषेधः। तिबादीनामनार्धधातुकत्वात्। तोतोर्ति। हलि चेति दीर्घः। तोतूर्तः। तोतूर्वति। तोतोर्षि। दोदोर्ति। दोधोर्ति। मूर्च्छा। मोमोर्त्ति मोमूर्त्तः। मोमूर्च्छतीत्यादि। आर्धधातुक इति विषयसप्तमी। तेन यङि विवक्षिते अजेर्वी। वेवीयते। अस्य यङ्लुगन्तात् लुका अपहारेण विषयता सम्भवेन वीभावस्याप्रवृत्तेः॥ इति पद्

तः छ्वोरित्यनुवर्त्तते। क्वावुदाहरणं तूः तुरौ तुरः धुर्वी धूः धुरौ धुरः मुर्च्छा मूः मुरौ मुरः। न धातुलोप। आर्धधातुके धातुर्लो पो नास्तीति लक्षणं यद्व्याचष्टे। धात्वंशेति। यद्यपि इह रिणोर्लोपः श्वयोर्णादिके ककारस्य प्रत्यये धातुलोपः प्रसिद्धस्तथापि प्रयोजनवान् प्रसिद्धः। इग्लोलुपत्वादेव गुणे प्रसंगा त्। प्रत्ययसन्नियोगेन धातुलोपविधानात्। आर्धधातुकस्य निमित्तत्वमपि नास्ति। अत एव दूरमित्यत्र दूलोप इति दीर्घे कर्त्तव्ये धातुलोपस्य स्थानिवत्त्वं नास्ति। इ ह धातोर्लोपो यस्मिन्निति बहुव्रीहिर्विशेष्यं चार्धधातुकमित्याशयेनाह। लोपनिमित्ते इति। गुणवृद्धी न स्त इति यद्यपि क्ङितीति सूत्रे लेगवा पनर इत्यत्र गुणनिषेधो मा

सि·कौ· टी·व· १०८

भृदिति इग्लक्षणे गुणवृद्धी न स्त इति व्याख्याता तत्रापि इह प्रयोजनाभावादिग्लक्षण इति नोक्तं धात्विति किम् । लूञ् । लविता पूञ् । पविता ।    नन्वत्रानुबंधलोपनिमित्तम्
र्द्धधातुकं न भवतीति इद्यंमविकलमिदमिति चेत् । अत्राहुः । धातुग्रहणे सति धातोर्लोपो यस्मिन्निति बहुव्रीहिलाभात् लोपनिमित्ते इत्यर्थो लभ्यते तदभावे तु लोपे सत्यार्द्ध
धातुक इत्यर्थाल्लवितेत्यादौ दोषः स्यादेवेति ॥ यत्तु लोपयतीति लोपः तस्मिँल्लोपनिमित्ते आर्द्धधातुके इको गुणवृद्धी न स्त इति व्याख्याय तेन तदा धातुग्रहणं स्पष्टप्रति
पत्त्यर्थम् अन्यथा अनुबंधस्य धातुत्वमिति केयलादिमतेन तु धातुलोपरत्र बहुव्रीहौ श्रयणं विनापि धात्ववयवलोपसत्त्वार्द्धधातुक इति व्याख्याने संभवित इत्यादी नाऽनिमसंग इति बोध्यम् आर्द्धधा
तुके किम् । त्रिधा बद्धो वृषभो रोरवीति । रुशब्द इत्यस्माद्धातोरेकाच इति यङ् तस्य लुक् । यङं तस्य धातुलेयङो धात्ववयवत्वात् लुमता चात्रापि निषेधः स्यात्तन्मा भूदिति
नन्वत्र यङ्लुको नैमित्तिकत्वादिको लोपनिमित्तपरत्वं नास्तीति इद्यंगविकलमिति चेत् । अत्राहुः । आर्द्धधातुकग्रहणे सति अन्यपदार्थलाभाद्बहुव्रीहिर्लभ्यते तदभावे
त्ववयवलोपे सति गुणवृद्धी न स्त इत्यर्थाद्रोरवीतीत्यत्र दोषः स्यादेवेति । केचित्तु धातुलोपपतीति धातुलोपः इद्रू लोप इत्यत्रैव कर्मण्यण्-    त्यभ्युपे
त्य व्यधिकरणबहुव्रीहौ श्रयणं विनैव धात्ववयवलोपनिमित्ते गुणवृद्धी न स्त इति व्याचक्षते । इक इति किम् । रागः । अभाजि । घञि च भावकरणयोरिति रंजेर्नलोपे कृते वृद्धिः
अभाजीत्यत्र तु भंजेश्च चिणीति नलोपे वृद्धिः । नेह निषेध इति । सूत्रस्योदाहरणं तु लोलुवः पोपुवः मरीमृज इत्यादि बोध्यम् । तत्र लोलूयपोपूयशब्दाभ्यां पचाद्यचि यङो
चि चेति यङः लुकि कृते अच्प्रत्ययमाश्रित्य प्राप्तो गुणो निषिध्यते मरीमृज इत्यत्र तु वृद्धिः । ननु लोलूयादिभ्यो अच्प्रत्यये अतो लोप इत्यलोपस्य कारस्य यङोचि चेति लुकश्च
लोपस्य स्थानिवत्त्वाद् अच्प्रत्ययनिमित्तः सार्वधातुकार्द्धधातुकयोरिति गुणो मृजेर्वृद्धिरिति वृद्धिश्च न भवेदिति किमनेन निषेधसूत्रेण नैवमपि लोलुव इत्यादावुवङि
कृते लघूपधगुणः स्यात्तद्वारणाय निषेधोयमावश्यकं उवङ आदिष्टात् पूर्वत्वेन लघूपधगुणे कर्तव्ये स्थानिवत्त्वाभावादिति वाच्यम् स्थानिद्वारा नादिष्टात् पूर्वत्वे
न उवङ् आदेशत्वात् । स्थानिद्वारा दृष्टत्वेपि स्थानिवद्भवतीसेन न त्वपरं तेति सूत्रे सवर्णग्रहणेन ज्ञापितम् । नहि शिण्ढि इत्यत्र स्थानिभूतादचः पूर्वत्वेनानुस्वारो दृष्टः किंतु स्था
निद्वारा । तथा च अनुस्वारस्य परसवर्णे कर्तव्ये श्नम् । अल्लोपस्य स्थानिवत्व-    -निषेधाय तत्र सवर्णग्रहणं कृतमितीह स्थानिवद्भावः सिद्धः । नोना
वेत्यत्र तु लिङ्त्यते प्रागेव बहुलग्रहणेन कारविशिष्टस्य यङो लुकि स्थानिवद्भावाप्रसक्त्या न वृद्ध्यभावशंकेति न धातुलोप इति सूत्रस्य न किंचित्प्रयोजनमिति केच

सत्यम्। अत एव भाष्ये प्रत्याख्यातमिदमिति संक्षेपः। नोत्तो नौति। यद्यप्यत्र लोपो व्योरित्यनेन वलोपः सिध्यति तथापि नोतू नूत्तं इत्यादौ वलोपार्थं राल्लोप इत्युपन्यस्तम्। अन्यथा तत्र लो
वो व्योरिति लोपं बाधित्वा वस्य ऊठ्। श्वूडिति ऊठ् स्यात्। नौ श्वौ नौ इत्यादि। धुर्वी हुर्वी हिंसायाम्। मूर्छा मोहसमुच्छ्राययोः। मोमूर्छीषि। मोमोर्षि। मोमूर्थः। मोमूर्थ। मोमूर्छीमि। मोमोर्मि
मोमूर्छ्वः। मोमूर्मः। मोमूर्छां चकार। मोमूर्छिता। मोमुर्छीतु। मोमोर्तु। मोमूर्तात् । मोमूर्हि। अमोमूर्छीत्। अमोमोः। अमोमूर्छुः। मोमूर्छ्यात्। अमोमो र्छीत्। अमोमू
र्छिष्टाम्। अमोमूर्छिष्यत्॥ इति यङ्लुगन्तप्रक्रिया॥ ॥ सुप आत्मनः क्यच्। धातोः कर्मण इति पूर्वसूत्रात् कर्मण इच्छायां वेत्यनुवर्त्तते। तत्र श्च सन्निधानादिच्छाकर्म
ण एव भवतीत्याह। इषिकर्मण इति। परस्य पुत्रमिच्छतीत्यत्रातिप्रसंगवारणाय सूत्रे आत्मशब्द उपात्तः स तु स्वशब्दपर्यायः स्वशब्दक इत्याकांक्षायामिच्छाया सन्निधापित

सुप आत्मनः क्यच्। ३।१।८॥ इषिकर्मण एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात्। धात्ववयवत्वात्सुब्लुक्। क्यचि च। ७।
४।३३॥ अस्य ई स्यात्। आत्मनः पुत्रमिच्छति पुत्रीयति। वान्तो यि प्रत्यये। गव्यति। नाव्यति। लोपः शाकल्यस्येति तु न। अपदान्तत्वात्। तथा हि
नः क्ये। १।४।१५॥ क्यचि क्यङि च नान्तमेव पदं स्यान्नान्यत्। सन्निपातपरिभाषया क्यचो यस्य लोपो न। गव्याञ्चकार। गव्यिता। नाव्याञ्चकार। नाव्यि
ता। नलोपः। राजीयति। प्रत्ययोत्तरपदयोश्च। त्वद्यति। मद्यति। एकार्थयोरित्येव। युष्मद्यति। अस्मद्यति। हलि च। गीर्य्यति। पूर्य्यति। धातोरित्येव। ने
हा। दिवमिच्छति दिव्यति। इह पुरमिच्छामि पुर्य्यतीति माधवोक्तमप्रत्युदाहरणं चिन्त्यम्॥ ११ त्वादेषितैव गृह्यते तेन दा हा एषितृसंबंधिन इति॥

सुबन्तस्योक्तविशेषणद्वयमर्थद्वारकं बोध्यं। नः क्ये। लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि इति वक्ष्यमाणतया हलन्तात् क्यष् दुर्लभ इत्यभिप्रेत्याह क्यचि क्य
ङीति। एवं चेह क्यषीत्यपि केचिदुक्तं न तूपेक्ष्यं। यस्य हल इति लोपमाशंक्याह। संनिपातपरिभाषयेति। यकारे परे वान्तादेशविधानाद्वकारो यलोपस्य निमित्तं न भव
तीति भावः। राजीयतीति। क्यचि चेत्यवर्णस्य ईत्वे कर्तव्ये पूर्वत्रासिद्धमिति नलोपोऽसिद्धो न भवति नलोपः सुप्स्वरेति नियमात्। यद्यपि नियमसूत्राणां निषेधमुखेन प्र
वृत्तिरिति नलोपः सुप्स्वरेति सूत्रं राजीयतीत्यादिषु पठनीयं राजभ्यामित्यादौ तु पूर्वत्रासिद्धमिति नलोपस्यासिद्धत्वेन दीर्घाद्यभावसिद्धेस्तथापि विधिमुखेन प्रवृत्ति
रिति पक्षाभ्युपगमेन हलन्तेषु राजभ्यां राजभिरित्यत्रैव पठितव्यमिति ज्ञेयं। न च विधिमुखप्रवृत्तिपक्षो निरालंब एवेति वाच्यं गव्यतीत्यत्रान्तर्वर्तिविभक्त्या पदत्वाल्लोपो

उ.
सि·कौ·
टी·न·
९९६

त्वां ध्वनुनरुक्तरीत्या तु शङ्कैव नेति बोध्यं। अन्ये तु वार्तिकमेव प्रश्लेष इति द्वितीयपक्षमाश्रित्येदं सूत्रे वकारप्रश्लेषे लोपासंभवात्। नहि कार्यीति न्यायात्। न च वलीति निमित्तत्वे
नाश्रयणात् तत्रापि लोपो भवत्येवा अन्यथा रलोरित्येवं कुर्यादिति वाच्यं। वकारे परतो पकाररलोपापत्तेश्च निमित्तत्वेनाश्रयणं वस्खुक्कत्वादिति। द्वितीयकल्पस्यैव युक्तत्वाद्
अनुपराभ्यां कृञ इति सूत्रस्य भाष्यग्रन्थपर्यालोचनया नन्दस्य क्षावगमात्। यत्तु न लोपः सुप्स्वरेति सूत्रे मनोरमायामुक्तं नियमसूत्राणां विधिमुखेन प्रवृत्तिः सामान्यशास्त्रतात्पर्यसंकोचक
त्वमेवेति तस्य शुद्ध्यो लुङीति सूत्रे भाष्यकृता ध्वनितत्वादिति तच्चिन्त्यं। तत्सूत्रस्य भाष्यकारैरस्पृष्टत्वात्। केचित्तु शुद्ध्यो लुङीत्यत्र ध्वनितत्वादिति वक्तव्ये सूत्रग्रहणं बहुव्रीहिलाभार्थं॥ शु
द्ध्यो लुङीति सूत्रं यस्मिन् प्रकरणे तत् शुद्ध्यो लुङीति सूत्रं परस्मैपदप्रकरणमित्यर्थः। तत्र हि अनुपसर्गाद्वेति सूत्रं वर्तत इति तत्सूत्रेऽप्यहनितं ततु परस्मैपदप्रकरणे
ध्वनितं भवति। यद्वा अनुपराभ्यां कृञ इत्यत्र हि भाष्यकृता शुद्ध्यो लुङीति परामृष्टं। तथा च शुद्ध्यो लुङीति सूत्रं यस्मिन् तत् शुद्ध्यो लुङीति सूत्रं अनुपराभ्यां कृञ इति
सूत्रमित्यर्थ इत्येवं कविकृतिवत् कथंचित् स्थितस्य गतिस्समर्थनीयेत्याहुः॥ ॥ पूर्गिरोः साम्यादिति। पॄ पूरणे। पृ पालनपूरणयोरित्याभ्यां क्विपि कृते उद्

पूर्गिरोः साम्यात्। दीव्यतीति दीर्घस्तु प्रामादिक एव। अदस्यति। रीङृतः कर्त्रीयति। क्यच्व्योश्च। ६।४।१५२। गार्गीयति। वाच्यति। अ
दन्त्या चैति दीर्घः। कवीयति। समिध्यति। क्यस्य विभाषा। ६।४।५०॥ हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके। आदेः परस्य। अतो लोपः
तस्य स्थानिवत्त्वात् लघूपधगुणो न। समिधिता। समिध्यिता। मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न। किमिच्छति। इदमिच्छति। स्वरिच्छति। अ
शनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु। ७।४।३४॥ क्यजन्ता निपात्यन्ते। अशनायति। उदन्यति। धनायति। बुभुक्षादौ किम्। अशनीयति
उदकीयति। धनीयति॥ ॥

(( नोः उदोष्ठ्यपूर्वस्येति प्रवृत्तेरिति भावः। प्रामादिक एवेति। दिवु धातोः क्विपि तु द्यूरिति स्यात्। ततः क्यचि तु द्यूयतीति
भवति। क्विपं विहाय विचि कृते तु पधागुणो वलोपश्च स्यात् ततः क्यचि तु देयतीति भवति। तथा च हलि चेति सूत्रे वृत्तावपि धातोरित्येव नेह दिवमिच्छतीति दिव्यि
तिरित्येवोक्तमिति भावः। अपत्यप्रकारस्य लोपं स्मारयति क्यच्व्योश्चेति। नः क्ये इति नियमेन पदत्वाभावात् कुत्वं नेत्याह। वाच्यतीति। एवं समिध्यतीत्यत्र जश्त्वं नेति
बोध्यं। मान्ताव्ययेभ्यः प्रतिषेध इति वार्तिकस्य यथा श्रुतव्याख्याने पुत्रमिच्छतीत्यत्रापि न स्यात्। पुत्रौ पुत्रान् वा इच्छतीत्यादावेव स्यात् अतो व्याचष्टे। मान्तप्रकृ

तिकादिष्विति। अशनायोदन्याधनाया इति। उदकस्योदन्भावो
न्ययोर्दीर्घस्त्वपि ... सर्व एव भोक्तुमशनमिच्छतीत्यशनाया
तुमुदकं पश्च धने सत्यपि पुनर्धनं तत्रादाहरणानि।

यत्तु कालान्तरोपयोगार्थमशनमिच्छति यश्च स्नातुमुदकं यश्च दरिद्रः स न धनमिच्छति तत्र प्रत्युदाहरणानि। ननूदन्या तु पिपा ॥ ॥ ॥ ॥
सा तृडिति निघंटौ परस्परसामानाधिकरण्यं न स्यात् उदन्याशब्दस्य उदकेच्छावाचित्वादिति चेत्। अत्राहुः अशनायतीत्यादिषु अविवक्षितप्रकृत्यर्थं बुभुक्षा
पिपासादिकमेवार्थस्तथा च नोक्तदोष इति॥ ॐ ॥अश्वक्षीर। आज्जसेरित्यतोऽसुगिति वर्तते। अश्वस्यतीति। मैथुनार्थमश्वमिच्छतीत्यर्थः। एवं वृषमिच्छ
ति मैथुनार्थे वृषस्यति गौः। नन्वितिरामो वृषस्यंतीमिति प्रयोगो मनुष्यविषये कथं संगच्छते इति चेत्। अत्राहुः अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छे
वार्थो तेन वृषस्यंतीं तु कामुकीति कोशोपि स्वरसतः संगच्छते इति। लालसायामिति। उत्कटेच्छायामित्यर्थः। काम्यच्च। उच्चारणसामर्थ्यान्नकस्ये

अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि। ७।१।५१॥ एषां क्यचि असुगागमः स्यात्। अश्ववृषयोर्मैथुनेच्छायाम्॥ अश्वस्यति वडवा॥
वृषस्यति गौः। क्षीरलवणयोर्लालसायां। क्षीरस्यति बालः। लवणस्यति उष्ट्रः॥ सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ॥ दधि
स्यति। दध्यस्यति। मधुस्यति। मध्वस्यति। काम्यच्च। ३।१।९॥ उक्तविषये काम्यच् स्यात्। पुत्रमात्मन इच्छति पुत्रकाम्यति। पुत्रका
म्यिता। इह यस्य हल इति लोपो न। अनर्थकत्वात्। यस्येति सङ्घातग्रहणमित्युक्तम्। यशस्काम्यति। सर्पिष्काम्यति। मान्ताव्यये
भ्योप्ययं स्यादेव। किंकाम्यति। स्वःकाम्यति। उपमानादाचारे। ३।१।१०॥ उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात्। पुत्रमिवाचरति
पुत्रीयति छात्रम्। विष्णूयति द्विजम्। अधिकरणाच्चेति वक्तव्यम्। प्रासादीयति कुट्यां भिक्षुः। कुटीयति प्रासादे। कर्तुः क्यङ् सलोपश्च।
।३।१।११॥ उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात्। सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात्। क्यङ्वेत्युक्तेः पक्षे वाक्यम्। सान्तस्य
लोपस्तु क्यङ्सन्नियोगशिष्टः स च व्यवस्थितः। ओजसोप्सरसो नित्यमितरेषां विभाषया॥ कृष्ण इवाचरति कृष्णायते। ओजःशब्दो वृत्ति
विषये तद्वति। ओजायते। अप्सरायते। यशायते। यशस्यते। विद्वायते॥ ॥ (( संज्ञा। मान्ताव्ययेभ्यः प्रतिषेध इत्यस्यानुवृत्त्यभावं सू

चयति अयं स्यादेवेति। आचरतीति। व्यवहरतीत्यर्थः। अधिकरणाच्चेति। सप्तम्यंतरूपात् सुबंतादित्यर्थः। कर्तुः क्यङ् सलोपश्च। धातोः कर्मण इति
सूत्राद्वेत्यनुवर्तत इत्याह। क्यङ् वा स्यादिति। सेति लुप्तषष्ठीकं कर्तृविशेषणमित्याह। सांतस्येति। चकारस्तु अन्वाचये बोध्यः। तद्वतीति। तथा च ओजाय

विहृस्यतइति। नांतस्यैवपदत्वात्सस्यरुत्वंनापुंवद्भावंस्मारयति। काङ्‌मानिनोश्चेति। सपत्नीवेतित्रितयसाधारणंविग्रहवाक्यं। सपत्नायतइति। शाङ्र्प
र्यायात्सपत्नशब्दाच्छार्ङ्गरवादिङीनंतात् क्यङि पुंवद्भावे अकृत्सार्वेतिदीर्घे चरूपमिदं। सपत्नीयतइति। समानस्वामिकाभिधायिनोभाविति पुं

विहृस्यते। त्वद्यते। मद्यते। अनेकार्थत्वेतु। युष्मद्यते। अस्मद्यते। काङ्क्षानिनोश्चा कुमारीवाचरति कुमारायते। हरिणीवाचरति ह
रिणायते। गुर्वीवगुरूयते। सपत्नीवसपत्नायते। सपत्नीयते। सपत्नीयते। युवतिरिवयुवायते। पट्वीमृद्व्याविवपट्वीमृदूयते। नकोपधायाः
पाचिकायते। आचारेऽवगल्भक्लीवहोडेभ्यःक्विब्वा॥ वाग्रहणात्क्यङपि। अवगल्भादयःपचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्व
मनुनासिकत्वञ्चप्रत्ययस्यप्रतिज्ञायतेतेनतङ्। अवगल्भते। क्लीवते। होडते। भूतपूर्वादप्यनेकाचआम्। एतद्वार्त्तिकारम्भसामर्थ्या
त्। नच अवगल्भते इत्यादिसिद्धिस्तत्फलं। केवलानामेवाचारेपिवृत्तिसम्भवात्। धातूनामनेकार्थत्वात्। अवगल्भाञ्चक्रे। होडाञ्च
क्रे। वार्तिकेऽवेत्युपसर्गविशिष्टपाठात्। केवलाद्युपसर्गान्तरविशिष्टाच्चक्यङ्‌चेतिमाधवादयः। तङ्नेतितूचितम्। सर्वप्रातिपदिकेभ्यः
क्विब्वक्तव्यः॥ पूर्ववार्तिकानुअनुबन्धासङ्गार्थन्तत्रक्विबनूद्यते। प्रातिपदिकग्रहणन्दिहसुप्इतिनसम्बध्यते। तेनपदकार्यन्नाकृ
ष्णइवाचरति। कृष्णति। अतोगुणइतिशपासहपररूपम्। अरइवाचरति। अति। अतः। अन्ति। प्रत्ययग्रहणमपनीयअनेकाचस्तु
त्तौ ओम्। औ। अतुः। उः। द्वित्वम्। अतोगुणे। अतआदेरितिदीर्घः। णल। औ। वृद्धिः। अतुसादिषुत्वात्लोपइटिचेत्यालोपः। मालेवाचर
तिमालाति। लिङ्गविशिष्टपरिभाषयाएकादेशस्यपूर्वान्तत्वाद्धाक्विप्। मालाञ्चकार। लङि। अमालात्। अत्रहल्ङ्यादिलोपोन। ङीसाह
चर्य्यादापोपिसोरेवलोपविधानात्। रुटूसकौ। अमालासीत्। कविरिवकवयति। आशीर्लिङि। कवीयात्। सिचिवृद्धिरित्यत्रधातोरित्यनु
वर्त्यधातोरेवयोधातुरितिव्याख्यानान्नामधातोर्नवृद्धिरितिकैयटादयः। अकवयीत्॥ “ स्कस्यनित्यंसपत्न्यादिष्वितिनादेशानांतत्वान्ङीप्

नमः क्यङि पुंवद्भावे च दीर्घः। सपत्नीयत इति। विवाहजन्यसंस्कारविशेषनिमित्तके त्यपतिशब्दे न समासे सति निसत्त्रीत्वान्न पुंवत्। युवायत इति। न च ङ्याप्सूत्रे
भाष्ये युवतितरेत्युदाहरणात् यौवनं जातिरिति जातेश्चेति निषेधे युवतीयत इत्युदाहरणमिहोचितमिति वाच्यं। वयसोऽनित्यत्वेन जातित्वात्। अन्यथा युवजानि
रित्यत्र वः परस्मिन्निति सूत्रस्य भाष्यग्रंथो विरुध्येत। युवतितरेति भाष्यस्य तु का गतिरिति चेत्। अत्राहुः। तसिलादिष्विति पुंवद्भावे प्राप्ते भाष्यनिर्देशादेव न
पुंवदिति। युवतीशब्दस्य तु तरपि घरूपेति ह्रस्वे युवतितरेति भवत्येवापट्वीमृदूयत इति। पूर्वपदस्य क्यङ्परत्वाभावान्न पुंवत्। पाचिकायत इति।
पुंवत्प्राप्ते सति का न पूर्वस्येत्त्वं न श्रूयेतेति भावः। एवं च मीयते। स्तोमीयते। सुकेशीयते। ब्राह्मणीयत इत्यादि। आचारे वगल्भ। गल्भ धार्ष्ट्ये। क्लीबृ अधार्ष्ट्ये।
होडृ अनादरे। क्यङ्पीति। अपिशब्दाद्युक्तं। ननु सर्वप्रातिपदिकेभ्य इत्यत्र वाग्रहणं त्यज्यत इत्याहुः। क्विप्संनियोगेनेत्यादि। तेन क्यङ्संनियोगेनानु
माधवस्तु। नामधातोरपि वृद्धिमिच्छति। अकवायीत्। विरिव वयति। विवाय। विव्यतुः। अवयीत्। अवायीत्। श्रीरिव श्रयति। शिश्राय।
शिश्रियतुः। पितेव पितरति। आशिषि रिङ्। पित्रियात्। भूरिव भवति। अत्र गातिस्थेति भुवो वुगिति भवतेरिति च न भवति। अभिव्यक्त
त्वेन धातुपाठस्थस्यैव तत्र ग्रहणात्। अभावीत्। बुभाव। द्रुरिव द्रवति। णिश्रीति चङ्। अदुद्रावीत्॥ ९९ दानत्वानुनासिकत्वयोरभावादित्संज्ञा
लोपो न भवति। अकृत्सार्वेति दीर्घे सति अवगल्भायते क्लीबायत इत्यादि भवति। तेन तङिति। आत्मनेपदमित्यर्थः। तथा च अवगल्भमानः क्लीबमान इत्या
दि सिध्यति॥ ॐ॥ माधवादय इति। केचित्तेषामाशयमाहुः। आचारे वगल्भेत्यत्र सुप इत्यनुवर्तते। तथा च केवलादुपसर्गात् विशिष्टाद्गल्भप्र
गल्भादिभ्यस्तु वंतान्न क्यङेव न तु क्विप्। तङ् नेति नूचितमिति। उत्तरवार्तिके तु प्रातिपदिकमात्रात् क्विप् विधीयत इति। एतेभ्योऽपि त्रिभ्यः क्विपि सिद्धे तत्संनियो
गेनानुदात्तत्वानुनासिकत्वमात्रमप्रत्ययस्य आचारे वगल्भेत्यवगल्भादिषु प्रतिज्ञायते। लाघवादत्र तु गल्भप्रगल्भादि प्रातिपदिकेषु क्विपप
रस्मैपदमेव भवति न तु तङिति भावः। नन्वेवमाचारे वगल्भेत्यत्र वाग्रहणात् क्यङमनुवर्त्य अवगल्भादिप्रातिपदिकेभ्यः क्यङ्विधानेप्यन्यत्र सुबन्तादेव

उ
सि॰ कौ॰
टी॰ त॰
९९१

क्यङिति क्यङो विषय एव नास्ति। तथाच। केवलादुपसर्गान्तरविशिष्टाच्च क्यङ्प्रयुक्त इति चेत्। अत्र वदंति। प्रातिपदिकेभ्यः क्विप्सु वंतेभ्यः क्यङिति विग्रहभेदेनापि गल्भति गल्भायते प्रगल्भति प्रगल्भायते इत्यादि सिध्यत्येवेति। स्यादेतत्। गल्भ धार्ष्ट्ये इत्यादीनामनुदात्तत्वादवगल्भते इत्यादिप्रयोगसिद्धावपि अवगल्भादिषु तत्र वार्तिके न क्विपि सत्यवगल्भतीत्याद्यनिष्टप्रयोगः स्यात् तद्वारणार्थमाचारेऽवगल्भ इति वार्तिकारंभस्यावश्यकतया सामर्थ्यस्यापक्षीणत्वात् भूतपूर्वादप्यनेकाच आमित्येतत् अयुक्तमिति चेत्। सत्यं। अत्रायमाशयः। सर्वप्रातिपदिकेभ्य इति वार्तिके वाग्रहणं व्यवस्थितविभाषाश्रियते। तथाच। अवगल्भक्लीबहोडेभ्यः क्विपोऽभावादनिष्टप्रयोगो न भविष्यतीति स्वीकृते सामर्थ्यं नोपक्षीणमिति दिक्। पदकार्यं नेति। सवर्णदीर्घे यद्यपि पदमान्तकार्यं न भवति तथापि परस्य जायमाने कार्ये नेत्यत्र तात्पर्यं बोध्यं। तनोतीति तत्स इव आचरति ततनति। अत्र जश्त्वं न। त्वगिवआचरतीति त्वचति। अत्र कुत्वं नेत्याद्यपि बोध्यं। द्वित्वमिति। अणोल इति स्थिते द्विर्वचनेचीति निषेधादतो लोपो न भवतीति भावः। अतो गुण इति। द्वित्वे कृतेप्यतो लोपो न भवति अंतरंगेणाने न बाधितत्वादिति भावः। यद्यप्यत्र फले विशेषो नास्ति तथापि शास्त्रप्रक्रियाक्रममनुरुध्योक्तं। यद्यप्येवं वार्णदांगं बलीय इति परिभाषयाऽतोलोपः बाध्य इति चेत्। मैवं। तस्याः समानाश्रये कार्ये एकारेत्यादौ प्रवृत्तिस्वीकारात् तस्याश्रयेपि न च परत्वान्नित्यत्वाच्च अत आदेरित्यनेनैव प्रथमं भाव्यमिति वाच्यं। तस्य बहिरंगत्वेनासिद्धत्वात्। नचापवादत्वादत आदेरित्यनेन भाव्यमिति वाच्यं। अपवादो यद्यन्यत्र चरितार्थस्तर्हि अंतरंगेण बाध्यत इत्युक्तत्वात्। आनर्देत्यादौ तस्य चरितार्थत्वात्। तत्र हलादिःशेषात् प्रागेव परत्वादत आदेरित्यस्य प्रवृत्तेः। न च नित्यत्वाद्धलादिःशेष एव प्रथमं स्यादिति वाच्यं। नित्यत्वस्यात आदेरित्यत्रापि तुल्यत्वात्। एतच्च मनोरमानुसारेणोक्तं। केचिदत्र वदंति। अतो गुण इति पररूपापवादस्यात आदेरित्यस्य आनर्देत्यादौ चरितार्थत्वादंतरंगमेव भवतीति मनोरमोक्तं चिंत्यं। स्वविषयमध्ये एकत्रोदाहरणे चरितार्थस्योदाहरणांतरेपि प्रवृत्त्यभ्युपगमात्। नहि गोद इत्यत्राओऽनुपसर्गे क इति चरितार्थमिति गोप इत्यादौ न प्रवर्तते तस्मादणं बाधित्वा कप्रत्ययो यथा स्वविषये सर्वत्र प्रवर्तते तथेहापि प्रवर्तन इति। तदपरे न सहंते। गोदगोपादौ सर्वत्राणः कस्य च प्राप्तिसंभवे विनिगमनाविरहादणं बाधित्वा कप्रत्यय एव भवति प्रकृते त्वानर्देत्यादौ हलादिःशेषात् प्राक् अतो गुण इत्यस्य प्राप्त्यभावाद्वैषम्यमस्तीति॥

॥

न्वत आदेरित्यस्य पररूपापवादत्वमेधामासेत्यत्र यदुक्तं तत् कथं संगच्छते। आनृधतुरित्यादौ आद्गुण इति गुणस्यापि प्राप्तेर्न च यथा सवर्णदीर्घो यण्गुण
योरपवादस्तथायमप्युभयोरपवाद इति वाच्यं। एवमप्यानर्देत्यत्रैव हलादिशेषात् प्रागेवासेत्यत्रापि अत आदेरित्यस्य प्रवृत्तौ किं तेन पररूपापवादत्वकथ
नेनेति चेत्। अत्र केचिदाहुः। द्वंद्वापवाद एकशेषे इति केषांचित् प्रवादे यथाऽपवादशब्दो बाधकपरः सरूपाणामित्येकशेषानारंभे हि स्वाद्युत्पत्तौ द्वंद्वस्य प्र
वृत्तेरेकशेषसूत्रारंभे तु पदांतराभावेन तदप्रवृत्तेस्तथात्राप्यपवादशब्दोपि बाधकपरः अत आदेरित्यनारंभे हि हलादिशेषे पररूपप्रवृत्तावेधामसेति
स्यादारब्धे तु तत्सूत्रे परत्वाद्धलादिशेषात् प्रागेव दीर्घप्रवृत्त्या पररूपस्याप्रसक्तेरिति। यद्यप्यासेत्यादौ प्रथमं तु अत आदेरिति दीर्घाकरणेपि हलादिशेषे
पररूपे च कृते तस्य पूर्वांतवद्भावे सति अभ्यासग्रहणेन ग्रहणात् अत आदेरिति दीर्घप्रवृत्त्या समीहितरूपसिद्धिस्तथाप्यानर्देत्यादि न सिध्यत्येवात्राहित
अनुनासिकस्य क्वि झलोः क्ङिति। ६।४।१५॥ अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति। इदमिवाचरति। इदामति। प्र
शंवराजानति। पन्थाइवपथीनति। मथीनति। ऋभुक्षीणति। द्यौरिव देवतीति माधवः। अत्र ऊठि द्यवतीत्युचितम्। क इव कति। चकावि
ति। हरदत्तः। माधवस्तु एयह्लोपाविति वचनात् णिलिद्धिं बाधित्वाऽतो लोपाच्चक इति रूपमाह। स्व इव सस्मै सस्वायत्। स्वामासा स्वाम्व॥
स्मो नुडृद्धि हल इति दीर्घीभूतादकारान्नुडि नकारोपर्यकारश्रवणाभावप्रसंगादिति दिक्। प्रत्ययांतत्वेन प्रातिपदिकत्वात् तद्धि (( का[illegible] तेन दनाकरमेव॥
पोः नुत्पत्तिमाशंक्याह॥ लिंगविशिष्टस्यादि। सिचि वृद्धिरित्यत्रेति। सिचा धातोराक्षेपात् अत्र न इहानोरित्यतो धातोरित्यनुवर्तनाच्च धातुरेवेसौ धातुरिति व्याख्यात
भ्यत इति ज्ञेयं॥ विरिवेति। विः पक्षी॥ ॥ अनुनासिक अंगस्येति विशेष्यसंनिधानात् तदंतलाभः ढ्लोपे इत्यतो दीर्घग्रहणं नोपधाया इत्यत उपधाग्रहणं चा
नुवर्तते तदाह। अनुनासिकांतस्येत्यादि। झलादाविति। एतच्च यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया लभ्यते। झलादौ किति शांतेत्युदाहरणं
ङितितु पङ्लुकि तसि शंशांतः इदंतः। पथीननीति। अंतरंगत्वाद्दीर्घस्तत्रो न गुण इत्याहुः। इन्हन्नित्य नेन शवेवेति नियमात् दीर्घाभावे गुणे सति [illegible] नग्नी

द अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात् हलंतानामेषां लोपश्च अभृशो भृशो भवति भृशायते इ मु
सि·कौ· न्यवरूपमित्यन्ये। येषामिन्नादीनां शावुपधादीर्घः क्रियते परमदंडीनीत्यादौ तेषामेव दंडिन् वृत्रहन्नादीनामिन्हन्निति नियमो न तु पथ्यादीनाम् तेषां तु शौ परत्वात्
टी·त· सुपंथानीत्यादावुपधादीर्घप्रवृत्तावपि इतोत्सर्वनामस्थाने इत्यनेन कृते इन्हन्निति नियमाप्रवृत्तेः अन्यथा पंथा नौ पंथान इति न सिध्येत् तथा च पथीननीत्यादि
९९२ वसाध्वि स्यादेवेतीति माधव इति। अपरे तु नत्वाहिदिव उक्ता। अत्रेति। लघूपधगुणं बाधित्वांतरंगत्वाद्धृठि यण् तस्मिन् कर्तव्ये बहिरंगस्याप्यूठो नासिद्धत्वं
नाजानंतर्य इति निषेधात्। न च वार्णादांगं बलीयस्त्वाद्गुणं बाधित्वा लघूपधगुणः स्यादिति वाच्यं व्याश्रयत्वात्। अत एव सिवौ लादिके न प्रत्यये।
स्योन शब्दः सिध्यतीति भावः कइवेति। कौ वृत्। चकरनीति। नन्वेवमौ अनुरित्यत्राप्यन आदेरिति दीर्घं बाधित्वा अतो लोप एव स्यादिति चेत्। अत्राहुः

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः। ३।१।१२। अच्वेरिति पर्युदासबलादभूततद्भाव इति लभ्यम्। तेनेह न। कदिवा भृशा भुवन्। येरा
ऽभृशः। नक्तं त्वदिवा क्वभवन्तीत्यर्थः। सुमनस्। अस्य सलोपः। सुमनायते। चुरादौ संग्राम युद्ध इति पठ्यते। तत्र संग्राममिति प्रातिप
दिकम्। तस्मात्तत्करोतीति णिच् सिद्धः। तस्मिन्नियोगेनानुबन्ध आसज्यते। युद्धे यो यं ग्रामशब्द इत्युक्तेऽपि सामर्थ्यात्संग्रामशब्दे लब्धे विशि
ष्टपाठो ज्ञापयति। उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते इति। तेन मनश्शब्दात्याग द्वासम

स्य ल्लोपाविति वचनेन जायमानयोः नलोपः सन्तु सन्निहितमेव अकृत्सार्वेति दीर्घं बाधते। अनंतरस्येति न्यायात्। न तु व्यवहितमपि अत आदेरिति दीर्घं
मिति माधवाशयात् नानेन तद्ग्रंथस्य विरोध इति। अनाकारमेवेति। अनेकाच्त्वाभावादित्यर्थः। अन्ये तु भाष्ये प्रत्ययग्रहणमपनीयेत्युक्तत्वात् प्रत्ययांततया
स्त्वामासेत्यादिरूपं शुद्धमेवेत्याहुः॥ ❀ ॥ भृशादिभ्यः। भुवीत्येतत् व्याचष्टे भवत्यर्थ इति। भृशा। शीघ्र। मंद। पंडित। दुर्मनस्। सुमनस्। उन्मनस्। रह
इयो भृशादयः। कदिवेत्यादिभाष्यकारीयं प्रत्युदाहरणं व्याचष्टे येरात्रावित्यादिना। प्रातिपदिकमिति। नत्वयं धातुः। ग्रसेरा चेत्यौणादिके न मन्प्रत्ययांततया
निष्पादितत्वादेवं च वक्ष्यमाणं ज्ञापकं संगच्छत इति भावः। अनुबंध इति। संग्राममिति मशब्दाकारात् मिन्नोऽकारोऽनुबंध इत्यर्थः। तथा च। अत्र अतो गुणे

णइतिपररूपंज्ञेयं। यदितुमकारादकारोऽनुबंधःस्यात्तर्हिअससंग्रामतेस्तत्रणौचङीतिउपधाह्रस्वःस्यात्। णिच्संनियोगेनानुबंधाकरणेतुअनुदात्तेत्त्वल
क्षणस्यआत्मनेपदस्याप्रवृत्त्याणिचश्चेतिकर्तृगामिनिक्रियाफलएवआत्मनेपदंस्यान्नतुपरगामिनीतिविवेकः। सामर्थ्यादिति। केवलस्ययामशब्द
उन्मनायते। उदमनायत। एवञ्चवागल्भतअवागल्भिष्टेत्यादावप्येवेसस्यपृथक्करणम्बोध्यम्। ज्ञापकञ्चसजातीयविषयमिति
नयत्रोपसर्गसरूपंसकलंश्रूयतेनत्वादेशेनापहृतंतन्त्रैवपृथक्कृतिः। एवञ्च। आऊढः ओढः। सरवाचर्यओदायित्वा। अत्रउन्मनाय्य
अवगल्भ्येतिवल्ल्यप्। ज्ञापकस्यविशेषविषयत्वेवार्त्तिकन्तद्भाष्यञ्चप्रमाणम्। तथाहि। उस्योमाङ्क्ष्वाटःप्रतिषेधः। उसिओमा
ङिअश्चपरयोराटःपररूपन्नेत्यर्थः। उस्रामिच्छता औस्रीयत्। औङ्कारीयत्। औदायत्। आटश्चेतिचशब्देनपुनर्वृद्धिविधानादिदंसिद्धमि
तिभाष्येस्थितम्। लोहितादिडाज्भ्यःक्यष्। ३।१।१३। लोहितादिभ्योडाजन्ताच्चभवत्यर्थेक्यष्स्यात्। वाक्यषः। १।३।९०। क्यषन्तात्परस्मै
पदंवास्यात्। लोहितायति। लोहितायते। अत्राचेरित्यनुवृत्त्याऽभूततद्भावविषयत्वंलभ्यन्तच्चलोहितशब्दस्यैवविशेषणम्। नतुडा
चोऽसम्भवात्। नाप्यादिशब्दग्राह्याणांतस्यप्रत्याख्यानात्। तथाचवार्त्तिकम्। लोहितडाज्भ्यःक्यष्वचनंभृशादिष्वितराणीति। नचैव
ङ्कम्पचरवक्यषोपिकारःश्रूयेतउच्चारणसामर्थ्यादितिवाच्यम्। तस्यापिभाष्येप्रत्याख्यानात्। पटपटायति। पटपटायते। कृभ्वस्तियोग
म्विनापीहडाच्। डाजन्तात्क्यषोविधानसामर्थ्यात्। यत्तु। लोहितश्यामदुःखानिहर्षगर्वसुखानिच। मूर्छानिद्राकृपाधूमाःकरुणानित्यच
र्मणीतिपठित्वाश्यामादिभ्योपिक्यषिपदद्वयमुदाहरन्तितद्भाष्यवार्त्तिकविरुद्धम्। तस्मात्तेभ्यःक्यङेव। श्यामायते। दुःखायते। ङस्वरादयोर्वृत्तिविषये
तद्वृत्तिवर्त्तिनोलिङ्गविशिष्टपरिभाषयालोहिनीशब्दादपिक्यष्। लोहिनीयति। लोहिनीयते॥ (( स्यपुट्प्रयोगाभावादितिभावः। क्रियायोगाभावा
दुपसर्गेनेत्यभिप्रेत्याह। समानाकारमिति। पूर्वपदमिति। तच्चसमासएवसंभवतीतितेनआंदोलयित्वाप्रेंखोलयित्वेत्यादौआङ्प्रेत्यादीनांनपृथक्करणं॥

अन्यथा तेषां तेन समासे सति ल्यप् स्यादिति भावः। पृथक्करणस्य फलमाह। तेनेति। गुंमिम नायिषति उन्मिमनाइषतीत्यादौ मनः शब्दस्य द्विर्वचनमपि फलमि
ति बोध्यं। अवागल्भतेति। आचारे अवगल्भेति क्विबित्यथो अवेत्यस्य पृथक्करणात् गल्भशब्दात् प्रागट्। किं न स्यादात्यमित्यत आह। तेनेति। उस्रामित्रिमा
हेषी सौरभेयी गौः। उस्रा माता च शृंगिणीत्यमरः। औस्रीयदिति। कं जं तादुस्रा शब्दाल्लङि अंगस्याट् चकृते उस्य परत्वादिति पररूपं प्राप्तं। न च अनर्थ
कोयमुसनग्रहीष्यत इति वाच्यं। छिद्युर्भिद्युरित्यादावप्युसोऽनर्थकत्वादागमसहितस्यैवार्थवत्त्वात्। तथा चाधुर्यपुरित्यादावेवोस्यात् एवं चा
यमेवाः डागमस्य उसि परे प्रतिषेधोऽर्थवद्ग्रहणपरिभाषाया अत्राप्रवृत्तौ ज्ञापक इति स्थितं। अत एवोस्य परत्वादित्यत्र अपदान्तात् किमोस्येति भाष्ये
प्रत्युदाहृतं। औकारीयदिति। ओमाङोश्चेति पररूपं प्राप्तं। आडागमस्याङि परे। उदाहरणमाह। औढीयदिति। यत्रादेशेन अपहृतं तत्रापि मा भूदित्यपृथक्क
ति सति आङः परत्वाट्टाभाव्यमित्याडागमस्याङि परे पररूपनिषेधो व्यर्थः स्यात्। तथा च ज्ञापकस्य विशेषविषयत्वे प्रमाणमयमेव निषेध इति भावः। च
शब्दं प्रयुंजानः सूत्रकारोपि विशेषविषयत्वेऽनुकूल इत्याह। चशब्देनेति। बाढं स्थितमिति। भाष्यकारोप्युक्तार्थे प्रमाणभूत इति भावः। स्यादेतत्। अव
धीरयतीत्यादावव शब्दस्य पृथक्करणमस्ति वा न वा। आद्ये वोपदेवे नावशब्दात् प्रागाडागमं वकारद्वित्वं च कृत्वा चङि आववधीरदित्युदाहृतं तन्न सं
गच्छेत द्वितीये तु अवधीरतीव धारामवधीर्य मंडलीक्रियमाश्रियामंडितुरंगमैर्महीति श्रीहर्षप्रयोगो न संगच्छेतेति चेत्। अत्राहुः। नायं धातुश्चुरादौ पठितः किं
तु बहुलमेतन्निदर्शनमिति वा बाहुलकादृहितः। उदहश्चवधीरेत्यस्यापि संभवति अवधीरेत्यस्यापि। प्रयोगद्वयप्रामाण्यात् मुनित्रयविरोधाभावाच्च। य
त्वत्र धीरेति विशिष्टस्यैव धातुत्वं तदा अवधीरयिष्वेति साधुर्धीरेत्यस्यैव धातुत्वे तु अवधीर्येत्यस्य साधुत्वमिति। ।तस्येति। आदिशब्दस्यार्थः। तस्या
पीति। कायः ककारस्येत्यर्थः। एतेन नः क्ये क्यस्य विभाषेति सूत्रद्वये क्यषोपि ग्रहणं वदंतः परास्ताः। लोहितायतीति। क्यङि सति तङ् स्यात्। कैङ्मानिनोश्चेति

कष्टाय क्रमणे। क्यङ् वानुवर्तते स्वरितत्वान्न तु क्यप्। कष्टायेति निर्देशादेव चतुर्थ्यन्तं लभ्यते। क्रमणमुत्साहः। वृत्तिसर्गतायनेष्विति क्रमेरात्मनेपदविधायकसूत्रे सर्ग उत्साह इति सर्वैर्व्याख्यातत्वात्। कष्टं कृच्छ्रं। कृच्छ्रगहनयोः कष इतीडभावः। न च दुःखं कर्तुमुत्साहः संभवतीति तत्साधनं पापमिह गृह्यत इत्याह। पापं कर्तुमिति। द्वितीयान्तेभ्य इति। चिकीर्षायां द्वितीयान्तस्यैवान्वययोग्यत्वादेवमुक्तं। कर्मणि। रोमन्थतपोभ्यामित्यनेन सामानाधिक-

कष्टाय क्रमणे। ३।१।१४॥ चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः। सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्॥ कण्वम्पापं। सत्रादयो वृत्तिविषये पापार्थाः। तेभ्यो द्वितीयान्तेभ्यः चिकीर्षायां क्यङ्। पापं चिकीर्षतीत्यस्वपदविग्रहः। सत्रायते। कक्षायते इत्यादि। कर्मणो रोमन्थतपोभ्यां वर्तिचरोः। ३।१।१५॥ रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात्। रोमन्थं वर्तयति रोमन्थायते। हनुचलन इति वक्तव्यम्॥ चर्वितस्याहृत्य पुनश्चर्वण इत्यर्थः। नेह। कीटो रोमन्थं वर्तयति। अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः तदश्नातीत्यर्थ इति कैयटः। वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्तौ। तपसः परस्मैपदं च॥ तपश्चरति तपस्यति। बाष्पोष्मभ्यामुद्वमने। ३।१।१६॥ आभ्यां कर्मभ्यां क्यङ् स्यात्। बाष्पमुद्वमति बाष्पायते। ऊष्मायते। फेनाच्चेति वाच्यम्। फेनायते। शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे। ३।१।१७॥ एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते। पक्षे तत्करोतीति णिजपीष्यत इति न्यासः शब्दयति। सुदिनदुर्दिननीहारेभ्यश्च॥ सुदिनायते। सुखादिभ्यः कर्तृवेदनायाम्। ३।१।१८॥ सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्तुरेव चेत्सुखादीनि स्युः। सुखं वेदयते सुखायते। कर्तृग्रहणं किम्। परस्य सुखं वेदयते॥ ॥

रण्यान्न कर्मण इति पंचमी। प्रत्येकं संबंधादेकवचनमित्याह। कर्मभ्यामिति। वर्तनायां चरण इति। सूत्रे वर्तीति ण्यन्तात् वृत्तेर्ण्यासश्रन्थेति युचं बाधित्वा अस्मादेव निपातनात् क्तिन्। चरतेस्तु संपदादित्वात् भावे क्विप् क्तिन्वेति भावः। केचित्तु वर्तिशब्दो वर्तयतेः कृष्टिपाविति इकि रूपं। लक्षणया चार्थलाभ इत्याहुः। शब्दवैर। कर्मणोऽस्य

सि·कौ· नुवर्तनइत्याह। एभ्यः कर्मभ्यइति। सुखादिभ्यः। कर्तृइतिपृथक्पदंलुप्तषष्ठीकं। णिङ्क्तेतु न्याख्यानेनियमोऽस्ति नित्येचौरादिकाल्लघुचिवेदनाशब्दोज्ञानवाचीतदपेक्षमेतद्

टी·त· त्वंकर्तृचसुखादिभिरन्वेतितदेतदाह। वेदनाकर्तुरिवेति। परस्यसुखमिति। इहयन्निष्ठंसुखंतद्विन्नोवेदनाकर्तेतिवाक्यमेव। सुखादयः सुखदुःखतृप्रकृच्छ्रादयः ॥

१९८

नमोवरिवश्चित्रङःक्यच्। ३।१।१९॥ करणेइत्यनुवृत्तेःक्रियाविशेषपूजायामपरिचर्यायामाश्चर्येच। नमस्यतिदेवान्। पूजयतीत्यर्थः। वरि
वस्यतिगुरून्। शुश्रूषतइत्यर्थः। चित्रीयते। विस्मयतइत्यर्थः। विस्मापयतइत्यन्ये। पुच्छभाण्डचीवराण्णिङ्। ३।१।२०॥ पुच्छादुदसने।
व्यसनेपर्यसनेच। विविधंविरुद्धंवासनंव्यसनम्। उत्पुच्छयते। विपुच्छयते। परिपुच्छयते। भाण्डात्समाचयने। सम्भाण्डयते। भाण्डा।
निसमाचिनोतिराशीकरोतीत्यर्थः। समवभाण्डेत्। चीवरादर्जनेपरिधानेच। संचीवरयतेभिक्षुः। चीवराण्यर्जयतिपरिधत्तेवेत्यर्थः। मु
ण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्योणिच्। ३।१।२१॥ कृञर्थे। मुण्डंकरोतिमुण्डयति। व्रतात्भोजनतन्निवृत्त्योः। पयःशू
द्रान्नंवाव्रतयति। वस्त्रात्समाच्छादने। संवस्त्रयति। हल्यादिभ्योग्रहणे। हलिकल्योरदन्तत्वंनिपात्यते। हलिंकलिंवागृह्णाति। हल
यति। कलयति। महद्धलंहलिः। परत्वाद्वृद्धौसत्यामपीष्ठवद्भावेनटिलोपेवृद्धिर्लुप्यते। अतःसन्वद्भावदीर्घौन। अजहलत्। अचकलत्। कृतंगृ
ह्णातिकृतयति। तूस्तानिविहन्तिवितूस्तयति। तूस्तंक्लिष्टं। जटीभूताःकेशाइत्यन्ये। पापमित्यपरे। मुण्डादयःसत्यापपाशेत्यत्रैवप
ठितुंयुक्ताः प्रातिपदिकाद्धात्वर्थइत्येवसिद्धेकेषांचिद्ग्रहणंसापेक्षेभ्योपिणिजर्थम्। मुण्डयतिमाणवकम्। मिश्रयत्यन्नम्। श्लक्ष्णयति
वस्त्रम्। लवणयतिव्यञ्जनमिति। हलकलयोरदन्तत्वार्थम्। सत्यस्यआपुगर्थम्। केषांचित्तुप्रपञ्चार्थम्। सत्यंकरोत्याचष्टेवासत्यापय
ति। अर्थवेदयोरप्यापुग्वक्तव्यः॥ अर्थापयति। वेदापयति। पाशाद्विमोचने। विपाशयति। रूपाद्दर्शने। रूपंपश्यति निरूपयति। वीणयोपगायत्युपवीणय

नमोवरिवः। चित्रङः क्यज्विधानमीत्वार्थं। ङित्करणंतुतङर्थं। विस्मापयतइत्यन्यइति। तथाचभट्टिः। ततश्चित्रीयमाणोऽसाविति। असौमायामृगश्चित्री

विस्मयमुत्पादयन्नित्यर्थः। पुच्छभांडो करणे इत्यनुवृत्तेरत्रापि क्रियाविशेषएवलिङ्। तमेव विशेषं दर्शयति पुच्छादिभ्यादिनाउ कारोत्तरणे निरीति लिङ्गं लि
ङोः सामान्यग्रहणार्थो नित्यात्मनेपदार्थश्च। उदपुपुच्छत। मुंडमिश्र क्षत्र थेइति। क्वचित् क्रियासामान्ये। प्रातुर्येण तु क्रियाविशेषे। व्रतादिति। पयोव्रतयति
तूस्तेनानुकूलमात्यनुतूलयति। तृणाग्रं तूस्तेनानुघट्टयतीत्यर्थः। श्लोकैरुपस्तौतीति उपश्लोकयति। सेनया अभियाति अभिषेणयति। उपस
र्गात्सुनोतीति षः। अभ्यषेणयत्। प्राक्सितादिति षः अभिषिषेणयिषति। स्थादिष्वभ्यासेन चेति षः। लोमान्यनुमार्ष्टि अनुलोमयति। त्वचसंव
रणे। घोत्वचं गृह्णातीति त्वचयति। वर्मणा संनह्यति। संवर्मयति। वर्णं गृह्णाति। वर्णयति। चूर्णैरवध्वंसते अवचूर्णयति। इष्ठवदित्यति
देशात्पुंवद्भावादयः। एनीमाचष्टे एतयति। दरदमाचष्टे दारदयति। पृथुमाचष्टे प्रथयति। ऋतोरत्वात्पूर्वस्माट्टिलोपः। अपिप्रथत्। अपप्रथत्। मृ
दुमाचष्टे म्रदयति। अमिम्रदत्। अमम्रदत्। भृशं कृशं दृढम्। भ्रशयति। क्रशयति। द्रढयति। अबभ्रशत्। अचक्रशत्। अदद्रढत्। परिव्रढ
यति। पर्यवव्रढत्। ऊढिमाख्यत्। औजिढत्। ढत्वादीनामसिद्धत्वात्। हतिशब्दस्य द्वित्वम्। पूर्वत्रासिद्धीयमद्वित्वे इति त्वनित्यमित्युक्तम्
ढिरित्यस्य द्वित्वमित्यन्ये। औडिढत्। ऊढमाख्यत्। औजढत्। औडढत्। ओः पुयण्जीति वर्गप्रत्याहारजग्रहणलिङ्गमद्वित्वे कार्ये णावच आ
देशो नेति ऊनयत। ऊनकम्। प्रकृत्यैकाच्। वृद्धिपुकौ। स्वापयति। त्वां मां वाचष्टे त्वापयति। मापयति। मपर्यन्तस्य त्वमौ। पररूपात्पूर्वमित्यत्वाट्टि
लोपः। वृद्धिः पुक्। त्वादयति। मादयतीति न्यासः। अन्तरङ्गत्वात्परत्वाच्च प्रकृत्यैकाजिति प्रकृतिभावात्। न च प्रकृतिभावो भाष्ये प्रत्याख्या
त इति भ्रमितव्यम्। भाष्यस्यापेक्षाबुदाहरणविशेषे न्यथासिद्धिपरत्वात्। युवामावां वा। युष्मयति। अस्मयति। […]माचष्टे […]यति […] ॥
[…]न्नातीत्यर्थः। भृद्यान्नं व्रतयति। वर्जयतीत्यर्थः। वस्त्रादिति। वस्त्रसमाच्छादने योऽवस्त्रशब्दस्तस्मात् करोत्यर्थे णिजित्यर्थः। संवस्त्रयतीति। वस्त्रा […] दने
करोतीत्यर्थः। अदंतत्वमिति। अयमेव निपातो वृद्धौ सत्यां टिलोप इत्यस्य ज्ञापकः। यदि पूर्वं लोपो भवेत्तदा ऽग्लोपकार्यसिद्धौ किमनेन निपातनेनाल […]

एवैवानेकाल्सुपयस्थानपयसिद्धः चंपकस्तजिष्ठइत्यादिषुगतिः। नचैनावतामकृत्यैकाजितिसूत्रंप्रत्याख्यातमितिभ्रमंतव्यं। स्वापयतीत्यादौतस्यावश्यक
त्वात् इतिभावः। युवामावामिति। युष्मानस्मानितिविग्रहेपियुष्मयतिअस्मयतीत्येवरूपं। नचद्वयोरुक्तौयुवावांभवत्वितिरूपेविशेषः शंक्यः। विभक्तिपु
रत्वाभावात्। नचप्रत्ययलक्षणं। लुकालुप्तत्वात्। नचपागेवादेशोस्त्विति वाच्यं। अंतरंगानपिविधीन्बहिरंगोलुग्बाधतइतिन्यायात्। अक्रुत्व्यूहपरि
भाषायाजागरूकत्वाच्चायेननाप्राप्तीति। यत्रयत्रप्रकृत्यैकाच् इत्यस्यप्रवृत्तिस्तत्रटेरित्यस्यप्रवृत्तिर्नेतुनस्तद्धित इत्यस्यापि। जिष्ठइत्यादौतस्याप्रवृत्तेरि
तिभावः। अनंतरस्यैवविधिर्वाप्रतिषेधोवेतिन्यायेनेत्यन्याः संप्रसारणमिति। नचटिलोपस्यानंतरत्वाभावात्श्वयुवमघोनामितिकथमिहसंप्रसारणप्रवृत्तिरिति
शंक्यं। स्यानिवत्वादसिद्धवदत्रेत्यसिद्धत्वाद्वाटिलोपेप्यनंतरत्वलाभात् अतद्धितइतिहितत्रपर्युदासोनतुप्रतिषेधः तेनतद्धितेनविधिर्नप्रतिषेधः किंतुअत
द्धितभिन्नेपरेविधिस्तद्धितभिन्नत्वंतुणिचोऽस्त्येवेतिनसंप्रसारणप्रतिबंधः। नापिइविष्ठइत्यादौइष्ठनिओर्गुणोदृष्टइतिइहापिसद्धूपाधित्वाद्गुणप्रसक्तिरितिवा
च्यं। जातेपिगुणेपुनर्वृद्धौरूपसिद्धेः। अथवाटिलोपसंप्रसारणयोर्गुणंप्रतिअसिद्धवदत्रेत्यसिद्धत्वाद्दृष्टवन्भावेननास्तिगुणप्रसंगः। शुनयतीति। इष्टव
न्मात्रेनभत्वात्संप्रसारणं। प्रकृत्यैकाजितिप्रकृतिभावः। नित्यत्वादिति। प्राक्त्वांतरप्राप्त्यात्टिलोपस्यानित्यत्वमितिभावः। उदीचयतीति। उपसर्गपृथ
कृत्यैवशब्दादर्वाणिजितिप्रकृत्यैकाजितिप्रवृत्तेः टिलोपोन। उदर्चइतीति। अनिदितामितिक्ङिन्निमित्तोनलोपः। उदैचिचदिति। लुङिचङीतिणि
लोपस्यनिषेधाच्चिणूवस्याद्दित्वं। प्रतीचयतीति। अचइत्यस्यलोपेचाविति पूर्वस्यदीर्घः॥

नथमलुकोऽसिद्धत्वेनव्यवधानात् नथेत्यर्थः। पुनाष्टिलोपो नेति। तिर्यादेशस्येकारस्य लोपो नेत्यर्थः। अग्लोपित्वादिति। अग नग्लोपिनोपि अग्लोपित्वसीकारादि
तिमाकः देवद्र्यंचमिति। ननु आख्यानात् कृतस्तदाचष्ट इति कारकस्य पृथक्करणे देवानंचयतीति प्रसज्येत। बलिवंधनमाचष्टे बलिंवंधयतीतिवत्। इष्यते तु दे
वद्र्यंचयतीत्येव रूपं। किंच। कारकस्य पृथक्करणेऽदिदेवद्र्यवदित्याद्यपि न सिध्येत्। न च पुराण प्रसिद्ध्याख्याने एव कारकस्य पृथक्करणं देकमिति वाच्यं
राजानमाशमयतीत्यत्राव्याप्तेरिति चेत्। अत्राहुः यत्राख्यानेऽक्तच्छूयते तत्रैवेदं प्रवर्तते क्तच्छुगिति संन्नियोगशिष्टविधानात्। किंच। आख्यानग्रहणसा
मर्थ्यात् महाजनप्रसारविषयीभूतार्थविषयकमेव तत्। भाष्यादौ तादृशानामेवोदाहृतत्वात्। यदि तु देवा[illegible]नमाचष्टे इत्यादौ महाजनप्रसिद्धिरस्ति त
स्तदेवानेचयतीति भवत्येवेति। ओमुमुआपदिति। पूर्वत्रासिद्धीयमद्विर्वचन इत्यसिद्धत्वनिषेधान्मुशब्दस्य द्वित्वं। अवीभवदिति। ओः पुयण्जीत्यभ्या
सो वर्णस्येत्वं। दीर्घो लघोरिति दीर्घः। ननु परत्वात् प्रथमं दीर्घे कृते पश्चादित्वं स्यात्। न चैवं दीर्घो लघोरित्यस्यैवैयर्थ्यमिति वाच्यं। अजूहवदित्यादौ
तस्य सावकाशत्वादिति चेत्। अत्राहुः। विप्रतिषेधे परमित्यत्र परशब्दस्येष्टवाचित्वादित्वस्यानुरोधेन दीर्घात् प्रागित्वमेव भवति। लस्यभेदात् पूनरिका
रस्य दीर्घो वा भवतीति। अववभवदिति। इहाभ्यासात् परो यः पवर्गः स त्ववर्णपरो न यस्त्ववर्णपरो यण् नासावभ्यासात् पर इत्यभ्यासोकारस्यत्वं न। गोर्गवियु
तिं स्वश्चमिति। शोभनः अश्वः स्वश्वः। शोभनः अश्वो यस्येति बहुव्रीहिर्वा। स्वाशश्वदिति। उपसर्गसमानाकारस्य पृथक्करणात् अजादेरिति द्वितीयस्य
द्वित्वमाडागमश्च। स्वयतीति। प्रकृत्यैकाजिति प्रकृतिभावस्तु येन नाप्राप्ति न्यायात् टेरित्यस्यैव बाधको न त्वव्ययानां भमात्रे टिलोप इत्यस्य प्रतिभावः। अ
सस्वदिति। ओः पुयण्जीति ज्ञापके न द्वित्वे कार्ये ऽजादेशस्य स्थानिवत्त्वान्निषेधाद्धस्वशब्दस्य द्वित्वमिति मते नेदं। अग नग्लोपिन्यग्लोपित्वाभ्युपगमेप्य
ज्ञादेशोऽजादेशत्वव्यवहारो नास्तीति मते तु णिचसहितस्यैव द्वित्वं तदाह। असिस्वदिति। भावयतीति। वहोर्लोपो भू च बहोरिष्ठस्यापद्धात भूभावः॥
नन्वेवं पिडागमो पि लोरस्त्विति वाच्यं। णाविष्टवदुपमेये समभीनिर्देशादिष्ठवद्भावस्य तत्र सत्त्वं नात इति स्थिरत्वाभ्युपगमात्। एवं चेष्ठनि परे पूर्वस्य यत्कार्यं तदे
वातिदिश्यते न त्विष्ठनोपि कार्यमिति स्थितं। बहयतीत्यन्य इति। पिडभावे सन्त संन्नियोगशिष्टस्य भूभावस्यापि अभाव इति भावः। नन्वेवमन्यमन्त्वेन। रेम

र्थमिदमुपन्यस्तमिति चेत्। अत्राहुः प्राधान्यादिष्ठवदिति कार्यातिदेशो न त्वयं शास्त्रातिदेशः तथा चेष्ठनि दृष्टं भूमावं सर्ववातिदेशो विधत्त इति नात्र संनियोगशिष्टत्व
विभाषाप्राप्तिः प्रवृत्तिः इत्थं च भावयतीत्येव रूपं सम्पागिति। स्रजयतीति। इष्टवन्भावेन विन्मतोर्लुक्। ननु ज्ञापकाद्गुणवचनादेवेत्युक्तत्वात् इष्टन्यन्ययः स्रग्विन् शब्दा
दुर्लभ अतः इष्टवद्भावोत्रायुक्त इति वाच्यं। अस्मादेव लुग्वचनात् ज्ञापकाद्धि त्वं नात मतुवंताच्च अजादी भवत इत्यभ्युपगमात्। श्रीमतीमिति। मतुपो लुक्
श्रीमयति। अशिश्रयदिति। एतेन स संचरिष्णुर्भुवनान्तरेषु यां यदृच्छयाशिश्रयदाश्रयः श्रियामिति माघश्लोके प्रचुरः पाठो व्याख्यातः। श्रीमतीमकरोदि
त्यर्थादिति मनोरमायां स्थितं। अत्र केचित्। सापेक्षाणां वृत्त्यभावान्मनोरमोक्तं यत्तदयुक्तं। नहि कश्चित् यं घटं करोति तमानयेत्यर्थे यं घटयति तमा
नयेति प्रयुंक्ते। अत एव तत्करोतीत्यनेनैव सिद्धे मुंडादिग्रहणं सापेक्षेभ्योपि णिजर्थमिति पूर्वोक्तं संगच्छते यद्यन्यत्रापि सापेक्षेभ्यो णिच् स्यात्तन्न सं
गच्छेत। न चात्र सापेक्षत्वं नेति विवदितव्यं। यां दिशं श्रीमती मकरोदिति स्वयमेव व्याख्यातत्वात्। नापि सविशेषणानां वृत्त्यभावेपि विशेष्ययोगस्यादे
वृत्तिरिति नात्रानुपपत्तिरिति श्रीमतीमित्यर्थं प्रति दिशो विशेष्यत्वादिति वाच्यं। विशेष्यं हि वहिर्भूतविशेषणानां वृत्तिर्नो गीक्रियते। नहि कश्चित् श्रीमत्या
ऽन्तरदमित्यर्थे राज्ञः श्रैमतमिति वृत्तिमभ्युपैति। किंच माघश्लोके अशिश्रियदित्येव पाठो बहुषु पुस्तकेषु दृश्यते। न त्वशिश्रयदित्यलमशुद्धग्रंथसमर्थना
भिनिवेशेनेत्याहुः। पयसयतीति। इह विन्मतोर्लुकि अग्लोपात्सन्वद्भावादिर्किंचन। अगग्लोपेपि सन्वत्भावाभावात्। णौ चङीति सूत्रे अत्वरराजदिति भा
ष्यमिह प्रमाणं। लुङि अपपयसत्। एवं स्रग्विणमाचष्टे असस्रजदित्यत्रापि सन्वद्भित्वं। नागोमतं गवयति। लुङि। अजुगवत्। इहाग्लोपस्य स्थानिवत्त्वादिति द्वित्वे गो
गोमस्रजं पपरति। विग्रहे तु अजूगवत् असिस्रजत् पपयत्। अपपयत्। टेर्लोपस्य वहिरंगत्वेन असिद्धत्वादिह वृद्धिर्न। अग्लोपित्वान्न सन्वद्भाव
इति चैनान्तरयवादस्येति। येन नाप्राप्तिन्यायेन टिलोपापवादो लुक्। स्थवयतीति। स्थूलदूरेति यणादिलोपो गुणश्च। न च गुणस्याचोऽञ्णितीति वृद्धि-
स्यादिति वाच्यं। अंगकार्ये कृते पुनरंगकार्यस्याप्रवृत्तेः। प्रातिपदिकाद्धात्वर्थ इति बहुलग्रहणाद्वा। लुङि। अतुस्थवत्। दवयति। यवयति। इत्यो
स्वि इहापि पूर्ववद्द्वित्वभावः। लुङि अदुद्रवत्। अयुयवत्। अचीकनत्। नेदयतीति। अंतिकबाढयोर्नेदसाधौ टिलोपः। लुङि। अनिनेदत्। असमाध

अभ्रस्यं। आभ्रस्यत्। पृथक्कृतेरितिनेनविशिष्टस्यस्थानिनः भावात् नादेशाविमौ भवतइत्यर्थः। ज्यापयतीति। हृक्ष्मेचेतिज्यादेशः सचप्रियास्थिरेतिवर्षादेशे
नसहविकल्प्यतइत्याह। वर्षयतीति। लुङि। अजिज्यपत्। अववर्षत्। प्रियं। अपिप्रयत्। स्थिरं। अतिस्थपत्। सस्यादेशावयवत्वात्षत्वंनास्फिरं। अपिस्फरत्।

कंड्वादिभ्योयक्। ३।१।२७॥ एभ्योधातुभ्योनित्यंयक्स्यात्स्वार्थे। धातुभ्यः किं। प्रातिपदिकेभ्योमाभूत्। द्विधाहिकंड्वादयः। धातवः प्राति
पदिकानिच। कण्डूञ् गात्रविघर्षणे। कण्डूयति। कण्डूयते। मन्तुअपराधे। रोषइत्येके। मन्तूयति। चन्द्रस्तुञितमाह। मन्तूयते। वल्गु पूजामा
धुर्ययोः। वल्गूयति। असुउपतापे। असु। असूञ्इत्येके। असूयति। असूयति। असूयते। लिट्लोट्धौर्त्ये पूर्वभावेस्वप्नेच। दीप्ताविस्येके। ले
ट्यति। लेटिता। लोट्यति। लोटिता। लेलादीप्तौ। इरसइरज्इरस्ईर्ष्यायाम्। इरस्यति। इरज्यति। हलिचेतिदीर्घः। ईर्ष्यति। ईर्ष्यते। उषस
प्रभातीभावे। वेट्धौर्त्येस्वप्नेच। मेधाआशुग्रहणे। मेधायति। कुषुभक्षेपे। कुषुभ्यति। मगधपरिवेष्टने। नीचदास्यइत्यन्ये। तन्तसपम्पसदुःखे।
खे। सुखदुःखतत्क्रियायाम्। सुख्यति। दुःख्यति। सुखंदुःखंचानुभवतीत्यर्थः। सपरपूजायाम्। अरर आराकर्मणि। भिषज्चिकित्सा
यां। भिष्णज् उपसेवायाम्। इषुधशरधारणे। चरणवरणगतौ। चुरणचौर्ये। तुरणत्वरायाम्। भुरणधारणपोषणयोः। गद्गद्वाक्स्खल
लने। एलाकेलाखेलाविलासे॥ इलेत्यन्ये। लेखःस्खलनेच। अदन्तोऽयमित्यन्ये। लेख्यति। लिट्अल्पकुत्सनयोः। लिट्यति। लाटजीव
ने। हृणीङ्रोषणेलज्जायांच। महीङ्पूजायाम्। महीयते। पूजांलभतइत्यर्थः। रेखाश्लाघासादनयोः [illegible]
रस अन्तश्च। अगदनीरोगत्वे। उरसबलार्थः। उरस्यति। बलवान्भवतीत्यर्थः। तरणगतौ। पयस [illegible]
मितोवादेशोक्तौ तेसंज्ञापूर्वकविधेरनित्यत्वात्। हुलकात्। माधवेनविकल्पेनउपधावृद्धिरुदाहृतेतिस्वयमापितथैवाह। नरयति वारयतीति। अवी
वत्। वहयतीति। अग्लोपित्वादववहत्। गारयतीति। अजीगरत्। त्रपयतीति। अतित्रपत्। द्राघयतीति। अदद्राघत्। वृंदयती। अववृंदत्। इतिनामधातु

ऊकेरिति वर्तते वेति निवृत्तं। अन्यथा कंडूयतीति स्यात्। तदाह। धातोर्नित्यमिति। केचित्तु नित्यं कौटिल्ये गताविन्यतो नित्यमित्यनुवर्तनं इत्याहुः। तच्चिं-
त्यं। तत्र हि नित्यग्रहणमेवकारार्थे वर्तते न तु कौण्डिन्यन्यायस्यानित्यतां ज्ञापयितुमिति प्राग्व्याख्यातत्वात्। किं चानित्यं कौटिल्ये गताविन्यत्रापि वेत्यनुव-
र्तते। अन्यथा गत्यर्थेभ्यो नित्यं यङ् स्यादिति। स्वार्थे इति। कंड्वादिभ्यो यक् स्यात्। कृञर्थे इति प्राचोक्तमयुक्तमिति भावः। हिंसा इति। यकः प्रकृतित्वेन धातव इ-
ति ज्ञायते। कंडूञ् इति दीर्घपाठेन प्रातिपदिकान्यपीति। यदि तु धातव एव स्युस्तर्हि ह्रस्वान्ते पठितेऽपि यकि परे अकृत्सार्वेति दीर्घेण कंडूयतीत्यादि सि-
द्धेः किं तेन दीर्घपाठेन। द्वैविध्ये तु धातुभ्यो यकि गुणनिषेधेन कित्त्वं सार्थकं। कंडुरित्यादि यग्रहितरूपसिद्धौ दीर्घपाठोऽपि सार्थकः। अत एवोक्तं भा-
ष्ये। धातुप्रकरणाद्धातुः कस्य चासंजनादपि। आह चायमिमं दीर्घं मन्ये धातुर्विभाषित इति। एतेन कंडूं करोति कंडूयति इति प्राचोक्तविग्रहोऽपि परास्तः
कंड्वादयः प्रातिपदिकान्येवेत्यनभ्युपगमात्। न च द्वैविध्याभ्युपगमेऽपि प्रातिपदिकादेव यक् स्यादिति वाच्यं। तथा हि। सति धातोर्लङादौ कंडूयतीत्या-
द्यनिष्टप्रसंगात्। सुखदुःखादिप्रातिपदिकेभ्यो यकि अल्लोपासंभवेन सुख्यतीत्याद्यसिद्धिप्रसंगाच्च। यत्तु केश्चिच्छब्दवैरकलहेति सूत्रात् करण इत्य-
नुवर्तनात् कृञर्थे यगिति प्राचोक्तव्याख्यायां न किंचिद्बाधकमित्युक्तं तच्चिंत्यं। अनुवृत्तौ मानाभावात्। अन्यथा लिंजंतेष्विव प्रकृतिप्रत्ययाभ्यां व्या-
पारद्वयापत्तेरिति दिक्। पूर्वभाव इति। पूर्वत्वमित्यर्थः। लेटितेति। यस्य हल इति यलोपः। सुख्यतीति। चुरादौ तु सुखदुःखतत्क्रियायां सुखयतीत्याद्यु-
दाहृतं। सपर। पर्गतार प्रत्ययादुरोश्च हलेरित्यनेन वा अप्रत्ययेटाप्। सपर्या। अरर आरा प्रतोदः। तत्करणकं कर्म आराकर्म। अररंतो यमिति। लेख्य-
ति। आरंतपक्षे तु लेखायति। महीङ्। प्रेम्णि स्वर्गे महीव न इति। रामायलां। प्रसन्नाविति। प्रसृतिः परिमाणविशेषः। प्रभूतभाव इति। बाहुल्य इत्यर्थः। प्र-
भूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु इत्यमरः। संभूयस्यति। असंभूयसीतान इह संशब्दस्य पृथक्कृतिर्यत्र प्रातिपदिकाद्धातुसंज्ञाप्रयोजकप्रत्ययस्य
विधानं तत्रैव पृथक्कृतिरित्याहुः। आकृतिगण इति। तेन दुवस्संदीपन इत्यादि सिद्धं। प्रयुज्यते च समिधाग्निं दुवस्यत इत्यादि॥ इति कंड्वादयः॥

प्रथमस्येति। अजादेस्तु द्वितीयस्य द्वित्वे प्राप्ते इदमपि विज्ञेयं। अचातु यथेष्टं नामधातुष्विति प्राप्ते कण्ड्वादेस्तृतीयस्येत्युक्तमित्यवतारितं तदयुक्तं। नामधातुत्व-
स्य निराकृतत्वात्। अत एव मूले नामधातून् समाप्य कण्ड्वादयः पृथगेवोक्ताः॥ ईर्शब्दयिशब्दयोरिति। नकारस्य त्वचःपरत्वान्न द्वित्वेन निभावः। प्रियापयिषु-
नीति। णाविष्टवत्भावेन प्रियशब्दस्य प्रियस्थिरेत्यादिना प्रादेशस्ततो द्वित्वादि। सिसाधयिषतीति। इष्टवन्नभावादिहान्तिकबाढयोरिति साधादेशः। कण्ड्वू

कण्डूयतेः सन्। सन्यङोरिति प्रथमस्यैकाचो द्वित्वे प्राप्ते। कण्ड्वादेस्तृतीयस्येति वाच्यम्॥ कण्डूयियिषति। क्यजन्तात्सन्। यथेष्टं नामधातु-
षु। ओर्धानात्क्यादीनामन्यतमस्य द्वित्वमित्यर्थः। अजादेस्त्वादेतरस्य। पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। अशिश्वियि-
षति। अश्वीयियिषति। नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः। इन्द्रीयतेः सन्। ईर्शब्दयिशब्दयोरन्यतरस्य द्वित्वं। इन्दिद्रीयिषति।
इन्द्रीयियिषति। चिचन्द्रीयिषति। चन्दिद्रीयिषति। चन्द्रीयियिषति। प्रियमाख्यातुमाचष्टाणिचेरयितुमिच्छति। पिप्रापयिषति। प्रापिपयि-
षति। प्रापयियिषति। उरुम्। विवारयिषति। वारिरयिषति। वारयियिषति। बाढं। सिसाधयिषतीत्यादि। एवं त्रयम्। षत्वं तु नास्ति। यङ्-
सन्ण्यन्तात्सन्। बोभूयिषयिषति। यङ्लिच सन्नन्ताल्लिच्। बोभूययिषयतीत्यादि। इति प्रत्ययमाला॥ अनुदात्तङित आत्मनेपदम्। आ-
स्ते। शेते। भावकर्मणोः।१।३।१३। बभूवे। अनुबभूवे॥ कर्तरि कर्मव्यतिहारे।१।३।१४। क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात्।
व्यतिलुनीते। अन्यस्य योग्यं लवनं करोतीत्यर्थः। श्नसोरल्लोपः। व्यतिस्ते। व्यतिषाते। व्यतिषते। तासस्त्योरिति सलोपः। व्यतिसे। धि च। व्यति-
ध्वे। ह एति। व्यतिहे। व्यत्यसे। व्यतिषीत। व्यत्यासत। व्यतिराते ३॥ व्यतिभाते ३॥ व्यतिवमे॥

१९ तु नासीनिआ दृशावचबचला दितिभावः। बोभूयिषयि-
षतीति। इह यङ्निमित्तद्वित्वे कृतेपि सन्निमित्तद्वित्वं वारयितुं लिटि धातोरिति सूत्रे अनभ्यासस्येत्येतत् अवश्यं कर्तव्यमेवं च लक्ष्यलक्षणं सकृदेव
प्रवर्तते इति अनभ्यासग्रहणं तत्र मास्त्विति भाष्यस्य प्रत्याख्यानं प्रौढिवादमात्रमिति भावः। इति प्रत्ययमाला॥ भावकर्मणोः। भावे कर्मणि यो लकारः

सि॰कौ॰ तस्यात्मनेपदमित्यर्थः। कर्तरि कर्म। अन्यस्येति। शूद्रस्ययोग्यसस्यादिलवनं ब्राह्मणः करोतीत्यर्थः। परस्परकरणमपि कर्मव्यतिहारः। संप्रहरंते राजानः। प्र
टी॰त॰ त्येकं सूत्रारंभादेव सिद्धे कर्तृग्रहणमुत्तरार्थं। व्यतिस इति। यच्चरत्वाभावान्न षः। व्यतिस इति। उपसर्गप्रादुर्भ्यामिति नेह षत्वं। सकारस्यास्त्यवयव
११९ त्वाभावात्। आदेशप्रत्यययोरिति षत्वं तु सात्पदाद्योरिति निषिद्धं। एकदेशविकृतन्यायेन प्रत्ययमात्रस्य पदत्वात्॥ ॥ न गतिहिंसार्थेभ्यः। अर्थशब्दः प्रत्येकमभिसंब
ध्यते। कर्मव्यतिहारे यदात्मनेपदं तस्य निषेधः। अर्थग्रहणसामर्थ्यात् तत्पर्यायशब्दांतरमनपेक्ष्य गतिहिंसयोर्वर्तनेन तत एवेह गृह्यंते। हरति तु उपसर्गवशात् हिंसा
यां वर्तते इति हरतेरप्रतिषेधः इति वार्तिकमर्थग्रहणलभ्यमेवेत्याहुः। इतरेतरा। नन्वितरेतरादिशब्दैरेव कर्मव्यतिहारस्य द्योतितत्वात् तद्द्योतकमात्मने

न गतिहिंसार्थेभ्यः। १।३।१५॥ व्यतिगच्छन्ति। व्यतिघ्नन्ति। प्रतिषेधे हसादीनामुपसंख्यानम्। हसादयो हसप्रकाराः शब्दक्रियाः। व्यतिह
सन्ति। व्यतिजल्पन्ति। हरतेरप्रतिषेधः। संप्रहरन्ते राजानः। इतरेतराऽन्योऽन्योपपदाच्च। १।३।१६॥ परस्परोपपदाच्चेति वक्तव्यम्॥ इतरेतरस्य
अन्योन्यस्य परस्परस्य वा व्यतिलुनन्ति। नेर्विशः। १।३।१७॥ निविशते॥ परिव्यवेभ्यः क्रियः। १।३।१८॥ अकर्त्रभिप्रायार्थमिदम्। परिक्रीणी
ते। विक्रीणीते। अवक्रीणीते। विपराभ्यां जेः। १।३।१९॥ विजयते। पराजयते।

ऽपदं न प्राप्नोतीति किमर्थोऽयं निषेधः

अत्राहुः। लौकिके व्यवहारे लाघवानादरादात्मनेपदं प्रसज्येतेति निषेधोऽयमारभ्यते। अतएव व्यतिलुनीत इत्यादौ कर्मव्यतिहारद्योतनाय व्यतीत्युपसर्गा
वात्मनेपदं च समुच्चित्य प्रयुज्यत इति। नेर्विशः। नेः किं। प्रविशति। अर्थवद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणं। तेनेह न। मधुनि
विशंति भ्रमराः। इत्युक्तौ मैथिली भर्तुरंके निविशतीभयादित्यत्र तु अंके निविशंतीमिति पाठः। न च पदसंस्कारपक्षे त्वंके निविशंतीति पाठेऽप्यदोष इति वाच्यं। त्वंक
तिभवान् करोषीत्यादिप्रयोगस्यापि त्वदुक्तरीत्या साधुत्वापत्तेः। बालिप्सायामित्यादेर्वैयर्थ्यापत्तेश्चास्यादेतत्। नवावुदश्यामतनुर्न्यविक्षतेत्यत्रात्मनेपदं
निस्यात् अटा व्यवधानात्। न च स्वागमव्यवधायकमिति वाच्यं। अंगभक्तस्याटो विकरणविशिष्टस्यावयवत्वेऽपि धातोरनवयवत्वादिति चेत्। अत्राहुः। लव

स्यायामङागमइतिभाष्यमतेनकश्चिद्दोषः। मतान्तरेतुउपसर्गनियमेअड्व्यवायेउपसंख्यानमितिवार्तिकमस्तीति॥ ॥ आङोदो। अकर्त्रभिप्रायार्थ
मिदंतेनव्याददतेविहगपतिर्मुखंस्वकीयमितिप्रयोगःआस्यविहरणेपिसिद्धःक्रियाफलस्यकर्तृगामित्वविवक्षणात्। ज्ञासेर्जिज्ञासायामिति। ज्ञासविवे
आङोदोऽनास्यविहरणे। १।३।२०॥ आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थेवर्तमानादात्मनेपदंस्यात्। विद्यामादत्ते। अनास्येतिकिं
मामुखंव्याददाति। आस्यग्रहणमविवक्षितम्। विपादिकांव्याददाति। पादस्फोटोविपादिका। नदीकूलंव्याददाति। पराङ्कर्मकान्नि
षेधः। व्याददतेपिपीलिकाःपतङ्गस्यमुखम्। क्रीडोऽनुसम्परिभ्यश्च। १।३।२१॥ चादाङः। अनुक्रीडते। संक्रीडते। परिक्रीडते। आक्रीडते।
अनोःकर्मप्रवचनीयान्न। उपसर्गेणसमासोहचर्यात्। माणवकमनुक्रीडति। तेनसहेत्यर्थः। तृतीयार्थइत्यनोःकर्मप्रवचनीयत्वं॥
समोऽकूजने। संक्रीडन्ते। कूजनेतु। संक्रीडतिचक्रम्। आगमेःक्षमायाम्। ण्यन्तस्येदंग्रहणम्। आगमयस्वतावत्। मात्वरिष्ठाइत्यर्थः। शिक्षे
र्जिज्ञासायाम्। धनुषिशिक्षते। धनुर्विषयेज्ञानेशक्तोभवितुमिच्छतीत्यर्थः। आशिषिनाथः। आशिष्येवेतिनियमार्थंवार्तिकमित्युक्तं। सर्पि
षोनाथते। सर्पिर्मेस्यादित्याशास्तइत्यर्थः। कथन्नाथसेकिमुपतिन्नभूभृतामितिनाधसइतिपाठ्यम्। हरतेर्गतताच्छील्ये। गतम्प्रकारः
पैतृकमश्वाअनुहरन्ते। मातृकङ्गावः। पितुर्मातुश्चागतम्प्रकारंसततम्परिशीलयन्तीत्यर्थः। ताच्छील्येकिं। मातुरनुहरति। किरतेर्हर्षजी
विकाकुलायकरणेष्वितिवाच्यम्॥ हर्षादयोविषयाः। तत्रहर्षोविक्षेपस्यकारणम्। इतरेफले। अपाच्चतुष्पाच्छकुनिष्वालेखने। ६।१।१४२
अपात्किरतेःसुट्स्यात्। सुडपिहर्षादिष्वेववक्तव्यः। अपस्किरतेवृषोहृष्टः। कुक्कुटोभक्षार्थी। श्वाआश्रयार्थीच। हर्षादिष्वितिकिं। अपकिरति
कुसुमम्। इहतङपिसुटैन। हर्षादिमात्रविवक्षायांपद्यपितङ्प्राप्नोत्यपिसुड्भावेनेष्यतेइत्याहुः। गजोपकिरति। आङिनुप्रच्छ्योः। आनुते
आपृच्छते। शपउपालम्भे॥ आक्रोशार्थात्स्वरितेतःकर्तृगेपिफलेशपथरूपेर्थेआत्मनेपदंवक्तव्यमित्यर्थः॥ पादानइत्यस्यनेह — ग्रहण

 अनुदात्तेत्त्वादेवात्मनेपदसिद्धेः किं तु शाकैः संलग्नं तस्येति ध्वनयति धनुर्विषय इत्यादिना। नियमार्थमिति। नाथतेरनुदात्तेत्त्वं तु अनुदात्तेतश्च हलादेरिति युचे नाथन
 इत्यादौ प्रसिद्ध्यर्थमिति भावः। मातुरनुहरतीति। सादृश्यमात्रमत्र विवक्षितं न तु प्रकारता। ऋच्छेति। गजोऽवकिरतीति। अत्र हर्षेऽसत्यपि आलेखनाभावान्न सुटोऽ


कृष्णाय श्लाघते। समवप्रविभ्यः स्थः। १।३।२२। संतिष्ठते॥ स्थाघ्वोरिच्च। समस्थित। समस्थिषाताम्। समस्थिषत। अवतिष्ठते। प्रतिष्ठते।
वितिष्ठते। आङः प्रतिज्ञायामुपसंख्यानम्॥ शब्दं नित्यमातिष्ठते। नित्यत्वेन प्रतिजानीत इत्यर्थः। प्रकाशनस्थेयाख्ययोश्च। १।३।२३। गोपी कृष्णा
य तिष्ठते। आशयं प्रकाशयतीत्यर्थः। संशय्य कर्णादिषु तिष्ठते यः। कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः। उदोऽनूर्ध्वकर्मणि। १।३।२४। मुक्ता
वुत्तिष्ठते। अनूर्ध्वेति किम्। पीठादुत्तिष्ठति। ईहायामेव। नेह। ग्रामाच्छतमुत्तिष्ठति। उपान्मन्त्रकरणे। १।३।२५। आग्नेय्याग्नीध्रमुपतिष्ठते। म
न्त्रकरणे किम्। भर्तारमुपतिष्ठति यौवनेन। उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्॥ आदित्यमुपतिष्ठते। कथं तर्हि स्तु
त्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वतीति। देवतात्वारोपात्। नृपस्य देवतां ज्ञात्वा ह्रा। गङ्गा यमुनामुपतिष्ठते। उपश्लिष्यतीत्यर्थः। रथिका
नुपतिष्ठते। मित्रीकरोतीत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठते। प्राप्नोतीत्यर्थः। वा लिप्सायामिति वक्तव्यम्। भिक्षुकः प्रभुमुपतिष्ठते। उपतिष्ठति वा।
लिप्सया उपगच्छतीत्यर्थः। अकर्मकाच्च। १।३।२६। उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात्। भोजनकाले उपतिष्ठते। सन्निहितो भव
तीत्यर्थः। उद्विभ्यां तपः। १।३।२७। अकर्मकादित्येव। उत्तपते। वितपते। दीप्यत इत्यर्थः। स्वाङ्गकर्मकाच्चेति वक्तव्यम्। स्वमङ्गं स्वाङ्गं न तु
अद्रवमिति परिभाषितम्। उत्तपते। वितपते पाणिम्। नेह। सुवर्णमुत्तपति। सन्तापयति। विलापयति वेत्यर्थः। चैत्रो मैत्रस्य पाणिमुत्तपति॥

प्तिः॥ कृष्णाय श्लाघते इति। श्लाघह्नुङ्शपामिति संप्रदानसंज्ञा। नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि इत्यत्र तु सख्यः शपथं श्राव
यामीत्यर्थो विवक्षितो न तु शपथ इति न तङ् इत्याहुः। प्रकाशना। प्रकाशनं ज्ञापनं स्थेयो विवादपदनिर्णेता। तिष्ठतेऽस्मिन् विवादपदनिर्णयार्थमिति

वोहलकादधिकरणेऽनुचोयत्। स्थेयो विवादस्था नत्वा निर्णेतार पुरा हि तज्ज्ञातमाहुः। कलाद्राक्षति। अधिकरणे सप्तमी। तेषां स्थेयत्वेनाश्रयत इत्यात्म
नेपदेन द्योत्यते तमेवार्थमाह। कर्णाटानिति। प्रकाशनेत्यादिकं। चैत्रेति ष्ठति। उदोनूर्ध्वकर्मणि। स्थ इत्यनुवर्तते। ऊर्ध्वदेशसंयोगानुकूलयत्कर्मत
दूर्ध्वकर्म। उदोनूर्ध्व इत्युक्तेप्यनूर्ध्वक्रियायां वर्तमानादुत्पूर्वात्तिष्ठतेर्लस्यात्मनेपदमित्यर्थो लभ्यत एव। तथापि परिस्पन्दार्थत्वलाभाय कर्मपदमित्या
भिप्रेत्याह। ईहायामेवेति। इच्छापूर्विका चेष्टा ईहा। सा च ग्रामाच्छतमित्यत्र नास्ति। उपान्मन्त्रकरणे। मन्त्रः करणं यत्र मन्त्रकरणं स्तुतिः तत्र वर्तमाना
दुपपूर्वात्तिष्ठतेरात्मनेपदं स्यान्नाग्नेय्येत्यादि। अग्निदेवतीकयाग्नेय्या ऋचा आग्नीध्रमग्निविशेषं स्तौतीत्यर्थः। अत्र केचित्। श्लोकैः राजानं स्तौतीत्यर्थे श्लो
करुपतिष्ठत इति प्रयोगो नेष्यते। ऐन्द्र्या गार्हपत्यमुपतिष्ठते। आग्नेय्या आग्नीध्रमिति वैदिकविषय एव सर्वैरुदाहृतत्वात्। तथा च तिष्ठतेरर्थे यदा मन्त्रः करणं
तदा तङिति व्याख्येयं। उपतिष्ठत इत्यस्य तु समीपावस्थानमेवार्थः। न च तत्र षष्ठ्यादिवन्मन्त्रस्य करणत्वं न संभवतीति वाच्यं। उपस्थानस्वरूपे तस्याप
योगाभावेपि तत्कार्ये स्तुतावुपयोगादुपस्थानकरणत्वं मन्त्रस्य न विहन्यते। आग्नीध्रमिति द्वितीया तु करणत्वान्यथानुपपत्तिलभ्येन स्तोतुमित्यने
नान्वेति। एवं चाग्नेय्या आग्नीध्रं स्तोतुं तत्समीपे तिष्ठतीत्येव वाक्यार्थः। आदित्यमुपतिष्ठत इत्यत्र तु तत्समीपावस्थानस्यासंभवादादित्यं स्तोतुं तदभि
मुखितया तिष्ठतीत्यर्थ इत्याहुः। गंगा यमुनामिति। एतेन यमुनैव प्राचीनां गंगां तु पश्चाद्यमुनया सह मीलितेति प्रतीयते। स्वांगकर्मकाच्चेति। चकारे
ण कर्मकस्य संग्रहः। नत्वद्रवमिति। अन्यथा चैत्रो मैत्रस्येत्यादि वक्ष्यमाणं न संगच्छेतेति भावः॥ ॥ ॥

ॐ
सि·कौ· आङोयमहनः। प्राप्येति। तथा च। हंतेरकर्मकतया आजघ्ने आहध्वमित्यात्मनेपदंयुक्तमित्यर्थः। भेत्तुमित्यादीति। एवं चल्यब्लोपपंचम्याः प्रसक्तिरेवनास्ती
टी·त· तिभावः। समीपमेत्येति। विषमविलोचनस्य समीपमेत्य वक्षः आजघ्ना स्वकीयमेव वक्षो मल्ल इव सतोषमाति शय्याद्रास्फालनं चक्रे इत्यर्थात्स्वांगकर्मक।
१२६ त्वमस्येति भावः। आत्मनेपदेष्विति। तदेतदेव सुवचं। समोगमृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्य इति वृत्तिस्थं पाठमुपेक्ष्य भाष्यस्थं पाठमनुसरन्नाह समोगमृ
च्छिभ्यामिति। संगच्छत इति। संगतं भवतीत्यर्थः। वागमः। असंयोगाल्लिट्किदित्यतः किदनुवर्तते इत्यको हलिति तोयत्यग्रहणं लिङ् सिचाविति तोल्लि

आङो यमहनः। १।३।२८॥ आयच्छते। आहते। अकर्मकात्स्वाङ्गकर्मकाच्चेत्येव। नेह। परस्य शिर आहन्ति। कथं तर्हि आजघ्ने विष
मविलोचनस्य वक्ष इति भारविः। आहध्वं मा रघूत्तममिति भट्टिश्च। प्रमादएवायमिति भागवृत्तिः। प्राप्येत्यध्याहारो वा। स्वेङ्गोपेयस्त्वमीति
तुल्यवत्तत्त्विनैव तदर्थावगतिर्यत्र तत्रैवहि ल्यपयमा भेत्तुमित्यादिवत्तु मुन्नतमध्याहारो वास्तु। समीपमेत्येति वा। आत्मनेपदेष्वन्यतरस्याम्।१।२।
।१४। हनो वधादेशो वा लुङि आत्मनेपदेषु परेषु। आवधिष्ट। आवधिषाताम्। आहत। आहसाताम्। आहसत। यमो गन्धने। १।२।१५॥ सिच् किन्स्यात्। गन्धनं सूचनं परदोषाविष्करणं। उदायत। गन्धने किम्। उदायंस्त
पादम्। आकृष्टवानित्यर्थः। समो गम्यृच्छिभ्याम्। १।३।२९। अकर्मकाभ्यामित्येव। संगच्छते। वागनः। ६।४।३७॥ गमः परोह्लस्वदीलिङ्सिचौ
वा कितौस्तः। संगसीष्ट। संगंसीष्ट। समगत। समगंस्त। समृच्छिष्यते। अकर्मकाभ्यां किं। ग्रामं संगच्छति। विदिप्रच्छिस्वरतीनामुपसं
ख्यानम्॥ वेत्तेरेव ग्रहणं। संवित्ते। संविद्राते॥ ॥ इसिचाविति चानुवर्तते। कित्वपक्षे अनुदात्तोपदेशेति मलोपः। संमृच्छिष्यतइति
सं
दृशः प्रयोगस्तु तौदादिकस्यर्च्छेरत्र ग्रहणं न तु ऋच्छ इत्यस्येति ध्वननार्थं। ग्रामं संगच्छतीति। तच्चैकं समगच्छत इत्यत्र तु एकं जातमित्यर्थात् स्वांगकर्मक
त्वमेवेति तङ्। एकमेवैक्यं। स्वार्थे ष्यङ्। विदिप्रच्छि। परस्मैपदिसाहचर्यादाह। वेत्तेरेवेति। विंदतिर्हि स्वरितेत् सत्तार्विचारणार्थयोस्तु अनुदात्तेत् दत्त

सिद्धं। नच निरनुबंधपरिभाषयैव वेत्तेर्ग्रहणं स्यादिति वाच्यं। लुग्विकरणालुग्विकरणयोरिति परिभाषया तु विंदतेर्ग्रहणप्रसंगात्॥ ॰॰। वेत्तेर्वि[illegible]
द्भिस्तनो रुडनुवर्तते अदभ्यस्तादित्यतोऽदित्यनुवर्त्य षष्ठ्यंतत्वेन विपरिणम्यत इत्याह। अतो रुडागम इति। अङ्गि धौत्विति। समर्त्तिशास्यर्त्तीति लुग्विकरणे
न ग्रासि। नासहचर्यादिति भावः। मासमृतेति उश्चेति कित्वं। माङ्योगादडभावः। समार्तेति। ननु सिज्लोपस्यासिद्धत्वाद् इश्चेति वृद्धौ कृतायां ह्रस्वादि

वेत्तेर्विभाषा ।७।१।७। वेत्तेः परस्य झादेशस्यातो रुडागमो वा स्यात्। संविद्रते। संविदते। समृच्छते। संस्वरते। अर्त्तिश्रुदृशिभ्यश्चेति वक्त-
व्यम्। अर्त्तीति निर्देशो ग्रहणम्। अङ्गि धौत्विमर्त्तेरेवेत्युक्तम्। मासमृत। मासमृषाताम्। मासमृषतेति। समार्त। समार्षाताम्। समार्षतेति च
स्यादेः। इयर्त्तेस्तु। समरत। मा समरेताम्। मा समरन्त। समारत। समारेताम्। समारन्तेति च। संशृणुते। संपश्यते। अकर्मकादित्येवा अ
त एव रसासीति पुराणे संशृ[illegible]हर इति मुरारिप्रयोगः प्रामादिक इत्याहुः। अध्याहारो वा इति कथयन्त इति। अथास्मिन्नकर्मकाधिकारे
हनिगम्यादीनां कथमकर्मकत्वमिति चेत्। शृणु। धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥१॥
वहति भारम्। नदी वहति स्यन्दतेरर्थः। जीवति। नृत्यति। प्रसिद्धेर्यथा। मेघो वर्षति। कर्मणोऽविवक्षातो यथा। हितान्नयः संशृणुते स किं
प्रभुः। उपसर्गादस्यत्यूह्योर्वेति वाच्यम्। अकर्मकादिति निवृत्तम्। वन्ध्यं निरस्यति। निरस्यते। समूहति। समूहते। उपसर्गाद्ध्रस्व ऊहते ।७।
४।२३॥ यादौ किति। ब्रह्म समुह्यात्। अग्निं समुह्य [illegible]। निसमुपविभ्यो ह्वः ।१।३।३०। निह्वयते। स्पर्द्धायामाङः ।१।३।३१। कृष्णश्चाणूरमाह्वयते
स्पर्द्धायामिति किम्। पुत्रमाह्वयति। गन्धनावक्षेपणसेवनसाहसिकप्रतियत्नप्रकथनोपयोगेषु कृञः ॥१।३।३२॥ ॥

तिसिज्लोपात्प्रागभ्यासमार्त्तेति रूपं स्यात्। नच ह्रस्वादङ्गादिति विहितस्येति व्याख्यानाददृष्टसिद्धिरिति वाच्यं विहितविशेषणमानाभावात्। उदायत। आहतेत्याद्य
सिद्ध्यापत्तेश्च। अत्र केचित्। सिज्लोपएकादेशे सिद्धो वाच्य इत्यनेन पूर्वं सिज्लोपे पश्चाद्वृद्धिर्भवति। एकादेश इति विषयसप्तम्याश्रयणात्। नचैवम्।

उ·
सि·कौ· ध्येष्टेत्विति सिद्धे तत्राप्युक्तरीत्या पूर्वं सिज्लोपे वृद्धौ सत्यां अध्यैतेति रूपप्रसंगादिति वाच्यं वार्णादांगं बलीय इति पूर्वमेव गुणे कृते सिज्लोपेन भवितव्यं स्यात् श्चेति
टी·त· वृद्धौ कृतायामध्यैष्टेति रूपस्य निर्बाधत्वात्। समाधत्ते सत्यं तत्र तु उश्चेति किंत्वे न गुणप्रवृत्त्या पूर्वमेव सिज्लोपे पश्चादाट्श्चेति वृद्धिरिति वैषम्यमित्याहुः। अन्ये तु सिज्
१२२ लोपानंतरं यत्र एकादेशः प्रसज्यते तत्रैव सिजलोपः सिद्धः यथा अग्रहीदिति। न चात्र तादृशो विषयोऽस्ति किं च। वार्णादांगं बलीय इति पूर्वमेव गुणे कृते द्व
न्यादि यदुक्तं तदसत्। समानाश्रये हि वार्णादांगं बलीयः। अन्यथा। द्यौरिवाचरति द्यवति इत्यत्र यण् न स्यात् किंतु पुगंतेति गुण एव स्यात्। तथा च स
माधेयैव वक्तव्ये समाधत्तेति लेखकप्रमाद इत्याहुः॥ ॥ गंधनं हिंसेति। गंध अर्दने। अहिंसायामित्यनयोश्चुरादौ पाठादिति भावः। सहसा वर्तने
गन्धनं हिंसा। उत्कुरुते। सूचयतीत्यर्थः। सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव। अवक्षेपणं भर्त्सनं। श्येनो वर्तिकामुदाकुरुते। भर्त्स
यत इत्यर्थः। हरिमुपकुरुते। सेवते। परदारान्प्रकुरुते। तेषु सहसा प्रवर्तते। इत्यर्थः। एधोदकस्योपस्कुरुते। गुणमाधत्ते। गाथाः प्रकुरुते
प्रकथयतीत्यर्थः। शतं प्रकुरुते। धर्मार्थं विनियुंक्ते। एधु किं। कटं करोति। अधेः प्रसहने।१।३।३३। प्रसहनं क्षमाऽभिभवश्च। षह मर्षणे
भिभवे चेति पाठात्। शत्रुमधिकुरुते। क्षमत इत्यर्थः। अभिभवतीति वा॥ वेः शब्दकर्मणः।१।३।३४॥ स्वरान्विकुरुते। उच्चारयतीत्यर्थः
साहसिकः। ओजः सहोंऽभसेति ठक्। तस्य कर्म साहसिक्यं। ब्राह्मणादित्वात् ष्यञ्। परदारानित्यादिना न वशीकरो "शब्दकर्मणः किं। चित्तं विकरोति काम
नीत्यर्थः। साहसिक्यं न धात्वर्थः। तथा हि सति परदारानिति कर्मणो नान्वयः स्यात् किंतु प्रयोगोपाधिरित्यभिप्रेत्याह। तेषु सहसेति। एधोदकस्येति। एधशब्दो
ऽकारांतः। अवोदैधौद्मेति निपातितः। एधाश्च उदकं च तेषां समाहारः। यद्वा। एधः शब्दः सकारांतः। तथा च एधांसि च उदकं चेति विग्रहः। उदकशब्दस्योपुदकवा...

वित्यर्थोऽत्र न भिद्यते। उक्तं च हलायुधे प्रोक्तं प्राणैर्भुवनममृतं जीवनीयं दकं च इति। संमानना। उपनयनपूर्वकेणेति। उपनयनं वटुसंस्कारः। तस्य परमा
त्वात्परस्मैपदे प्राप्ते अनेनात्मनेपदं विधीयते। नत्वुपनयनमात्रेण आचार्यत्वं भवति किंतु तत्पूर्वकाध्यापनेनेत्याचार्यकरणस्य प्रयोगो दर्शितं पर।

अकर्मकाच्च।१।३।३५॥ वेः कृञ इत्येव। छात्रा विकुर्वते। विकारं लभन्ते। सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु
नियः।१।३।३६॥ अत्रोत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः। इतरे प्रयोगोपाधयः। तथा हि। शास्त्रे नयते। शास्त्रस्थं सिद्धान्तं शि
ष्येभ्यः प्रापयतीत्यर्थः। तेन च शिष्यसम्माननम्फलितं। उत्सञ्जने। दण्डमुन्नयते। उत्क्षिपतीत्यर्थः। माणवकमुपनयते। विधिनात्म
समीपम्प्रापयतीत्यर्थः। उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते। ज्ञाने तत्त्वं नयते। निश्चिनोतीत्यर्थः। कर्मकरा
नुपनयते। भृतिदानेन स्वसमीपम्प्रापयतीत्यर्थः। विगणनमृणादेर्निर्यातनम्। करं विनयते। राज्ञे देयं भागम्परिशोधयतीत्यर्थः। श
तं विनयते। धर्मार्थं विनियुङ्क्त इत्यर्थः॥ कर्तृस्थे चाऽशरीरे कर्मणि।१।३।३७॥ नियः कर्तृस्थे कर्मणि यदात्मनेपदम्प्राप्तं तच्छरीराव
यवभिन्ने एव स्यात्। सूत्रे शरीरशब्देन तदवयवो लक्ष्यते। क्रोधं विनयते। अपगमयति। तत्फलस्य चित्तप्रसादस्य कर्तृगत्वात्स्वरिते
ञित इत्येव सिद्धे नियमार्थमिदम्। तेनेह न। गडुं विनयति। कथं तर्हि विगणय्य नयन्ति पौरुषमिति। कर्तृगामित्वाविवक्षायाम्भविष्यति

परयाद्वेषं। उपनीय ददद्वेदमाचार्यः स उदाहृत इति स्मृतिः। कर्तृस्थे कर्मणीति। आत्मगामिनि क्रियाफले इत्यर्थः। वृत्तिसर्गतायनेषु संतानपालनयोः। ताय
नं स्फीततां तदाह। स्फीतानीति। प्रवृद्धानीत्यर्थः। वेः पादस्य यद्यपि क्रमेः पादविक्षेप एवार्थस्तथापि धातूनामनेकार्थत्वादेवमुक्तं। प्रोपाभ्यां। प्रोपाभ्यां।

मारंभेऽप्येवमेव । उपक्रामतीति । वृत्त्याद्यर्थेष्वेव उपपराभ्यामिति प्रवृत्तेर्नात्रात्मनेपदं शंक्यमिति भावः । वृत्त्यादौ त्विति । न च वृत्त्यादिसूत्रं सोपसर्गे चरित

वृत्तिसर्गतायनेषु क्रमः । १।३।३८ ॥ वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिर्न प्रतिहन्यत इत्यर्थः । सर्ग उत्साहः । अध्ययनाय क्रमते ॥
उत्सहते । क्रमन्तेऽस्मिन् शास्त्राणि । स्फीतानि भवन्तीत्यर्थः । उपपराभ्याम् । १।३।३९ ॥ वृत्त्यादिष्वाभ्यामेव क्रमेर्नतूपसर्गान्तरपूर्वात् ।
उपक्रमते । पराक्रमते । नेह । संक्रामति । आङ उद्गमने । १।३।४० ॥ आक्रमते सूर्यः । उदयत इत्यर्थः । ज्योतिरुद्गमन इति वाच्यम् ॥
नेह । आक्रामति धूमो हर्म्यतलात् । वेः पादविहरणे । १।३।४१ ॥ साधु विक्रमते वाजी । पादविहरणे किं । विक्रामति सन्धिः । द्विधा भव
ति स्फुटतीत्यर्थः । प्रोपाभ्यां समर्थाभ्याम् ॥ १।३।४२ ॥ समर्थौ तुल्यार्थौ । शकंध्वादित्वात्पररूपम् । प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रम
ते । उपक्रमते । समर्थाभ्यां किम् । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामति । आगच्छतीत्यर्थः । अनुपसर्गाद्वा । १।३।४३ ॥ क्रामति क्रमते । परस्मैपदेष्विति दीर्घः ।
क्रमते । अप्राप्तविभाषेयम् । वृत्त्यादौ तु नित्यमेव ॥ अपह्नवे ज्ञः ॥ १।३।४४ ॥ शतमपजानीते ॥ अपलपतीत्यर्थः ॥

र्थमित्यनुपसर्गात्क्रमेर्वृत्त्याद्यर्थेऽपि विभाषैवास्त्विति वाच्यं । उपपराभ्यामिति नियमस्योक्तत्वात् ॥ ॥ ॥ ॥ ७ ॥ ॥

अकर्मकाच्च। अनुपसर्गाज्ज्ञ इत्यनेनैव सिद्धे सर्पिषोनुजानीत इत्यादिः सोपसर्गार्थमिदं सूत्रं। भासनोपसंभाषा। एवमुक्ते। यत्किंचिदु इति। अनुवदते कठ इति। अनुः सादृश्ये। तेन कलापस्येति तुल्यार्थयोगे शेषत्वलक्षणा षष्ठी॥ विभाषा विप्रलापे। अप्राप्तविभाषा। स्वकरणे स्वीकार इति। स्वकरणमि

अकर्मकाच्च। १।३।४५॥ सर्पिषो जानीते। सर्पिषा उपायेन प्रवर्त्तत इत्यर्थः॥ सम्प्रतिभ्यामनाध्याने। १।३।४६॥ शतं सञ्जानीते। अवेक्षत इत्यर्थः। शतं प्रतिजानीते। अङ्गीकरोतीत्यर्थः। अनाध्यान इति योगो विभज्यते। तत्सामर्थ्यादकर्मकाच्चेति प्राप्तिरपि वार्य्यते। मातरं मातुर्वा सञ्जानाति। कर्मणः शेषत्वविवक्षायां षष्ठी। भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः। १।३।४७॥ उपसम्भाषोपमन्त्रणे धातोर्वाच्ये इतरे प्रयोगोपाधयः। शास्त्रे वदते। भासमानो ब्रवीतीत्यर्थः। उपसम्भाषोपसान्त्वनम्। भृत्यानुपवदते। सान्त्वयतीत्यर्थः। ज्ञाने। शास्त्रे वदते। यत्ने। क्षेत्रे वदते। विमतौ। क्षेत्रे विवदन्ते। उपमन्त्रणमुपच्छन्दनम्। उपवदते। प्रार्थयत इत्यर्थः॥ व्यक्तवाचां समुच्चारणे। १।३।४८॥ मनुष्यादीनां सम्भूयोच्चारणे वदेरात्मनेपदं स्यात्। सम्प्रवदन्ते ब्राह्मणाः। नेह। सम्प्रवदन्ति खगाः॥ अनोरकर्मकात्। १।३।४९॥ व्यक्तवाग्विषयादनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात्। अनुवदते कठः कलापस्य। अकर्मकात् किं। उक्तमनुवदति। व्यक्तवाचां किम्। अनुवदति वीणा॥ विभाषा विप्रलापे। १।३।५०॥ विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे उक्तं वा स्यात्। विप्रवदन्ते विप्रवदन्ति वा वैद्याः। अवाद्ग्रः। १।३।५१॥ अवगिरते। गृणातिस्त्ववपूर्वो न प्रयुज्यत एवेति भाष्यम्॥ समः प्रतिज्ञाने। १।३।५२॥ शब्दं नित्यं सङ्गिरते। प्रतिजानीत इत्यर्थः। प्रतिज्ञाने किम्। सङ्गिरति ग्रासं। उदश्चरः सकर्मकात्° ॥

त्यत्र च्विर्न भवति समर्थानां प्रथमाद्वेति विकल्पात्। स्वकरणशब्देन भार्यास्वीकारो गृह्यत इति वृत्तिकृत्। भट्टिस्तु स्वीकारमात्रेऽपि प्रायुङ्क्त। उपायंस्त महास्त्राणीति॥ गधनांगे इति। पूर्वविप्रतिषेधश्च न वेति विभाषासूत्रे भाष्ये उक्तः। नित्यं किंत्वमिति। यमो गंधन इति पूर्वसूत्रेणेत्यर्थः। ज्ञाश्रुस्मृ° ॥

अपन्हुवे ज्ञ इत्यादिना ज्ञाधातोरिति श्रुदृशिभ्यश्चेति श्रुदृशिभ्यां चात्मनेपदे कृते तस्मिन् विषये पूर्ववत्सन इत्यनेन सिद्धेऽपि विषयांतरे सन्नंतादनेन विधिः

।१।३।५३॥ धर्म्ममुच्चरते॥ उल्लंघ्य गच्छतीत्यर्थः। सकर्म्मकात्किम्। बाष्पमुच्चरति। उपरिष्टाद्गच्छतीत्यर्थः। समस्तृतीयायुक्तात्॥
।१।३।५४॥ रथेन सञ्चरते। दाणश्च सा चेच्चतुर्थ्यर्थे।१।३।५५॥ सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्। तृतीया चेच्चतुर्थ्यर्थे
स्यात्संयच्छते। पूर्वसूत्रे सम इति षष्ठी। तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्त्तते। रथेन समुदाचरते। दास्या सम्प्रयच्छते। उपाद्यमः स्वक
रणे।१।३।५६॥ स्वकरणं स्वीकारः। भार्य्यामुपयच्छते। विभाषोपयमने।१।२।१६॥ यमः सिच् किद्वा स्याद्विवाहे। रामः सीतामुपायत। उपा
यंस्त वा। उद्वोढेत्यर्थः। गन्धनादौ उपयमे तु पूर्वविप्रतिषेधान्नित्यङ्कित्त्वम्। ज्ञाश्रुस्मृदृशां सनः।१।३।५७॥ सन्नन्तानामेषां प्राग्वत्॥
धर्म्मञ्जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते॥ नानोर्ज्ञः।१।३।५८॥ पुत्रमनुजिज्ञासति। पूर्वसूत्रस्यैवायन्निषेधः। अनन्तरस्येति
न्यायात्। तेनेह न। सर्प्पिषोनुजिज्ञासते। सर्प्पिषा प्रवर्त्तितुमिच्छतीत्यर्थः। पूर्ववत्सन इति तङ्। अकर्म्मकाच्चेति केवलाद्विधानात्।
प्रत्याङ्भ्यां श्रुवः।१।३।५९॥ आभ्यां सनन्ताच्छ्रुव उक्तं न स्यात्। प्रतिशुश्रूषति। आशुश्रूषति। कर्म्मप्रवचनीयात्स्यादेव। देवदत्तं प्रति
शुश्रूषते। शदेः शितः।१।३।६०॥ म्रियतेर्लुङ्लिङोश्च।१।३।६१॥ व्याख्यातम्। पूर्ववत्सनः।१।३।६२॥ सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्या
त्। एदिधिषते। शिशयिषते। निविविक्षते। पूर्ववत्किम्। बुभूषति। शदेरित्यादिसूत्रद्वये सनो नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयम्। तेनेह न। शि
शत्सति। मुमूर्षति। आम्प्रत्ययवत्कृञोनुप्रयोगस्य।१।३।६३॥ एधाञ्चक्रे। प्रोपाभ्यां युजेरयज्ञपात्रेषु।१।३।६४॥ प्रयुङ्क्ते। उपयुङ्क्ते। स्वराद्यन्तोपसर्गादि
ति वक्तव्यम्। उद्युङ्क्ते। नियुङ्क्ते। अयज्ञपात्रेषु किं। द्वन्द्वं न्यग्विपात्राणि प्रयुनक्ति॥ ॥

(१) यत इति ज्ञेयं। निविविक्षत इति। नेर्विश इत्यात्मनेपदविधानात् सन्नंतादपि आत्मनेपदं। सनो नेत्यनुवर्त्येति। नानोर्ज्ञः पूर्ववत्सन इति सूत्राभ्यामिति शेषः॥ ॥

समः क्ष्णुवः। समो गमृच्छि क्ष्णुभ्य इति पठनीये पृथगस्य पाठस्सकर्मकादपि विधानार्थ इति ध्वनयन्नुदाहरति संक्ष्णुते शस्त्रमिति। भुजोऽनवने। अवनं पालनं। अ
दने इति वक्तव्ये अनवने इति पर्युदासस्य प्रयोजनद्वयं। संयोगवद्धिप्रयोगस्यापि विशेषावधारणहेतुत्वात् द्वैधादिकस्यैव भुजेर्ग्रहणमित्येकं। अदनार्थान्तरे
ष्वुपभोगादौ आत्मनेपदं भवतीति द्वितीयं तदाह। बुभुजे पृथिवीपाल इति। इहेति। उपभोग इत्युपलक्षणमात्मसात्करणस्यापि। पृथिवीं बुभुजे। स्वाधीनां
चकारेत्यर्थः। भुजपालनाभ्यवहारयोरित्यस्य रुधादेरेव ग्रहणमिति भुजो कौटिल्य इत्यस्मात्तुदादेः परस्मैपदमेव। पाणिं विभुजति। मूलानि विभुजति। णेरणौय
त्कर्म। आत्मनेपदमित्यधिक्रियते। इहावान्तरवाक्यानि चत्वारि प्रतीयन्ते। णेरात्मनेपदमित्येकं वाक्यं। तच्चस्यादित्यंतेन व्याख्यातं। अणौ यत्कर्म णौ चेदि

समः क्ष्णुवः। १।३।६५॥ संक्ष्णुते शस्त्रं। भुजोऽनवने। १।३।६६॥ ओदनं भुङ्क्ते। अभ्यवहरतीत्यर्थः। बुभुजे पृथिवीपालः पृथिवीमेव केवला
म्। वृद्धो जनो दुःखशतानि भुङ्क्ते। इहोपभोगो भुजेरर्थः। अनवने किम्। महीं भुनक्ति। णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने। १।३।६७
ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेण्ण्यन्तेनोच्यते अणौ यत्कर्म कारकं स चेण्णौ कर्ता स्यान्न त्वाध्याने। णिचश्चेति सिद्धे कर्त्रभिप्रा
यार्थमिदम्। कर्त्रभिप्राये तु विभाषोपपदेनेति विकल्पोऽणावकर्मकादिति परस्मैपदे च परत्वात्प्राप्ते पूर्वविप्रतिषेधेनेदमेवेष्यते॥

तिद्वितीयं। कर्मशब्दः क्रियापरः कर्तरि कर्मव्यतिहार इतिवत्। तथा च। अणौ या क्रिया सैव ण्यन्ते चेदित्यर्थः। एवं स्थिते फलितमाह। सैव चेण्ण्यन्तेनोच्यते इति। स
कर्तेति तृतीयं वाक्यं। अणावित्यादि चेच्छब्दान्तमिहानुवर्तते। कर्मशब्दश्चात्र कारकविशेषपरः। शब्दाधिकाराश्रयणात् तदेतद्व्याचष्टे। अणौ यदित्यादि
नास्यादित्यंतेन। अनाध्यान इति वाक्यान्तरं व्याचष्टे न त्विति। आध्यानमुत्कण्ठापूर्वकं स्मरणं। वस्तुतस्तु पर्युदास एव लाघवादाश्रयणीयः। तथा च। अ
त्र वाक्यत्रयमेवेति बोध्यं विकल्प इति। परत्वात्प्राप्ते इत्युत्तरेणान्वयः। पूर्वविप्रतिषेधेनेति। विभाषोपपदेनेत्यस्यावकाशः। स्वं यज्ञं यजति। स्वं यज्ञं यज
ति इत्यादि। णेरणावित्यस्य तु दर्शयते राजेत्यादि। तथा अणावकर्मकादित्यस्य शेते कृष्णं गोपी शाययतीत्यवकाशः। णेरणावित्यस्य तु लावयते केदारं

उ.
वै.को. स्वयमेवेति। तत्र हि लूयते केदार इति द्वितीयकस्याप्यमणावकर्मकत्वादिति भावः। न च पश्यति भव इतिवत् द्वितीयकस्यायां लुनाति केदार इत्येवं प्रयो
टी.त. गइति भ्रमितव्यं। लवनस्य कर्मस्थक्रियात्वेन कर्मवत् कर्मणेति यगात्मनेपदप्रवृत्तेः। नन्वास्तु अणावकर्मकादित्यस्य बाधे दर्शयते राजेति भाष्यप्रयोगो
१२५ मानं। तत्र हि निवृत्तप्रेषणपक्षे दृशेरणावकर्मकत्वात् नित्यवत्कर्तृकत्वाच्च परस्मैपदप्राप्तेः। विभाषोपपदेनेति विकल्पबाधे तु न किंचिन्मानं। किंच॥
अणावकर्मकान्नित्यस्य बाधेऽपि नास्त्येव प्रमाणं। पूर्वोक्तभाष्यस्य परगामिनि क्रियाफले चरितार्थत्वात्। तथा च कर्तृगामिनि क्रियाफले परत्वादणावक
र्मकादित्यस्य प्रवृत्तौ न किंचिद्बाधकमस्तीति पूर्वविप्रतिषेधेनेदमेवेष्यत इत्येतत् चिंत्यमित्याहुः। कर्मवत्कर्मणेत्यनेन गतार्थत्वशंकां निरस्यति॥ ॐ ।
। कर्तृस्थभावका इति। अपरिस्पंदनसाधनसाध्यो धात्वर्थो भावः ३ सपरिस्पंदनसाधनसाध्यस्तु क्रिया साधनं कारकं तत्साध्यत्वाद्धात्वर्थस्य। ननु नृ

कर्तृस्थभावकाः कर्तृस्थक्रियाश्चोदाहरणम्। तथा हि। पश्यन्ति भवं भक्ताः। चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः। प्रेरणांशत्यागे पश्य
ति भवं। भवः विषयो भवतीत्यर्थः। ततो हेतुमति णिच्। दर्शयन्ति भवं भक्ताः। पश्यन्तीत्यर्थः। पुनर्ण्यर्थस्याविवक्षायाम्। दर्शयते भवः। इह प्रथ
मतृतीययोरवस्थयोर्द्वितीयचतुर्थ्योश्च तुल्योर्थः॥ ॥ (( तं तं भवं पश्यतीत्यत्र दृशेः कर्तृस्थभावकता न स्यात् किंतु कर्तृस्थक्रियाकतै

वस्यात्। न च साधनशब्देन लकारवाच्यं कारकं विवक्षितमिति वाच्यं। नृत्यनु भवः पश्यतीत्यत्र तद्दोषतादवस्थ्यादिति चेत्। अत्राहुः। आरोहणादौ सपरिस्पं
द एव देवदत्तादिर्यथा साधनं तथा दर्शनश्रवणादौ न भवति किंतु स्पंदनरहितोपीति नोक्तदोष इति। कर्तृस्थभावकमुदाहरति। पश्यंतीति। प्रेरणांश
ति। सौकर्यविवक्षयेति भावः। तत इति। त्यक्तप्रेरणांशकात् धातोरित्यर्थः। पुनर्ण्यर्थस्येत्यादिना चैव णिजपि गच्छतीति दर्शयते भव इति नासिद्धमिति
वाच्यं। उपायनिवृत्तावप्युपेयानिवर्तनादिति कैयटोक्तेः। एवं च स्वार्थ एव णिजिति पर्यवसानादाह। द्वितीयचतुर्थ्योरिति। तुल्योर्थ इति। न्यूनाधि
॥कभावरहितः॥

नत्र तृतीयेति। प्रथमा द्वितीययोस्तुल्यं तत्वाभावात् तदं प्रसक्तिरेव नासीतिभावः। क्रियासाम्येपीति। प्रथमकक्ष्ययासहेत्यर्थः। द्वितीयामाहायेति। अन्यो यः
क्रियासैव चेत्स्यं ततेरास्युन्यूनाधिकभावव्यवच्छेदपरत्वमभ्युपेत्येदमुक्तं। यदात्वधिकव्यवच्छेदमात्रपरत्वमभ्युपगम्यतेतदाप्रथमामप्यादायतत्संभवति
इदानीं कर्तृस्थक्रियाकमुदाहरति। एवमित्यादिना। आरोहतिहस्तीति। प्रेषणांशत्यागेउदाहरणमिदं। ननोणिजितिनिवृत्तप्रेषणाद्धातोः प्रेषणांशाविवक्षा
यांणिजित्यर्थः। पुनर्ण्यर्थस्याविवक्षायामुदाहरणमाह। आरोहयतेइति। एवंनिवृत्तप्रेषणपक्षमुपपाद्येदानीमध्यारोपितप्रेषणपक्षमुदाहरति
हेतुत्वारोपादिति। प्रयोजककर्तृत्वारोपादित्यर्थः। अत्राविसौकर्यविवक्षैवबीजं। पश्यतइति। पश्यतोभक्तान् आरोहतोहस्तिपकानितिक्रमेणार्थः
नत्रतृतीयकक्ष्यायान्न तङ्। क्रियासाम्येपिअणौकर्मकारकस्य णौकर्तृत्वाभावात्। चतुर्थ्यान्तु तङ् द्वितीयामादायक्रियासाम्यात्। प्रथमायाङ्कु
र्मणोभवस्येहकर्तृत्वाच्च। एवमारोहयतेहस्तीत्यप्युदाहरणम्। आरोहन्तिहस्तिनंहस्तिपकाः। न्येगभावयन्तीत्यर्थः। ततआरोहतिहस्ती। न्य
गभावतीत्यर्थः। ततोणिच्। आरोहयन्ति। आरोहन्तीत्यर्थः। ततआरोहयते। न्यग्भवतीत्यर्थः। यद्वा। पश्यन्त्यारोहन्तीतिप्रथमकक्ष्याप्राग्वत्
ततःकर्मणएवहेतुत्वारोपाण्णिच्। दर्शयतिभवः। आरोहयतिहस्ती। पश्यतआरोहतश्चप्रेरयतीत्यर्थः। ततोणिजं ध्यानत्यक्तौतिभ्याच्चवउ
पात्तयोर्द्वयोरपिप्रेषणयोस्त्यागेदर्शयतेआरोहयतेइत्युदाहरणम्। अर्थःप्राग्वत्। अस्मिन्पक्षेद्वितीयकक्ष्यायान्नतङ् समानक्रियात्वाभावादि मूलपुस्तल
आधिक्यादिति। अस्मिन्पक्षेणौचेत्साक्रियेत्यनेन आधिक्यमात्रं व्यवच्छिद्यते। ननुन्यूनत्वमपि। अन्यथा तृतीयकक्ष्याया ॥जर्थस्याधिक्यात्।
मपितङ् नस्यात्। प्रकृत्युपात्तप्रेषणांशस्यत्यागेनन्यूनतायाःसत्वादितिभावः। णेरितिकिं। पश्यन्त्यारोहन्तीत्यादिनिवृत्तप्रेषणान्माभूत्। नचणौचेदितिश्रु
तत्वात् णेर्नादेवस्यादितिवाच्यं। अणावित्यस्यापिश्रुतत्वात्। अग्रिमयोगार्थमवश्यंकर्तव्यस्यस्पष्टार्थमिहैवकर्तुमौचित्याच्च अणौयाक्रियासैव चेण्णयन्ते
इतिकिं। दर्शयतिभवः। आरोहयतिहस्ती। अध्यारोपितप्रेषणपक्षेद्वितीयकक्ष्यायांमाभूत्। कथंतर्हिकरेणुरारोहयतेनिषादिनमितिमाघप्रयोगःसंसं

न्तं दर्शयन्ते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम् इति भारविप्रयोगश्च संगच्छत इति चेत्। अत्राहुः। णिचश्चेत्यनेन नाक्रियाफले कर्तृगामिनि तङ् न तु प्रकृतसूत्रेणेति। अणौ यत् कर्मकारकं णौ चेत्स कर्तेति किं। दर्शयति भवमिति। निवृत्तप्रेषणपक्षे तृतीयकक्ष्यायां मा भूत्॥ ❁ ॥ स्मरति वनगुल्ममिति

स्मारयति वनगुल्मं कोकिलः। स्मारयति वनगुल्मम्। उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः। भीस्म्योर्हेतुभये। व्याख्यातम्। गृधिवञ्च्योः प्रलम्भने। १।३।६९॥ प्रतारणेऽर्थे एतन्नाभ्या माभ्याम्याम्वत्। माणवकं गर्धयते। वञ्चयते वा। प्रलम्भने किम्। श्वानङ्गर्धयति। अभिकाङ्क्षमाणो नारयतीत्यर्थः। अहिं वञ्चयति। वर्जयतीत्यर्थः। लियः सम्माननशालीनीकरणयोश्च। व्याख्यातम्। मिथ्योपपदात्कृञोऽभ्यासे। १।३।७१॥ णेरित्येव। पदं मिथ्या कारयते। स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। मिथ्योपपदात्किं। पदं सुष्ठु कारयति। अभ्यासे किं। सकृत्पदं मिथ्या कारयति। स्वरितञितः कर्त्रभिप्राये क्रियाफले। यजते। सुनुते। कर्त्रभिप्राये किम्। ऋत्विजो यजन्ति। सुन्वन्ति। अपाद्वदः। १।३।७३॥ न्यायमपवदते। कर्त्रभिप्राय इत्येव। अपवदति॥ णिचश्च। कारयते। समुदाङ्भ्यो यमोऽग्रन्थे। १।३।७५॥ अग्रन्थ इति छेदः। व्रीहीन् संयच्छते। भारमुद्यच्छते। वस्त्रमायच्छते। अग्रन्थे किम्। उद्यच्छति वेदम्। अधिगन्तुमुद्यमं करोतीत्यर्थः। कर्त्रभिप्राय इत्येव। अनुपसर्गाज्ज्ञः। १।३।७६॥ गां जानीते। अनुपसर्गात्किम्। स्वर्गं लोकं न प्रजानाति। कथं तर्हि भट्टिः। इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्येति कर्मणि लिट्। नृपेणेति विपरिणामः। विभाषोपपदेन प्रतीयमाने। १।३।७७॥ स्वरितञित इत्यादिपञ्चसूत्र्या यदात्मनेपदं विहितं तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात्। स्वं यज्ञं यजति। यजते वा। स्वं कटं करोति। कुरुते वा। स्वं पुत्रमपवदति। अपवदते वा। स्वं यज्ञं कारयति। कारयते वा। स्वं व्रीहिं संयच्छति। संयच्छते वा। स्वां गां जानाति। जानीते वा। इत्यात्मनेपदम्॥ ९ पक्षद्वयेऽपीयं प्रथमकक्ष्या स्मारयति वनगुल्ममिति। निवृत्तप्रेषणपक्षे तु चतुर्थकक्ष्येयं। अध्यारोपितपक्षे तु तृतीयकक्ष्येति ज्ञेयं। केचित्तु एतत्सूत्रस्थभाष्ये दर्शयते भृत्यान् राजेत्यु

दाहरणं स्मारयत्स्तेनैव नगुल्म इति प्रत्युदाहरणं च दृश्यते। ततश्च अध्यारोपितप्रेषणपक्षे द्वितीयकल्प्यायामेवानेनात्मनेपदं भवति न तु तृतीयकल्प्याया
मिति प्रतीयते। तथा च अकर्मपदमावर्त्य तस्य क्रियावाचित्वं स्वीकृत्य अणौ या क्रिया सैव चेण्णय तेनोच्यते इति वाक्यान्तराभ्युपगमेऽप्येवकारेणाधिकं न व्यव
द्यते किं तु न्यूनतैवेत्यस्मादेव भाष्यादवगम्यते एवं च दर्शयते भवः आरोहयते हस्तीति कर्मप्रयोगरहितं मूलग्रंथस्योदाहरणं स्मारयति वनगुल्म
ति प्रत्युदाहरणं च भाष्यविरुद्धमेवेत्याहुः। अन्ये त्वविवक्षितमिह कर्मेत्युक्ताः तत्र मूलग्रंथाविरोधेनैव भाष्यग्रंथः समर्थितः। तेषामयमाशयः गं
भीरायां नद्यां घोष इत्यत्र गभीराभिन्ननद्यामिति गभीरनदीपदार्थयोरभेदबोधानंतरं तीरलक्षणायां तीरस्य गभीरत्वाभावान्नद्यास्तु गभीरत्वैक
देशान्वयासंभवाच्च अनर्थकमपि गभीरायामिति पदं प्राथमिकबोधमादाय सार्थकं तद्वदिहापि अध्यारोपितप्रेषणपक्षे द्वितीयकल्प्यायां कर्मण्य
न्वितत्वेन ततो णिजर्थस्य वृकर्मणोऽपि त्यागे णिचः कर्मपदस्य च प्राथमिकबोधमादाय सार्थक्यं। स्वबोध्यसंबंधेन लक्षणेत्यभ्युपगमात्। विशिष्टवाक्यार्थ
स्य चेह बोध्यत्वेन तत्संबंधस्य बोधकता वाक्ये सत्वात्। एषैवार्थवादैः प्राशस्त्यलक्षणायां गतिः। अन्यथा वायव्यं श्वेतमालभेत भूतिकाम इत्या
दिविधिवाक्यस्य योऽर्थवादैः वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीत्यादिस्तत्र वायुमेव स्वेन भागधेयेन स एवै
नमित्यादिरूपस्य विभक्तिभेदेन प्रयोगस्य वैयर्थ्यं स्यादिति। नन्वेतत्सूत्रस्योदाहरणं च यथाश्रुतभाष्यानुसारेण सकर्मकमेवास्तु किमनेन विद्यमान
कर्मणोऽविवक्षितत्वोपपादनक्लेशेनेति चेत्। मैवं। नित्तन्तप्रेषणपक्षे दर्शयते भव इत्याद्युदाहरणस्य प्रत्युदाहरणस्य च कर्मरहितस्य स्वीकर्तव्य
तया तद्वैकल्प्याय अस्मिन्नपि पक्षे अकर्मकोदाहरणप्रत्युदाहरणयोः प्रत्युदाहरणे कर्तृस्थभावक्रियार्थं सूत्रमिति भाष्यग्रंथस्वारस्यादप्यकर्मकमेवो
दाहरणं प्रत्युदाहरणं चायाति। न च कर्मवत्कर्मणेति सूत्रे तुल्यशब्देनापकर्मस्थक्रियातो न्यूनतैव व्यवच्छिद्यते न त्वाधिक्यमिति स्वीकृतेनास्ति
भाष्यग्रंथस्वारस्यभंग इति वाच्यं। तथा हि सति कर्मवत्कर्मस्थक्रियः परस्तुक्तोऽपि कर्मस्था क्रिया यस्य कर्तुः स कर्ता कर्मवदित्यर्थलाभात्त्वन्मतेऽभी
कर्मणोऽविवक्षितत्वव्याख्याया वैचित्यात् किं च कर्मवत्कर्मणेत्यनेनैव सिद्धे ३

हितसिद्धौ कर्मणा तुल्यक्रिय इत्यस्य वैयर्थ्यापत्तेः। द्वितीयकक्ष्यायां भवेहस्तिनिच विषयत्वापादनविषयकप्रेरणाया श्चन्यभवनविषयकप्रेरणाया
श्च कर्मणः सत्त्वेपि विषयत्वापत्तिरूपायाः स्वभवनरूपायाश्च कर्मस्थक्रियायाः सत्त्वात्। यदि तु कर्मणा तुल्यक्रिय इत्येतत्सार्थक्याय तुल्यशब्देनात्र
न्यूनाधिकव्यवच्छेदः क्रियत इत्युच्यते तदा कर्मवत्कर्मणेति सूत्रस्य द्वितीयकक्ष्यायामप्रवृत्तेः कर्मवत्कर्मणेत्यनेनैव सिद्ध इत्यादिभाष्यग्रंथस्वार
स्य भंगो भवत्येव। ततश्च अध्यारोपितप्रेषणपक्षे तृतीयकक्ष्यायामेवोदाहरणं। ननु द्वितीयकक्ष्यायामित्यभ्युपगंतव्यं। एतेनाध्यारोपितप्रेषणप
क्षे णौ चेत्सा क्रियेत्यनेनाधिक्यमात्रं व्यवच्छिद्यते न्यूनत्वं नेत्यत्र विनिगमनाभावान्न्यूनत्वव्यवच्छेद एव स्वीकृते द्वितीयकक्ष्यायां नेङ्दुवीर इति न्यूना
धिकव्यवच्छेद एव ग्राह्यस्तेन कक्ष्याचतुष्टयपक्ष एव साधीयानिति वदंतः परास्ताः। दर्शयते भृत्यान् राजेति भाष्योदाहरणत्वेन अध्यारोपितपक्षस्यैव प्र
बलत्वादिति दिक्। गृधिवंच्योः प्रलंभने। अकर्त्रभिप्रायार्थ आरंभः। मिथ्योपपदात्। कृञोऽभ्यासे। इह करोतिरुच्चारणार्थत्वादकर्मकः। उच्चारणं निः
सरणं ण्यंतस्तूच्चारणवृत्तिः सकर्मकः। उच्चारयतीति। निःसारयतीत्यर्थः। असकृदुच्चारणे तु धातोर्लक्षणा आत्मनेपदं तु द्योतकं तेनैव द्योतितत्वात् निष्प
वीप्सयोरिति न द्विर्वचनं। ऋत्विजो यजंतीति। दक्षिणादिकं तु न यागफलं। स्वर्गकामो यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादिविधानात् स्वर्गादिरेव फलमिति
भावः। समुदाङ्भ्यो। आङो यमहन इत्येव सिद्धे आङ्पूर्वकस्य वचनं सकर्मकार्थमिति ध्वनयन्नुदाहरति। वस्त्रमायच्छत इति। अनुपसर्गाज्ज्ञः। [illegible] १२७
काच्चेत्सेव सिद्धे सकर्मकार्थ आरंभः। विभाषोपपदेन। उपपदेन फलस्य कर्तृगामित्वे द्योतिते तङोऽप्राप्तविभाषेयं। कर्तृगामिनि क्रियाफले नि[illegible]
त्ये प्राप्तविभाषेत्यन्ये। स्वं यज्ञमिति। स्वमित्युपलक्षणं। स्वार्थं यज्ञं यजति। आत्मार्थं यज्ञं यजति। इत्याद्यपि बोध्यं॥ इत्यात्मनेपदम्

शेषात् कर्तरि। अनुदात्तङित इत्यादिष्वात्मनेपदमेवेति नियमान्न तत्र परस्मैपदस्य संभवः। तथा च। कर्तरि परस्मैपदमित्यनेन परस्मैपदमेवेति निय-
नेन तद्भिन्नानामेव तत् भविष्यतीति शेषग्रहणं स्पष्टप्रतिपत्त्यर्थमित्याहुः। अनुदात्तङित इत्यादिष्वेवात्मनेपदमिति नियमाच्छेषात् कर्तरि इ-
न परस्मैपदमेव तत्र भविष्यतीति परस्मैपदग्रहणं स्पष्टप्रतिपत्त्यर्थमिति केचित्। अस्य वा धादिति। अनुपराभ्यामित्यस्येत्यर्थः। अत एव कर्म...

शेषात्कर्तरि परस्मैपदम्। अनि। अनुपराभ्यां कृञः। १।३।७९॥ कर्तृगेऽपि फले गन्धनादौ च परस्मैपदार्थमिदम्। अनुकरोति। पराकरो-
ति। कर्तरीत्येव। भावकर्मणोर्मा भूत्। नैवमपि कर्मकर्तरि प्रसङ्गः। कार्यातिदेशपक्षस्य मुख्यतया तत्र कर्मवत्कर्मणेत्यात्म-
नेपदेन परेणास्य बाधात्। शास्त्रातिदेशपक्षे तु कर्तरि कर्मत्यतः शेषादित्यतश्च कर्तृग्रहणद्वयमनुवर्त्य कर्त्रैव यः कर्त्ता न तु कर्मकर्त्तेति वे-
ति व्याख्येयम्। अभिप्रत्यतिभ्यः क्षिपः। १।३।८०॥ क्षिप प्रेरणे स्वरितेत्। अभिक्षिपति। प्राद्वहः। १।३।८१॥ प्रवहति। परेर्मृषः। १।३।८२॥
परिमृष्यति। भौवादिकस्य तु। परिमर्षति। इह परेरिति योगं विभज्य वहेरपीति केचित्। व्याङ्परिभ्यो रमः। १।३।८३॥ विरमति। उपाच्च। १।३।
८४॥ यज्ञदत्तमुपरमति। उपरमयतीत्यर्थः। अन्तर्भावितण्यर्थोऽयम्। विभाषाऽकर्मकात्। १।३।८५॥ उपाद्रमेरकर्मकात्परस्मैपदं वा। उपरमति।
उपरमते वा निवर्तत इत्यर्थः। बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः। १।३।८६॥ एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात्। णिचश्चेत्यस्यापवादः। बोधयति पद्मम्।
योधयति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। अध्यापयति। प्रावयति। प्रापयतीत्यर्थः। द्रावयति। विलापयतीत्यर्थः। स्रावयति।

र्मणेति सूत्रे कार्यातिदेशोऽयमिति वक्ष्यति। शास्त्रातिदेशपक्षे कर्मवत् कर्मणेत्यनेनात्मनेपदं न विधीयते किं तु तद्विधायकं भावकर्मणोरिति शास्त्रमति-
दिश्यते तस्य च पूर्वत्वात् परेण अनुपराभ्यामित्यनेन बाधमाशंक्याह। शास्त्रातिदेश इत्यादि॥ स्वरितेदिति। तथा च। कर्तृगामिनि क्रियाफलेऽपि परस्मैपदार्थः
सूत्रारंभ इति भावः। परेर्मृषः। स्वरितेत्वात् पदद्वये प्राप्तेऽयमारंभः। परिमर्षतीति। आधृषाद्वेति वैकल्पिकत्वात् णिजभावः। उपाच्च। व्याङ्परिभ्य इति नोक्तं। उत्त-

उ.
सि-कौ- ‖ रुचीश्च चक्षुषी आचामयति किमिति व्याचक्षते अणावकर्मकात् क्रियाफलस्य कर्तृगामित्वविवक्षायां आत्मनेपदे प्राप्ते
निगरणचलनार्थेभ्यश्च निगरणं भक्षणं तु इत्सूत्रं चलनार्था नामनेनात्मनेपदे सिद्धे व्यचलनार्थानां तत्सिद्धये पूर्वसूत्रे ग्रहणं अत एव तत्र विहितं प्राययतीत्य
तत्त्व- र्थे रसादिना कथं तर्हि इमां किमाचामयसे न चक्षुषीति श्रीहर्षः। आङ्पूर्वाच्चमेरनेन परस्मैपदे चित्यादिति चेदत्राहुः आचामयतीति पृथक्पदं इदं लक्ष्मी
९९८ लयासहितासे ममस्याः संबोधने हे से इति। केचित्तु सालं इने चक्षुःसु परस्मैपदार्थमिदं अणाविति किं। हेतुमण्ण्यन्तादकर्मकान्नपरस्मैपदनियमो मा भूत्।

निगरणचलनार्थेभ्यश्च।१।३।८७॥ निगारयति। आशयति। भोजयति। चलयति। कम्पयति। अदेः प्रतिषेधः। आदयते देवदत्तेन। गतिबुद्धीति कर्मत्वमाहितवादोनेनि निषिद्ध निगरणचलनेति सूत्रेण प्राप्तस्य वा यन्निषेधः। शेषादित्यकर्त्रभिप्राये परस्मैपदं स्यादेव। आर पत्यन्तं वक्तुम्। अणावकर्मकाच्चित्तवत्कर्तृकात्।१।३।८८॥ ण्यन्तान्नपरस्मैपदं स्यात्। शेते कृष्णस्तं गोपी शाययति। न पादम्याङ्यमाङ्यस परिमुहरुचिनृतिवदवसः।१।३।८९॥ एभ्यो ण्यन्तेभ्यः परस्मैपदं न। पिबतिर्निगरणार्थः। इतरे चित्तवत्कर्तृकाकर्मकाः। नृतिश्चलनार्थोऽपि तेन सूत्रद्वयेन प्राप्तिः। पाययते। दमयते। आयामयते। आयासयते। परिमोहयते। रोचयते। नर्तयते। वादयते। वासयते। धेट उपसंख्यानम्। धापयेते शिशुमेकं समीची। अकर्त्रभिप्राये शेषादिति परस्मैपदं स्यादेव। वत्सान्पाययति पयः। दमयन्तीकमनीयतामदर्पाभिख्या वासयति। वा क्यषः। लोहितायति। लोहितायते। द्युद्भ्यो लुङि। अद्युतत्। अद्योतिष्ट। वृद्भ्यः स्यसनोः। वत्स्यति। वर्तिष्यते। विवृत्सति। विवर्तिषते। लुटि च कॢपः। कल्प्ता। कल्प्तासि। कल्पितासे। कल्प्स्यति। कल्पिष्यते। कल्प्स्यते। चिक्लृप्सति। चिकल्पिषते। चिक्लृप्सते॥ समाप्ता पद-व्यवस्था॥ अथ भावकर्मणोर्लडादयः। भावकर्मणोरिति तङ्॥

११ आरोहयमाणं प्रयुङ्क्ते आरोहयते। न्यग्भवं तं प्रेरयतीत्यर्थः। लोकेऽपि ति
सूत्रे उदाहरणत्वेन य आरोहयतिरकर्मको निर्णीतस्तस्मात् द्वितीये णिचि प्रत्युदाहरणमिदं। केचित्तु अणाविति किं। चुरादिण्यन्तान्नपरस्मैपदनियमो मा भू
त्। तद्यथा पुद इत्युद अल्पीभावे पुदयति। चुदयति। अल्पीभवतीत्यर्थः। अकर्मकाविमौ तेनो हेतुमण्णिचि पुद्दयते चुद्दयते इति प्रत्युदाहरंति॥ ॥

तभाष्यादिविरुद्धं तथाहि। वुधादिसूत्रादिह लोरिति वर्त्तते वुधादिभ्यश्च हेतुमण्णिचेव संभवतीति तदन्तादेवायं विधिः। अणावितिप्रतिषेधोपि प्रत्यासत्ते
र्हेतुमण्ण्यपेक्ष्यः। तेन चुरादिण्यन्ताद्धेतुमण्णौ परस्मैपदं भवत्येवेति भाष्यादौ स्थितं। तथा च हेतुमण्णेः प्राक् यो ऽकर्मको हेतुमण्ण्यन्तात्तस्माद्धेतुमण्ण्य
वात्मनेपदं नेति फलितोर्थः। अकर्मकात् किं कटं कः करोति तं प्रयुङ्क्ते कटं कारयते। चित्तवत्कर्तृकादिति किं। शुष्यन्ति व्रीहयस्तान् शोषयते। न पादादिसूत्रे चित्तवत्
कर्तृकाऽकर्मका इति। दिवादौ दमिस्सकर्मक इत्युक्तं इहत्वकर्मक इति पूर्वोत्तरविरोधो यद्यप्यस्ति तथापि कर्मणः कर्तृत्वविवक्षायां दमिरत्राकर्मक इत्याहुः।
पाययत इति। शाच्छासेति युक्। आयामयते इति। यमोऽपरिवेषण इति मित्त्वनिषेधः। वासयते इति। वस निवास इत्यस्य ग्रहणं वस आच्छादने इत्यस्य तु
वनिषेधः। सकर्मकत्वेन तस्य प्राप्त्यभावात्। कर्मकर्तृत्वविवक्षायामकर्मकत्वेपि शुभ्विकरणपरिभाषया नात्र ग्रहणमित्याहुः। समीचीन इति। प्रथमा

सार्वधातुके यक्। ३।१।६७।। धातोर्यक् प्रत्ययः स्याद्भावकर्मवाचिसार्वधातुके परे। भावो भावना उत्पादना क्रिया सा च धातुत्वेन सक
लधातुवाच्या। भावोर्थकेल लकारेणानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमः पुरुषः। तिङ्वाच्यभावनाया असत्त्वरूपत्वेन हि
त्वाद्यप्रतीतेर्न द्विवचनादि किं त्वेकवचनमेव। तस्यौत्सर्गिकत्वेन संख्यानपेक्षत्वादनभिहिते कर्तरि तृतीया। त्वया मया अन्यैश्च भूयते। बभू

द्विवचनं। वा छन्दसीति पूर्वसवर्णदीर्घः। परस्मैपदं स्यादेवेति। अनन्तरस्येति न्यायेन योगद्वयेन प्राप्तस्यैव परस्मैपदस्य प्रतिषेध इति भावः।। इति पद
व्यवस्था।। ।। सार्वधातुके यक्। धातोरेकाच इत्यतो धातोरिति चिण्भावकर्मणोरित्यतो भावकर्मणोरिति चानुवर्त्तते। भावो भावनेति। उत्पत्त्य
र्थान्भवतेर्णिजन्तादेरजिति भावः। एरजण्यन्तानामिति त्वनार्षमिति तस्मिन्नेव सूत्रे कैयटः। भवतेरुत्पत्त्यर्थत्वं ण्यन्तस्य भवतेः शुद्धेन करोतिना तु
ल्यार्थत्वं च दर्शयति। उत्पादना क्रियेति। यथा करोति घटमित्यादावुत्पत्त्यनुकूलो व्यापारः कुलालनिष्ठः तथा भावयति घटमित्यादावपि। भवति
घट इत्यत्रापि घटनिष्ठ उत्पत्त्यनुकूलो व्यापारोऽस्त्येव परंतु फलसमानाधिकरणः सः। कुलालनिष्ठस्तु फलव्यधिकरण इतीयान्भेदः। अतएव फल

उ·
कौ· व्यापारयोः सामानाधिकरण्याद्भवत्यादिरकर्मकस्तयोस्तु वैयधिकरण्यात्करोत्यादिः सकर्मक इत्याहुः। एतेन भावो भावनेत्यादिग्रंथेन भूवादयो धातव इ
त· त्यत्र क्रियावाचिनः किं। विकल्पार्थकवाशब्दाद् भावे लिण्माभूत्। अन्यथा भ्वादिगणे वाशब्दमात्रपठनात् क्रियावाचिनोपि वाशब्दस्य धातुत्वे धात्वर्थः
१२९ केवलः शुद्धो भाव इत्यभिधीयते इति विकल्पस्यापि भावत्वापत्त्यात्तद्वाचकवाशब्दाल्लिट् स्यादेवेति केषांचिद्व्याख्यानं परास्तं भावनवाचकादेव भावे लि
टः स्वीकारात्। विकल्पस्य तु भावनाभिन्नत्वात्। अन्यथा क्रियावाचिन इति विशेषणे दत्तेपि तद्दोषनारवस्थ्यात्। विकल्पवाचकाल्लिड्भावेपि लडा
दयः स्युरिति तु न शंकनीयमेव। वर्तमानक्रियावृत्तेरेव लडादीनां विधानात्। किमर्थं तर्हि क्रियावाचिनो भ्वादय इति सर्वैरेव तत्र व्याख्यातं। यापः
श्यसीत्यत्रापि लक्षणप्रतिपदोक्तपरिभाषया याशब्दस्य धातुत्वासंभवादातो धातोरिति तत्रात्वलोपाप्रसक्तेरिति चेत् अत्राहुः। कार्यकालं संज्ञापरिभा
षमिति पक्षे आतो धातोरिति [illegible]र्यप्रदेशे भ्वादयो धातव इत्युपतिष्ठते भ्वादिषु याशब्दमात्रपठनाद्द्रव्यवाचकोपि याशब्दस्तत्रोपतिष्ठेत्। वर्णग्रहणे ल
क्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः। आतो धातोरित्यत्र त्वात इति वर्णग्रहणात्तस्माद् द्रव्यवाचकस्य याशब्दस्य धातुसंज्ञा माभूदिति क्रियावाचिन
इति विशेषणमवश्यं वक्तव्यमेवेति। उत्पादनाक्रियेत्यनेन तु क्रियावाची धातुर्धात्वर्थः क्रियेत्यन्योन्याश्रयोऽत्र दुःपरिहर इति केषांचिदाक्षेपो निरस्तः
उत्पत्त्यनुकूलव्यापारस्य क्रियात्वात्। न चोक्तं। व्यापारो भावना सैवोत्पादना सैव च क्रियेति धातुत्वेनेति। सकलधातुषु धातुत्वं जातिरखंडोपाधिर्वेत्यन्ये
नत्। तच्च वाचकतावच्छेदकं क्रियात्वं तु वाच्यतावच्छेदकमिति भावः। धातुवाच्येति। नन्वेवं पचनीत्यादावेककर्तृकावर्तमाना पचिक्रियेति क्रियाविशेष्यको बोधो
न स्यात्। प्रत्ययार्थं प्रति प्रकृत्यर्थस्य विशेषणतायाः औपगवादौ क्लृप्तत्वात्। तथा च भावना तिङ्प्रत्ययवाच्येति मीमांसकमतमेव रमणीयमिति चेत् अत्रा
हुः प्रत्ययार्थप्रधानमिति त्वौत्सर्गिकस्य चेह त्यज्यते क्रियाप्रधानमाख्यातमिति स्मरणात्। दावाद्यर्थत्वेन मीमांसकैरभ्युपगतस्य स्त्रीत्वस्यापि विक्ष १२९
विशेष्यत्वाभ्युपगमात् प्रत्ययार्थः प्रधानमिति नियमस्य त्यक्तत्वाच्च। किंच भोक्तव्यमित्यादौ तिङं विनापि भावना प्रतीयते कारकाणां साचद

ते अस्ति चकरोति सामानाधिकरण्यं। किं कर्तव्यं भोक्तव्यं किं कृतवान् भुक्तवान् इति। न च कृतामपि तव्यदादीनां भावनावाचकत्वमस्त्विति शंक्यं। अनु
मार्थयोरभेदान्वयानुरोधेन कर्तरि कृदिति तव्यदादयः कर्मादाविति परैरप्यभ्युपगमात्। अन्यथा पाचको देवदत्तः पक्तव्य ओदनः इत्यत्राभेदबो
धानस्यात्। तथा च धातुवाच्यत्वं भावनाया इत्येवमतं रमणीयतरमिति। लकारस्य सामानाधिकरण्यं कर्तृकर्माभिधायिन एव संभवतीति न भावा
भिधायिन इत्याशयेन व्याचष्टे। सामानाधिकरण्याभावादिति। न चैवं युष्मदस्मद्भिन्नोपपदे समानाधिकरणे देवदत्तः पचतीत्यादावेव प्रथमपुरुषविधानभा
व्यमिति प्रथमपुरुषो व्यर्थ न स्यादिति वाच्यं। शेषे प्रथम इत्यत्र मध्यमोत्तमयोरविषये प्रथमः स्यादिति व्याख्यानात्। तिङ्वाच्येति। घञादिवाच्या
यास्तु सत्वरूपत्वमिष्टमेवेति पाकं पाकेनेत्यादौ यथायथं द्वितीयादयः प्रवर्तन्ते। अत एव भाष्ये कृतोक्तं कृदभिहितो भावो द्रव्यवत्प्रकाशत इ
ति। द्रव्यधर्मान् लिंगसंख्याकारकादीन् गृह्णातीत्यर्थः। एकवचनमेवेति। प्रायोवादोयं। अन्यथा। उष्ट्रासिका आस्यते हतशायिकाः शय्यते इति भा
ष्यधात्वर्थनिर्देशे ण्वुलि कृदभिहितो भावो द्रव्यवत्प्रकाशत इत्यासिकाशायिका इत्यत्र बहुवचनसिद्धावपि आस्यते शय्यते इत्यत्र तन्न सिध्येत्
न च कर्मण्येवात्र लकारोऽस्त्विति शंक्यं। धातुद्वयस्याप्यकर्मकत्वेन तदसंभवात् अर्थासंगतेश्च। अत्र तु उष्ट्राणां या दृशा न्यासना निहतानां या दृशा
निशायनानि तादृशानि देवदत्तादिकर्तृकान्यासनादीनीत्यर्थः। सादृश्यावगमादिह आख्यातवाच्यस्यापि भावस्य भेदावभासात् बहुवचनं।
न चैवं संख्यान्वयित्वे असत्वरूपता न स्यादिति वाच्यं। लिंगक्रियानाधारकारकयोगाभावमात्रेणासत्वरूपत्वमुपपद्यते इति कारकेषूक्तत्वात्। केचित्तु
ह उष्ट्रासिका हतशायिका शब्दयोर्लक्षसदृशलक्षणां स्वीकृत्य आस्यन्त इत्यादिना अभेदान्वयमाहुः। मनोरमायां तु आसिकाशायिका इति च द्वितीयाबहुवचनं क्रि
याविशेषणत्वेन कर्मकत्वात्। न चैवं क्लीबत्वमेकवचनान्तत्वं च स्यादिति वाच्यं। स्त्रियां क्तिन्नित्यधिकारात् स्त्रीत्वावधारणेन सामान्ये नपुंसकमित्यस्याऽ
॥प्रवृत्तेः बहुत्वावधारणे नैकवचनाप्रवृत्तेश्चेत्युक्तं॥

स्यसिचसीयुट्तासिषु। यद्यप्यजादयो हुं हनननिर्दिष्टास्तथाप्युपदेश इत्यचरणविशेषणं न हनादीनां। अव्यभिचारान्न दाह। उपदेशे योऽजिता उपदेशे॥ अजन्तानामिति न व्याख्यातं। तथाहि सति णिजन्तस्य न स्यात् तस्योपदेशाभावात्। उपदेशो हि साक्षादुच्चारणं न चण्यन्तस्य तदस्ति। चिण्वदिति सप्तम्यन्ताद्वतिः स्यसिचसीयुट्तासिष्विति प्रतियोगिनि सप्तमीनिर्देशादतो व्याचष्टे चिणीवेति। ननु चिणि दृष्टमात्रस्य वृद्ध्यादिकार्यस्यातिदेशो घानिष्यते आयिष्यते अध्यायिष्यते इत्यत्र हनो वधादेशः इणो गादेशः इङो गाङादेशोऽपि स्यादिति चेन्न। मैवं। अंगाधिकारबलेन आंगस्यैव कार्यस्यातिदेशान्न चैते हनादीनाम् देशा आंगास्तदेतदाह। अंगकार्यं वा स्यादिति। सीयुट इति। तथा च सीयुट्शब्देन न हि शिष्टं लक्ष्यत इति भावः। आर्द्धधातुक इत्यनेन व्यावर्त्यं लुविधि लिङ्। तेन भूयेतेत्यत्र न भवति। न चात्र लिङः सलोप इति सलोपाद्वलादित्वं नास्तीति वाच्यं। तस्येहानपेक्षणात्। यदाहुः चिण्वद्वृद्धियुक्ता हंतेश्च घत्वं दी

स्यसिचसीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च। ६।४।६२॥ उपदेशेयोः चुतदन्तानां हनादीनां च चिणीवा
इ कार्यं वा स्यात् स्यादिषु परेषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च। अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न। आर
हार्द्धधातुक इत्यधिकृतं सीयुडोविशेषणं नेतरेषामव्यभिचारात्। चिण्वद्भावाद्वृद्धिः। भाविता। भविता। भाविष्यते। भविष्यते। भूयतां। मा॰ अ ≡ ☐
र्वश्चाले योमितावा चिणीति। इट् चासिद्धत्वेन मे लुप्यते। णिर्नित्यश्चायं वलनिमित्तो विघातीति। अस्यार्थः चिण्व(( भूयतां। भूयेत। भाविषीष्ट। भविषी
न इत्यतिदेशस्य वृद्ध्यादिकं प्रयोजनं। तथाहि। भाविता। भाविष्यते। इत्यादौ वृद्धिः। दायिता दायिषीष्ट इत्यादौ युक्। घानिता घानिष्यते इत्यादौ घत्वं। हेतुमण्ण्यं
तात् कर्मणि लकारे शामिता शमिता शामिष्यते शमिष्यते इत्यादौ चिण्णमुलोरिति मितामुपधाया वा दीर्घः। अत्रैव शामितेत्यादौ स्यसिचसीयुट् इत्यनेन कृ
ताइट् आभीयत्वेनासिद्धत्वेनानिटीति निषेधो न प्रवर्तते इति णेर्लोपो भवति। भाविष्यते इत्यादौ भूस्य इति स्थिते परमपि वलादिलक्षणमिटं बाधित्वा चि
[illegible] साप्तमिके तस्मिन् कृते यं चिण्वदिट् भवति। अस्मिन् कृते तु स न भवति। वलादिनिमित्त १३०

[illegible]ग्रहणादवचनत्यत्वात्सेड्भ्योऽप्ययमेवेड् भवति। एतदभावपक्षेतु सेड्भ्यो वलादिलक्षण इड् भवतीति बोध्यं॥ ॥ चिण्भावकर्मणोः। च्लेः सिजित्य
तश्च्लेरिति चिण् ते पद इत्यतस्ते इति चानुवर्तते। तत्रत्यं तु चिणग्रहणं न रुध इति निषेधेन तिरोहितमिति पुनरत्र चिणग्रहणं कृतं। तशब्दे किं। अभाविषा

चिण्भावकर्मणोः ३।१।६६॥ च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे। अभावि। अभाविष्यत। अभविष्यत। ञिङोक्तत्वात्कर्मणि नवृद्धिः
तीया। अनुभूयते आनन्दश्चैत्रेण त्वया मया च। अनुभूयेते। अनुभूयन्ते। त्वमनुभूयसे। अहमनुभूये। अन्वभावि। अन्वभाविषाताम्। अ
न्वभविषाताम्। णिलोपः। भाव्यते। भावयाञ्चक्रे। भावयाम्बभूवे। भावयामासे। इह तशब्दस्य एशि इटि एत्वे च कृते ह एतीति हत्वं न। तासि
साहचर्य्यादस्ते[illegible]स्यति हे इत्यादौ सार्वधातुके एव हत्वमहत्तेरित्याहुः। भाविता। चिण्वदिट् आभीयत्वेनासिद्धत्वाण्णिलोपः। पक्षे भाव
यिता। भाविष्यते। भावयिष्यते। भाव्यताम्। अभाव्यत। भाव्येत। भाविषीष्ट। भावयिषीष्ट। अभावि। अभाविषाताम्। अभावयिषाताम्। बुभू
ष्यते। बुभूषाञ्चक्रे। [illegible]षिता। बुभूषिष्यते। बोभूय्यते। यङ्लुगन्तात्तु। बोभूयते। बोभवाञ्चक्रे। बोभाविता। बोभविता। अकृत्सार्वधातुकयोर्दी
र्घः। स्तूयते विष्णुः। तुष्टुवे। स्ताविता। स्तोता। स्ताविष्यते। स्तोष्यते। अस्तावि। अस्ताविषाताम्। अस्तोषाताम्। गुणोऽर्तीति गुणः। अर्य्यते। स्म
र्यते। सस्मरे। परत्वान्नित्यत्वाच्च गुणे रपरे कृते उपधाभावेऽप्युपदेशग्रहणाच्चिण्वदिट्। आरिता। अर्त्ता। स्मारिता। स्मर्त्ता। गुणोऽर्तीत्यत्र
नित्यग्रहणानुवृत्तेः कृत्त्वान्नेह गुणः। संस्क्रियते। अनिदितामिति नलोपः। स्रस्यते। इदितस्तु नन्द्यते। सम्प्रसारणम्। इज्यते। अयङ् यि
क्ङिति। शय्यते। तनोतेर्यकि। ६।४।४४॥ आकारोऽन्तादेशो वा स्यात्। तायते। तन्यते। ये विभाषा। जायते। जन्यते॥
ते॥ चिण्वदिटिति। एवं तस्य धातोरुपदेशाभावेऽप्युपदेशयोः जिज्ञास्याख्यानाच्चिण्वदिडिह प्रवर्तत एवेति भावः। परत्वादिति। चिण्वदिडपेक्षया नि
त्यत्वादिति। न च कृते चिण्वदिटि वृद्धिप्रवृत्त्या गुणस्य नित्यत्वं नेति शङ्क्यं। अचो ञ्णितीति वृद्धिं बाधित्वा परत्वात् गुणे रपरत्वे च पश्चादत उपधाया इति॥

वृद्धिप्रवृत्त्या गुणस्यानित्यत्वात् । न पायात् । उपदेशग्रहणादिति । तस्मा[illegible]व्यादुपदेशे योऽच् तदन्तत्वं ऋधातोर्व्यपदेशिवद्भावेन यत्नस्थितं तदा दायपस्य तार
व्यारितेत्यादौ चिण्वदिट् प्रवर्तते इति भावः । नन्वेवं स्मारितेत्यादि न सिध्येत् स्मृ इत्यस्य उपदेशे यो अच् ऋदन्तत्वाभावात् । उपदेशेऽजन्तानामिति व्याख्याने
तु एवं तस्य न स्यादिति उक्तत्वादिति चेत् । सत्यं । अत एव पारितोषान्मनोरमायामुक्तं मस्तु वा उपदेशे यदजन्तं तस्येति व्याख्यानम् अंगस्येति व्यधिकरणष
ष्ठी । अंगावयवस्याजन्तस्येत्यर्थ इति । एवं च लिङ्जन्तेपि शमितेत्यादौ चिण्वदिट् सिध्यति व्यपदेशिवद्भावेन लिङ्जेवणिजन्तस्तदवयवं कं शमीत्यंग
मित्याश्रयणात् । आरितास्मारितेत्याद्यपि सिध्यति । ऋ धातुः स्मृधातुश्चोपदेशेऽजन्तस्तदवयवकं भवत्यार् स्मारित्यंगमिति दिक् । नित्यग्रहणानुवृ
त्तेरिति । निस्वंक्ष्दसीति सत्त्वात् । काशिकायां तु सुटो बहिरंगलक्षणस्यासिद्धत्वादभक्तत्वाद्वा संयोगादित्वमंगस्य नास्तीति गुणोत्र न प्रवर्तते इत्युक्तं ।

तपोनुतापे च । ३।१।६५। [illegible]स्वव्रेश्चिण्न स्यात्कर्मकर्तर्यनुतापे च । अन्वतप्त पापेन । पापकर्तृ नाभ्याहत इत्यर्थः । कर्मणि तु लुङ् । अन्वतापि
पेन पुंसा कर्त्रा [illegible]त्यर्थः । चुमास्थेतीत्वम् । दीयते । धीयते । आदेच इत्यात्वं शितीति कर्मधारयादित्संज्ञक शकारादौ निषेधः ॥ ए
शआदिशित्वाभावेनास्मिन्नात्वम् । अजग्ले । आतो युक् चिण्कृतोः ७।३।३३। आदन्तानां युगागमः स्याच्चिणि ञिति णिति कृति च । अदायि ।

सुट्कात्पूर्व इति विधीयमानः कभक्तो नत्वंगभक्तस्तेनासंयोगाद्येव अंगमित्यभक्तत्वादित्यस्याशयः ॥ एदाता । दायिषीष्ट । दासीष्ट । अदायि ॥
तनोतेर्यकि विड् नोरिति सूत्रादादितिये विभाषेत्यतो विभाषेति चानुवर्तते । यकि किं । ततन्यते ॥ ❋ ॥ तपोनु । चकारेणाचः कर्मकर्तरीत्यतः क
र्मकर्तरीत्येदनुकृष्यते कर्मण्युदाहरणमिति ध्वनयति अभ्याहत इत्यर्थ इति । भावेपीदमुदाहरणमित्याह । पापेन पुंसेति । अविवक्षितकर्मकत्वाप
[illegible]चीत्यर्थः । कर्मकर्तरि तु तत्प्रक्रियायामुदाहरिष्यति । आतो युक् । अचो ञ्णितीत्यतो ञ्णितीत्यनुवर्तते तच्च कृतो विशेषणं न तु चिणो
[illegible]भिचारात् । चिण्कृतोः किं । चौडिः । बालाकिः । बाह्वादित्वादिञ् । ददौ । ञ्णितीति किं । पानीयं । दानीयं ॥ ॥ ॥

कौ· यद्यपि हनो वध लिङि इत्यत्रापि आर्द्धधातुकाधिकारादार्धधातुके लिङि इत्यपि समानं तथापि लिङीति परत्वसाधारणं सीयुट्तु आत्मनेपद एवेति विशेष
·त· विहितत्वमस्तीति भावः। अहसातामिति। चिण्वदिटोः भावे हनः सिजिति कित्वादनुदात्तोपदेशेत्यनुनासिकलोपः। चिण्विधादेशस्य दृष्टत्वाच्चिण्वत्भावे
३१ नस्यादिषु प्राप्तिमाशंक्य परिहरति न चेत्यादिना। अदर्शिषातामिति। न दृश इति क्सस्य निषेधादिह सिचि चिण्वदिट्। सिचः कित्वादिति। लिङ्सिचावा
त्मनेपदेष्वित्यनेनाऽलत्वमिति। अचि विभाषेति गिरतेरेफस्य लत्वं षट्त्वाढत्वमिति। विभाषेट इत्यनेन षण्णां ढत्वे द्वादशाहिलत्रयं चेति। अनचि चेति
द्वादशानां मध्ये षण्णां ढस्य षण्णां धस्य च द्वित्वे चतुर्विंशतिः। मय इति पंचमी यण इति षष्ठीति पक्षे वकारस्य द्वित्वे त्वष्टचत्वारिंशत्। अनचि चेति

चिण्णमुलोर्दीर्घोऽन्यतरस्याम्। ६।४।९३। चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात्। प्रकृतो मितां ह्रस्व एव तु न विक
ल्पितः। एयन्तानां ह्रस्वविधौ तस्यासिद्धेः। दीर्घविधौ हि णिलोपो न स्थानिवदिति दीर्घः सिद्ध्यति। ह्रस्वविधौ तु स्थानिवत्त्वे दुर्वारम्। भाष्ये
तु पूर्वत्रासिद्धे न स्थानिवदित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चर्प्रत्याख्याताः। णाविति जातिपरो निर्देशः। दीर्घग्रहणं त्विह
मास्त्विति तदाशयः। शमिता। शामिता। शमयिता। शामिष्यते। शमिष्यते। शमयिष्यते। यङन्तान्णिचि। शंशम्यते। शंशमिता। शंशामिता
शंशमयिता। यङ्लुगन्तान्णिच्यप्येवम्। भाष्यमते तु यङन्तान्णिचि स्वरादिद्विर्दीर्घो नास्तीति विशेषः। ण्यन्तत्वाभावे शम्यते मुनिना॥ ॥

मकारस्य द्वित्वे षण्णवतिः। ढवमानामिति। अचो रहाभ्यामिति ढस्य द्वित्वे द्वयं। द्वयोरपि वस्य यणो मय इति द्वित्वे चत्वारि। चतुर्णामपि मस्य अनचि चेति द्वि
त्वेऽष्टौ॥ ॥ चिण्णमुलोः। शामितेत्यादौ जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मित्त्वे नमितामुपधाया नित्यं ह्रस्वे प्राप्ते दीर्घोऽनेन विकल्प्यते। एयन्तानामेवेति णिलोपस्य
स्थानिवत्त्वेन व्यवधानादिति भावः। दीर्घः सिध्यतीति। न पदान्तेति निषेधादित्यर्थः। ननु णिपादौ स्थिते दीर्घे कर्तव्ये स्थानिवत्त्वाभावः पूर्वत्रासिद्धमित्यनेनैव सि
द्धे तत्रैव ग्रहणं स्योपयोगाभावे पि एयन्तानां चिण्णमुलोरिति दीर्घकर्तव्ये स्थानिवत्भावनिवारणाय दीर्घग्रहणमावश्यकमित्यत आह॥ ० ॥ १३२

…तिपरत्वेन ईश् इति। इदं मास्त्विति। ह्रस्वविकल्पेन णौ वृद्धं सिध्यतीति भावः। वस्तुतस्तु चिण्णमुलोरिति सूत्रे दीर्घग्रहणं कर्तव्यमेव। तथा हि। हेडृ अना-
दरे घटादिः। मितां ह्रस्व इति कर्तव्ये एवं च हेडयति अत्र चिण्णमुलोः कृतयोः ह्रस्वविकल्प्यमाने अहिडि अहेडि इति स्यात्। दीर्घे तु अहिडि अहीडि इति
भवति। एवं चात्रैव सूत्रे कैयटे स्पष्टा। शंशामितेत्यादि। चिणि। अशशामि। अशंशामि। णमुलि शशमंशशमं शशामंशशामम् इत्यादि द्रष्टव्यं। दीर्घो नास्तीति॥

नोदात्तोपदेशस्य मान्तस्यानाचमेः ।७।३।३४॥ उपधाया वृद्धिर्न स्यात् चिणि ञ्णिति कृति च। अशमि। अदमि। उदात्तोपदेशस्येति किम्।
अगामि। मान्तस्येति किम्। अवादि। अनाचमेः किं। अचामि। अनाचमिकमिवमीनामिति वक्तव्यम्। चिणि आयादय इति णिङ्। भावे अका-
मि। णिङ्णिचोरभावे अकामि। अवामि। वध हिंसायाम्। हलन्तः। जनिवध्योरिति न वृद्धिः। अवधि। जाग्रोऽविचिण्णल्ङित्स्विति गुणः। अजा-
गारि। भञ्जेश्च चिणि ।६।४।३३॥ नलोपो वा स्यात्। अभाजि। अभञ्जि। विभाषा चिण्णमुलोः ।७।१।६९॥ लभेर्नुमागमो वा स्यात्। अलम्भि। अ-
लाभि। व्यवस्थितविभाषात्वात् प्रादेर्नित्यं नुम्। प्रालम्भि। द्विकर्मकाणां तु। गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्। बुद्धिभक्षार्थयोः
शब्दकर्मणां च निजेच्छया। प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः। गौर्दुह्यते पयः। अजा ग्रामं नीयते। ह्रियते। कृष्यते। उह्यते।
बोध्यते माणवकं धर्मः। माणवको धर्ममिति वा। देवदत्तो ग्रामं गम्यते। अकर्मकाणां कालादिकर्मकाणां कर्मणि भावे च लकार इष्य-
ते। मासो मासं वा आस्यते देवदत्तेन। णिजन्तात्तु प्रयोज्ये प्रत्ययः॥ मासमास्यते माणवकः॥ इति भावकर्मप्रक्रिया॥ ॥

पञ्जेऽल्लोपस्य स्थानिवत्त्वेन णिच्परत्वाभावादुपधादीर्घस्योपधाह्रस्वाप्रवृत्तेः। तथा च फलभेदाद्दीर्घग्रहणप्रत्याख्यानं न युज्यत इति भावः। शम्य-
ति मुनिनेति। अकर्मकत्वात् भावे लः॥ ॐ ॥ नोदात्तोपदेशस्य। ञिति कृति। कृति किं। शमः दमः। घञ्। णिति कृति शमकः दमकः। ण्वुल्। उपदेश इति किं। शमो-
ऽपि नपि कृते वर्ज्यमानस्वरेणोदात्तत्वाभावान्निषेधो न स्यात्। कथं तर्हि हरेर्यदक्रामि पदैकैकेन खमिति श्रीहर्षप्रयोग इति चेत्। अत्राहुः॥

कर्मणः क्रियेति। सौकर्यातिशयं द्योतयितुमित्यनुषंगः। प्रायेणेति। येभिदिच्छिदिप्रभृतय एककर्मकास्ते अकर्मकाः। ये तु द्विकर्मकास्ते सकर्मका इति भावः। अकर्म-
कत्वस्य फलमाह। भावे कर्तरि चेति। भावे चाकर्मकेभ्य इत्युक्तत्वादिति भावः। द्विकर्मकेषु कर्मणः कर्तृत्वविवक्षायामुदाहरणं। मथ्नाति सागरः। मृतः। स्वयं प्रदुग्धे

पयस्तु सौकर्य्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते। स्वव्यापारे स्वतन्त्रत्वात्। तेन पूर्वं करणत्वादि-
सत्वेपि सम्प्रति कर्तृत्वात्कर्तरि लकारः। साध्वसिश्छिनत्ति। काष्ठानि पचन्ति। स्थाली पचति। कर्म्मणस्तु कर्तृत्वविवक्षायां प्रायः सकर्म्मका अपि प्राये-
णाकर्मकास्तेभ्यो भावे कर्तरि च लकाराः। पच्यते ओदनेन। भिद्यते काष्ठेन। कर्तरि तु। कर्म्मवत्कर्म्मणा तुल्यक्रियः। ३। १। ८७। कर्मस्थया क्रियया
तुल्यक्रियः कर्ता कर्मवत्स्यात्। कार्यातिदेशोयम्। तेन यगात्मनेपदचिण्चिण्वदिटः स्युः। कर्तुरभिहितत्वात्प्रथमा। पच्यते ओदनः। भि-
द्यते काष्ठम्। अपाचि। अभेदि। ननु भावे लकारे कर्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न। लकारवाच्य एव कर्ता कर्मवत्। लिङ्याशिष्यङि-
ति द्विलकारकाल्ल इत्यनुवृत्तेः। भावप्रत्यये च कर्तुर्लकारेणानुपस्थितेः। अत एव कृत्यक्तखलर्थाः कर्मकर्तरि न भवन्ति किन्तु भाव एव। भे-
त्तव्यं कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनं च। सैवेदानीं कर्तृस्था न तु तत्तुल्या। सत्यं। कर्मत्वकर्तृत्वावस्थाभे-
दोपाधिकं तत्समानाधिकरणक्रियायां भेदमाश्रित्य व्यवहारो। कर्मणेति किम्। करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा
भूत्। किञ्च। कर्तृस्थक्रियेभ्यो मा भूत्। गच्छति ग्रामः। आरोहति हस्ती। अधिगच्छति शास्त्रार्थः। स्मरति श्रद्धाति च। यत्र कर्मणि क्रियाकृतो
विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु पचावाच्छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया। न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्य-
मुपलभ्यते। करोतिरुत्पादनार्थः। उत्पत्तिश्च कर्मस्था। तेन कारिष्यते घटः स्वादि। यत्नार्थत्वे तु नैतत्सिद्ध्येत्। ज्ञानेच्छादिवद्यत्नस्य कर्तृस्थत्वात्।

स्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी। प्रदुग्धे इत्यत्र कर्मवत्कर्मणेति प्राप्तस्य सकर्मकाणामिति निषेधे तु हि पच्योरिति प्रतिप्रसूतस्य यको न दुह

उ
-कौ·
ा·न·
२३४

स्तुनमामिति निषेधः। उक्तप्रयोगानुरोधात् द्विकर्मकेषु गौणस्यैव कर्मणः कर्तृत्वविवक्षा न मुख्यस्येत्याहुः। अत्रेदमवधेयं। अधिकरणत्वाविवक्षायां व्रजो गौ-
णकर्मेति रुणद्धि व्रजो गां स्वयमेवेति भवति। यदा तु व्रजस्य न कर्मत्वं तदा मुख्यकर्मणोऽपि कर्तृत्वविवक्षा भवति। रुध्यते व्रजे गौः स्वयमेवेति। तथा गोरपादान-
त्वविवक्षायां गौर्दुह्यते पयः स्वयमेवेत्यादि। कर्मवत्कर्मणा। वत्करणं किमर्थं। यथा अत्र ब्रह्मदत्ते प्रयुज्यमानो ब्रह्मदत्तशब्दः ब्रह्मदत्तवत् इत्यर्थे वर्तते तथा
कर्मेत्युच्यमानेऽपि कर्मवदित्यर्थलाभात्। सत्यं। कर्मणा तुल्यक्रियः कर्ता कर्मेत्युच्यमाने कर्मसंज्ञक इत्यर्थः स्यात्। तथा हि सति अकर्मकव्यपदेशाभावात् भा-
वे लकारो न स्यात् किंतु कर्मणि स्यात्। पच्यते ओदनः भिद्यते काष्ठमिति। यद्यप्ययं प्रयोगः सिद्धान्ते इष्ट एव तथापि पच्यते ओदनेन भिद्यते काष्ठेनेति भावे ना-
स्यादिति बोध्यं। कर्मशब्देनात्र कर्मस्थक्रिया लक्ष्यत इत्याह। कर्मस्थयेति। कर्मकारकस्थयेत्यर्थः। कर्तरि शबित्यतः कर्तरीत्यनुवर्त्य प्रथमया विपरिणम्यते
स च विशेष्यसमर्पक इत्याह। तुल्यक्रियः कर्तेति। कार्यातिदेशोऽयमिति। यद्यपि शास्त्रातिदेशेऽपि लक्ष्यं सिध्यति तथापि शास्त्रस्यापि कार्यार्थतया मुख्यत्वात् कार्याति-
देश एवाश्रितः। भावे लकारे इति। तत्र कर्तुरनभिहितत्वादिति भावः। द्विलकारकादिति। व्यत्ययो बहुलं लिङ्याशिष्यङिति संहितया पाठेऽनुस्वारस्य परस-
वर्णेन जातेन लकारेणासौ परे लद्वयमित्यर्थः। तेन लकारवाच्यः कर्ता कर्मवदित्यर्थलाभाद्यगादिकमेव भवति न तु द्वितीयेत्यभिमतसिद्धिः। यत्र लकार-
वाच्यः कर्ता तत्रैव कर्मवत्त्वमिति व्युत्पादनस्य फलमाह। अत एवेति। न भवतीति। लकारेणैव कर्मकर्तुरुपस्थानात् कृत्यादीनां प्रसक्तिर्नास्तीत्युक्तार्था-
नां प्रयोगाणां लविधेः पूर्वं तु सुतरां नास्ति लकारोपस्थाप्यकर्तुरभावेन कर्मवत्त्वाभावादिति भावः। अत्रेदं बोध्यं। कृत्यक्तखलर्था इत्यत्र क्तग्रहणं त्य-
क्तुमुचितं तस्य कर्मकर्तरि दृष्टत्वात् भिन्नः कुसूलः स्वयमेवेति। वक्ष्यति च स्वयमपि सिनोतेर्ग्रासकर्मकर्तृकस्येति वार्तिके सिनो ग्रासः स्वयमेवेति। ननु ग्रासं पर्या-
कर्मकेष्वत्राविवक्षितकर्मणोऽकर्मका इति न गृह्यन्ते दत्तवान् पक्ववान् इत्यर्थे दत्तः पक्वः इत्यापत्तेरिति चेत्। अत्राहुः। सिनोतेर्ग्रासकर्मकर्तृकस्येति ह
निष्ठातकारस्य नकारविधानसामर्थ्यादविवक्षितकर्माणोऽपि क्वचित् गृह्यन्ते। अन्यथा निष्ठातकारस्य न लभ्येत तेन प्रसिनो ग्रासः स्वयमेव भिन्नः कुसु-

स्वयमेवेत्यादि संगच्छते इति। अत्र केचिदाहुः इति। लकारवाच्यस्यैव कर्तुः कर्मवत्त्वे कर्मवत् कर्मणेत्यत्र वतिग्रहणं व्यर्थं। न च कर्तुः कर्मसंज्ञायां भावे लकारो
निस्यादित्युक्तमिति वाच्यं। कर्मणः कर्तृत्वविवक्षायां धातुरकर्मक इत्यकर्मकात् कर्तरीव भावे लकारस्य निर्बाधत्वात्। लकारवाच्यस्य कर्मसंज्ञाया
मपि केवलकर्तुस्तदनभ्युपगमात्। नहि भावे लकारः कर्तारं वक्ति। न च वत्करणाभावे कर्तुः कर्मसंज्ञायां कर्तृव्यपदेशाभावात् नमते दण्ड इत्यत्र
न दुहस्नुनमामिति यको निषेधेपि ज्ञापनस्यादुत्करणात्रनु कर्तृकार्यमपि स्यादिति वाच्यं। एकसंज्ञाधिकारादन्यत्र संज्ञाद्वयसमावेशादिष्टसिद्धे
रिति। ननु तत्तुल्येति। तुल्यत्वं हि सादृश्यं तच्च भेदनिबंधनं। न च प्रकृते भेदोस्तीति। कर्मणः कर्तृत्वविवक्षायां कर्मस्थफलस्य क्रियायाश्च एव कर्तृस्थत्वात्तान
याच सूत्रमिदमसमंजसमिति भावः। वास्तविकभेदाभावेप्यौपाधिकभेदोस्तीत्याह। कर्मत्वेति। कर्मत्वकर्तृत्वावस्थयोर्भेदसत्त्वे भेदौपाधिकं अवस्था
भेदसमानाधिकरणं क्रियाभेदमाश्रित्येत्यर्थः। एवं चावस्थाभेदेन क्रियाभेदात् कर्मस्थक्रियातुल्यक्रियत्वं कर्तुरस्तीति भावः। करणाधिकरणाभ्यां
मिति। तुल्यक्रियः कर्तेत्येतावदुच्यमाने असिना छिनत्ति स्थाल्यां पचतीत्यादौ करणाधिकरणयोर्व्यापारस्य एवमिदानीमसिः छिनत्ति स्थाली पच
तीत्यादौ कर्तृस्थ इत्यतिप्रसंगः स्यात् तन्माभूदित्यर्थः। न च कर्मत्वावस्थायां विक्लित्यादिरिव करणत्वाद्यवस्थायामसिस्थाल्योर्व्यापारो वस्तुतः सन्नपि
धातुनानोपात्त इति कथमतिप्रसंग इति वाच्यं। सादृश्यप्रतियोगिक्रियाया धातूपात्तत्वेनाविशेषितत्वात्। न त्वेतस्मिन् सूत्रे धातूपात्तक्रियया तुल्या।
क्रिय इत्युक्तमस्ति येनातिप्रसंगो न भवेत्। ननु तुल्यक्रियः कर्ता कर्मवत् स्यादित्युक्ते केनेत्याकांक्षायामनेककारकोपस्थितावपि कर्मवदिति प्रसंगस
त्त्वात् कर्मणेति लभ्यत एवेत्यत आह। किं चेति। अधिगच्छतीत्यादि श्लोकस्योत्तरार्द्धं तु यत्कृपावशात् तस्मै नमो गुरवे सदा। ननु फलव्यापारश्च धा
त्वर्थः स एव क्रियाशब्दवाच्यः। तत्र व्यापाराश्रयः कर्ता फलाश्रयस्तु कर्म। एवं च दचिभिदिप्रभृतीनां गमिरुहिप्रभृतीनां च सकर्मकत्वे फलस्यैव कर्मनिष्ठ
त्वे च तुल्ये कर्तृस्थभावकागम्यादय इति कथं ज्ञातव्या इत्यत आह। यत्र कर्मणीति। ग्रामोब्धिति। आरूढानारूढहस्तिषु अधिगतो निधिगनश्यस्वार्थं

कौ॰ स्विन्नादावपि वैलक्षण्यं नोपलभ्यत इति बोध्यम्। कारिष्यत इति। स्यसिच्सीयुट्तासिष्विति वैकल्पिकश्चिण्वदिट्। पक्षे ऋद्धनोः स्ये इति इट्। करिष्यते। एवं लृङि। अ-
त॰ कारिष्यत अकरिष्यत। सिचश्चैवं चिण्वदिटि अकारिषाताम्। पक्षे अकृत। सीयुटश्चैवं चिण्वदिटि। कारिषीष्ट। पक्षे कृषीष्ट। तासि तु कारिता कर्ता। चक्रे चिणो लुक्। क्रियते
३५ घटः स्वयमेव। अकारीत्यादि। नैतत्सिद्ध्येदिति। कर्मवत्कर्मणेति कर्मवत्त्वेन सिध्येदित्यर्थः। एतेन पचति पाकं करोतीति विवरणादाख्यातस्य यत्ने शक्तिरिति नैयायिकोक्तिः परास्ता। करोतेर्यत्नार्थत्वे तु यतत इतिवत्सकर्मकतापि न स्यादिति॥ ॥ एतेनेति। ज्ञानस्य कर्तृस्थत्वाभ्युपगमेनेत्यर्थः। यगभावादिति। सति तु यकि अनुव्यवसीयमान इति स्यादिति भावः। ओलोप इति। ओतः श्यनीत्यनेन। ननु कर्मवत्त्वाभावे कथमिह श्यन् जित्यत आह। नाच्छील्यादिति

एतेन अनुव्यवस्यमानेऽर्थे इति व्याख्यातम्। कर्तृस्थत्वेन यगभावाच्छ्यनि कृते ओलोपे च रूपसिद्धेः। नाच्छील्यादावयच्वान्... आत्मनेपदं सकर्मकाणां प्रतिषेधो वक्तव्यः। अन्योन्यं स्पृशतः। अजा ग्रामं नयति। दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्। न दुहस्नुनमां यक्चिणौ। ३।१।८९। एषां कर्मकर्तरि यक्चिणौ न स्तः। दुहेरनेन यकः एव निषेधः। चिण् तु विकल्पिष्यते। शप्लुक्। गौः पयो दुग्धा। अचः कर्मकर्तरि। ३।१।६२। अजन्तात्परस्य च्लेश्चिण् वा स्यात् कर्मकर्तरि तशब्दे परे। अकारि। अकृत॥

॥ ११ नन्विति। श्यन् च न भवतीत्यर्थः। देवदत्तयज्ञदत्तावन्योन्यं स्पृशत इत्यत्र तयोरेकैककर्मत्वं कर्तृत्वं चास्तीति कर्मस्थक्रियायाः कर्तृस्थत्वात् कर्मवद्भावप्राप्तिमाशङ्क्याह। सकर्मकाणामिति। न चात्र देवदत्तो यज्ञदत्तं स्पृशति यज्ञदत्तश्च देवदत्तमिति क्रियाभेदोऽवश्यमाश्रयितव्यः। तथा च स्वनिष्ठक्रियां प्रति कर्तृत्वं इतरक्रियां प्रति तु कर्मत्वं भवेत्। अन्यथा द्वयोरपि कर्तृत्वमेव स्यात्। इमौ गां गां स्पृशत इत्यत्र यथा। एवं च कर्मस्थक्रियायाः कर्तृस्थत्वाभावात् कर्मवद्भावो न प्राप्नोति। न च संयोगस्योभयनिष्ठत्वात् कर्मस्थफलस्य कर्तृस्थत्वमप्यस्त्वेवेति शङ्क्यम्। तत्तन्निरूपितसंयोगस्य भिन्नत्वात्। अन्यथा फलव्यापारयोरेकाश्रयत्वे सकर्मकत्वमेव न लभ्येत। किं च। रुहिगम्योः कर्तृस्थक्रियत्वादारोहति हस्ती गच्छति ग्राममित्यत्र कर्मवद्भावो नेति भाष्यकैयटादिसंमतम्। तथा च संयोगरूपफलस्य सर्वत्र तुल्यतया रुहिगमिभ्यां स-

पि दैवमस्पृं दुरुपपादमिति नात्र कर्मवत्त्वप्रसक्तिरित्युदाहरणांतरमाह। अजेति। ग्रामं नयतीति। इह प्रतिषेधाभावे यक् स्यात् क्रियाफलस्य कर्तृगामित्वे
प्यात्मनेपदं स्यादिति भावः। नन्विहापि कर्मणि क्रियाकृतो विशेषो नोपलभ्यत इति कर्मस्थक्रियत्वं दुरुपपादमिति चेन्न। अत्राहुः क्रियाकृतविशेषोप
लंभानुकूलं भवतु उद्देश्यतापि नियामिका। यत्र कर्मस्थांशस्योद्देश्यता सा कर्मस्थक्रिया यत्र तु व्यापारांशस्य सा कर्तृस्थेति। तथाहि। दर्शनाद्ग्रहणाभ्यां विषयेष्व
गमृते च विशेषानुपलंभात् कर्तृस्थता। उद्देशानुरोधाच्च। अहं पश्येयमित्युद्देशेन त्वयं विषयो भवत्विति। एवमहमुपरि गच्छेयमित्युद्देशेन तु हस्तिनो न्य
ग्भावो भवत्विति। ऊर्ध्वदेशसंयोगानुकूलव्यापारविशेष उपरिगमनं तदेव रुहेरर्थः। नतु न्यग्भावमात्रं। वृक्षस्य शाखां हस्ताभ्यां सन्नमयत्यपि भूमिष्ठे पु
रुष आरोहतीत्यप्रयोगात्। अत एव हियद्धि तु परं रुदसीत्यत्र भाष्यं रुहिर्गत्यर्थ इति। अत एव चारोहंति हस्तिनं हस्तिपकाः तानारोहयति महामात्र
इत्यादिप्रयोगे स्वलोकर्तुर्लोकर्मत्वं संगच्छते। पचिभिद्योरिति। सुविक्लृप्तिर्द्विधा भवनरूपो विशेषः कर्मणि दृष्टस्तदुद्देशेनैव कारकव्यापार इति कर्मस्थक्रि
यत्वात् पच्यते ओदनः भिद्यते काष्ठमित्यत्र कर्मवत्भावो भवत्येव अजां ग्रामं नयतीत्यत्रापि कर्मस्थांशस्य संयोगस्योद्देश्यता न तु व्यापारांशस्येति कर्म
वत्भावे प्राप्ते प्रतिषेधोऽयमावश्यक इति दिक्। दुहिपच्योरिति। द्विकर्मकत्वादनयोरेकस्य कर्मणः कर्तृत्वविवक्षायामपि सकर्मकत्वान्निषेधप्राप्ते
यमारंभः। गोः पयो दुग्धे इति। अत्र कर्मवत् भावेन आत्मनेपदं नित्यं। गौणे कर्मणि दुह्यादेरित्युक्तत्वात् मुख्यकर्मणः कर्तृत्ववि[illegible]पयो गां
दुग्धे इति नोदाहृतमित्याहुः। एवं च प्रधाने नीहृकृष्वहामित्युक्तत्वात् तुल्यन्यायेन न्यादीनां मुख्यकर्मण एव कर्तृत्वविवक्षेति फलितं। अचः कर्माचि
णे पद इत्यतश्चिण् ते शब्दावनुवर्तेते दीपजनेत्यतोऽन्यतरस्यामिति च तदाह। अजंतादित्यादि। अचः किं। अभेदि काष्ठमत्र नित्यं चिण्। कर्मकर्त
रि किं। अकारि घटः कुलालेन। अत्रापि नित्यमेव॥

३·कौ· दुहश्चा। कर्मकर्तरीत्येव। अरोहि गौर्गोपेनेत्यत्र तु स्यादेव। उदुंबरः फलं पचति। कालः उदुंबरं फलं पचतीति स्थिते। गौणकर्मणा उदुंबरस्य कर्तृत्वविवक्षायामिह कर्म
ी·त· मवत्भावः। ननु द्विकर्मकेषु पचेरग्रहणात् कः पाठ इति यद्वदन्ति तेषामयं ग्रंथः कथं संगच्छते इति चेत्। अत्राहुः। उदुंबरः फलं पचतीत्यत्र कर्मवत्कर्मणा तुल्यक्रि
१३६ यात् दुहिपच्योरित्यनेन कर्मवत्भावो बहुलं विधीयते सृजियुज्योरिवेति न काप्यनुपपत्तिरिति। सृजियुज्योः श्यंस्तु। श्यनो नित्यमाद्युदात्तार्थं। यकि तु नाद्यन्

दुहश्च। ३।१।६३॥ अदोहि। पक्षे क्तः। लुग्वेति पक्षे लुक्। अदुग्ध। अधुक्षत। उदुम्बरः फलम्पच्यते। सृजियुज्योः श्यंस्तु। अनयोः स
कर्मकयोः कर्त्ता बहुलं कर्मवत्। यगपवादः श्यन्। स्वाच्चयस्त्यर्थः। सृजेः श्रद्धोपपन्ने कर्त्तर्येवेति वाच्यम्॥ सृज्यते स्रजं भक्तः। श्रद्धया निष्पादयतीत्यर्थः।
असर्जि। युज्यते ब्रह्मचारी योगम्। भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्॥ भूषावाचिनां किरादीनां सनन्तानां च यक्चिणौ चिण्वदिट्च नेति
वाच्यमित्यर्थः। अलङ्कुरुते कन्या। अलमकृत। अवकिरते हस्ती। अवाकीर्ष्ट। गिरते। अगीर्ष्ट। आद्रियते। आदृत। किरादिस्तु दात्तिर्ग्रणोः। चिकी
र्षते कटः। अचिकीर्षिष्ट। इच्छायाः कर्तृस्थत्वेपि करोतिक्रियापेक्षमिह कर्मस्थक्रियात्वम्॥ न रुधः। ३।१।६४॥ अस्माच्चिण्न। अवारु
द्ध गौः। कर्म्मकर्तरीत्येव। अवारोधि गौर्गोपेन। तपस्तपः कर्मकस्यैव। ३।१।८८॥ कर्त्ता कर्मवत्स्यात्। विध्यर्थमिदं। एवकारस्तु व्यर्थ एवेति वृत्त्य
नुसारिणः। तप्यते तपस्तापसः। अर्जयतीत्यर्थः। तपोनुतापे चेति चिण्निषेधात् सिच्। अतप्त। तपः कर्म्मकस्येति किं। उत्तपति सुवर्णं सुव
र्णकारः। न दुहस्नुनमां यक्चिणौ। प्रस्नुते। प्रास्नाविष्ट। प्रास्नोष्ट। नमते दण्डः। अनंस्त। अन्तर्भावितण्यर्थोऽत्र नमिः। यक्चिणोः प्रतिषेधे हेतु
दात्तेत्यादिना लसार्वधातुकानुदात्तत्वे कृते यक उदात्तत्वं श्रूयेत। श्रद्धोपपन्न इति। अश्रद्धायुक्ते कर्तरि तु यगेव। भूषाकर्मेति। कर्मशब्दः क्रियावाचीत्या
ह। भूषावाचिनामिति। अन्यत्रेति। आत्मनेपदादन्यस्य निषेधः आत्मनेपदमेव भवतीत्यर्थस्तदेतदाह अवाकीर्ष्टेति। लिङ्सिचोरिति वेट्। आद्रियत तु
ति। तुदादित्वाच्छेरिङ् शयग्लिङ्क्ष्विति रिङि इयङ्। आदृतेति। उश्चेति कित्वं। ह्रस्वादङ्गादिति सिचो लोपः। न रुधः। चिण् ते पद इत्यतश्चिणनुवर्तते

मूं॰ णिश्रिब्रूञामुपसंख्यानम्। कारयते। अचीकरत। उच्छ्रयते दण्डः। उदशिश्रियत। चिण्वदिट् तस्यापि वा। कारिष्यते। उच्छ्रयिष्यते। ब्रूते कथा। अ-
वोचत। भारद्वाजीयाः पठन्ति। णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्॥ पुच्छमुदस्यति। उत्पुच्छयते गौः। अन्तर्भावितण्यर्थतायाम्
उत्पुच्छयति गाम्। पुनः कर्तृत्वविवक्षायाम्। उत्पुच्छयते गौः। उदपुपुच्छत। यक्चिणोः प्रतिषेधाच्चङ्। श्रन्थिग्रन्थ्यो राधृषीयत्वाण्णिजभावपक्षे
ग्रहणम्। ग्रन्थति ग्रन्थम्। श्रन्थ्यमिमे खल्वन्ये वदन्ति। ग्रन्थ्यते ग्रन्थः। अग्रन्थिष्ट। श्रन्थते। अश्रन्थिष्ट। क्रैयादिकयोस्तु। श्रथ्नीते। ग्रथ्नीते स्वयमेव। विकुर्व-
ते सैन्धवाः। वल्गन्तीत्यर्थः। किं शब्दकर्मणोऽकर्मकाच्चेति तङ्। अन्तर्भावितण्यर्थस्य तु नः प्रेषणस्यागो। विकुर्वते सैन्धवाः। व्यकारिष्ट। व्यकारिषाता-
म्। व्यकारिषत। व्यकृत। व्यकृषाताम्। व्यकृषत। कुषिरजोः प्राचां श्यन् परस्मैपदं च॥ ३।१।९०॥ अनयोः कर्मकर्तरि न यक् किन्तु श्यन् परस्मैपदं च
आत्मनेपदापवादः। कुष्यति। कुष्यते पादः। रज्यति। रज्यते वस्त्रम्। यगविषये तु नास्य प्रवृत्तिः। कोषिषीष्ट। रंक्षीष्ट॥ इति कर्मकर्तृप्रक्रिया॥ अभिज्ञा-
वचने लृट्॥ ३।२।११२॥ स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात्। लङोऽपवादः। स्मरसि कृष्ण गोकुले वत्स्यामः। एवं बुध्यसे चेतयसे इत्यादि-
योगेऽपि। तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवात्। न यदि॥ ३।२।११३॥ यद्योगे उक्तं न। अभिजानासि कृष्ण यद्वने अभुञ्ज्महि। विभाषा सा-
काङ्क्षे॥ ३।२।११४॥ उक्तविषये लृड्वा स्यात्। लक्ष्यलक्षणभावेन साकाङ्क्षश्चेदित्यर्थः। स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः। वासो लक्ष-
णं चारणं लक्ष्यम्। पक्षे लङ्। यच्छब्दयोगेऽपि नेति बाधित्वा परत्वाद्विकल्पः। परोक्षे लिट्। चकार। उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्य-
सुप्तोऽहं किल विललाप। बहु जगद पुरस्तात्तस्य मत्ता किलाहम्॥ अत्यन्तापह्नवे लिड् वक्तव्यः। कलिङ्गेषु वात्सीः। नाहं कलिङ्गान् जगाम। हशश्वतोर्ल-
ङ् च॥ ३।२।११६॥ अनयोरुपपदयोर्लिड्विषये लङ् स्यात् चाल्लिट्॥ इति हाकरोच्चकार वा। शश्वदकरोच्चकार वा। प्रश्ने चासन्नकाले॥ ३।२।११७॥

उ.
सि. कौ.
उ. त.
१३७

मू·

प्रष्टव्यः प्रश्नः। आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लड्लिटौ स्तः। अगच्छत् किम्। जगाम किं। अनासन्ने तु। कंसं जघान किम्। लट् स्मे। ३।२।११८। लि
टोऽपवादः। यजति स्म युधिष्ठिरः। अपरोक्षे च। ३।२।११९। भूतानद्यतने लट् स्यात् स्मयोगे। एवं स्म पिता ब्रवीति। ननौ पृष्टप्रतिवचने। ३।२।१२०। अन
द्यतनपरोक्ष इति निवृत्तम्। भूते लट् स्यात्। अकार्षीः किम्। ननु करोमि भोः। नन्वोर्विभाषा। ३।२।१२१। अकार्षीः किम्। न करोमि ना कार्षम्। अहन्नु क
रोमि। अहन्नु अकार्षम्। पुरि लुङ् चास्मे। ३।२।१२२। अनद्यतनग्रहणं मण्डूकप्लुत्यानुवर्त्तते। पुराशब्दयोगे भूतानद्यतने विभा लुङ् चाल्लट् न तु स्म
योगे पक्षे यथाप्राप्तम्। वसन्तीह पुरा छात्राः। अवात्सुः। अवसन्। उषुर्वा। अस्मे किम्। यजति स्म पुरा। भविष्यतीत्यनुवर्त्तमाने। यावत्पुरानिपातयोर्ल
ट्। ३।३।४। यावद्भुङ्क्ते। पुरा भुङ्क्ते। निपातावेतौ निश्चयं द्योतयतः। निपातयोः किम्। यावद्दास्यते तावद्भोक्ष्यते। करणभूतया पुरा यास्यति। विभाषा
कदाकर्ह्योः। ३।३।५। भविष्यति लट् स्यात्। कदा कर्हि वा भुङ्क्ते। भोक्ष्यते। भोक्ता वा। किंवृत्ते लिप्सायाम्। ३।३।६। भविष्यति लड्वा स्यात्। कं कतरं
कतमं वा भोजयसि। भोजयिष्यसि। भोजयितासि वा। लिप्सायां किम्। कः पाटलिपुत्रं गमिष्यति। लिप्स्यमानसिद्धौ च। ३।३।७। लिप्स्यमानेनान्नादि
ना स्वर्गादिः सिद्धौ गम्यमानायां भविष्यति लड्वा स्यात्। योऽन्नं ददाति। दास्यति। दाता वा। स स्वर्गं याति। यास्यति। याता वा। लोडर्थलक्षणे च। ३।
३।८। लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानाद्धातोर्भविष्यति लड्वा स्यात्। कृष्णश्चेद्भुङ्क्ते त्वं गाश्चारय। पक्षे लट्लृटौ। लिङ् चोर्द्धमौहू
र्त्तिके। ३।३।९। ऊर्द्धम्मुहूर्त्तादूर्द्ध्वः ऊर्द्धमौहूर्त्तिकः। निपातनात्समासः। उत्तरपदवृद्धिश्च। ऊर्द्धमौहूर्त्तिके भविष्यति। लोडर्थलक्षणे वर्त्त
मानाद्धातोर्लिङ्लटौ वा स्तः। मुहूर्त्तादुपरि उपाध्यायश्चेदागच्छेत्। आगच्छति। आगमिष्यति। आगन्ता वा। अथ त्वं छन्दोऽधीष्व॥

अपकः कर्मकर्तरीत्यतोऽनुवर्तनादाह। कर्मकर्तर्येवेति। अतेप्रेति। तपस्तापस इत्यत्र न यज्यते। न दुहस्नु। ननु दोग्धिपर्यायत्वेन स्नौतेरपि हि कर्मकत्वान्नै
रूपकर्मणः कर्तृत्वविवक्षायामपि पयोरूपकर्मणो विद्यमानत्वात्सकर्मकाणां प्रतिषेधेन यक्चिणोः प्राप्तिरेव नास्तीति चेत्। अत्राहुः। वत्सादियोगेन भ
क्षीरप्रस्रवणानुकूला उत्कण्ठा स्नुधातोरर्थः सा च गोनिष्ठा। स्नुप्रस्रवणे इत्यस्यापि करणे स्नुटा प्रस्नूयते। नेनेति प्रस्रवणं सा चोत्कण्ठा। स्वयं प्रकुर्वध्यः स्वगुणैः
पलुनावसूयमानस्येव सूनिमेदिनीति। प्रयोगे उ भ स्नुना उत्कण्ठितेत्यर्थः वत्सो गां प्रस्नौतीति उत्कण्ठयति। अंतर्भावितण्यर्थोऽत्र स्नौतिः। गोः कर्तृत्वविवक्षायां
प्रस्नुते गौरिति। भास्ता विष्टुनि। चिण्वदिट् न च चिणि निषिद्धे चिण्वदिडपि न स्यादिति शंक्यं चिण्वदित्यनेन नहि चिणो वत्कार्यमतिदिश्यते। न च चिणं नेत्युक्त्वा
तिदेशो निषेद्धुं शक्यते येन चिण्वदिटो निषेधः स्यात्। प्रास्नोष्टेति। स्नुक्रमोरनात्मनेपदनिमित्त इति नियमाहूलादिलूसणाइएना। नमते दंड इति।
हन्नमितानमितयोर्विशेषदर्शनादुद्देशानुरोधाच्च कर्मस्थक्रियत्वमस्ति कर्मस्थांशस्य नमनस्य उद्देश्यत्वान्नतु तदनुकूलव्यापारस्येति कर्मवत्त्वमाव
स्यप्राप्तिरस्तीति भावः। अचीकरतेति। चिणि प्रतिषिद्धे णिश्रीति चङ्। णिश्रंथीति णेः सामान्यग्रहणस्य फलमाहुः। पुच्छमुदस्यतीत्यादि। पुच्छभांडे
तिलिङ्। आत्मनेपदविधौ योऽकर्मकस्तमुदाहरति। विकुर्वते सैंधवा इति। कुषिरजोः न दुहस्नुनमामित्यतो नेति वर्तते तदाहान्यगिनि। किंतु श्यन्निभ
नितस्मिन्नेव विषय इति भावः। न गिरा गिरेति चूपादिना दौरं कृत्वा हेयमित्यत्र गिरापर प्रतिषिध्यै गिरापरं विधीयमानं गिरापरस्थान एव यक्षा भवन्त्येवमिहा
पियकः प्रतिषेधं कृत्वा विधीयमानः श्यन् तदीयस्थान एव भवति। अतो व्याचष्टे यगविषये तु नास्त्येति। श्यना सन्नियोगशिष्टं परस्मैपदं श्यनभावेन भवती
त्यात्मनेपदमेवोदाहरति। कोपिषीष्टेति। कोषिष्यते चुकुषे अकोषि। अकोषिष्यत। रंस्यते। ररंजे। अरंजि। अरंस्यत इत्याद्यपि ह्येयं। श्यनपक्षे कुष्यतीत्यत्र नि
त्यंनु माभ्यक्पक्षे तु आच्छीनद्योरिति विकल्पः। स्वेरेविशेषो व्यास्येवा। इहप्रकरणे भिद्यते काष्ठं स्वयमेवेति व्यादौ प्रयुज्यते तत्र स्वयंशब्दः प्रकरणार्थको
यः। आत्मना करणेनेति। कर्त्रर्थत्वे तु कर्मणि णलः स्यात्। स्पृष्टं चेदं पदादौ॥ इति कर्मकर्तृप्रक्रिया॥ अभिज्ञा। भूते इत्यधिक्रियते अनद्यतने

कौ॰ लङ इत्यतः अनद्यतन इति वर्तते। अभिज्ञा स्मृतिः सा उच्यते बोध्यतेऽनेनेति विग्रहस्तदाह। स्मृतिबोधिनीत्यादि। वत्स्याम इति। अवसामेत्यर्थः। ए
त॰ ह्यम् गोधावतीत्यत्र वाक्यार्थरूपमृगकर्तृकधावनमिव स्मरसीत्यत्र गोकुलाधिकरणकास्मत्कर्तृकभूतानद्यतनवासो वाक्यार्थः कर्मकृष्णातिसं
१८ बोधनं स्मरणक्रियायां विशेषणं तथा चापूर्वोक्तनिवासकर्मकं कृष्णसंबोध्यकं स्मरणमिति फलितोऽर्थः। न यदि। लृट्प्रतिषेधे उत्सर्गो लङ्। वासो ल
क्षणमिति। प्रसिद्धत्वात् ज्ञापकमित्यर्थः। चीरणं लक्ष्यमिति। सहसा बुध्यनारोहोनुत्ताप्यं। पक्षे लङिति। वने अवसाम। गाः अचारयाम। यच्छब्दयोगेपीति। भ
ति। अत एव न यदीति योगात्पूर्वं विभाषा साकांक्ष इति न कृतमिति भावः। अत्यंतापन्हव इति। अपन्हवोऽपलापस्तत्र आत्यंतिकत्वं नामेदं यदभियुक्तस्त
द्धेतोरप्यपन्हुतिः। नाहमित्यादि। कलिंगो नाम निषिद्धो देशः। अंगवंगकलिंगेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हतीति स्मरणा
त्तस्मिन्देशे त्वया गतं चिरं स्थितमिति केनचित् कश्चिदुक्तः सन्नाह। नाहं कलिंगान् जगामेति। न केवलमवस्थानमेव निषिध्यते किं तर्हि तद्धेतुभूतं
गमनमपीति भवत्यत्यंतापन्हवः। यदा तु कलिंगेष्वगम इत्युक्तः सन्नागमनमेवापलपति न तदात्यंतापन्हव इति लङेव भवति न कलिंगेष्वगच्छमिति
प्रश्ने च। भूतानद्यतनपरोक्ष इति वर्तते प्रश्न इत्यत्र कर्मणि नङित्याह। प्रष्टव्य इति। आसन्नेति। पंचवर्षाभ्यंतरमासन्नकालं पंचवर्षातीतं तु विप्रकृ
ष्टकालमित्याहुः। पृच्छ्यमान इति। आसन्नकालिके भूतानद्यतनपरोक्षार्थवृत्तिधात्वर्थे प्रष्टव्ये सतीत्यर्थः। प्रश्ने किं। भूतानद्यतनपरोक्षे लिडेवाज
गाम नैवः। लट् स्मे। स्मे इत्यव्ययं भूतकालद्योतकं। ननौ। पृष्टस्य प्रतिवचनमिति विग्रहः समाहारद्वंद्वे तूभयत्रस्यादित्वे च प्रतिवचने एव लटा तत्राह
ननु करोमीति। न च पृष्टग्रहणं व्यर्थं यावता प्रश्नपूर्वकमेव प्रतिवचनं भवतीति वाच्यं। विरुद्धमपि वचनं प्रतिवचनं। वचनाभिमुख्यमपि प्रतिवचनं
मिति पृष्टग्रहणं कर्तव्यमिति। कैयटे स्थितत्वात्। नन्वोः भूतत्वस्यैवापक्षे लुङ्। अनद्यतने तु लङ्। पक्षे यथाप्राप्तमिति। लुङ्लटोरभावपक्षे लङ्। १२९
परोक्षे तु लिडित्यर्थः। भविष्यतीति। भविष्यति गम्यादयः इति सूत्रात्। यावत्पुरा। लक्षणप्रतिपदोक्तपरिभाषा निपातेति निपातग्रहणेन ग्राह्यते।

पर्वतेन भुंक्त इति। निश्चितं भोक्ष्यत इत्यर्थः। यावद्भोक्ष्यत इति। अनद्यतनभविष्यति तु यावद्दाता तावत्भोक्तेति प्रत्युदाहर्तव्यं। विभाषा। ननु चानद्यतने हिल्
न्यतरस्यामित्यनद्यतने किमो र्हिल् विहितस्तत्रश्च कर्हियोगे लुडेव भाव्यमिति कथमुदाह्रियते कर्हि भोक्ष्यत इति। अत्राहुः। भविष्यत्सामान्ये भोक्ष्य
त इति लुटा कर्हियोगे तु अनद्यतनावगतिर्लक्षणयेति। भोक्तावेति। ननु भविष्यत्सामान्ये यं लृङ्विहितस्तस्य लुटा सह कथं विकल्पो विषयभेदादि
ति चेत्। अत्राहुः। अनद्यतने लङ्किं न — विभाषा कदेत्यादीनि कानिचित्सूत्राणि इष्टानुरोधेन अनुवर्तन्ते तेन लुङ्विषयेपि लृङ्भवति न त्वनद्यतने लु
ट् लट् वा बाध्यत इति। किंवृत्ते। क्रियावृत्तं किंवृत्तं। केचित्तु यद्यपि कदा कुत्रेत्यादयोपि किंवृत्तं तथापि तन्न गृह्यते। अनभिधानात्। तेन कदा भोजयिष्यसीत्या
दौ भविष्यति लृडेत्याहुः। लिप्स्यमाने। लिप्स्यमानसिद्धौ लिप्साया सत्वात् पूर्वेण। सिद्धेप्यकिंवृत्तार्थमिदमिति ध्वनयन्नुदाहरति। ओदनमिति। लोडर्थे

वर्तमानसामीप्ये वर्तमानवद्वा॥ ३।३।१३१॥ समीपमेव सामीप्यम् स्वार्थे ष्यञ्। वर्तमाने लडित्यारभ्य उणादयो बहुलमिति यावत्
येनोपाधिना प्रत्यया उक्तास्ते तथैव वर्तमानसमीपे भूते भविष्यति च वा स्युः। कदा आगतोसि। अयमागच्छामि। अयमागमं। कदा गमि
ष्यसि। एष गच्छामि। गमिष्यामि वा।

लोडर्थस्य लक्षणमिति षष्ठीतत्पुरुषः। कृष्णभोजनं लोडर्थस्य गोचारणस्यैव लक्षणं। भोजनका
ले गोचारणं त्वया कर्तव्यमित्यर्थः। पक्ष इति। कृष्णश्चेद्भोक्ता कृष्णश्चेद्भोक्ष्यते त्वं गाश्चारयेत्यर्थः। लिङ् चोर्ध्वं कालादूर्ध्वं तद्धितार्थोत्तरपद इत्य
त्र दिक्संख्ये इत्यनुवर्तनादिह समासो दुर्लभ इत्याशंकायामाह। निपातनादिति॥ ॐ ॥ वर्तमाना स्वार्थेष्यञिति। अस्मादेव सामीप्य इति निर्दे
शात् ष्यञ् सिद्धे चतुर्वर्णादिभ्य इति वार्तिकं प्रपंचार्थमित्याहुः। न चात्र पूरणगुणेति निषेधात् षष्ठीसमासो न प्राप्नोतीति वाच्यं। अनेनैव निर्देशेन त
न्निषेधस्य अनित्यत्वाभ्युपगमात् तेन बुद्धिमांद्यमित्यादि सिद्धं। येनोपाधिनेति। धातुविशेषाद्युपाधिना। तथा हि। पूङ्यजोः शानन्निति विहितः शानन्ताभ्यामेव धातुभ्य
भवति न तु धात्वंतरात्। तच्छीलादिविशिष्टे कर्तरि अलंकृञित्यारभ्य भ्राजभासेति यावद्विष्णुजादय उक्तास्तेपि कृञादिभ्यो धातुभ्यस्तस्मिन्नुपाधौ संभवम्

सि. कौ. कदा आगतोसीति भूतकालेन प्रश्ने वाक्यं आगच्छामीत्युदाहरणे भूतकालाभिव्यक्तये। अयमिति प्रयोगस्त्विदानीमेवागतमिति वर्तमानसमीपभूत
ती. त. कालद्योतनाय। तेन त्वागमनाविनाभूतं यत्तद्रूपं धूलीधूसरत्वाश्वस्वेदादियुक्तं तत्प्रतिनिर्दिश्यते। एवं कदा गमिष्यसीति भविष्यत्कालेन प्रश्ने वा
९३९ क्ये आगच्छामीत्युदाहरणे भविष्यत्कालाभिव्यक्तये। एष इति प्रयोगस्तु इदानीमेव गमिष्यामीति वर्तमानसमीपभविष्यत्कालद्योतनाय। तेन हि
गमनाऽविनाभूतं यत्तद्रूपं परिकरबन्धादियुक्तं तत्प्रतिनिर्दिश्यते। न च कदेति प्रश्ने उक्तवाक्ययोः कालानुपादानादसंगतिः शंक्या। उक्तन्यायमे

आशंसायां भूतवच्च ३।३।१३२। वर्तमानसामीप्य इति नानुवर्तते। भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम्। देव
श्चेद्वर्षीत्। वर्षति। वर्षिष्यति वा। धान्यमवाप्स्म। वपामः। वप्स्यामो वा। सामान्यातिदेशे विशेषानतिदेशान्न लङ्लिटौ न। क्षिप्रवचने
लृट् ३।३।१३३। क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात्। वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा यास्यति। शीघ्रं वप्स्यामः। नेति वक्तव्ये लङ्ग्र
हणं लुटोपि विषये यथा स्यात्। श्वः शीघ्रं वप्स्यामः। आशंसावचने लिङ् ३।३।१३४। आशंसावाचिन्युपपदे भविष्यति लिङ् स्यान्नतु भूत
वत्। गुरुश्चेदुपेयादाशंसेऽधीयीय। आशंसे क्षिप्रमधीयीय। नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ३।३।१३५। क्रियायाः सातत्ये सामी
प्ये च लङ्लुटौ न। यावज्जीवमन्नमदाद्दास्यति वा। सामीप्यं तुल्यजातीयेनाव्यवधानम्। येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित।
सोमेनायष्ट। येयममावास्यागामिनी तस्यामग्नीनाधास्यते। सोमेन यक्ष्यते॥ ॥ ९ वत्स्यद्वाभ्यामिदानीमिति कालावगमात्। सामीप्ये किं

कदा आगतो भवान्। अस्मान्मासात्पूर्वस्मिन्मासि आगच्छं। एतच्च सूत्रमाकरे प्रत्याख्यातं। गंगासमीपे गंगात्वारोपवत् वर्तमानसमीपे वर्तमानत्वारोपसं
भवात्॥ ॐ ॥ आशंसायां। आशंसनमाशंसा। अप्राप्तस्य प्राप्तुमिच्छा। आशंसायां वर्तमानत्वेपि तद्विषयस्य वर्षादेर्भविष्यत्कालसंबन्धाद्भविष्य
दित्युक्तं। आशंसायां किं। गमिष्यति। क्षिप्रवचने। वचनग्रहणं स्वरूपग्रहणनिरासार्थं। तदाह। क्षिप्रपर्याय इति। पूर्वविषय इति। आशंसायामित्य
॥

तेनपूर्वकालकाद्यपवादोयं। आशंसावचनेभूतवद्वर्तमानवत्प्रत्यययोरपवादः नभूतवदिति। नवर्तमानवदित्यपिबोध्यं। आशंसे अधीयीयेति। ए
ष्यमाणे ये अधीयीय इच्छामो वयमधीयीमहीत्यादिरित्येवं। क्षिप्रमिति। क्षिप्रयोगेपिपरत्वाल्लिङितिभावः। नानद्यतनो। भूतानद्यतनेलङिति भविष्य
त्यनद्यतनेतुलुट्। तौचानयोरर्थयोर्निषिध्येते। उदाहरणं हा। लङ्लुटौ नेति। एवंचभूतेलङ्भविष्यतितुलृडित्याशयेनोदाहरति। अदाद्यस्येतीत्यादि। अ
ग्नीनिति। आहवनीयादीन्॥ ॥भविष्यतिमर्यादा। अक्रियाप्रबंधार्थमसामीप्यार्थं चेदं वचनं। नानद्यतनवदित्यनुवर्ततेइत्याह। अनद्यतनवन्ने
तिलुङ्त्रनेत्यर्थः। इहसूत्रेदेशकृतामर्यादा उत्तरत्रकालकृता तत्रविशेषं वक्ष्यति। तस्यपरदवरमिति। पाटलिपुत्रावधिकमार्गस्यपरदवरं कौशाम्ब्या
स्सकाशादित्यर्थः। कौशाम्ब्याः पूर्वमितियावत्। भविष्यतीतिकिं। योध्वा अतिक्रांत आपाटलिपुत्रात्तस्ययदवरं कौशाम्ब्याः तत्रसक्तूनपिबाम। मर्यादा

भविष्यतिमर्यादावचनेऽवरस्मिन्। ३।३।१३६॥ भविष्यतिकालेमर्यादोक्तावबरस्मिन्प्रविभागे नद्यतनवन्न। योयमध्वागन्तव्य आ
पाटलिपुत्रात्तस्ययदवरं कौशाम्ब्यास्तत्रसक्तून्पास्यामः। कालविभागेचानहोरात्राणाम्। ३।३।१३७॥ पूर्वसूत्रंसर्वमनुव
र्तते। अहोरात्रसम्बन्धिनिविभागेप्रतिषेधार्थमिदम्। योगविभाग उत्तरार्थः। योयंवत्सर आगामीतस्ययदवरमाग्रहायण्यास्तत्र
युक्ता अध्येष्यामहे। अनहोरात्राणामितिकिम्। योयंमास आगामीतस्ययोऽवरः पञ्चदशरात्रः तत्राध्येतास्महे॥

ए वचनेइतिकिं। योऽध्वागंत
व्योनिरवधिकस्तस्ययदवरं कौशाम्ब्यास्तत्रसक्तून्पातास्मः अवरस्मिन्नितिकिं। योऽध्वागंतव्य आपाटलिपुत्रात्तस्ययत्परं कौशाम्ब्यास्तत्रसक्तून्पाता
स्मः। कालविभागेच। कालविभागेभविष्यत्यनद्यतनेनवत्। सचेत्कालविभाग अहोरात्रसंबंधीनचेदित्यर्थः। इहकालविभागे सत्यवरस्मिन्नेवेतिनद्य
तनवन्नेत्युक्ते कस्मादित्यपेक्षायां मर्यादाकालविशेषादितिलभ्यते इत्यके। केचित्तुकालविभाग इति पंचम्यर्थेसप्तमीत्याहुः। उत्तरार्थ इति। पर
स्मिन्नविभाषेतिसूत्रेकालमर्यादायामेवानुवृत्तिर्यथास्यात्। भविष्यतीतिकिं। यः संवत्सरोऽतीतस्तस्ययदवरं मासात्तत्रयवौदनपिबाम। मर्यादायाम्

कौ. योनिरवधिस्समयस्तस्य परत्वं मासात्तत्र पयः पाता स्मः। पंचदश रात्र इति। नक्षत्रसंख्यापूर्वं रात्रमिति क्लीवत्वेन भाव्यं। न च पंचदशरात्रयोऽस्मिन्नपक्षे इति बहुव्री
त. ह्याश्रयणात् पुंलिंगः सिद्ध इति वाच्यं। अहस्सर्वैकदेशेत्यच्प्रत्ययस्याभावप्रसंगादिति चेत्। सत्यं। अत एव बहिर्भाष्यप्रयोगात् क्लीवत्वं नेत्याहुः॥ ॥ परस्मिन्नाग
४० विष्यत्यद्यतनवत्नेति विकल्पेन निषिध्यते। वर्ज्यमिति। णिजंतात् चोपदिति कर्मणि यत्। वर्जमिति पाठे तु द्वितीयायां चेति णमुल्। अनहोरात्राणामित्येवायोऽ
यं वत्सर आगामी तस्य यत्परं पंचदशरात्रात् तत्र पयः पातास्मः। स्यादिति लिङ्निमित्ते। अतिपत्ति रनिष्पत्तिः। भूते च लिङ्निमित्ते लङ् स्यात्। भूते भविष्यति च क्रिया

परस्मिन् विभाषा॥३।३।१३८॥ अवरस्मिन् वर्ज्यं पूर्वसूत्रद्वयमनुवर्त्तते अप्राप्तविभाषेयम्। योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्याः
तत्राध्येष्यामहे। अध्येतास्महे॥ लिङ्निमित्ते लृङ् क्रियातिपत्तौ॥ ३।३।१३९॥ भविष्यतीत्येव। सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्। भूते
च॥ ३।३।१४०॥ पूर्वसूत्रं सम्पूर्णमनुवर्त्तते। वोताप्योः॥ ३।३।१४१॥ वा आ उताप्योः। उताप्योरित्यतः प्राग्भूते लिङ्निमित्ते लृङ् त्वधिक्रियते।
पूर्वसूत्रं तु उताप्योरित्यादौ प्रवर्त्तत इति विवेकः। गर्हायां लडपिजात्वोः॥ ३।३।१४२॥ आभ्यां योगे लट् स्यात्। कालत्रयेऽगर्हायाम्। लुङादीनाम
पवादः। अपि जायां त्यजसि। जातु गणिकामाधत्से। गर्हितमेतत्। विभाषा कथमि लिङ् च॥ ३।३।१४३॥ गर्हायामित्येव। कालत्रये
लिङ् लटौ। कथं धर्मं त्यजेस्त्यजसि वा। पक्षे कालत्रयेऽपि लकाराः। अत्र भविष्यति नित्यं लृङ् भूते वा। कथं नाम तत्रभवान् धर्मं मत्य

तिपत्तौ। अद्यतनानद्यतनसाधारणं भूतसामान्यमिह ज्ञेयं। अस्योदाहरणानि उताप्योः समर्थयोर्लिङ् इत्यारभ्य समानकर्तृके षु तुमुनिति विह
यसंमूल्याबोध्यानि। ततः प्राचीनेषु वोताप्योरित्यनेन विकल्पो क्तः। लृङ् वेति। लिङ्निमित्ते भूत एवायं विकल्पो भविष्यति तु नित्यमेव लृङ्।
गर्हायां। अत्र वोताप्योरिति न संबध्यते। वर्तमाने लडुक्तः। कालत्रये तु न प्राप्नोतीति विधिरयं। कालत्रय इति। कालविशेषानुपादानादिति भावः।
पूर्वत्वादिति। निरवकाशत्वादित्यपि बोध्यं। अपि जायामिति। त्यक्ष्यसि अत्याक्षीरित्यादिविषयेऽपि त्यजसीत्यादि लडेव प्रयुज्यत इति भावः ॥

सि॰कौ॰ अनवक्लृप्त्यमर्षयोरिति लिङ्लटोः प्राप्तयोर्वचनमिदं लटो बाधनार्थं। तेन लट्लटोपवाद इति। अयं कालत्रये। लृङ् प्राग्वदिति। क्रियातिपत्तौ भूते चाभवि-
टी॰ त॰ ष्यति तु नित्यमित्यर्थः। जातु भवान् हरिं निन्दिष्यदित्याद्युदाहर्तव्यं। अगर्हायामिदं। गर्हायां तु जातुयोगे लङ् कृतः॥ ॥ यच्चयत्रयोः। अनवक्लृप्त्य-
९५१ मर्षयोरिति वर्तते यथासंख्यमिह नेष्यते। अयमपि लिङ्लटोः पवादः। योगविभागस्तु उत्तरसूत्रद्वये यच्चयत्रयोरेवानुवृत्तिर्यथा स्यादित्येतदर्थं
क्रियातिपत्तौ लृङ् प्राग्वत्। यच्च यत्र वा त्वमेवमकरिष्यो न श्रद्दधे न मर्षयामीत्यादि। गर्हायां च। कालत्रयेयं भवतीति लिङ्लटोरपवादः। लिङ्वस्या

यच्चयत्रयोः।३।३।१४७॥ यच्च यत्र वा त्वमेवं कुर्याः न श्रद्दधे न मर्षयामि। गर्हायां च।३।३।१४९॥ अनवक्लृप्त्यमर्षयोरिति निवृत्तम्।
यच्चयत्रयोर्योगे गर्हायां लिङ् स्यात्। यच्च यत्र वा त्वं शूद्रं याजयेः अन्याय्यमेतत्। चित्रीकरणे च।३।३।१५०॥ यच्च यत्र वा त्वं शूद्रं याज-
येः आश्चर्यमेतत्। शेषे लृडयदौ।३।३।१५१॥ यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात्। आश्चर्यमन्धो नाम कृष्णं
द्रक्ष्यति। अयदौ किं। आश्चर्यं यदि स पाठीत। उताप्योः समर्थयोर्लिङ्।३।३।१५२॥ बाढमित्यर्थे नयोस्तुल्यार्थता। उत अपि वा ह-
न्याद् घं हरिः। समर्थयोः किं। उत दण्डः पतिष्यति। अपि धास्यति द्वारं। प्रश्नः प्रच्छादनं च गम्यते। इतः प्रभृति लिङ्निमित्ते क्रियाति-
पत्तौ भूतेऽपि नित्यो लृङ्। कामप्रवेदनेऽकच्चिति।३।३।१५३॥ स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्न तु कच्चिति। कामो मे भुञ्जीत भवान्।
इति। गर्हायां विभाषा कथमिति लट् प्राप्तस्तत्रैवं किंवृत्त इति लट् प्राप्तस्तयोरपवादोयं यच्चयत्रयोर्योगे विहितः। यलि अकच्चितीति किं। कच्चिज्जीवति
डि॰ लिभावः लृङ् प्राग्वत्। यच्च यत्र वा त्वं शूद्रमयाजयिष्यः लट् न्याय्यमित्यादि। चित्रीकरणे च। अयमपि कालत्रये। लृङ् प्राग्वत्। यच्च यत्र वा त्वं शूद्रम-
याजयिष्यः आश्चर्यमेतत्। शेषे। सर्वलकारापवादः। स पाठीतेति। यदा यद्योरुपसंख्यानात् तु यदीति लिङ्। लिङ्निमित्ताभावादिह लृङ् न। उताप्योः
र्थेतो लिङ् स्यात् कालत्रये। भूतेऽपि नित्य इति। वाग्रहणस्य निवृत्तत्वात् भविष्यतीव भूतेऽपि नित्यलृङ्। उताहनिष्यद् घं जानाहनन्त हनिष्यतीति गम्यते॥

कःसमवेहने। लिङ् स्यादिति। कालत्रये सर्वलकारापवादः। कच्चिज्जीवतीति। कामो मे इत्यनुषंजनीयं। वर्तमानसामीप्य इति लट्॥ ॥ संभावनेऽलमिति
रिति। पर्याप्तिरित्यर्थः। प्रथमया सप्तम्या चेति। संभावने इति सप्तम्यंतं प्रथमया विपरिणम्यते अलमिति प्रथमांतं सप्तम्येति संबंधः। संभावनेऽर्थे इति। ननु प्र
थमया विपरिणामितत्वात् कथमत्र सप्तम्यर्थलाभ इति चेत्। अत्राहुः। संभावनेऽलमित्यावर्त्यं द्वितीयस्यैव विपरिणामात्सर्वं सुस्थमिति। संभावनं क्रि
यासु योग्यताध्यवसायः। अलमितीति। न च संभावनं समर्थ इति चेन्न भवतितरां लिङ् स्यादित्यर्थः। सिद्धेति। सिद्धः अप्रयोगो यस्य तस्मिन्नलमित्यस्मिन्
त्रालंशब्दो न प्रयुज्यते तदर्थस्तु गम्यते तत्रेति फलितोऽर्थः। मनोरमायां तु अलमिति संभावने सिद्धाप्रयोगश्चेदिति सूत्रयितुमुचितमित्युक्तं। तत्र सिद्ध

सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे।३।३।१५४॥ अलमर्थोऽत्र प्रौढिः। सम्भावनमित्यलमीति च प्रथमया सप्तम्या च विपरिणम्यते।
सम्भावनेऽर्थे लिङ् स्यात्तच्चेत्सम्भावनमलमित्यलमिति सिद्धाप्रयोगे सति। अपि गिरिं शिरसा भिंद्यात्। सिद्धाप्रयोगे किं। अलं कृष्णो
हस्तिनं हनिष्यति। विभाषा धातौ सम्भावनवचनेऽयदि।३।३।१५५॥ पूर्वसूत्रमनुवर्तते। सम्भावनार्थधातावुपपदे उक्तेऽर्थे लिङ्
वा स्यात्। न तु यच्छब्दे। पूर्वेण नित्ये प्राप्ते वचनं। सम्भावयामि भुञ्जीत भोक्ष्यते वा भवान्। अयदि किं। सम्भावयामि यद्भुञ्जीथास्त्वम्।

स्याप्रयोग इति विग्रहः। कस्याप्रयोग इत्याकांक्षायां सामर्थ्यादलंशब्दस्येति बोध्यं। अपि गिरिमिति। संभावनद्योतकोऽपिशब्दः। गिरिं भिन्द्यात् पर्याप्त इति संभावना
त्र गम्यते। कालसामान्ये यं लिङ् लुङ् प्राप्तस्। अपि गिरिं शिरसा भेत्स्यत्। अलमिति चेत् किं। प्रायेणागमिष्यति। विभाषा धातौ संभावने मुच्यते येन तत्सं
भावनवचनं तस्मिन् धातौ। संभावनार्थक धातावित्यर्थः। भुंजीथास्त्वमिति। अत्र पूर्वेण नित्यो लिङ्। धातौ किं। संभावनवचनस्य धातोरप्रयोगे मा भूत्। तद्वे
तु संभावनवचने तद्वाचक धातोरप्रयोगादिह विभाषा न भवति भुंजीत भवान्। पूर्वेणात्र नित्यो लिङ्॥

कारान्तरमपिस्यादितिनचैवमपिकामप्रवेदनइत्युपसंख्यानादरनेनैवसिद्धेकामप्रवेदनेकच्चिदिति तुसूत्रमारव्यातवाच्यायत्रावप्रकरणादनाकाममप्र
दर्शगम्यतेइच्छार्थकमुपपदंनास्तितदर्थंतदारंभान्॥ ❀ ॥लिङ्चासमानकर्तृकेषुतुमुनित्यनेनइच्छार्थेषुलिङ्लोटाविति विहितयोर्लिङ्लोटो
र्वाधिप्राप्तेलिङःप्रतिप्रसवार्थंसूत्रंनचात्रवासरूपविधिनालिङ्लोटोर्नित्यवाधानेतिशंक्यंक्तल्युट्तुमुन्खलर्थेषुतरभावानावाथापिअसरूपविधिः
स्यादेवमपिलिङेवयथास्यान्लोट्माभूदित्यवमर्थंतदारब्धव्यमेवाक्रियातिपत्तौलृङ्मागवत्इच्छार्थेभ्योइच्छार्थेभ्यःकिंपचतीतिगम्यतेप्रैषातिसर्ग

लिङ् च ।३।३।१५९॥ समानकर्तृकेषुइच्छार्थेषूपपदेषुलिङ्स्यात्। भुञ्जीयेतीच्छति। इच्छार्थेभ्यो विभाषा वर्तमाने ।३।३।१६०।
लिङ्स्यात्पक्षेलट्। इच्छेत्। इच्छति। कामयेत्। कामयते। विधिनिमन्त्रणेतिलिङ्विधौ। यजेत्। निमन्त्रणे। इह भुञ्जीतभवान्। आम
न्त्रणे। इहासीत। अधीष्टेपुत्रमध्यापयेद्भवान्। सम्प्रश्ने। किंभोवेदमधीयीयउतर्कं। प्रार्थने। भोभोजनंलभेय। एवंलोट्। प्रैषाति
सर्गप्राप्तकालेषुकृत्याश्च ।३।३।१६३। प्रैषोविधिः। अतिसर्गः कामचारानुज्ञा। भवतायष्टव्यं। भवान्यजताम्। चकारेणलोटोऽनु
कर्षणं प्राप्तकालार्थम्। लिङ्चोर्ध्वमौहूर्तिके ।३।३।१६४। प्रैषादयोऽनुवर्तन्ते। मुहूर्तादूर्ध्वंयजेत्। यजतां। सा[illegible]स्मे लोट् ।३।३।१६५।
पूर्वसूत्रस्यविषयेलिङ्[illegible]उर्ध्वमौहूर्तिकेत्यजतुस्म। अधीष्टेच ।३।३।१६६। स्मेउपपदे[illegible]लोट्स्यात्। त्वंस्मअ
विषयविधिरिति। विधिग्रहणेकर्तव्येप्रैषग्रहणं शिष्यबुद्धिवैशद्याय[illegible]लोटोऽनुकर्षणमिति। लोट्चेतियोगस्य[illegible]प्रयोजनमेकयोगत्वे
तल्लिङोऽप्यनुकर्षणंस्यात्। प्राप्तकालार्थमिति। प्रैषातिसर्गयोः पूर्वेणैवसिद्धत्वादितिभावः। लिङ्चोर्ध्व। प्राप्तकालविशेष[illegible]स्यलिङोविधाना
दिदंसूत्रं। प्रैषातिसर्गयोस्तुपूर्वेणप्राप्तएवलिङ्। लोट्कृत्यानांका[illegible]विशेषेऽस्मिन्लिङावाधामाभूदितिचकारः। पूर्व[illegible]इति[illegible]
यउर्ध्वमौहूर्तिकइतिचानुवर्ततइतिभावः। अधीष्टेच। लिङोपवाद[illegible]योगविभागस्तुउर्ध्वमौहूर्तिकाननुवृत्त्यर्थः॥

सि·कौ· लिङ्यदि। कालसमयवेलासु चेति। उपपदेष्विति वचनविपरिणामेन संबध्यते। तुमुनोपवादः। पद्भुञ्जीतेति। यत्कालः पचनी [illegible] दीन्स
टी·त· मनुहर्तुः। अर्हे। योग्ये कर्तरि गम्यमाने कृत्यतृचो भवंति। त्वया कन्या वोढव्या। वहनीया। त्वं कन्यां वोढा। कन्यां वहेरिति। कन्योद्वहने [illegible] मित्यर्थः। [illegible]
उ·ति· हि किमर्थं कृत्यतृचो विधीयंते। यावता सामान्येन विहितत्वादर्हेऽपि भविष्यंतीति चेत्। अत्राहुः। अर्हत्तायां द्योत्यायामप्राप्तो लिङ् [illegible] तेन तु लिङ्वा
१७३ धामाभूदिति कृत्यतृचोर्विधानं। न च वासरूपविधिना समीहितसिद्धिः स्त्र्यधिकारादूर्ध्वं तदप्रवृत्तेरिति। धातुसंबंधो रह [illegible] विशेषणविशेष्यभा
वादिसंबंधोऽनुपपन्नः। स्वार्थस्मारणेनोपक्षीणत्वात्। पदार्थसंसर्गो वाक्यार्थः कारकविशिष्टा क्रिया वेति स्वीकारात्। [illegible] मादृतेन शाब्दोऽस्ति प्र

लिङ्यदि। ३।३।१६८॥ यच्छब्दे उपपदे कालसमयवेलासु च लिङ् स्यात्। कालः समयो वेला वा यद्भुञ्जीत भवान्। [illegible] कृत्यतृचश्च। ३।३।१६९। चाल्लिङ्। त्वं कन्यां वहेः। शकि लिङ् च। ३।३।१७२। शक्तौ लिङ् स्यात्। चात्कृत्याः। भारं त्वं वहेः। माङि लुङ्। [illegible] कार्थाः। कथं मा भवतु मा भविष्यतीति। नायं माङ् किन्तु माशब्दः। धातुसम्बन्धे प्रत्ययाः। ३।४।१। धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः। तिङ्वाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः। वसन् ददर्श। भूते लट्। अतीतकालसंबंधिकर्तृकं दर्शनमर्थः। (सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणोऽस्य पुत्रस्तत्कर्तृक

त्ययरूपस्य बह्वभ्युपगमे शाब्दबोधे शब्दोऽपि भासत इत्यभ्युपगमेऽपि शब्दस्य स्वार्थप्रत्येवम्। कारत्वं न तु शब्दांतरं प्रति। तथा च धातुसंबंधो वाक्येन न बुध्यते इति तस्य वाक्यार्थत्वासंभवाद्धातुशब्देन धात्वर्थो लक्ष्यते। ननु धातोः कर्मणः समानकर्तृका दिषु सन्निधौ कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकं विशेषणमाश्रितं तथेहापि धात्वोरर्थद्वारकः संबंधोऽस्त्विति चेत्। मैवं। तथा हि सति परस्प रसंबंधार्थबोधकानेकधातुप्रयोग एव प्रत्ययाः स्युरिति तत्र गोमानासीत् गोमान् भवितेत्यादि न सिध्येत्। न त्वत्र वसन् ददर्शेत्यत्र वर्तमानकाले वसिरि व वर्तमानकालोऽस्ति प्रयुज्यते। न चाप्रयुज्यमानस्य धात्वंतरेण संबंधोऽस्ति। अर्थयोः संबंधाभ्युपगमे तु धातुद्वयाभावेऽपि धात्वर्थद्वयस्य सत्त्वात् गोमान्

सीदित्यादौ नानुपपत्तिः। तदेतदभिप्रेत्याह। धात्वर्थानामिति। विषयबहुत्वापेक्षं बहुवचनं। एकैकविषयापेक्षायां तु धात्वर्थयोरिति बोध्यं। एतच्च मनोरमा
नुसारेण व्याख्यातं। केचित्तु धात्वोरर्थद्वारकसंबंधेऽभ्युपगते गोमानासीद्भवितेत्यादि न सिध्येदिति मनोरमोक्तं चिंत्यमेव। न तत्करोतीति तद[illegible]स्यैव तद
स्यास्त्यस्मिन्नित्यत्राप्येकत्ववर्तमानत्वयोरविवक्षितत्वात् प्रकृतसूत्रानपेक्षयैव तत्सिद्धेः। नह्यत्र मतुविधौ वर्तमाने लडित्यादि[illegible]विवक्षाकृत[illegible]विशेषपरि
ग्रहो लोके साहुः। तत्र भाष्यकैयटाद्यननुगुणं। तथा हि भाष्ये प्रत्यय इत्यनुवर्तमाने पुनरत्र प्रत्ययग्रहणं किमर्थमित्याक्षिप्य अधातुप्रत्ययानामपि संबंध
साधुत्वं यथा स्यात् गोमानासीत् भविता वेति समाहितं। कैयटेन तु तदस्यास्त्यस्मिन्निति मतुप्प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तो विहितश्च
त्युक्तं। तथा च मतुब्विधावस्तीत्यत्र एकत्वस्याविवक्षितत्वेपि वर्तमानत्वं विवक्षितमिति तत एव लाभादवगम्यते। किंचा[illegible]मानग्रहणे युक्तो वर्तमानसत्ता
विशिष्टदंडयुक्त एवाऽऽनीयते नान्यः। तथा च आसीत् भवितेति तिङंतपदानुरोधेन गोमानित्यत्र गावोऽस्यासन् गावोऽस्य भवितार इत्यतीतानागतसत्तावि
शिष्टप्रकृत्यर्थयुक्ते मतुप्प्रत्ययः प्रकृतसूत्रेणैव विधीयते नतु तदुक्तरीत्या लभ्यत इति दिक्। ननु तत्तद्विशिष्टवाचकैरेव तत्तद्विषयप्रत्ययाः सिद्धाः किमनेन
सूत्रेणेत्यत आह। यत्र काल इति। वर्तमानसामीप्य इत्यारभ्य कालान्यत्वं प्रायेण प्रतिपाद्यते तदेव चेह गृह्यत इति भावः। [illegible]प्यनयपावित्यादौ वर्त
मानभूतकालादिप्रत्यये भुक्तो वा स्वकालान्न प्रच्युतो भवतीत्याकांक्षायामाह। तिङंतवाच्येति। प्रधानानुरोधेन गुणस[illegible]चितं न तु विपरीतमि
ति भावः। प्रत्यया इति। कालांतरभाजो भवंतीत्यर्थः। भूते लडिति। एवं च उषित्वा द्रष्टेत्यर्थः। अतीतेति। अतीतवासक[illegible]द्रष्टा[illegible]स्येति बहुव्रीहि
सोमयाजीति। करणे यज इति भविष्यति णिनिः। अत एवाह। सोमेन यक्ष्यमाण इति। एवं च पश्यन् प्रपावित्यत्र दृशो भूते [illegible]प्रापावित्यर्थः। निवे
दयिष्यतो मनो न विव्यथे इत्यत्र तु वेदयते भूते लट् तस्य लृटः सद्वेति शतृप्रत्ययः। निवेदनं कृतवत इत्यर्थ इत्याहुः। स्यादे[illegible]विकल्पमा[illegible]
त्रसूत्रे रीत्याभाविशब्दस्य भूतकालत्वं स्वीकृते सत्यतीतं भवनमित्यर्थो दामीच्छब्दस्याप्येककर्तृकमतीतं भवनमित्यर्थो भाष्या[illegible]रयोः पु

गपत् प्रयोगो न स्यात्। भाविशब्दार्थस्य आसीच्छब्देनैवलाभात्। ततश्चैतावंतं कालं भावितया व्यवहृतं तत् दिदानीमासीदित्यर्थः। तत्र च यथार्थीकर्तव्य ... एकतेन गो
मान् सीत् तदस्य चापि गोमानिति व्यवहार विषय आसीदित्यर्थो लभ्यते। वसनं दर्शं त्या दौ भूते लक्षणया यथायथं लङादिर्वीकर्तव्यः। ... जीसत्र तु भूत
च ... प्रत्यये जातेपि भवितेति लुडं त समभिव्याहारे सति सोमयाजीति व्यवहरिष्यमाण इत्यध्याहारेणैति नेर्भविष्यदर्थे लक्षणया ... प्रयोगो भवेदिति
किमनेन सूत्रेणेति चेत्। अत्राहुः। अध्याहारलक्षणप्रयुक्तक्लेशं विनैव प्रायेश्यो निर्वाहार्थं सूत्रारंभः। न हि भाविकृत्यमासीदिति ... क्वचिदध्याहारादिक
मगत्या भवतीति सर्वत्र तत् स्वीकर्तुमुचितमिति॥ ॥ क्रियासमभिहारे। घोत्य इति। क्रियासमभिहारो धातोरेवार्थः ... धानक इति भावः। तस्य

क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः। ३।४।२। पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च हिस्वौ स्तः ... तिङामपवादः॥
तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ सलिङ्संज्ञौ च तध्वमोर्विषये तु हिस्वौ वा स्तः पुरुषैकवचनसंज्ञे तु ... योरतिदिष्टत्वेन। हिस्ववि
धानसामर्थ्यात्। तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि। आत्मनेपदिभ्यः स्वो भावकर्मकर्त्रोः। समुच्चयेऽन्यतरस्या
म्। ३।४।३। अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात्। यथाविध्यनुप्रयोगः पूर्वस्मिन्। ३।४।४। आद्ये लोडुविधायके लोट्प्रकृतिभूत एव
... धोरनुप्रयोज्यः

च हिस्वौ लइति। ननु लोडित्यनेन न तिङो लक्ष्यपित्वात् तिङमेव हिस्वौ विधीयेतां। तथा सति तिङ्त्वात्पदत्वं लभ्यत इति गुणोप्य
सि। ... च तध्वमोरिति वाक्यशेषोपि स्वरसतः संगच्छते। अन्यथा येन नाप्राप्तन्यायेन हि स्वयोः सिङपवादत्वे सति तध्वमोः स्थाने तयोर्विकल्पेनाभिवि
धानासंभवादुक्तवाक्यशेषो दुरुपपाद इति चेत्। अत्राहुः। लोट्शब्दस्य तिङ्लक्षणत्वं न्याय्या। असंजातविरोधित्वेनोपक्रमस्य प्राबल्यात् हि स्व
समभ्याश्रयणेन वाक्यशेषस्योपपन्नत्वाच्च। किं चातिङामादेशत्वे तिपसिपमिपां स्थाने विहितस्य हेः स्थानिवद्भावेन पित्वात् ... स्वाभावे च लु
नीहीत्यत्र ईहल्यघोरितीत्वं न स्यात्। ब्रूहीत्यत्र ब्रुव ईडिति ईडागमे ब्रवीहि इति स्यात्। तृण्ढीत्यत्र तृणह इमिति ईमागमे तृणेढीति स्यात्। किं च॥ १५४

लादेशानामेवपरस्मैपदात्मनेपदसंज्ञेनतुलादेशातिङादेशानामितिसर्वेषांतिङां द्वावपिहिस्वौयथायोगंस्यातांनतुतिवादीनांहिस्वंडाब्द
तिपदस्यवस्थयां।ततश्चलकारस्यैवादेशौहिस्वौनतुतिङामित्यवश्यंस्वीकर्तव्यमिति।नन्वेवंद्वयोरपिलःपरस्मैपदमितिपरस्मैपदसंज्ञास्या
न्नतश्चपरस्मैपदित्वएवहिस्वौस्यातामतआह।नोचेति।अयंभावः।लोटोहिस्वौइतिवाक्येक्रिया समभिहारेलोडितिवाक्या[illegible]दित्यनुवर्तते
नद्धहिस्वावित्यस्यविशेषणं।नचहिस्वौलोटोभवतइतिसामर्थ्याल्लोटःधर्मकावित्यर्थःसंपद्यते।तत्रापिमुख्यलोटःसंबंधिनोधर्मस्यप्रत्यय
त्वस्यातिदेशोयमर्थः।स्थानिवत्त्वेनैवतत्सिद्धेः।किंतुस्थानिवद्भावलब्धलोडव्यपदेशकौतिङ्भूतौयौहिस्वौतयोरेवधर्मइहातिदिश्यते।केचि
त्तुक्रियासमभिहारेलोडित्यनंतरंलाघवात्तस्यहिस्वावितिवक्तव्येलोटइतिग्रहणसामर्थ्याल्लोटःधर्मकावेवहिस्वौलोटःस्थानेभवतइत्यर्थःसं
पद्यते।तथाचपूर्वोक्तरीत्यातिङ्भूतौयौहिस्वौतयोरेवधर्मइहातिदिश्यतइतिसिद्धमिष्टं।एवंचलोटोहिस्वावितिवाक्यपूर्ववाक्याल्लोटइत्यह
र्णानुवर्तनीयमित्याहुः।तिङ्संज्ञौवेति।तेनपदत्वंतिङ्तिङइतिचभवति।हिस्वविधानइति।यदिहिपुरुषवचनसंज्ञेअपिस्यातांतर्हिपु
रुषसामानाधिकरण्येएकत्वेचसत्येवहिस्वाभ्यांभाव्यंतत्रचव्यर्थोहिस्वविधिरितिभावः।हिःकर्तरिस्वोभावेकर्मकर्त्रो[illegible]तां।उक्तंचकैयटेनापि
हिशब्दस्यकर्तावाच्यःस्वशब्दस्यतुभावकर्मकर्तारइति।अत्रनव्याः।अल्पेह्रस्वइत्यादौकप्रत्ययवत्क्रियासमभि[illegible]पंस्वार्थिकएवान
त्वस्मिन्लोटिलःकर्मणिचेत्याद्यर्थानाभ्युपेयः।प्रयोजनाभावात्।यदितुहिशब्दस्यकर्ताअर्थःस्यात्पुनःपुनरतिश[illegible]नत्वंतस्यार्थ
इतिवक्ष्यमाणग्रंथःस्वरसतोनसंगच्छते।याहियाहीत्यादौतुकर्त्रोऽपिप्रतीतिर्यातीत्यादिसमभिव्याहारेणसुलभैव।[illegible]धोचकोऽस्यत्रतङा
दिशाप्रयोगेवआमःपरस्यलेर्लुक्यामंतेसंख्याप्रतीत्यभावेपिचक्रेइत्यनुप्रयोगवशेनएककर्तृकादिरूपाक्रियेत्यवि[illegible]पिसंख्याप्रतीय
तेतथैवहिस्वांतेध्वापकालकारकसंख्याप्रतीतिर्यातीत्याद्यनुप्रयोगबलेनभवतीत्याहुः।स्यादेतत्।क्रियासमभिहारेहिस्वौ[illegible]तध्वमोरिति

सि·कौ· सूत्रमस्तु। तथा च हिस्वौ लोटो न भवत इति लोट् धर्मकावित्यर्थः पूर्वोक्तरीत्या स्यादिति सर्वेष्टसिद्धौ किमनेन लोट इति [illegible]पर्यन्तकरणेनेति चेत्
टी·त· अत्राहुः। हिस्वयोर्यदि लोट्स्थानिकत्वं न स्वीक्रियते तर्हि तयोर्लोडादेशवद्भावेन ई हल्यघोरित्यादिप्रवृत्त्या लुनीहीत्यादिसिद्धावपि हिस्वा
३·ति· तुस्य लोडन्तत्वं न सिध्येत्। तथा च हन्त चेत्यनुदात्तविकल्पो न स्यात्। हन्त प्रलुनीहीत्ययं लुनाति। एवं च लोडन्तत्वलाभार्थं लोटो हिस्वाविति विधी
१४५ यते। यदि तु हिस्वौ लोडित्युक्तेपि लोडन्तभावाश्रयेण लोडन्तकार्यं हन्त चेति स्वरविकल्पः सिध्यतीति ब्रूषे तर्हि स्थानिवद्भावलब्धलोट्धर्म।
कौ हिस्वावित्यर्थस्यानाश्रयणे लोडादेशकार्याणि परस्मैपदात्मनेपदतिङ्संज्ञादीनि न सिध्यन्ति। तथा च पूर्वोक्तदोषस्तदवस्थः स्यात्। लोडो हि
स्वौ इत्युक्ते तु स्थानिवद्भावेन हिस्वयोर्लोड्त्वात् लोडन्तकार्यस्वरविकल्पः सिध्यति क्रियासमभिहारे लोट् इति वाक्यात् लोडित्यनुवर्त्य हिस्वौ लोडि
ति प्रागेव व्याख्यातत्वात् लोडादेशवद्भावेन परस्मैपदात्मनेपदसंज्ञादीन्यपि सिध्यन्तीति॥ ॥ ॥

समुच्चयप्रतीतौ। चिनोतेर्भावे एरजित्यच्। ३।३।५६ क्रमिति। धातोर्लोट् लोटो हिस्वौ तध्वमोर्विषये वेत्यर्थः। यथाविध्यनुप्रयोगः पूर्वस्मिन् क्रियासमभिहा-
रविषये। अत्र संख्याकारकादीनां हिस्वाभ्यां नादप्रतीतेस्तद्बोधनायानुप्रयोगोन्याय्यत एव प्राप्तस्तदनुवादेन यथाविधीति नियम्यते। तथा च पक्षे

समुच्चये सामान्यवचनस्य। ३।४।५॥ समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात्। अनुप्रयोगाद्यथायथं लडादय-
स्तिङादयश्च। ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः। क्रियासमभिहारे हु वाच्ये। याहि याहीति याति। भ्रमः पुनर-
तिशयेन वा यानं। तस्यार्थः एककर्तृकं वर्त्तमानं यानं। यातीत्यस्य इतिशब्दस्य भेदान्वये प्रात्यर्थ्याह यति। एवं यातः। यान्ति। यासि।
याथः। याथ। यात यातेति यूयं याथ। याहि याहीत्ययासीत्। यास्यति वा। अधीष्वाधीष्वेत्यधीते। ध्वंविषये पक्षे अधीध्वमधीध्वमिति यूयमधी-
ध्वे। समुच्चये तु सक्तून्पिब धानाः खादेत्यभ्यवहरति। अन्नं भुङ्क्ष्व दाधिकमास्वादयस्वेत्यभ्यवहरते। तध्वमोस्तु पिबत खादतेत्यभ्यवहरथ। भुङ्-
ध्वमास्वादयध्वमित्यभ्यवहरध्वे। पक्षे हिस्वौ। अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः। पक्षे सक्तून्पिबति धा-
नाः खादति। अन्नं भुङ्क्ते दाधिकमास्वादते। एतेन पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः। विगृह्य चक्रे नमुचिद्विषा
बली य इत्थमस्वास्थ्यमहर्दिवं दिवः इति व्याख्यातम्। अवस्कन्दनलवनादिरूपामूतानद्यतेन परोक्षा एककर्तृका अस्वास्थ्यक्रि-
येत्यर्थात्। इह पुनः पुनरवस्कन्देत्यादिरर्थ इति व्याख्यानं भ्रममूलकमेव द्वितीयसूत्रे क्रियासमभिहार इत्यस्यान[illegible]डन्तस्य हित्वा
पदे च। पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषांचिद्भ्रम एव। पुरुषवचनसंज्ञे इह नेत्युक्तत्वात्॥ इति लकारार्थप्रक्रिया
॥ इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्द्धे तिङन्तं समाप्तम्॥ ॥ १ प्राप्तस्य नियमनात् याहि याहीति गच्छतीत्यादि न भ-
वति। यद्यप्यन्यत्र इह न पूर्वार्थमत्र भावित्यादौ नियमशब्दे न परिसंख्या स्वार्थ हि यतः सर्वनामस्थाने चेत्यादिना प्राप्तत भिन्ने च दीर्घे प्रतिषेधोऽन्यत्र तु

सि·कौ· तन्निवृत्तिपरत्वात्तथापीह कदाचिद्याहीत्यस्य कदाचित्गच्छतीत्यस्यानुप्रयोगे प्राप्ते यथाविधीत्ययमप्राप्तांशपरिपूरणे यत्रीहीन्नवहन्तीत्यादिवद्वि
टी·त· धीयतइतिनियमविधिरेव। एतेन मीमांसकप्रसिद्धनियमविधिः शब्दशास्त्रे प्रसिद्धइतिवदन्तः परास्ताः॥ हेत्वाच्यइति। वार्तिकमिदं हिरुक्तप्रक्रि
उ·ति· यायां व्याख्यातं इतिशेषस्त्विति। ननु इतिशब्देन व्यवधानाद्याहीत्यस्यानुप्रयोगत्वं कथमिति चेत्। अत्राहुः। अनुशब्दस्य हानुवादित्वमात्रपरत्वा
१७६ द्व्यवहितविपरीतप्रयोगयोरिष्टापत्तिः। एतच्च भाष्यकारीयोदाहरणसूत्रप्रत्याख्यानाभ्यां निर्णीयते। नच समुच्चये सामान्यवचनस्येति विशे
षस्योक्तत्वात् सूत्रैकदेशस्य पूर्वस्मिन्नितिपदस्य वैयर्थ्यमस्तु नाम। यथाविध्यनुप्रयोगः इति तु यथाविधीति नियमार्थं सौ कर्तव्यमेव अन्यथा याहि
याहीति गच्छतीत्यादि स्यादिति वाच्यं। यस्माल्लोट्विधिस्तत्प्रकृतिकतिङन्तस्यैवोपस्थितत्वेनानुप्रयोक्तुमर्हत्वान्नेतूपस्थितपरित्यागेनय
त्किंचिद्धातुप्रकृतिक तिङन्तस्यानुप्रयोगोर्हतेति। अत एव स्वरूपशब्दस्येत्यपि सूत्रं प्रत्याख्यातं भाष्यकारेण। अग्नेर्ढगित्यादौ विधिवा
क्यगतस्याग्नेर्वाचकाग्निशब्दादेरुपस्थितत्वात्तत्परित्यागेनानुपस्थितवन्ह्यादिशब्देभ्यो ढगादिर्न भवेदिति। एवं चास्मिन् प्रत्याख्याते यथावि
ध्यनुप्रयोगसूत्रे मीमांसकप्रसिद्धनियमविधेः स्थितोदाहरणमन्यदन्वेषणीयमिति दिक्। एवमिति। याहियाहीतिवत्। याहियाहीति याती
त्येवमूह्यमित्यर्थः। पक्षेइति। वाचतध्वमोरित्युक्तत्वात् हिस्वाभावपक्षे इत्यर्थः। तध्वमोरित्यत्र तशब्देन मध्यमपुरुषबहुवचनं गृह्यते ध्वंसाह
चर्यात्। यद्यपि ध्वमित्यस्यात्मनेपदत्वमस्तीति तत्साहचर्येण प्रथमपुरुषैकवचनस्य ग्रहणं प्राप्नोति। तथापि बहुवचनत्वमध्यमत्वरूपध
र्माभ्यां मध्यमपुरुषबहुवचनमेव गृह्यत इत्याशयेनोदाहरति यात यातेति यूयमिति। अस्यापि लोटो लङ्वत्वात्तस्थस्थमिपामिति यात इत्यत्र
यस्य तादेशः। विध्यादिलोड्विषयेत्वनुप्रयोगेपि यस्य तादेशः प्रवृत्तेर्यूयं यातेत्यनुप्रयोक्तव्यं। अधीध्वं अधीध्वमिति। सवाभ्यामित्यम् ॥

अधीध्वे इति। विध्यादिलोड्विषये तु अधीध्वमित्येवानुप्रयोक्तव्यं। भावकर्मणोस्तु भूयस्व भूयस्वेति भूयते। पच्यस्व पच्यस्वेति पच्यत इत्याद्युन्नेयं।
समुच्चयेन्यतरस्यामिति सूत्रे क्रियासमभिहार इत्यननुवर्तनात् द्वित्वमकृत्वैवोदाहरति। सक्तून् पिब धानाः खादेति। अभ्यवहरथेति। विध्यादि
लोड्विषये तु अभ्यवहरतेत्यनुप्रयोक्तव्यं एवं अभ्यवहरध्वे इत्यत्राप्युक्तविषये अभ्यवहरध्वमित्यनुप्रयोक्तव्यं। पक्षे हि स्वाविति पिबखादेत्य
भ्यवहरथ। भुंक्ष्व आस्वादस्वेत्यभ्यवहरध्वे इत्युदाहार्यं। लवनादीति। आदेशशब्देन मोचणहरणे ग्राह्ये। अनुवृत्त्यभ्युपगमे बाधकमाह। लोडन्तस्य वि
भ्रम एवेति। पुरुषांशे वचनांशे च लोडंशे तु न भ्रम एवेति भावः। एवमुक्तोदाहरणेषु हि स्वांतेषु तिङंतत्वं यथायथं परस्मैपदात्मनेपदांतत्वं च सिद्धं
पुरुषवचनसंज्ञे तु विधानसामर्थ्याद्धि स्वयोर्न लइत्युक्तमिति सर्वेष्टसिद्धिः॥ ॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीवामनेंद्रस्वामिचरणारविंद
सेवकज्ञानेंद्रसरस्वतीकृतौ सिद्धांतकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां तिङंतकाण्डं समाप्तम्॥ ॥ ॥

॥ इतिश्रीसिद्धान्तकौमुदीतत्वबोधिनीसंयुक्ततिङन्तसमाप्तम् ॥